# CHARAKASANHITA

OR

THE MOST ANCIENT AND AUTHORITATIVE
HINDU SYSTEM OF MEDICINE,

TAUGHT BY PUNARVASHU

and composed by his disciple Agnibesha

MODIFIED AND ARRANGED

BY

CHARAKA

Caraka

in eight Divisions,

..a, Nidana, Vimana, Sharira, Indria, Chikitsita,

Kalpa, and Siddhi.

EDITED BY

..DIT JIBANANDA VIDYASAGARA B. A.

Superintendent, Free Sanskrit College.

CALCUTTA:

Printed at the Saraswati Press.

1877.

*To be had from Pandit Jibananda Vidyasagara* B. A.

*Superintendent Free Sanskrit College, Calcutta.*

## पण्डित-कुलतिलकपूज्यपाद श्रीमत् तर्कवाचस्पति पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

१ आशुबोध व्याकरणम् २।०
२ धातुरूपादर्शः २
३ शब्दस्तोम महानिधिः (संस्कृत अभिधान) १०
४ सिद्धान्तकौमुदीसरलाटीकासहिता ११
५ सिद्धान्तविन्दुसार (वेदान्त) ॥०
६ तुलादानादिपद्धतिः (वङ्गाक्षरैः) ४
७ गयाश्राद्धादि पद्धति १
८ शब्दार्थरत्न ।।।०

२६ वाचस्पत्यम् (संस्कृत बृहदभिधान) १००
२७ कादम्बरी सटीक ८
२८ राजप्रशस्ति =
२९ अनुमानचिन्तामणि त॰ अनुमानदीधिति ॥
३० सर्वदर्शनसंग्रह ।
३१ भामिनीविलास सटीक
[illegible] ।

१९ लीलावती ।।।०
२० बीजगणित १
२१ शिशुपालवध सटीक (माघ) ४
२२ किरातार्जुनीय सटीक २॥०
२३ कुमारसम्भव पूर्वखण्ड सटीक ।।।०
२४ कुमारसम्भव उत्तरखण्ड ॥०
२५ अष्टकम् पाणिनीयम् ।।।०

४३ माधवचम्पू ।=
४४ तर्कसंग्रह (इंराजी अनुवाद सहित)
४५ प्रसन्नराघव नाटक (श्रीजयदेव कवि विरचित)
४६ विवेक चूड़ामणि (श्रीमत् शङ्कराचार्य्य विरचित)।

# चरकसंहिता

सूत-निदान-विमान-शारीरेन्द्रिय-चिकित्सित
कल्प-सिद्धिस्थानात्मका ।

आयुर्वेदीया

भगवता आत्रेयेण पुनर्वसुना उपदिष्टा
अग्निवेशनामधेयेन तत् शिष्येण विरचिता
चरकाभिधेन ऋषिणा प्रतिसंस्कृता

वि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

बहूनि आदर्शपुस्तकानि समालोच्य
संस्कृता प्रकाशिता च

सरस्वती यन्त्रे मुद्रिता

इं १८७७ साल ।

अथ चरकसंहितायाः सूचीपत्रम् ।

(१) तत्र सूत्रस्थानं—

(५) इन्द्रियस्थाने

---

## (६) चिकित्सितस्थाने

(७) कल्पस्थाने

(८) सिद्धिस्थाने

# चरकसंहितायां

## सूत्रस्थानम्।



अथातो दीर्घञ्जीवितीयमध्यायं व्याख्यास्यामः।

दीर्घञ्जीवितमन्विच्छन् भरद्वाज उपागमत्।
इन्द्रमुग्रतपा बुद्धा शरण्यममरेश्वरम्॥
ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः॥
अश्विभ्यां भगवान् शक्रः प्रतिपेदे हि केवलम्।
ऋषिप्रोक्तो भरद्वाजः तस्माच्छक्रमुपागमत्॥
विघ्नीभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम्।
उपवासतपःपाठं ब्रह्मचर्य्यव्रतायुषाम्॥
तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः।
समेताः पुण्यकर्म्माणः पार्श्वे हिमवतः शुभे॥
अङ्गिरा जमदग्निश्च वसिष्ठः काश्यपो भृगुः।
आत्रेयो गौतमः सांख्यः पुलस्त्यो नारदोऽसितः॥
अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ।
पारीक्षिर्भिक्षुरात्रेयो भरद्वाजः कपिष्ठलः॥
विश्वामित्राश्वरथ्यौ च भार्गवः च्यवनोऽभिजित्।
गार्ग्यः शाण्डिल्यकौण्डिल्यौ वार्क्षिर्देवलगालवौ॥
साङ्कृत्यो वैजवापिश्च कुशिको बादरायणः।
बिडशः शरलोमा च काप्यकात्यायनावुभौ॥

कांकायनः कैकशेयो धौम्यो मारीचिकाश्यपौ ।
शर्कराक्षो हिरण्याक्षो लौगाक्षिः पैङ्गिरेव च ॥
शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः ।
वैखानसा बालखिल्यास्तथा चान्ये महर्षयः ॥
ब्रह्मज्ञानस्य निधयो दमस्य नियमस्य च ।
तपसा तेजसा दीप्ता हूयमाना इवाग्नयः ॥
सुखोपविष्टास्ते तत्र पुण्याञ्चक्रुरिमां कथाम् ।
धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ॥
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च ।
प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ॥
कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः ।
अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ॥
स वक्ष्यति शमोपायं यथावदमरप्रभुः ।
कः सहस्राक्षभवनं गच्छेत् प्रष्टुं शचीपतिम् ॥
अहमर्थे नियुज्येयमत्रेति प्रथमं वचः ।
भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः ॥
स शक्रभवनं गत्वा सुरर्षिगणमध्यगम् ।
ददर्श बलहन्तारं दीप्यमानमिवानलम् ॥
सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ।
प्रोवाच भगवान्धीमान् ऋषीणां वाक्यमुत्तमम् ॥
व्याधयो हि समुत्पन्नाः सर्व्वप्राणिभयङ्कराः ।
तद्ब्रूहि मे शमोपायं यथा वदमरप्रभो ॥
तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः ।
पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥

हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।
त्रिसूत्रं शाश्वतं पुण्यं बुबुधेयं पितामहः ॥
सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः ।
यथावदचिरात्सर्वं बुबुधे तन्मना मुनिः ॥
तेनायुरमितं लेभे भरद्वाजः सुखान्वितः ।
ऋषिभ्योऽनधिकन्तच्च शशंसाऽनवशेषयन् ॥
ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् ।
दीर्घमायुश्चिकीर्षन्तो वेदं वर्धनमायुषः ॥
महर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।
सामान्यञ्च विशेषञ्च गुणान्द्रव्याणि कर्म्म च ॥
समवायं च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।
लेभिरे परमं शर्म्म जीवितं चापि निर्वरम् ॥
अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः ।
शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया ॥
अग्निवेशश्च भेलश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥
बुद्धिविशेषस्तत्रासीन्नोपदेशान्तरं मुनेः ।
तन्त्रप्रणेता प्रथममग्निवेशो यतोऽभवत् ॥
अतो भेलादयश्चक्रुः स्वं स्वन्तन्त्रं कृतानि च ।
श्रावयामासुरात्रेयं सर्षिसंघं सुमेधसः ॥
श्रुत्वा सूत्रणमर्थानामृषयः पुण्यकर्म्मणाम् ।
यथावत् सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे ॥
सर्व एवाऽस्तुवंस्तांश्च सर्वभूतहितैषिणः ।
सर्वभूतेष्वनुक्रोश इत्युच्चैरब्रुवन् समम् ॥

तं पुण्यं शुश्रुवुः शब्दं दिवि देवर्षयः स्थिताः ।
सामराः परमर्षीणां श्रुत्वा मुमुदिरे परम् ॥
अहो साध्विति घोषश्च लोकांस्त्रीनन्ववादयत् ।
नभसि स्निग्धगम्भीरो हर्षाद्भूतैरुदीरितः ॥
शिवो वायुर्व्ववौ सर्व्वा भाभिरुन्मीलितादिशः ।
निपेतुः सजलाश्चैव दिव्याः कुसुमवृष्टयः ॥
अथाग्निवेशप्रमुखान् विविशुर्ज्ञानदेवताः ।
बुद्धिः सिद्धिः स्मृतिर्मेधाधृतिः कीर्त्तिः क्षमा दया ॥
तानि चानुमतान्येषां तन्त्राणि परमर्षिभिः ।
भावाय भूतसङ्घानां प्रतिष्ठां भुवि लेभिरे ॥
हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते ॥
शरीरेन्द्रियसत्वात्मसंयोगो धारि जीवितम् ।
नित्यगश्चानुबन्धश्च पर्य्यायै रायुरुच्यते ॥
तस्यायुषः पुण्यतमो वेदो वेदविदां मतः ।
वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः ॥
सर्व्वदा सर्व्वभावानां सामान्यं वृद्धिकारणम् ।
ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु ॥
सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् ।
तुल्यार्थता हि सामान्यं विशेषस्तु विपर्य्ययः ॥
सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत् ।
लोकस्तिष्ठतिसंयोगात्तत्र सर्व्वं प्रतिष्ठितम् ॥
स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम् ।
वेदस्यास्य तदर्थं हि वेदोऽयं सम्प्रकाशितः ॥

खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः ।
सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ॥
सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः ।
गुणाः प्रोक्ताः प्रयत्नादि कर्म तेष्विदमुच्यते ॥
सशरीरः पृथग्भावो द्रव्यादीनां गुणैर्मतः ।
स नित्यो यत्र हि द्रव्यं न तत्रानियता गुणाः ॥
यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् ।
तद्द्रव्यं समवायी तु निश्चेष्टः कारणं गुणः ॥
संयोगे च वियोगे च कारणं द्रव्यमाश्रितम् ।
कर्त्तव्यस्य क्रिया कर्म कर्म नान्यदपेक्षते ॥
इत्युक्तं कारणं कार्यं धातुसाम्यमिहोच्यते ।
धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥
कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च ।
द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥
शरीरं तत्त्वसंज्ञं च व्याधीनामाश्रयो मतः ।
तथा सुखानां योगस्तु सुखानां कारणं शमः ॥
निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः ।
चेतने कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ॥
वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः ।
मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥
प्रशाम्यत्यौषधैः पूर्वो द्रव्ययुक्तिव्यपाश्रयैः ।
मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः ॥
रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः ।
विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥

सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु।
विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति॥
गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः।
श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः॥
विपरीतगुणैर्देशमात्राकालोपपादितैः।
भेषजैर्विनिवर्त्तन्ते विकाराः साधुसंमताः॥
साधनं नत्वसाध्यानां व्याधीनामुपदिश्यते।
भूयश्चातो यथाद्रव्यं गुणकर्म प्रवक्ष्यते॥
रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा।
निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः॥
स्वादुरम्लोऽथ लवणो कटुकस्तिक्त एव च।
कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः॥
स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः॥
किञ्चिद्दोषप्रशमनं किञ्चिद्धातुप्रदूषणम्।
स्वस्थवृत्तौ हितं किञ्चिद्द्रव्यं त्रिविधमुच्यते॥
तत्पुनस्त्रिविधं ज्ञेयं जाङ्गमौद्भिदपार्थिवम्।
मधूनि गोरसाः पित्तं वसा मज्जासृगामिषम्॥
विण्मूत्रं चर्म रेतोऽस्थि स्नायु शृङ्गं खुरा नखाः।
जङ्गमेभ्यः प्रयुज्यन्ते केशा लोमानि रोचनाः॥
सुवर्णं समलाः पञ्च लोहाः ससिकता सुधा।
मनःशिलाले मणयो लवणं गैरिकाञ्जने॥
भौममौषधमुद्दिष्टमौद्भिदन्तु चतुर्विधम्।
वनस्पतिर्वीरुधश्च वानस्पत्यस्तथौषधिः॥

फलैर्वनस्पतिः पुष्पैर्वानस्पत्यःफलैरपि।
ओषध्यः फलपाकान्ताः प्रतानैर्वीरुधः स्मृताः॥
मूलत्वक्सारनिर्यासनाडस्वरसपल्लवाः।
क्षाराः क्षीरं फलं पुष्पं भस्मतैलानि कण्टकाः॥
पत्राणि शुङ्गाः कन्दाश्च प्ररोहाश्चौद्भिदो गुणः।
मूलिन्यः षोडशैकोना फलिन्यो विंशतिः स्मृताः॥
महास्नेहाश्च चत्वारः पञ्चैव लवणानि च।
अष्टौ मूत्राणि सङ्ख्यातान्यष्टावेव पयांसि च॥
शोधनार्थाश्च षड्वृक्षाः पुनर्वसुनिदर्शिताः।
य एतान् वेत्ति संयोक्तुं विकारेषु स वेदवित्॥
हस्तिदन्ती हैमवती श्यामा त्रिवृदधो गुडा।
सप्तला श्वेतनामा च प्रत्यक्श्रेणी गवाक्ष्यपि॥
ज्योतिष्मती च बिम्बी च शणपुष्पी विषाणिका।
अजगन्धा द्रवन्ती च क्षीरिणी चात्र षोड़शी॥
शणपुष्पी च बिम्बी च छर्द्दने हैमवत्यपि।
श्वेता ज्योतिष्मती चैव योज्या शीर्षविरेचने॥
एकादशावशिष्टा याः प्रयोज्यास्ता विरेचने।
इत्युक्ता नामकर्म्मभ्यां मूलिन्यः फलिनीः शृणु॥
शङ्खिन्यथ विडङ्गानि त्रपुषं मदनानि च।
आनूपं स्थलजञ्चैव क्लीतकं द्विविधं स्मृतम्॥
प्रकीर्य्या चोदकीर्य्या च प्रत्यक्पुष्पी तथाभया।
अन्तःकोटरपुष्पी च हस्तिपर्ण्याश्च शारदम्॥
कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च।
धामार्गवमथेक्ष्वाकुजीमूतं कृतवेधनम्॥

मदनं कुटजश्चैव त्रपुसं हस्तिपर्णिनी।
एतानि वमनेचैव योज्यान्यास्थापनेषु च॥
दश यान्यवशिष्टानि तान्युक्तानि विरेचने।
नामकर्म्मभिरुक्तानि फलान्येकोनविंशतिः॥
सर्पिस्तैलं वसा मज्जा स्नेहो दृष्टः चतुर्विधः।
पानाभ्यञ्जनवस्त्यर्थं नस्यार्थं चैव योगतः॥
स्नेहना जीवना बल्या वर्णोपचयवर्धनाः।
स्नेहा ह्येतेषु विहिता वातपित्तकफापहाः॥
सौवर्चलं सैन्धवञ्च विडमौद्भिदमेव च।
सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च॥
स्निग्धान्युष्णानि तीक्ष्णानि दीपनीयतमानि च।
आलेपनार्थे युज्यन्ते स्नेहस्वेदविधौ तथा॥
अधोभागोर्द्ध्वभागेषु निरूहेष्वनुवासने।
अभ्यञ्जने भोजनार्थे शिरसश्च विरेचने॥
शस्त्रकर्म्मणि वस्त्यर्थमञ्जनोच्छादनेषु च।
अजीर्णानाहयोर्वाते गुल्मे शूले तथोदरे॥
उक्तानि लवणान्यूर्द्ध्वं मूत्राण्यष्टौ निबोध मे।
मुख्यानि यानि ह्यष्टानि सर्वाण्यात्रेयशासने॥
अविमूत्रमजामूत्रं गोमूत्रं माहिषं तथा।
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च॥
उष्णान्तीक्ष्णमथो स्निग्धं कटुकं लवणान्वितम्।
मूत्रमुच्छादने युक्तं युक्तमालेपनेषु च॥
युक्तमास्थापने युक्तं मूत्रञ्चापि विरेचने।
स्वेदेष्वपि च युक्तमानाहेषु गदेषु च॥

उदरेष्वथ चार्शःसु गुल्मकुष्ठकिलासिषु।
तथानुपनाहेषु परिषेके तथैव च॥
दीपनीयं विषघ्नं च क्रिमिघ्नं चोपदिश्यते।
पाण्डुरोगोपसृष्टानामुत्तमं शर्म चोच्यते॥
श्लेष्माणं शमयेत्पीतं मारुतञ्चानुलोमयेत्।
कर्षेत्पित्तमधोभागमित्यस्मिन् गुणसंग्रहः॥
सामान्येन मयोक्तस्तु पृथक्त्वेन प्रवक्ष्यते।
अविमूत्रं सतिक्तं स्यात् स्निग्धं पित्ताविरोधि च॥
आजं कषायमधुरं पथ्यं दोषान्निहन्ति च।
गव्यं समधुरं किञ्चित् दोषघ्नं क्रिमिकुष्ठनुत्॥
कण्डूघ्नं शमयेत् पीतं सम्यग्दोषोदरे हितम्।
अर्शःशोफोदरघ्नन्तु सक्षारं माहिषं सरम्॥
हास्तिकं लवणं मूत्रं हितन्तु क्रिमिकुष्ठिनाम्।
प्रशस्तं बद्धविण्मूत्रविषश्लेष्मामयार्शसाम्॥
सतिक्तं श्वासकासघ्नमर्शोघ्नं चौष्ट्रमुच्यते।
वाजिनां तिक्तकटुकं कुष्ठव्रणविषापहम्॥
खरमूत्रमपस्मारोन्मादग्रहविनाशनम्।
इतीहोक्तानि मूत्राणि यथा सामर्थ्ययोगतः॥
अतः क्षीराणि वक्ष्यन्ते कर्म चैषां गुणाश्च ये।
अविक्षीरमजाक्षीरं गोक्षीरं माहिषं च यत्॥
उष्ट्रीणामथ नागीनां वडवायाः स्त्रियास्तथा।
प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयः स्मृतम्॥
प्रीणनं बृंहणं वृष्यं मेध्यं बल्यं मनस्करम्।
जीवनीयं श्रमहरं श्वासकासनिबर्हणम्॥

हन्ति शोणितपित्तञ्च सन्धानं विहतस्य च।
सर्वप्राणभृतां सात्म्यं शमनं शोधनं तथा॥
तृष्णाघ्नं दीपनीयं च श्रेष्ठं क्षीणक्षतेषु च।
पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे॥
अतीसारज्वरे दाहे श्वयथौ च विधीयते।
योनिशुक्रप्रदोषेषु मूत्रेष्वप्रसरेषु च॥
पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम्।
नस्यालेपावगाहेषु वमनास्थापनेषु च॥
विरेचने स्नेहने च पयः सर्वत्र युज्यते।
यथाक्रमं क्षीरगुणा नेकैकस्य पृथक् पृथक्॥
अन्नपानादिकेऽध्याये भूयो वक्ष्याम्यशेषतः।
अथापरे त्रयो वृक्षाः पृथग्ये फलमूलिभिः॥
स्नुह्यर्काश्मन्तकास्तेषामिदं कर्म्म पृथक् पृथक्।
वमनेऽश्मन्तकं विद्यात् स्नुहीक्षीरं विरेचने॥
क्षीरमर्कस्य विज्ञेयं वमने स विरेचने।
इमांस्त्रीनपरान् वृक्षानाहुर्येषां हितास्त्वचः॥
पूतिकः कृष्णगन्धा च तिल्वकश्च तथा तरुः।
विरेचने प्रयोक्तव्यः पूतिकस्तिल्वकस्तथा॥
कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु चोच्यते।
दद्रुविद्रधिगण्डेषु कुष्ठेष्वप्यलजीषु च॥
षड्वृक्षान् शोधनानेतानपि विद्याद्विचक्षणः।
इत्युक्ताः फलमूलिन्यः स्नेहाश्च लवणानि च॥
मूत्रं क्षीराणि वृक्षाश्च षड्ये दृष्टाः पयस्त्वचः।
ओषधीर्नामरूपाभ्यां जानते ह्यजपा वने॥

अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः ।
न नामज्ञानमात्रेण रूपज्ञानेन वा पुनः ॥
ओषधीनां परां प्राप्तिं कश्चिद्वेदितुमर्हति ।
योगवित्त्वस्य रूपज्ञस्तासां तत्त्वविदुच्यते ॥
किं पुनर्यो विजानीयादोषधीः सर्वदा भिषक् ।
रूपन्तासान्तु यो विद्याद्देशकालोपपादितम् ॥
पुरुषं पुरुषं वीक्ष्य स विज्ञेयो भिषक्तमः ।
यथाविषं यथाशस्त्रं यथाग्निरशनिर्यथा ॥
तथौषधमविज्ञातं विज्ञातममृतं यथा ।
औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः ॥
विज्ञातं वापि दुर्युक्तं युक्तिबाह्येन भेषजम् ।
योगादपि विषं तीक्ष्णमुत्तमं भेषजं भवेत् ॥
भेषजं वापि दुर्युक्तं तीक्ष्णं सम्पद्यते विषम् ।
तस्मान्नभिषजायुक्तं युक्तिबाह्येन भेषजम् ॥
धीमता किञ्चिदादेयं जीवितारोग्यकांक्षिणा ।
कुर्य्यान्निपतितो मूर्ध्नि सशेषं वासवाशनिः ॥
सशेषमातुरं कुर्य्यान्नत्वज्ञमतमौषधम् ।
दुःखिताय शयानाय श्रद्दधानाय रोगिणे ॥
यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ।
तस्य च मृत्युदूतस्य दुर्मतेस्त्यक्तधर्मणः ॥
नरो नरकपाती स्यात्तस्य सम्भाषणादपि ।
वरमाशीविषविषं क्वथितं ताम्रमेव वा ॥
पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुडाः ।
न तु श्रुतवता वेदं बिभ्रता शरणागतात् ॥

गृहीतमन्नं पानं वा वित्तं वा रोगपीड़ितात् ।
भिषक् बुभुक्षुर्मतिमानतः स्याद्गुणसम्पदि ॥
परं प्रयत्नमातिष्ठेत् प्राणदः स्याद्यथा नृणाम् ।
तदेव युक्तं भैषज्यं यदारोग्याय कल्पते ॥
स चैव भिषजां श्रेष्ठो रोगिभ्यो यः प्रमोचयेत् ।
सम्यक् प्रयोगं सर्व्वेषां सिद्धिराख्यातिकर्म्मणाम् ॥
सिद्धिराख्यातिसर्व्वैश्च गुणैर्युक्तं भिषक्तमम् इति ।

तत्र श्लोकाः ।

आयुर्वेदागमो हेतुरागमस्य प्रवर्त्तनम् ।
सूत्रणं साव्यनुज्ञानमायुर्वेदस्य निर्णयः ॥
सम्पूर्णकारणं ज्ञेयं आयुर्वेदप्रयोजनम् ।
हेतवश्चैव दोषाश्च भेषजं संग्रहेण च ॥
रसाः सप्रत्ययद्रव्यास्त्रिविधो द्रव्यसंग्रहः ।
मूलिन्यश्च फलिन्यश्च स्नेहाश्च लवणानि च ॥
मूत्रं क्षीराणि वृक्षाश्च षड्ये क्षीरत्वगाश्रयाः ।
कर्म्माणि चैषां सर्व्वेषां योगायोगगुणागुणाः ॥
वैद्यापवादो यत्रस्थाः सर्व्वे च भिषजां गुणाः ।
सर्व्वमेतत् समाख्यातं पूर्व्वेऽध्याये महर्षिणा ॥
इति दीर्घञ्जीविताध्यायः समाप्तः ।

..........................

# द्वितीयोऽध्यायः

---

अथातोऽपामार्गतण्डुलीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

अपामार्गस्य बीजानि पिप्पलीर्मरिचानि च ।
विडङ्गान्यथ शिग्रूणि सर्षपांस्तुम्बुरूणि च ॥
अजाजीं चाजगन्धां च पीलून्येलां हरेणुकाम् ।
पृथ्वीकां सुरसां श्वेतां कुठेरकफणिज्झकौ ॥
शिरीषबीजं लशुनं हरिद्रे लवणद्वयम् ।
ज्योतिष्मतीं नागरञ्च विद्यान्मूर्द्धविरेचने ॥
गौरवे शिरसः शूले पीनसेऽर्द्धावभेदके ।
क्रिमिव्याधावपस्मारे घ्राणनाशे प्रमेहने ॥
मदनं मधुकं निम्बं जीमूतं कृतवेधनम् ।
पिप्पलीं कुटजेक्ष्वाकूण्येलां धामार्गवाणि च ॥
उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये ।
वमनार्थं प्रयुञ्जीत भिषग्देहमदूषयन् ॥
त्रिवृतां त्रिफलां दन्तीं नीलिनीं सप्तलां वचाम् ।
कम्पिल्लकं गवाक्षीञ्च क्षीरिणीमुदकीर्यकाम् ॥
पीलून्यारग्वधं द्राक्षां द्रवन्तीं निचुलानि च ।
पक्वाशयगते दोषे विरेकार्थं प्रयोजयेत् ॥

पाटलाञ्चाग्निमन्थाञ्च बिल्वं श्योनाकमेव च ।
काश्मर्यं शालपर्णीञ्च पृश्निपर्णीं निदिग्धिकाम् ॥
बलाञ्चश्वदंष्ट्रां बृहतीमेरण्डं सपुनर्नवम् ।
यवान् कुलत्थान् कोलानि गुडूचीं मदनानि च ॥
पलाशं कत्तृणं चैव स्नेहांश्च लवणानि च ।
उदावर्त्ते विबन्धेषु युञ्ज्यादास्थापने सदा ॥
अतएवौषधगणात् संकल्प्यमनुवासनम् ।
मारुतघ्नमिति प्रोक्तः संग्रहः पाञ्चकर्मिकः ॥
तान्युपस्थितदोषाणां स्नेहस्वेदोपपादनैः ।
पञ्चकर्माणि कुर्वीत मात्राकालौ विचारयन् ॥
मात्राकालाश्रया युक्तिः सिद्धिर्युक्तौ प्रतिष्ठिता ।
तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः ।
विविधानां विकाराणां तत्साध्यानां निवृत्तये ॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता ॥
दधित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता ।
पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिकी ॥
शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ।
दाडिमाम्लाहिता पेया पित्तश्लेष्मातिसारिणाम् ॥
पयस्यर्द्धोदके छागे ह्रीवेरोत्पलनागरैः ।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ॥
दद्यात् सातिविषां पेयां सामे साम्लां सनागराम् ।
श्वदंष्ट्राकण्टकारीभ्यां मूत्रकृच्छ्रे सफाणिताम् ॥

विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च ।
तक्रसिद्धा यवागूः स्यात्क्रिमिघ्नी ससुवर्चिका ॥
मृद्वीकासारिवालाजपिप्पलीमधुनागरैः ।
पिपासाघ्नी विषघ्नी च सोमराजी विपाचिता ॥
सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता ।
गवेधुकानां भृष्टानां कर्षणीया समाक्षिका ॥
सर्पिष्मती बहुतिला स्नेहनी लवणान्विता ।
कुशामलकनिर्यूहे श्यामाकानां विरूक्षणी ॥
दशमूलीशृता कासहिक्काश्वासकफापहा ।
यमके मदिरासिद्धा पक्वाशयरुजापहा ॥
शाकैर्मांसैस्तिलैर्माषैः सिद्धा वर्चो निरस्यति ।
जम्ब्वाम्रास्थिदधित्थाम्लबिल्वैः सांग्राहिकी मता ॥
क्षारचित्रकहिङ्ग्वम्लवेतसैर्भेदनी मता ।
अभयापिप्पलीमूलविश्वैर्वातानुलोमनी ॥
तक्रसिद्धा यवागूः स्याद्घृतव्यापत्तिनाशिनी ।
तैलव्यापदि शस्ता तु तक्रपिण्याकसाधिता ॥
गव्यमांसरसैः साम्ला विषमज्वरनाशिनी ।
कण्ठ्या यवानां यमके पिप्पल्यामलकैः शृता ।
ताम्रचूडरसे सिद्धा रेतोमार्गरुजापहा ॥
समाषविदला वृष्या घृतक्षीरोपसाधिता ।
उपोदिकादधिभ्यां तु सिद्धा मदविनाशिनी ॥
क्षुधं हन्यादपामार्गक्षीरगोधारसे शृता ।

---

तत्र श्लोकाः ।

अष्टाविंशतिरित्येता यवाग्वः परिकीर्त्तिताः ।
पञ्चकर्माणि चाश्रित्य प्रोक्तो भैषज्यसंग्रहः ॥
पूर्वं मूलफलज्ञानहेतोरुक्तं यदौषधम् ।
पञ्चकर्माश्रयज्ञानहेतोस्तत् कीर्त्तितं पुनः ॥
स्मृतिमान् युक्तिहेतुज्ञो जितात्मा प्रतिपत्तिमान् ।
भिषगौषधसंयोगैः चिकित्सां कर्त्तुमर्हति ॥

इति भेषजचतुष्केऽपामार्गतण्डुलीयो नाम
द्वितीयोऽध्यायः समाप्तः ।

---

तृतीयोऽध्यायः ।

अथात आरग्वधीयमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ।

आरग्वधः सैडगजः करञ्जो वासा गुडूची मदनं हरिद्रे ।
श्याह्वः सुराह्वः खदिरो धवश्च निम्बो विडङ्गं करवीरकत्वक् ॥
ग्रन्थिश्च भौर्जो लशुनः शिरीषः सलोमशो गुग्गुलुकृष्णगन्धे ।
फणिज्झको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनञ्च ।
मनःशिलाले गृहधूम एला कासीसमुस्ताऽर्जुनरोध्रसर्जाः ॥
इत्यर्द्धरूपैर्विहिताः षडेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताः चूर्णप्रदेहा भिषजा प्रयोज्याः ॥

कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिमं सदद्रु।
भगन्दरार्शांस्यपचीं सपामां हन्युः प्रयुक्तास्त्वचिरान्नराणाम्॥
कुष्ठं हरिद्रे सुरसं पटोलं निम्बाश्वगन्धे सुरदारुशिग्रू।
ससर्षपं तुम्बुरुधान्यवन्यं चण्डांशचूर्णानि समानि कुर्यात्॥
तैस्तक्रयुक्तैः प्रथमं शरीरं तैलाक्तमुद्वर्त्तयितुं यतेत।
तथास्य कण्डूः पिड़काः सकोठाः कुष्ठानि शोफाश्च शमं व्रजन्ति॥
कुष्ठामृतासङ्गकटङ्कटेरी कासीशकाम्पिल्लकरोध्रमुस्ताः।
सौगन्धिकं सर्जरसो विडङ्गं मनःशिलाले करवीरकत्वक्॥
तैलाक्तगात्रस्य कृतानि चूर्णान्येतानि दद्यादवचूर्णनार्थम्।
दद्रुः सकण्डुः किटिमानि पामा विचर्चिका चैव तथैति शान्तिम्॥
मनःशिलाले मरिचानि तैलमार्कम्पयः कुष्ठहरः प्रदेहः।
तुत्थं विडङ्गं मरिचानि कुष्ठं लोध्रञ्च तद्वत् समनःशिलं स्यात्॥
रसाञ्जनं सप्रपन्नाडबीजं युक्ताः कपित्थस्य रसेन लेपः।
करञ्जबीजैडगजं सकुष्ठं गोमूत्रपिष्टञ्च परः प्रदेहः॥
उभे हरिद्रे कुटजस्य बीजं करञ्जबीजं सुमनःप्रवालान्।
त्वचं सचर्व्यां हयमारकस्य लेपं तिलक्षारयुतं विदध्यात्॥
मनःशिला त्वक्कुटजात् सकुष्ठः सलोमशः सैडगजः करञ्जः।
ग्रन्थिश्च भौर्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन॥
पलाशनिर्दाहरसेन चापि कर्षोद्धृतान्याढ़कसम्मितेन।
दर्वीप्रलेपं प्रवदन्ति लेपमेतत्परं कुष्ठनिसूदनाय॥
पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च॥
कोलं कुलत्थाः सुरदारुरास्ना माषातसीतैलफलानि कुष्ठम्।
वचा शताह्वा यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः॥

आनूपमत्स्यामिषवेशवारैरुष्णैः प्रदेहः पवनापहः स्यात्।
स्नेहैश्चतुर्भिर्दशमूलमिश्रैर्गन्धौषधैर्वानिलजित् प्रदेहः॥
तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमार्त्तिं जठरे निहन्यात्।
कुष्ठं शताह्वां सवचां यवानां चूर्णं सतैलाम्लमुषन्ति वाते॥
उभे शताह्वे मधुकं मधूकं बलां पियालञ्च कशेरुकञ्च।
घृतं विदारीञ्च सितोपलाञ्च कुर्यात् प्रदेहं पवने सरक्ते॥
रास्नां गुडूचीं मधुकं बले द्वे सजीवकं सर्षभकं पयश्च।
घृतञ्च सिद्धं मधुशेषयुक्तं रक्तानिलार्त्तिं प्रणुदेत् प्रदेहः॥
वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छगलीपयश्च।
नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतः प्रदेहः॥
प्रपौण्डरीकं सुरदारु कुष्ठं यष्ट्याह्वमेला कमलोत्पले च।
शिरोरुजायां सघृतः प्रदेहो लोहैरकापद्मकचोरकैश्च॥
रास्ना हरिद्रे नलदं शताह्वे द्वे देवदारूणि सितोपला च।
जीवन्तिमूलं सघृतं सतैलमालेपनं पार्श्वरुजासु कोष्णम्॥
शैवालपद्मोत्पलवेत्रतुङ्ग प्रपौण्डरीकाण्यमृणाललोध्रम्।
प्रियङ्गुकालीयकचन्दनानि निर्वापणः स्यात् सघृतः प्रदेहः॥
सिता लता वेतसपद्मकानि यष्ट्याह्वमैन्द्री नलिनानि दूर्वा।
यवासमूलं कुशकाशयोश्च निर्वापणः स्यात् जलमेरका च॥
शैलेयमेलागुरुणी सकुष्ठे चण्डा नतं त्वक् सुरदारुरास्ना।
शीतं निहन्यादचिरात् प्रदेहो विषं शिरीषस्तु ससिन्धुवारः॥
शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः॥



तत्र श्लोकः।

इहात्रिजः सिद्धतमानुवाच द्वात्रिंशतं सिद्धमहर्षिपूज्यः।
चूर्णप्रदेहान् विविधामयघ्नानारग्वधीये जगतो हितार्थम्॥

इति भेषजचतुष्के आरग्वधीयो नाम तृतीयोऽध्यायः
समाप्तः।

---

चतुर्थोऽध्यायः।

अथातः षड्विरेचनशताश्रितीयमध्यायं व्याख्यास्यामः॥

इति ह स्माह भगवानात्रेयः।

इह खलु षड्विरेचनशतानि भवन्ति। षड्विरेचनाश्रयाः। पञ्चकषायशतानि। पञ्चकषाययोनयः। पञ्चविधं कषायकल्पनम्। पञ्चाशन्महाकषाया इति संग्रहः। षड्विरेचनशतानीति यदुक्तं तदिह संग्रहेणोदाहृत्य विस्तरेण कल्पोपनिबद्धं व्याख्यास्यामः। त्रयस्त्रिंशद्योगशतं प्रणीतं फलेष्वेकोनचत्वारिंशज्जीमूतकेषु योगाः। पञ्चचत्वारिंशदिक्ष्वाकुषु धामार्गवः षष्टिधा भवति योगयुक्तः॥ कुटजस्त्वष्टादशधा योगमेति कृतवेधनं षष्टिधा भवति योगयुक्तम्। श्यामात्रिवृद्योगशतं प्रणीतं दशापरे चात्र भवन्ति योगाः॥ चतुरङ्गुलो द्वादशधा योगमेति लोध्रं विधौ षोडशयोगयुक्तम्। महावृक्षो भवति विंशतियोगयुक्तः

एकोनचत्वारिंशत् सप्तलाशङ्खिन्योर्योगाः॥ अष्टाचत्वारिंश-द्दन्ती द्रवन्त्योरिति षड्विरेचनशतानि॥ षड्विरेचनाश्रया इति। क्षीरमूलत्वक्पत्रपुष्पफलानीति। पञ्चकषाययोनय इति। मधुरकषायोऽम्लकषायः कटुकषायस्तिक्तकषायः कषायकषायश्चेति तन्त्रे संज्ञा। पञ्चविधं कषायकल्पनमिति। तद्यथा। स्वरसः कल्कः शृतः शीतः फाण्टः कषाय इति।

"यन्त्रप्रपीडनाद्द्रव्याद्रसः स्वरस उच्यते।
यत्पिण्डं रसपिष्टानां तत्कल्कं परिकीर्त्तितम्॥
वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः।
द्रव्यादापोथितात्तोये तत्पुनर्निशि संस्थितात्॥
कषायो योऽभिनिर्याति स शीतः समुदाहृतः।
क्षिप्त्वोष्णतोये मृदितं तत्फाण्टं परिकीर्त्तितम्"॥

तेषां यथापूर्वं बलाधिक्यम्। अतः कषायकल्पना व्याध्यातुरबलापेक्षिणी नत्वेवं खलु सर्वाणि सर्वत्रोपयोगीनि भवन्ति। पञ्चाशन्महाकषाया इति यदुक्तं तदनुव्याख्यास्यामः। तद्यथा। जीवनीयो बृंहणीयो लेखनीयो भेदनीयः सन्धानीयो दीपनीय इति षट्कः कषायवर्गः। बल्यो वर्ण्यः कण्ठ्यो हृद्य इति चतुष्कः कषायवर्गः। तृप्तिघ्नोऽर्शोघ्नः कुष्ठघ्नः कण्डूघ्नः कृमिघ्नो विषघ्न इति षट्कः कषायवर्गः। स्तन्यजननः स्तन्यशोधनः शुक्रजननः शुक्रशोधन इति चतुष्कः कषायवर्गः। स्नेहोपगः स्वेदोपगो वमनोपगो विरेचनोपग आस्थापनोपगोऽनुवासनोपगः शिरोविरेचनोपग इति सप्तकः कषायवर्गः। छर्दिनिग्रहणस्तृष्णानिग्रहणो हिक्कानिग्रहण इति त्रिकः

कषायवर्गः। पुरीषसंग्रहणीयः पुरीषविरजनीयो मूत्र-
संग्रहणीयो मूत्रविरजनीयो मूत्रविरेचनीय इति पञ्चकः
कषायवर्गः। कासहरः श्वासहरः शोथहरो ज्वरहरः
श्रमहर इति पञ्चकः कषायवर्गः। दाहप्रशमनः
शीतप्रशमन उदर्द्दप्रशमनोऽङ्गमर्द्दप्रशमनः शूलप्रशमन
इति पञ्चकः कषायवर्गः। शोणितास्थापनो वेदनास्थापनः
संज्ञास्थापनः प्रजास्थापनो वयःस्थापन इति पञ्चकः कषाय
वर्गः। इति पञ्चाशन्महाकषायाः। महताञ्च कषायाणां लक्ष-
णोदाहरणार्थं व्याख्याता भवन्ति। तेषामेकैकस्मिन् महा-
कषाये दशदशावयविकान् कषायाननुव्याख्यास्यामः। तान्येव
पञ्चकषायशतानि भवन्ति। तद्यथा। जीवकर्षभकौ मेदा
महामेदा काकोली क्षीरकाकोली मुद्गमाषपर्ण्यौ जीवन्ती
मधुकमिति दशेमानि जीवनीयानि भवन्ति। क्षीरिणीरा-
जक्षवकवलाकाकोलीक्षीरकाकोलीवाट्यायनीभद्रौदनीभार-
द्वाजीपयस्यर्ष्यगन्धा इति दशेमानि बृंहणीयानि भवन्ति।
मुस्ताकुष्ठहरिद्रादारुहरिद्रावचातिविषाकटुरोहिणीचित्रक-
चिरिविल्वहैमवत्य इति दशेमानि लेखनीयानि भवन्ति।
सुवहार्कोरुवूकाग्निमुखीचित्राचित्रकचिरविल्वशङ्खिनीसकुला
दनीस्वर्णक्षीरिण्य इति दशेमानि भेदनीयानि भवन्ति।
मधुकमधुपर्णीपृश्निपर्ण्यम्बष्ठकीसमङ्गामोचरसधातकीलोध्र-
प्रियङ्गुकट्फलानीति दशेमानि संधानीयानि भवन्ति। पिप्प-
लीपिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभ-
ल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि
भवन्ति। इति षट्कः कषायवर्गः। ऐन्द्र्यृषभ्यतिरसर्ष्य-

प्रोक्तापयस्याश्वगन्धास्थिरारोहिणीबलातिबला इति दशेमानि बल्यानि भवन्ति। चन्दनतुङ्गपद्मकोशीरमधुकमञ्जिष्ठासारिवापयस्यासितालता इति दशेमानि वर्ण्यानि भवन्ति। सारिवेक्षुमूलमधुकपिप्पलीद्राक्षाविदारीकैटर्यहंसपादीबृहतीकण्टकारिका इति दशेमानि कण्ठ्यानि भवन्ति। आम्राम्रातकनिकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलबदरदाड़िममातुलुङ्गानीति दशेमानि हृद्यानि भवन्ति। इति चतुष्कः कषायवर्गः। नागरचित्रकचव्यविड़ङ्गमूर्वागुडूचीवचामुस्तपिप्पलीपटोलानीति दशेमानि तृप्तिघ्नानि भवन्ति। कुटजबिल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रावचाचव्यानीति दशेमानि अर्शोघ्नानि भवन्ति। खदिराभयामलकहरिद्रारुष्करसप्तपर्णारग्वधकरवीरविड़ङ्गजातिप्रवाला इति दशेमानि कुष्ठघ्नानि भवन्ति। चन्दननलदकृतमालनक्तमालनिम्बकुटजसर्षपमधुकदारुहरिद्रामुस्तानीति दशेमानि कण्डूघ्नानि भवन्ति। अक्षीवमरिचगण्डीरकेबुकविडङ्गनिर्गुण्डीकिणिहीश्वदंष्ट्रावृषपर्णिकाखुपर्णिका इति दशेमानि क्रिमिघ्नानि भवन्ति। हरिद्रामञ्जिष्ठासुवहासूक्ष्मैलापालिन्दीचन्दनकनकशिरीषसिन्धुवारश्लेष्मातका इति दशेमानि विषघ्नानि भवन्ति। इति षट्कः कषायवर्गः। वीरणशालिषष्टिकेक्षुवालिकादर्भकुशकाशगुन्द्रेत्कटकत्तृणमूलानीति दशेमानि स्तन्यजननानि भवन्ति। पाठामहौषधसुरदारुमुस्तमूर्वागुडूचीवत्सकफलकिराततिक्तकटुरोहिणीसारिवा इति दशेमानि स्तन्यशोधनानि भवन्ति। जीवकर्षभककाकोलीक्षीरकाकोलीमुद्गपर्णीमाष-

पर्णीमेदावृद्धरुहाजटिलाकुलिङ्गा इति दशेमानि शुक्रजननानि भवन्ति। कुष्ठैलवालुककट्फलसमुद्रफेनकदम्बनिर्यासेक्षुकाण्डेक्ष्विक्षुरकवसुकोशीराणीति दशेमानि शुक्रशोधनानि भवन्ति। इति चतुष्कः कषायवर्गः। मृद्वीकामधुकमधुपर्णीमेदाविदारीकाकोलीक्षीरकाकोलीजीवकजीवन्तीशालपर्ण्य इति दशेमानि स्नेहोपयोगानि भवन्ति। शोभाञ्जनकैरण्डार्कवृश्चीरपुनर्नवायवतिलकुलत्थमाषवदराणीति दशेमानि स्वेदोपगानि भवन्ति। मधुमधुककोविदारकर्वुदारणीपविदुलविम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्प्य इति दशेमानि वमनोपगानि भवन्ति। द्राक्षाकाश्मर्य्यपरूषकाभयामलकविभीतककुवलवदरकर्कन्धुपीलूनीति दशेमानि विरेचनोपगानि भवन्ति। त्रिवृद्विल्वपिप्पलीकुष्ठसर्षपवचावत्सकफलशतपुष्पामधुकमदनफलानीति दशेमान्यास्थापनोपगानि भवन्ति। रास्नासुरदारुविल्वमदनशतपुष्पावृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योणाका इति दशेमानि अनुवासनोपगानि भवन्ति। ज्योतिष्मतीक्षवकमरिचपिप्पलीविडङ्गशिग्रुसर्षपापामार्गतण्डुलश्वेतामहाश्वेता इति दशेमानि शिरोविरेचनोपगानि भवन्ति। इति सप्तकः कषायवर्गः। जम्ब्वाम्रपल्लवमातुलुङ्गाम्लवदरदाडिमयवयष्टिकोशीरमृल्लाजा इति दशेमानि छर्दिनिग्रहणानि भवन्ति। नागरधन्वयवासकमुस्तापर्पटकचन्दनकिराततिक्तकगुडूचीह्रीवेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहणानि भवन्ति। शटीपुष्करमूलवदरवीजकण्टकारिकावृहतीवृक्षरुहाभयापिप्पलीदुरालभाकुलीरशृङ्ग्य इति दशेमानि हिक्कानिग्रहणानि भवन्ति।

इति त्रिकः कषायवर्गः। प्रियङ्गनन्ताम्राष्ठिकट्वङ्गलोध्र-मोचरससमङ्गाधातकीपुष्पपद्मापद्मकेशराणीति दशेमानि पुरीषसंग्रहणानि भवन्ति। जम्बुशल्लकीत्वक्कच्छुरामधुक-शाल्मलीश्रीवेष्टकभृष्टमृत्पयस्योत्पलतिलकणा इति दशेमानि पुरीषविरजनीयानि भवन्ति। जम्ब्वाम्रप्लक्षवटकपीतनो-दुम्बराश्वत्थभल्लातकाश्मन्तक सोमवल्का इति दशेमानि मूत्रसंग्रहणानि भवन्ति। दनोश्वदंष्ट्रावसुकवशिरपाषाण-भेददर्भकुशपद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्र-मधुकप्रियङ्गुधातकीपुष्पाणीति दशेमानि मूत्रविरजनीयानि भवन्ति। वृषाकाशगुन्द्रेत्कटमूलानीति दशेमानि मूत्रविरे-चनीयानि भवन्ति। इति पञ्चकः कषायवर्गः। द्राक्षाभया-मलकपिप्पलीदुरालभाशृङ्गीकण्टकारिकावृश्चीरपुनर्नवाताम-लक्य इति दशेमानि कासहराणि भवन्ति। शटीपुष्कर-मूलाम्लवेतसैलाहिङ्गुगुरुसुरसातामलकीजीवन्तीचण्डा इति दशेमानि श्वासहराणि भवन्ति। पाटलाग्निमन्थविल्व-श्योणाककाश्मर्य्यकण्टकारिकाबृहतीशालपर्णीपृश्निपर्णीगो-क्षुरका इति दशेमानि शोथहराणि भवन्ति। शारिवा-शर्करापाठामञ्जिष्ठाद्राक्षापीलुपरूषकाभयामलकविभीतका-नीति दशेमानि ज्वरहराणि भवन्ति। द्राक्षाखर्जूरपियाल-बदरदाडिमफल्गुपरूषकेक्षुयवयष्टिका इति दशेमानि श्रम-हराणि भवन्ति। इति पञ्चकः कषायवर्गः। लाजाचन्दन-काश्मर्य्यफलमधुकशर्करानीलोत्पलोशीरशारिवागुडूचीह्रीवे-राणीति दशेमानि दाहप्रशमनानि भवन्ति। तगरागुरु-धान्यक शृङ्गवेरभूतीकवचाकण्टकारिकाग्निमन्यश्योणाक-

पिप्पल्य इति दशेमानि शीतप्रशमनानि भवन्ति । तिन्दुक-पियाल बदरखदिरकदरसप्तपर्णाश्वकर्णार्जुनासनारिमेदा इति दशेमान्युदर्दप्रशमनानि भवन्ति । विदारिगन्धा पृश्नि-पर्णी बृहती कण्टकारिकैरण्ड काकोली चन्दनोशीरैला मधुकानीति दशेमान्यङ्गमर्दप्रशमनानि भवन्ति । पिप्पली पिप्पलीमूलचव्य चित्रकशृङ्गवेर मरिचाजमोदाजगन्धाजा-जीगण्डीराणीति दशेमानि शूलप्रशमनानि भवन्ति । इति पञ्चकः कषायवर्गः । मधुमधुकरुधिरमोचरस मृत्कपाललोध्र गैरिकप्रियङ्गुशर्कराला जा इति दशेमानि शोणितस्थापनानि भवन्ति । शालकट्फलकदम्बपद्मकतुङ्गमोचरस शिरीषवञ्जु लैलवालुकाशोका इति दशेमानि वेदनास्थापनानि भवन्ति । हिङ्गुकैटर्य्यारिमेदवचाचोरक वयःस्था गोलोमी जटिला पलङ्कषाशोकरोहिण्य इति दशेमानि संज्ञास्थाप-नानि भवन्ति । ऐन्द्रीब्राह्मीशतवीर्य्या सहस्रवीर्य्यामोघा-व्यथाशिवारिष्टा वाटापुष्पीविश्वक्सेनकान्ता इति दशे-मानि प्रजास्थापनानि भवन्ति । अमृताभया धात्री मुक्ता श्वेता जीवन्त्यतिरसा मण्डूकपर्णी स्थिरा पुनर्नवा इति दशेमानि वयःस्थापनानि भवन्ति । इति पञ्चकः कषाय-वर्गः । इति पञ्चकषायशतान्यभि समस्य पञ्चाशन्महाकषायाः महताञ्च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति । नहि विस्तरस्य प्रमाणमस्ति न चाप्यतिसंक्षेपोऽल्पबुद्धीनां सामर्थ्यायोपकल्पते तस्मादनतिसंक्षेपेणानति विस्तरेण चो-द्दिष्टाः । एतावन्तोह्यल्पबुद्धीनां व्यवहाराय बुद्धिमताञ्च स्वा-

लक्षणानुमानयुक्तिकुशलानामनुक्तार्थं ज्ञानायेति । एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच । नैतानि भगवन् पञ्चकषायशतानि पूर्य्यन्ते । तानि तानि ह्येवाङ्गानि संप्लवन्ते तेषु तेषु महाकषायेष्विति । तमुवाच भगवानात्रेयः। नैतदेवं बुद्धिमताद्रष्टव्यमग्निवेश । एकोऽपिह्यनेकां संज्ञां लभते कार्य्यान्तराणि कुर्व्वन् । तद्यथा पुरुषो बहूनां कर्म्मणां करणे समर्थो भवति । स यद्यत्कर्म करोति तस्य तस्य कर्म्मणः कर्त्तृकरणकार्य्यसंप्रयुक्तं तत्तद्गौणं नामविशेषं प्राप्नोति । तद्वदौषधद्रव्यमपि द्रष्टव्यम् । यदि चैकमेव किञ्चिद्द्रव्यमासादयामस्तथा गुणयुक्तं यत्सर्व्वकर्मणां करणे समर्थं स्यात् कस्ततोऽन्यदिच्छेदुपधारयितुमुपदेष्टुं वा शिष्येभ्य इति ॥

तत्रश्लोकाः ॥

यतो यावन्ति यैर्द्रव्यै र्विरेचनशतानि षट् ।
उक्तानि संग्रहेणेह तथैवैषां षडाश्रयाः ॥
रसा लवणवर्ज्जाश्च कषाया इति संज्ञिताः ।
तस्मात्पञ्चविधा योनिः कषायाणामुदाहृता ॥
तथा कल्पनमप्येषामुक्तं पञ्चविधं पुनः ।
महताञ्च कषायाणां पञ्चाशत्परिकीर्त्तिताः ॥
पञ्चचापि कषायाणां शतान्युक्तानि भागशः ।
लक्षणार्थं प्रमाणं हि विस्तरस्य न विद्यते ॥
न चालमतिसंक्षेपः सामर्थ्यायोपकल्पते ।
अल्पबुद्धेरयं तस्मान्नातिसंक्षेपविस्तरः ॥

मन्दानां व्यवहाराय बुधानां बुद्धिवृद्धये।
पञ्चाशत्कोह्ययं वर्गः कषायाणामुदाहृतः॥
तेषां कर्मसु वाह्येषु योगमाभ्यन्तरेषु च।
संयोगं च वियोगञ्च यो वेद स भिषग्वरः॥

भेषजचतुष्के
षड्विरेचनशताश्रितीयो नाम चतुर्थोऽध्यायः समाप्तः॥
इति भेषजचतुष्कः॥

---

## अथ पञ्चमोऽध्यायः।

अथातोमात्राश्रितीयमध्यायं व्याख्यास्यामः।

इति ह स्माह भगवानात्रेयः। मात्राशी स्यात्। आहारमात्रा पुनरग्नि वलापेक्षिणी। यावद्ध्यस्याशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां गच्छति तावदस्य मात्राप्रमाणं वेदितव्यं भवति॥ तत्र शालिषष्टिकमुद्गलावकपिञ्जलैणशशशरभशम्बरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ति॥ तथा पिष्टेक्षुक्षीरविकृतिमाषानूपौदकपिशितादीन्याहारद्रव्याणि प्रकृति गुरूण्यपि मात्रामेवापेक्षन्ते॥ न चैव मुक्ते द्रव्ये गुरुलाघवमकारणं मन्यते। लघूनि हि द्रव्याणि वाय्वग्निगुणबहुलानि भवन्ति। पृथिवीसोमगुणबहुलानीतराणि। तस्मात् स्वगुणादपि लघून्यग्निसन्धुक्षणस्वभावान्यल्पदोषाणि चोच्यन्ते अपि सौहित्योपयुक्तानि गुरूणि पुनर्नाग्नि सन्धुक्षणस्वभावान्यसामा-

न्यादतश्चातिमात्रं दोषवन्ति सौहित्योपयुक्तानि अन्यत्र व्यायामाग्निबलात्। सैषा भवत्यग्निबलापेक्षिणी मात्रा न च नापेक्षते द्रव्यम्। द्रव्यापेक्षया च त्रिभागसौहित्यमर्द्ध-सौहित्यं वा गुरूणामुपदिश्यते। लघूनामपि च नाति-सौहित्यमग्ने र्युक्त्यर्थम्। मात्रावद्ध्यशनमशितमनुपहत्य प्रकृतिं बलवर्णसुखायुषा योजयत्युपयोक्तारमनुष्यमिति।

भवन्ति चात्र॥ गुरुपिष्टमयं तस्मात्तण्डुलान् पृथुकानपि।
न जातु भुक्तवान् खादेन्मात्रां खादेद्बुभुक्षितः॥
वल्लूरं शुष्कशाकानि शालूकानि बिसानि च।
नाभ्यसेद्गौरवान्मांसं कृशं नैवोपयोजयेत॥
कूर्चिकांश्च किलाटांश्च शौकरं गव्यमाहिषे।
मत्स्यान् दधि च माषांश्च यवकांश्च न शीलयेत्॥
षष्टिकान् शालि मुद्गांश्च सैन्धवामलकीयवान्।
आन्तरीक्षं पयः सर्पिर्जाङ्गलं मधु चाभ्यसेत्॥
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत्॥
अतऊर्द्ध्वं शरीरस्य कार्य्यमभ्यञ्जनादिकम्।
स्वस्थवृत्तमभिप्रेत्य गुणतः संप्रवक्ष्यते॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत्।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम्॥
नहि नेत्रामयं तस्य विशेषात् श्लेष्मतो भयम्।
दिवा तन्न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम्॥
विरेकदुर्ब्बलादृष्टिरादित्यं प्राप्य सीदति।
तस्मात् स्राव्यं निशायान्तु ध्रुवमञ्जनमिष्यते॥

ततः श्लेष्महरं कर्म हितं दृष्टेः प्रसादनम्॥
यथाहि कणकादीनां मलिनां विविधात्मनाम्।
धौतानां निर्मलाशुद्धिस्तैलचेलकचादिभिः॥
एवं नेत्रेषु मर्त्यानामञ्जनाश्च्योतनादिभिः।
दृष्टिर्निराकुला भाति निर्मले नभसीन्दुवत्॥
हरेणुकां प्रियङ्गुञ्च पृथ्वीकां केशरं नखम्।
ह्रीवेरं चन्दनं पत्रं त्वगेलोशीरपद्मकम्॥
ध्यामकं मधुकं मांसी गुग्गुल्वगुरुशर्करम्।
न्यग्रोधोदुम्बराश्वत्थप्लक्षलोध्रत्वचः शुभाः॥
वन्यं सर्जरसं मुस्तं शैलेयं कमलोत्पले।
श्रीवेष्टकं शल्लकीञ्च शुकबर्हमथापि च॥
पिष्ट्वा लिम्पेच्छरेषीकां तां वर्त्तिं यवसन्निभाम्।
अङ्गुष्ठसंमितां कुर्य्यादष्टाङ्गुलसमां भिषक्॥
शुष्कां विगर्भां तां वर्त्तिं धूमनेत्रार्पितां नरः।
स्नेहाक्तामग्निसंप्लुष्टां पिबेत्प्रायोगिकीं सुखाम्॥
वसाघृतमधूच्छिष्टैर्युक्तियुक्तैर्वरौषधैः।
वर्त्तिं मधुरकैः कृत्वा स्नैहिकीं धूममाचरेत्॥
श्वेता ज्योतिष्मती चैव हरितालं मनःशिला।
गन्धाश्चागुरुपत्राद्या धूमो मूर्द्धविरेचनम्॥
गौरवं शिरसः शूलं पीनसार्द्धावभेदकौ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः॥
दन्तदौर्बल्यमास्रावः श्रोत्रघ्राणाक्षिदोषजः।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकः॥
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता मुखे।

श्लेष्मप्रसेको वैस्वर्य्यं गलशुण्ड्यपजिह्विका ॥
खालित्यं पिञ्जरत्वञ्च केशानां पतनन्तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥
धूमपानात् प्रशाम्यन्ति बलं भवति चाधिकम् ।
शिरोरुहकपालानामिन्द्रियाणां स्वरस्य च ॥
न च वातकफात्मानो बलिनोऽप्युर्द्ध्वजत्रुजाः ।
धूमरक्तकपालस्य व्याधयः स्युः शिरोगताः ॥
प्रयोगपाने तस्याष्टौ कालाः सम्परिकीर्त्तिताः ।
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते ॥
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान् विघृष्य च ।
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत् ॥
तथा वातकफात्मनो न भवन्त्यूर्द्ध्वजत्रुजाः ।
रोगास्तस्य तु पेयाः स्युरापाना स्त्रिस्त्रयस्त्रयः ॥
परं द्विकालपायी स्यादह्नः कालेषु बुद्धिमान् ।
प्रयोगे स्नैहिके त्वेवं विरेच्यं त्रिश्चतुः पिबेत् ॥
हृत्कण्ठेन्द्रियसंशुद्धिर्लघुत्वं शिरसः शमः ।
यथेरितानां दोषाणां सम्यक् पीतस्य लक्षणम् ॥
बाधिर्य्यमान्ध्यं मूकत्वं रक्तपित्तं शिरोभ्रमम् ।
अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान् ॥
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ।
स्नैहिकं धूमजे दोषे वायुः पित्तानुगो यदि ॥
शीतन्तु रक्तपित्ते स्यात् श्लेष्मपित्ते विरूक्षणम् ।
परन्त्वतः प्रवक्ष्यामि धूमो येषां विगर्हितः ॥
न विरिक्तः पिबेद्धूमं न कृते वस्तिकर्मणि ।

रक्ती न विषेणार्त्तो न शोची नच गर्भिणी॥
न श्रमे न मदे नामे न पित्ते न प्रजागरे।
न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापिच क्षते॥
न मद्यदुग्धे पीत्वा च न स्नेहं न च माक्षिकम्।
धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च॥
न तालुशोषे तिमिरे शिरस्यभिहते नच।
न शङ्खके न रोहिण्यां न मेहे न मदात्यये॥
एषु धूममकालेषु मोहात् पिबति यो नरः।
रोगास्तस्य प्रवर्द्धन्ते दारुणा धूमविभ्रमात्॥
धूमयोग्यः पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये।
घ्राणेनास्येन कण्ठस्थे मुखेन घ्राणपो वमेत्॥
आस्येन धूमकवलान् पिबन् घ्राणेन नोद्वमेत्।
प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी॥
ऋज्वङ्गचक्षुस्तच्चेताः सूपविष्टस्त्रिपर्य्ययम्।
पिबेच्छिद्रं पिधायैकं नासया धूममात्मवान्॥
चतुर्विंशतिकं नेत्रं स्वाङ्गुलीभिर्विरेचने।
द्वात्रिंशदङ्गुलं स्नेहे प्रयोगेऽध्यर्द्धमिष्यते॥
ऋजु त्रिकोषाफलितं कोलास्थ्यग्रप्रमाणितम्।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते॥
दूराद्विनिर्गतः पर्वच्छिन्नो नाड़ीतनूकृतः।
नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः॥
यदा चोरश्च कण्ठश्च शिरश्च लघुतां व्रजेत्।
कफश्च तनुतां प्राप्तः सुपीतं धूममादिशेत्॥
अविशुद्धः स्वरो यस्य कण्ठश्च सकफो भवेत्।

स्तिमितो मस्तकश्चैव मपीतं धूममादिशेत् ॥
तालु मूर्द्धा च कण्ठश्च शुष्यते परितप्यते ।
तृष्यतेमुह्यते जन्तू रक्तञ्च स्रावतेऽधिकम् ॥
शिरश्च भ्रमतेऽत्यर्थं मूर्च्छाचास्योपजायते ।
इन्द्रियाण्युपतप्यन्ते धूमेऽत्यर्थं निषेविते ॥
वर्म्मं वर्षेऽणुतैलञ्च कालेषु त्रिषु नाचरेत् ।
प्रावृट्शरद्वसन्तेषु गतमेघे नभस्तले ॥
नस्य कर्म्म यथाकालं यो यथोक्तं निषेवते ।
न तस्य चक्षुर्नघ्राणं न श्रोत्रमुपहन्यते ॥
नस्युः श्वेतान कपिलाः केशाः श्मश्रूणि वा पुनः ।
नच केशाःप्रलुठन्ते वर्द्धन्ते च विशेषतः ॥
मन्यास्तम्भः शिरः शूलमर्द्दितं हनुसंग्रहः ।
पीनसार्द्धावभेदौ च शिरः कम्पश्च शाम्यति ॥
शिराः शिरः कपालानां सन्धयः स्नायुकण्डराः ।
नावन प्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥
मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान् ।
सर्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम् ।
नचास्य रोगाः सहसा प्रभवन्त्यूर्द्धजत्रुजाः ।
जीर्य्यतश्चोत्तमाङ्गेव जरानलभते बलम् ॥
चन्दनागुरुणीपत्रं दार्वीत्वक् मधुकं बलाम् ।
प्रपौण्डरीकं सूक्ष्मैलां विडङ्गं विल्वमुत्पलम् ॥
ह्रीवेरमभयं वन्यं त्वङ्मुस्तं सारिवां स्थिराम् ।
सुराह्वं पृश्निपर्णीञ्च जीवन्तीञ्च शतावरीम् ॥
हरेणुं वृहतीं व्याघ्रीं सुरभीं पद्मकेशरम् ।

विपाचयेच्छतगुणे माहेन्द्रे विमलेऽम्भसि ॥
तैलाद्दशगुणं शेषं कषायमवतारयेत्।
तेन तैलं कषायेण दशकृत्वो विपाचयेत् ॥
अथास्य दशमे पाके समांशं छागलं पयः।
दद्यादेषोऽणुतैलस्य नावनीयस्य संविधिः ॥
तस्य मात्रां प्रयुञ्जीत तैलस्यार्धपलोन्मिताम्।
स्निग्धस्विन्नोत्तमाङ्गस्य पिचुना नावनैस्त्रिभिः ॥
त्र्यहात्त्र्यहाच्च सप्ताहमेतत्कर्म समाचरेत्।
निवातोष्णसमाचारी हिताशी नियतेन्द्रियः ॥
तैलमेतत्त्रिदोषघ्नमिन्द्रियाणां बलप्रदम्।
प्रयुञ्जानो यथाकालं यथोक्तानश्नुते गुणान् ॥
आपोथिताग्रं द्वौ कालौ कषायं कटुतिक्तकम्।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥
निहन्ति गन्धवैरस्यं जिह्वादन्तास्यजं मलम्।
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम् ॥
सुवर्णरूप्यताम्राणि त्रपुरीतिमयानि च।
जिह्वानिर्लेखनानि स्युरतीक्ष्णान्यनृजूनि च ॥
जिह्वामूलगतं यच्च मलमुच्छ्वासरोधि च।
सौगन्ध्यं भजते तेन तस्माज्जिह्वां विनिर्लिखेत् ॥
करञ्जकरवीरार्कमालतीककुभासनाः।
शस्यन्ते दन्तपवने ये चाप्येवं विधा द्रुमाः ॥
धार्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता।
जातीकटुकपूगानां लवङ्गस्य फलानि च ॥
कक्कोलकफलं पत्रं ताम्बूलस्य शुभं तथा।

तथा कर्पूरनिर्य्यासः सूक्ष्मैलायाः फलानि च॥
हन्वोर्बलं स्वरबलं वदनोपचयः परः।
स्याात्परश्च रसज्ञानमन्ने च रुचिरुत्तमा॥
नचास्य कण्ठशोषः स्यान्नौष्ठयोःस्फुटनाद्भयम्।
नच दन्ताः क्षयं यान्ति दृढमूला भवन्ति च।
न शूलन्ते नचाम्लेन हृष्यन्ते भक्षयन्ति च॥
परानपि परान् भक्ष्यान् तैलगण्डूषसेवनात्।
नित्यं स्नेहार्द्रशिरसः शिरःशूलं न जायते॥
न खालित्यं न पालित्यं न केशाः प्रपतन्ति च।
बलं शिरःकपालानां विशेषेणाभिवर्द्धते।
दृढमूलाश्च दीर्घाश्च कृष्णाः केशाः भवन्ति च॥
इन्द्रियाणि प्रसीदन्ति सुत्वग्भवति चामलम्।
निद्रालाभः सुखञ्च स्यान्मूर्ध्नि तैलनिषेवणात्॥
न कर्णरोगा वातोत्थाः न मन्याहनुसंग्रहः।
नोच्चैः श्रुतिर्नवाधिर्य्यं स्यान्नित्यं कर्णतर्पणात्॥
स्नेहाभ्यङ्गाद्यथाकुम्भश्चर्मस्नेहविमर्द्दनात्।
भवत्युपाङ्गादक्षश्च दृढः क्लेशसहो यथा॥
तथा शरीरमभ्यङ्गाद्दृढं सुत्वक् प्रजायते।
प्रशान्तमारुतावाधं क्लेशव्यायामसंग्रहम्॥
स्पर्शने चाधिको वायुः स्पर्शनञ्च त्वगाश्रितम्।
त्वच्यश्च परमोऽभ्यङ्गस्तस्मात्तं शीलयेन्नरः॥
नचाभिघाताभिहतं गात्रमभ्यङ्गसेविनः।
विकारं भजतेऽत्यर्थं बलकर्म्मणि वा क्वचित्॥
सुस्पर्शोपचिताङ्गश्च बलवान् प्रियदर्शनः।

भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पोजर एव च ॥
खरत्वं शुष्कतां रौक्ष्यं श्रमः सुप्तिश्च पादयोः।
सद्य एवोपशाम्यन्ति पादाभ्यङ्गनिषेवणात् ॥
जायते सौकुमार्य्यञ्च वलं स्थैर्य्यञ्च पादयोः।
दृष्टिः प्रसादं लभते मारुतश्चोपशाम्यति ॥
न च स्याद् गृध्रसीवाताः पादयोः स्फुटनं नच।
न शिरास्नायुसङ्कोचः पादाभ्यङ्गेन पादयोः ॥
दौर्गन्ध्यं गौरवं तन्द्रां कण्डूमलमरोचकम्।
स्वेदं वीभत्सतां हन्ति शरीरपरिमार्ज्जनम् ॥
पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम्।
शरीरवलसन्धानं स्नानमोजस्करं परम् ॥
काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम्।
श्रीमत्पारिषदं शस्तं निर्म्मलाम्बरधारणम् ॥
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिवलप्रदम्।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवणम् ॥
धन्यं मङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनम्।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥
मेध्यम्पवित्रमायुष्यमलक्ष्मीकलिनाशनम्।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥
पौष्टिकं वृष्यमायुष्यं शुचिरूपविराजनम्।
केशश्मश्रुनखादीनां कल्पनं संप्रसाधनम् ॥
चक्षुष्यं स्पर्शनहितं पादयोर्व्यसनापहम्।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥
ईतेःप्रशमनं वल्यं गुप्त्यावरणशङ्करम्।

घर्मानिल रजोम्बुघ्नं छत्रधारणमुच्यते।
स्खलतः संप्रतिष्ठानं शत्रूणाञ्च निषेधनम्॥
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम्।
नगरी नगरस्येव रथस्येव रथी सदा॥
स्वशरीरस्य मेधावीकृत्ये स्वरहिता भवेदिति।
भवति चात्र। वृत्त्युपायान्निषेवेत येस्युर्धर्माविरोधिनः॥
शममध्ययनञ्चैव सुखमेवं समश्नुते।
तत्र श्लोकाः। मात्राद्रव्याणि मात्राञ्च संश्रित्यगुरुलाघवम्।
द्रव्याणां गर्हितोभ्यासो येषां येषाञ्च शस्यते॥
अञ्जनं धूमवर्त्तिश्च त्रिविधावर्त्तिकल्पना।
धूमपानगुणाः कालाः पानमानञ्च यस्य यत्॥
व्यापत्ति चिह्नं भैषज्यं धूमो येषां विगर्हितः।
पेयो यथा यन्मयञ्च नेत्रं यस्य च यद्विधम्॥
नस्य कर्मगुणा नस्तः कार्य्यं यच्च यथा यदा।
भक्षयेद्दन्तपवनं यथा यच्चद् गुणञ्च यत्॥
यदर्थं यानि चास्येन धार्य्याणि कवलग्रहे।
तैलस्य ये गुणा दृष्टा शिरस्तैलगुणाश्च ये॥
कर्णतैल तथा ग्यङ्गे पादाभ्यङ्गे च मार्जने।
स्नाने वासचि शुद्धे च सौगन्ध्ये रत्नधारणे॥
शौचे संहरणे लोम्नां पादत्र छत्रधारणम्।
गुणा मात्राशितीयेऽस्मिन् यथोक्ता दण्डधारणे॥
इति अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
मात्राशितीयो नाम पञ्चमोऽध्यायः।

## षष्ठोऽध्यायः।

अथातः तस्याशितीयमध्यायं व्याख्यास्यामः।

तस्याशितीयोऽध्याहाराद्बलं वर्णश्च वर्द्धते।
यावत्तु सात्म्यं विदितं चेष्टाहारव्यपाश्रयम्॥

इह खलु षड़ङ्गमृतुविभागेन विद्यात्। तदादित्यस्योदगयनमादानं च त्रीनृतून् शिशिरादीन्। ग्रीष्मान्तान् व्यवस्येत् वर्षादीन् पुनर्हेमन्तान्तान् दक्षिणायनं विसर्गञ्च।

विसर्गे च पुनर्वायवो नातिरूक्षाः प्रवान्तीतरे पुनरादाने सोमश्चाव्याहतबलः। शिशिराभिर्भाभिरापूरयन् जगदाप्याययति शश्वदतो विसर्गः सौम्यः।

आदानं पुनराग्नेयं तावेतावर्कवायू सोमश्च कालस्वभावमार्गपरिगृहीताः कालर्तुरसदोषदेहबलनिर्वृत्तिप्रत्ययभूताः समुपदिश्यन्ते।

तत्र रविर्भाभिराददानो जगतः स्नेहं वायवस्तीव्ररूक्षाश्चोपशोषयन्तः शिशिरवसन्तग्रीष्मेषु यथाक्रमं रौक्ष्यमुत्पादयन्तो रूक्षान् रसान् तिक्तकषायकटुकांश्चाभिवर्द्धयन्तो नृणां दौर्बल्यमावहन्ति।

वर्षाशरद्धेमन्तेषु तु दक्षिणाभिमुखेऽर्के कालमार्गमेघवातवर्षाभिहतप्रतापे शशिनि चाव्याहतबले माहेन्द्रसलिलप्रशान्तसन्तापे जगत्यरूक्षा रसाः प्रवर्द्धन्तेऽम्ललवणमधुरा यथाक्रमं तत्र बलमुपचीयन्ते नृणामिति।

भवति चात्र॥ आदावन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम्।
मध्ये मध्यबलन्त्वन्ते श्रेष्ठमग्रे च निर्दिशेत्॥
शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली।
पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः॥
स यदा नेन्धनं युक्तं लभते देहजं तदा।
रसं हिनस्त्यतो वायुः शीतः शीते प्रकुप्यति॥
तस्मात्तुषारसमये स्निग्धाम्ललवणान् रसान्।
औदकानूपमांसानां मेद्यानामुपयोजयेत्॥
बिलेशयानां मांसानि प्रसहानां भृतानि च।
भक्षयेन्मदिरां सीधुं मधु चानुपिबेन्नरः॥
गोरसानिक्षुविकृतीर्वसां तैलं नवौदनम्।
हेमन्तेऽभ्यस्यतस्तोयमुष्णञ्चायुर्न हीयते॥
अभ्यङ्गोत्सादनं मूर्ध्नि तैलं जेन्ताकमातपम्।
भजेद्भूमिगृहञ्चोष्णमुष्णं गर्भगृहं तथा॥
शीते सुसंवृतं सेव्यं यानं शयनमासनम्।
प्रावाराजिनकौशेयप्रवेणीकुथकास्तृतम्॥
गुरूष्णवासा दिग्धाङ्गो गुरुणाऽगुरुणा सदा।
शयने प्रमदां पीनां विशालोपचितस्तनीम्।
आलिङ्ग्यागुरुदिग्धाङ्गीं सुप्यात् समदमन्मथः॥
प्रकामञ्च निषेवेत मैथुनं शिशिरागमे।
वर्जयेदन्नपानानि लघूनि वातलानि च॥
प्रवातं प्रमिताहारमुदमन्थं हिमागमे।
हेमन्तशिशिरे तुल्ये शिशिरेऽल्पं विशेषणम्॥
रौक्ष्यमादानजं शीतं मेघमारुतवर्षजम्।

तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ॥
निवातमुष्णमधिकं शिशिरे गृहमाश्रयेत् ।
कटुतिक्तकषायाणि वातलानि लघूनि च ॥
वर्जयेदन्नपानानि शिशिरे शीतलानि च ।
हेमन्तनिचितः श्लेष्मा दिनकृद्भाभिरीरितः ॥
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून् ।
तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ॥
गुर्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ।
व्यायामोद्वर्तनं धूमं कवलग्रहमञ्जनम् ॥
सुखाम्बुना शौचविधिं शीलयेत् कुसुमागमे ।
चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः ॥
शारभं शाशमैणेयं मांसं लावकपिञ्जलम् ।
भक्षयेन्निर्गदं सीधु पिबेन्माध्वीकमेव वा ॥
वसन्ते नुभवेत् स्त्रीणां कामिनीनाञ्च यौवनम् ।
मयूखैर्जगतः सारं ग्रीष्मे पेपीयते रविः ॥
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ।
शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः ॥
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ।
मद्यमल्पं न वा पेयमथवा सुबहूदकम् ॥
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत् ।
दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले ॥
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके ।
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः ॥
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः ।

काननानि च शीतानि जलानि कुसुमानि च ।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥
आदानदुर्बले देहे पक्ता भवति दुर्बलः ।
स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः ॥
भूवाष्पान्मेघनिस्यन्दात् पाकादम्लाज्जलस्य च ।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥
तस्मात् साधारणः सर्व्वो विधिर्वर्षासु शस्यते ।
उदमन्थं दिवास्वप्नमवश्यायं नदीजलम् ।
व्यायाममातपञ्चैव व्यवायञ्चात्र वर्जयेत् ॥
पानभोजनसंस्कारान् प्रायः क्षौद्रान्वितान् भजेत् ॥
व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि ।
विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये ॥
अग्निसंरक्षणवता यवगोधूमशालयः ।
पुराणा जाङ्गलैर्मांसैर्भोज्ययूषैश्च संस्कृताः ॥
पिबेत् क्षौद्रान्वितञ्चाल्पं माध्वीकारिष्टमम्बु वा ।
माहेन्द्रं तप्तशीतं वा कौपं सारसमेव वा ॥
प्रघर्षोद्वर्त्तनस्नानगन्धमाल्यपरो भवेत् ।
लघुशुद्धाम्बरः स्थानं भजेदक्लेदि वार्षिकम् ॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति ॥
तत्रान्नपानं मधुरं लघुशीतं सतिक्तकम् ।
पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः ॥
लावान् कपिञ्जलानेणानुरभ्रान् शरभान् शशान् ।
शालीनसयवगोधूमान् सेव्यानाहुर्घनात्यये ॥

तिक्तस्य सर्पिषः पानं विरेको रक्तमोक्षणम्।
धाराधरात्यये कार्य्यमातपस्य च वर्जनम्॥
वसां तैलमवश्याय मौदकानूपमामिषम्।
क्षारं दधि दिवास्वप्नं प्राग्वातञ्चात्र वर्ज्जयेत्॥
दिवा सूर्य्यांशुसन्तप्तं निशि चन्द्रांशुशीतलम्।
कालेन पक्कं निर्द्दोषमगस्त्येनाविषीकृतम्॥
हंसोदकमिति ख्यातं शारदं विमलं शुचि।
स्नानपानावगाहेषु शस्यते तद्यथा मृतम्॥
शारदानि च माल्यानि वासांसि विमलानि च।
शरत्काले प्रशस्यन्ते प्रदोषे चन्द्ररश्मयः॥
इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम्।
उपशेते यदौचित्यादोकसात्म्यं तदुच्यते॥
दोषाणामामयानाञ्च विपरीतगुणं गुणैः।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितं चाद्यमेव च॥ इति
तत्र श्लोकाः। ऋतावृतौ नृभिः सेव्यमसेव्यं यच्च किञ्चन।
तस्याशितीये निर्दिष्टं हेतुमत्सात्म्यमेव चेति॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।
तस्याशितीयोऽध्यायः॥

---

## सप्तमोऽध्यायः

अथातो न वेगान् धारणीयमध्यायं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥

न वेगान्धारयेद्धीमान् जातान् मूत्रपुरीषयोः ।
न रेतसो न वातस्य न वम्याः क्षवथोर्न च ॥
नोद्गारस्य न जृम्भाया न वेगान् क्षुत्पिपासयोः ।
न वाष्पस्य न निद्राया न निःश्वासस्य श्रमेण च ॥
एतान् धारयतो जातान् वेगान् रोगा भवन्ति ये ।
पृथक् पृथक् चिकित्सार्थं तान् मे निगदतः शृणु ॥
वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा ।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥
स्वेदावगाहनाभ्यङ्गान् सर्पिषश्चावपीडकम् ।
मूत्रे प्रतिहते कुर्य्यात् त्रिविधं वस्तिकर्म च ॥
पक्वाशयशिरःशूलं वातवर्चोऽप्रवर्त्तनम् ।
पिण्डिकोद्वेष्टनाध्मानं पुरीषे स्याद्विधारिते ॥
स्वेदाभ्यङ्गावगाहाश्च वर्त्तयो वस्तिकर्म च ।
हितं प्रतिहते वर्च्चस्यन्नपानं प्रमाथि च ॥
मेढ्रे वृषणयोः शूलमङ्गमर्दो हृदि व्यथा ।
भवेत् प्रतिहते शुक्रे विबद्धं मूत्रमेव च ॥
तत्राभ्यङ्गावगाहाश्च मदिरा चरणायुधाः ।
शालिः पयो निरूहश्च शस्तं मैथुनमेव च ॥
वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा ।

जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात्॥
स्नेहस्वेदविधिस्तत्र वर्त्तयो भोजनानि च।
पानानि बस्तयश्चैव शस्तं वातानुलोमनम्॥
कण्डूकोठाऽरुचिव्यङ्गशोथपाण्ड्वामयज्वराः।
कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः॥
भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम्।
रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते॥
मन्यास्तम्भः शिरःशूलमर्दितार्द्धावभेदकौ।
इन्द्रियाणाञ्च दौर्बल्यं क्षवथोः स्याद्विधारणात्॥
तत्रोर्द्ध्वजत्रुकेऽभ्यङ्गः स्वेदो धूमः सनावनः।
हितं वातघ्नमाद्यञ्च घृतञ्चोत्तरभक्तिकम्॥
हिक्काश्वासोऽरुचिः कम्पो विबन्धो हृदयोरसोः।
उद्गारनिग्रहात्तत्र हिक्कायास्तुल्यमौषधम्॥
विनामाक्षेपसङ्कोचाः सुप्तिः कम्पः प्रवेपनम्।
जृम्भाया निग्रहात्तत्र सर्वं वातघ्नमौषधम्॥
कार्श्यदौर्बल्यवैवर्ण्यमङ्गमर्दोऽरुचिर्भ्रमः।
क्षुद्वेगनिग्रहात्तत्र स्निग्धोष्णं लघुभोजनम्॥
कण्ठास्यशोषो बाधिर्य्यं श्रमः सादो हृदि व्यथा।
पिपासानिग्रहात् तत्र शीतं तर्पणमिष्यते॥
प्रतिश्यायोऽक्षिरोगश्च हृद्रोगश्चारुचिर्भ्रमः।
वाष्पनिग्रहणात्तत्र स्वप्नो मद्यं प्रियाः कथाः॥
जृम्भाङ्गमर्दस्तन्द्रा च शिरोरोगाक्षिगौरवम्।
निद्राविधारणात् तत्र स्वप्नः संवाहनानि च॥
गुल्महृद्रोगसम्मोहाः श्रमनिःश्वासधारणात्।

जायन्ते तत्र विश्रामो वातघ्नाश्च क्रियाः हिताः ॥
वेगनिग्रहजा रोगा य एते परिकीर्त्तिताः ।
इच्छंस्तेषामनुत्पत्तिं वेगानेतान्न धारयेत् ॥
इमांस्तु धारयेद्वेगान् हितैषी प्रेत्य चेह च ।
साहसानामशस्तानां मनोवाक्कायकर्म्मणाम् ॥
लोभशोकभयक्रोधमानवेगान् निधारयेत् ।
नैर्लज्जेर्ष्यातिरागाणामभिध्यायाश्च बुद्धिमान् ॥
परुषस्यातिमात्रस्य सूचकस्यानृतस्य च ।
वाक्यस्याकालयुक्तस्य धारयेद्वेगमुत्थितम् ॥
देहप्रवृत्तिर्या काचित् वर्त्तते परपीडया ।
स्त्रीभोगस्तेयहिंसाद्या तस्या वेगान् विधारयेत् ॥
पुण्यशब्दो विपापत्वान्मनोवाक्कायकर्म्मणाम् ।
धर्म्मार्थकामान् पुरुषः सुखी भुङ्क्ते चिनोति च ॥
शरीरचेष्टा या चेष्टा स्थैर्य्यार्था बलवर्द्धिनी ।
देहव्यायामसंख्याता मात्रया तां समाचरेत् ॥
लाघवं कर्मसामर्थ्यं स्थैर्य्यं क्लेशसहिष्णुता ।
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥
श्रमः क्लमः क्षयस्तृष्णा रक्तपित्तं प्रतामकः ।
अतिव्यायामतः कासो ज्वरश्छर्द्दिश्च जायते ॥
व्यायामहास्यभाष्याध्वग्राम्यधर्म्मप्रजागरान् ।
नोचितानपि सेवेत बुद्धिमानतिमात्रया ।
एतानेवं विधांश्चान्यान् योऽतिमात्रं निषेवते ।
गजः सिंहमिवाकर्षन् सहसा स विनश्यति ॥
उचितादहिताद्धीमान् क्रमशो विरमेन्नरः ।

हितं क्रमेण सेवेत क्रमश्चात्रोपदिश्यते ॥
प्रक्षेपापचयेताभ्यां क्रमः पादांशिको भवेत्।
एकान्तरं ततश्चोर्द्धं द्व्यन्तरं त्र्यन्तरं तथा ॥
क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः।
सन्तोयान्त्यपुनर्भावमप्रकम्प्या भवन्ति च ॥
समपित्तानिलकफाः केचिद्गर्भादिमानवाः।
दृश्यन्ते वातलाः केचित् पित्तलाः श्लेष्मलास्तथा ॥
तेषामनातुराः पूर्वे वातलाद्याः सदातुराः।
दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते ॥
विपरीतगुणस्तेषां स्वस्थवृत्तेर्विधिर्हितः।
समसर्वरसं सात्म्यं समधातोः प्रशस्यते ॥
द्वे अधः सप्त शिरसि खानि स्वेदमुखानि च।
मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः ॥
मलवृद्धिं गुरुत्वेन लाघवान्मलसंक्षयम्।
मलायनानां बुध्येत सङ्गोत्सर्गादतीव च ॥
तान् दोषलिङ्गैरादिश्य व्याधीन् साध्यानुपाचरेत्।
व्याधिहेतुप्रतिद्वन्द्वैर्मात्राकालौ विचारयन् ॥
विषमस्वस्थवृत्तानामेते रोगास्तथापरे।
जायन्ते नातुरस्तस्मात् स्वस्थवृत्तपरो भवेत् ॥
माधवप्रथमे मासि नभस्यप्रथमे पुनः।
सहस्य प्रथमे चैव हारयेद्दोषसञ्चयम् ॥
स्निग्धस्विन्नशरीराणामूर्द्धं चाधश्च बुद्धिमान्।
वस्तिकर्म ततः कुर्य्यान्नस्तः कर्म च बुद्धिमान् ॥
यथाक्रमं यथायोगमत ऊर्द्धं प्रयोजयेत्।

रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥
रोगास्तथा न जायन्ते प्रकृतिस्थेषु धातुषु ।
धातवश्चाभिवर्द्धन्ते जरा चान्त्यमुपैति च ॥
विधिरेष विकाराणामनुत्पत्तौ निदर्शितः ।
निजानामितरेषान्तु पृथगेवोपदिश्यते ॥
ये भूतविषवाय्वग्निसम्प्रहारादिसम्भवाः ।
नृणामागन्तवो रोगाः प्रज्ञा तेष्वपराध्यति ॥
ईर्ष्याशोकभयक्रोधमानद्वेषादयश्च ये ।
मनोविकारास्तेऽप्युक्ताः सर्वे प्रज्ञापराधजाः ॥
त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्त्तनम् ॥
आगन्तूनामनुत्पत्तावेष मार्गो निदर्शितः ।
प्राज्ञः प्रागेव तत् कुर्य्याद्धितं विद्याद्यदात्मनः ॥
आप्तोपदेशः प्राज्ञानां प्रतिपत्तिश्च कारणम् ।
विकाराणामनुत्पत्तावुत्पन्नानाञ्च शान्तये ॥
पापवृत्तवचःसत्त्वाः सूचकाः कलहप्रियाः ।
मर्म्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः ॥
परापवादरतयः परनारीप्रवेशिनः ।
निर्घृणास्त्यक्तधर्म्माणः परिवर्ज्या नराधमाः ॥
बुद्धिविद्यावयःशीलधैर्य्यस्मृतिसमाधिभिः ।
वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः ॥
सुमुखाः सर्वभूतानां प्रशान्ताः शंसितव्रताः ।
सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः ॥
आहाराचारचेष्टासु सुखार्थी प्रेत्य चेह च ।

परं प्रयत्नमातिष्ठेद् बुद्धिमान् हितसेवने ॥
न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ।
नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना ॥
अलक्ष्मीदोषयुक्तत्वान्नक्तन्तु दधिवर्जितम् ।
श्लेष्मणं स्यात् ससर्पिष्कं दधि मारुतसूदनम् ॥
न च सन्धूक्षयेत् पित्तमाहारञ्च विपाचयेत् ।
शर्करासंयुतं दद्यात्तृष्णादाह निवारणम् ॥
मुद्गयूषेण संयुक्तं दद्याद्रक्तानिलापहम् ।
सुरसञ्चाल्पदोषञ्च क्षौद्रयुक्तं भवेद्दधि ।
उष्णं पित्तास्रदोषान् धात्रीयुक्तन्तु निर्हरेत् ॥
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् ।
प्राप्नुयात् कामलाञ्चोग्रां विधिं हित्वा दधिप्रिय इति॥
अत्र श्लोकाः ॥ वेगावेगसमुत्थाश्च रोगास्तेषाञ्च भेषजम् ।
येषां वेगा विधार्य्याश्च यदर्थं यद्धिताहितम् ॥
उचिते चाहिते वर्ज्ये सेव्ये चानुचिते क्रमः ।
यथा प्रकृतिचाहारो मलायनगदौषधम् ॥
भविष्यतामनुत्पत्तौ रोगाणामौषधञ्च यत् ।
वर्ज्याः सेव्याश्च पुरुषा धीमतात्मसुखार्थिना ॥
विधिना दधिसेव्यञ्च येन यस्मात्तदद्विजः ।
न वेगान् धारणेऽध्याये सर्वमेवावदन्मुनिरिति ॥
अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।
न वेगान् धारणीयोऽध्यायः ॥

---

अष्टमोऽध्यायः।

अथात इन्द्रियोपक्रमणीयमध्यायं व्याख्यास्यामः।
इति ह स्माह भगवानात्रेयः॥

इह खलु पञ्चेन्द्रियाणि पञ्चेन्द्रियद्रव्याणि।
पञ्चेन्द्रियाधिष्ठानानि पञ्चेन्द्रियार्थाः। पञ्चेन्द्रियबुद्धयो भवन्तीत्युक्तमिन्द्रियाधिकारे अतीन्द्रियं पुनःमनःसत्वसंज्ञकञ्चेत्याहुरेके तदर्थात्मसम्पत्तदायत्त चेष्टम्।

चेष्टा प्रत्ययभूतमिन्द्रियाणाम्। स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्चानेकमेकास्मिन् पुरुषे सत्वम्। रजस्तमःसत्वगुणयोगाच्च न चानेकत्वं नानेकं ह्येककालमनेकेषु प्रवर्त्तते।

तस्माच्चानेककाला सर्वेन्द्रियः प्रवृत्तिः। यद्गुणच्चाभीक्ष्णं पुरुषमनुवर्त्तते सत्वं तत् सत्वमेवोपदिशन्ति ऋषयो बाहुल्यानुशयात्॥

मनःपुरः सराणीन्द्रियान्यर्थग्रहणसमर्थानि भवन्ति।
तत्र चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनमिति पञ्चेन्द्रियाणि॥

पञ्चेन्द्रियद्रव्याणि खं वायुर्ज्योतिरापो भूरिति। पञ्चेन्द्रियाधिष्ठानान्यक्षिणी कर्णौ नासिके जिह्वा त्वक् चेति॥

पञ्चेन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः॥ पञ्चेन्द्रियबुद्धयश्चक्षुर्बुद्ध्यादिकाः स्ताः।

पुनरिन्द्रियेन्द्रियार्थसत्वात्मसन्निकर्षजाः॥

क्षणिका निश्चयात्मिकाश्चेत्येतत्पञ्चपञ्चकम्। मनोमनोऽर्थोबुद्धिरात्मा चेत्यध्यात्मद्रव्यगुणसङ्ग्रहः शुभाशुभप्रवृत्तिनिवृत्तिहेतुश्च द्रव्याश्रितं कर्म यदुच्यते क्रियेति॥

तत्रानुमानगम्यानां पञ्चमहाभूतविकारसमुदायात्मका-नामपि सतामिन्द्रियाणां तेजश्चक्षुषि श्रोत्रे घ्राणे क्षितिरापो रसने स्पर्शनेऽनिलो विशेषेणोपदिश्यते ।

तत्र यद्यदात्मकमिन्द्रियं विशेषात्तत्तदात्मकमेवार्थमनुधा-वति ॥ तत् स्वभावाद्विभुत्वाच्च।

तदर्थातियोगायोगमिथ्यायोगात् समनस्कमिन्द्रियं विकृतिमापद्यमानं यथास्वबुद्ध्युपघाताय सम्पद्यते ॥

समयोगात् पुनः प्रकृतिमापद्यमानं यथास्वं बुद्धिमा-प्याययति ॥

मनसस्तु चिन्त्यमर्थः ॥ तत्र मनसो बुद्धेश्च त एव समा-नातिहीनमिथ्यायोगाः प्रकृतिविकृतिहेतवो भवन्ति ॥

तत्रेन्द्रियाणां समनस्कानामनुपतप्तानामनुपतापाय प्रकृतिभावे प्रयतितव्यमेभिर्हेतुभिः ॥

तद्यथा सात्म्येन्द्रियार्थसंयोगेन बुद्ध्या सम्यगवेक्ष्या-वेक्ष्यकर्मणां सम्यक् प्रतिपादनेन देशकालात्मगुणविपरी-तोपसेवनेन चेति ॥ तस्मादात्महितं चिकीर्षता सर्वेण सर्वं सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम् । तद्ध्यनुष्ठानं युगपत् सम्पादयत्यर्थद्वयमारोग्यमिन्द्रियविजयञ्चेति ॥ तत् सद्वृत्त-मखिलेनोपदेक्ष्यामः ॥ तद्यथा ॥ देवगोब्राह्मणगुरुवृद्धसिद्धा-चार्यानर्चयेत् । अग्निमनुचरेत् । ओषधीः प्रशस्ता धार-येत् ॥ द्वौ कालावुपस्पृशेत् ॥ मलायतनेष्वभीक्ष्णं पादयोश्च वैम-ल्यमादध्यात् । त्रिःपक्षस्य केशश्मश्रुलोमनखान् संहारयेत् । नित्यमनुपहतवासाः सुमनाः सुगन्धिः स्यात् साधुवेशः प्रसा-

धितकेशो मूर्द्धश्रोत्रपाद तैलनित्यो धूमपः पूर्व्वाभिभाषी सुमुखः। दुर्गेष्वभ्युपपत्ता होता यष्टा दाता चतुष्पथानां नमस्कर्त्ता बलीनामुपहर्त्ताऽतिथीनां पूजकः पितृणां पिण्डदः काले हितमितमधुरार्थवादी। वश्यात्मधर्म्मात्मा हेतावीर्ष्युः फलेनेर्ष्युः। निश्चिन्तो निर्भीको धीमान् ह्रीमान् महोत्साहः दक्षः क्षमावान् धार्म्मिकः आस्तिकः विनयबुद्धिविद्याभिजनवयोवृद्धसिद्धाचार्य्याणामुपासिता॥ छत्री दण्डी मौनी सोपानत्को युगमात्रदृक् विचरेत्॥ मङ्गलाचारशीलः कुचेलास्थिकण्टकामेध्यकेशतुषोत्करभस्मकपालस्नानबलिभूमीनां परिहर्त्ता। प्राक् श्रमाद्व्यायामवर्जी स्यात्। सर्वप्राणिषु बन्धुभूतः स्यात् क्रुद्धानामनुनेता भीतानामाश्वासयिता। दीनानामभ्युपपत्ता। सत्यसन्धः। सामप्रधानः। परपरुषवचनसहिष्णुः अमर्षघ्नः॥प्रशमगुणदर्शी॥ रागद्वेषहेतूनां हन्ता॥ नानृतं ब्रूयात्॥ नान्यस्वमाददीत।

नान्यस्त्रियमभिलषेत्। नान्यश्रियं न वैरं रोचयेत्। न कुर्य्यात् पापं न पापेऽपि पापी स्यात्॥ नान्यदोषान् ब्रूयात्। नान्यरहस्यमागमयेत्॥ नाधार्म्मिकैर्न नरेन्द्रद्विष्टैः सहासीत। नोन्मत्तैर्न पतितैर्न भ्रूणहन्तृभिर्न क्षुद्रैर्न दुष्टैः॥ न दुष्टयानान्यारोहेत्। न जानुसमं कठिनमासनमध्यासीत्। नाऽनास्तीर्णमनुपहितमविशालमसमं वा शयनं प्रपद्येत। न गिरिविषममस्तकेष्वनुचरेत्॥ न द्रुममारोहेत्। न जलोग्रवेगमवगाहेत्। कूलच्छायां नोपासीत। नाग्न्युत्पातमभितश्चरेत्। नोच्चैर्हसेत्॥ न शब्दवन्तं मारुतं मुञ्चेत्॥ नासंवृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्त्तयेत्। न

नासिकां कुष्णीयात्। न दन्तान् विघट्टयेत्। न नखान्
वादयेत्॥ नास्थीन्यभिहन्यात्। न भूमिं विलिखेत्। न
छिन्द्यात्तृणम्॥ न लोष्टं मृद्नीयात्॥ न विगुणमङ्गैश्चेष्टेत्।
ज्योतींष्यग्निस्वामेध्यमशस्तञ्च नाभिवीक्षेत्॥ न हुं कुर्य्याच्छ-
वम्॥ न चैत्यध्वजगुरुपूज्याशस्तच्छायामाक्रामेत्॥ न क्षपास्व-
मरसदनचैत्यचत्वरचतुष्पथो पवनश्मशानायतनान्यासेवेत्॥
नैकः शून्यगृहं न चाटवीमनुप्रविशेत्। न पापवृत्तान् स्त्री-
मित्रभृत्यांश्च भजेत्॥ नोत्तमैर्विरुध्येत। नावरानुपासीत-
न जिह्मं रोचयेत्॥ नाऽनार्य्यमाश्रयेत्॥ न भयमुत्पादयेत्।
न साहसातिस्वप्नप्रजागरस्नानपानाशनान्यासेवेत। नोर्द्ध-
जानुश्चिरं तिष्ठेत्। न व्यालानुपसर्पेत् न दंष्ट्रिणः न विषा-
णिनः॥ पुरोवातातपावश्यायातिप्रवातान् जह्यात् कलिं
नारभेत्। नानिभृतोऽग्निमुपासीत। नोच्छिष्टो नाधः कृत्वा
प्रतापयेत्॥ नाविगतक्लमो नानाप्लुतवदनो न नग्न उप-
स्पृशेत्। न स्नानशाट्या स्पृशेदुत्तमाङ्गम्। न केशाग्राण्य-
भिहन्यात्। नोपस्पृशेत एव वाससी बिभृयात्॥ नास्पृष्ट्वा-
रत्नाज्यपूज्यमङ्गलसुमनसोऽभिनिष्क्रामेत्। न पुण्यमङ्ग-
लान्यपसव्यं गच्छेत्॥ नेतराण्यनुदक्षिणम्। नारत्नपा-
णिर्नास्नातो नोपहतवासा नाऽजपित्वा नाहुत्वा देवताभ्यो
नाऽनिरूप्य पितृभ्यो नाऽदत्त्वा गुरुभ्यो नातिथिभ्यो नोपा-
श्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपादव-
दनो नाऽशुद्धमुखो नोदङ्मुखो न विमना भक्ताशिष्टाशुचि-
क्षुधितपरिचरो नापात्रीष्वमेध्यासु नादेशे नाऽकाले नाकीर्णे
नाऽदत्त्वाग्रमग्नये नाप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभि-

म्लितं न कुत्सयन् न कुत्सितं न प्रतिकूलोपहितमन्न-मादवीत ॥ न पर्य्युंसितमन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः ॥ नाऽशेषभुक् स्यादन्यत्र दधिमधुलवणसक्तुसर्पिर्भ्यः ॥ न नक्तं दधि भुञ्जीत । न सक्तूनेकानश्नीयात् । न निशि न भुक्त्वा न बहून् न द्विर्नोदकान्तरितान् ॥ न छित्वा द्विजैर्भक्षयेत् ॥ नाऽनृजुः क्षुयान्नाद्यान्न शयीत । न वेगितोऽन्यकार्य्यः स्यात् । न वाय्वग्निसलिलसोमार्कद्विजगुरुप्रतिमुखं निष्ठीविकावातवर्च्चोमूत्राण्युत्सृजेत् ॥ न पन्थानमवमूत्रयेत् । न जनवति नान्नकाले । न जपहोमाध्ययनवलिमङ्गलक्रियासु श्लेष्मसिंघानकं मुञ्चेत् । न स्त्रियमवजानीत । नातिविश्रम्भयेत् । न गुह्यमनुश्रावयेत् ॥ नाधि कुर्य्यात् ॥ न रजस्वलां नातुरां नामेध्यां नाप्रशस्तां नानिष्टरूपाचारोपचारां नादक्षिणां नाकामां नान्यकामां नान्यस्त्रियं नान्ययोनिं नायोनौ न चैत्यचत्वरचतुष्पथ पवनश्मशानायतनसलिलौषधिद्विजगुरुसुरालयेषु न सन्ध्ययोर्नातिथिषु नाशुचिर्नजग्धभेषजो नाप्रणीतसङ्कल्पो नानुपस्थितप्रहर्षो नाभुक्तवान् नात्यशितो न विषमस्थो न मूत्रोच्चारपीडितो न श्रमव्यायामोपवासक्लमाभिहतो नाऽरहसि व्यवायं गच्छेत् ॥ न सतो न गुरून् परिवदेत् ॥ नाशुचिरभिचारकर्मचैत्यपूजापूजाध्ययनमभिनिर्वर्त्तयेत् ॥ न विद्युत्स्वनार्त्तवीषु नाभ्युदितासु दिक्षु नाग्निसंप्लवे न भूमिकम्पे न महोत्सवे नोल्कापाते न महाग्रहोपगमने नष्टचन्द्रायां तिथौ न सन्ध्ययोर्न मुखाद्गुरोर्नावपतितं नातिमात्रं न तान्तं न विस्वरं नाव्यवस्थितपदं नातिद्रुतं न विलम्बितं नातिक्लीबं

नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यसेत्॥ नातिसमयं जह्यात्। न नियमं भिन्द्यात्॥ न नक्तं नादेशे चरेत्॥ न सन्ध्यास्वभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात्॥ न बालवृद्धलुब्धमूर्खक्लिष्टक्लीवैः सह सख्यं कुर्य्यात्॥ न मद्यद्यूतवेश्याप्रसङ्गरुचिः स्यात्। न गुह्यं विवृणुयात्॥ न कञ्चिदवजानीयात्। नाहंमानी स्यात्। न दक्षो नादक्षिणो नासूयको न दक्षिणान् परिवदेत्॥ न गवां दण्डमुद्यच्छेत्॥ न वृद्धान् न गुरून् न गणान् न नृपान् वाधिक्षिपेत् न चातिब्रूयात्॥ न बान्धवानुरक्तकृच्छ्रद्वितीयगुह्यज्ञान् बहिः कुर्य्यात्। नाधीरो नात्युच्छ्रितसत्त्वः स्यात्। नाभृतभृत्यो न विस्रब्धस्वजनो नैकः सुखी॥ न दुःखशीलाचारोपचारो न सर्वविस्रम्भी। न सर्वाभिशङ्की॥ न सर्वकालविचारी॥ न कार्य्यकालमतिपातयेत्॥ नापरीक्षितमभिनिविशेत्। नेन्द्रियवशगः स्यात्॥ न चञ्चलं मनो भ्रामयेत्। न बुद्धीन्द्रियाणामतिभारमादध्यात्॥ न चातिदीर्घसूत्री स्यात्। न क्रोधहर्षावनुविदध्यात्। न शोकमनुवशेत्। न सिद्धावुत्सेकं गच्छेत् नासिद्धौ दैन्यम्। प्रकृतिमभीक्ष्णं स्मरेत्। हेतुप्रभावनिश्चितः स्यात्॥ हेत्वारम्भनित्यश्च। न कृतमित्याश्वसेत्॥ न वीर्य्यं जह्यात्। नापवादमनुस्मरेत्॥ नाशुचिरुत्तमाज्याक्षततिलकुशसर्षपैरग्निं जुहुयात्। आत्मानमाशीर्भिराशासानः॥ अग्निर्मे नापगच्छेच्छरीरात्। वायुर्मे प्राणानादधातु। विष्णुर्मे बलमादधातु। इन्द्रो मे वीर्य्यं शिवा मां प्रविशन्त्वापः। आपोहिष्ठेत्यपः स्पृशेत्॥ द्विः परिमृज्यौष्ठौ पादौ चाभ्युक्ष्य मूर्द्ध-

नि खानि चोपस्पृशेत्। अध्यात्मानं हृदयं शिरश्च ब्रह्म-
चर्यज्ञानदानमैत्रीकारुण्यहर्षोपेक्षाप्रशमपरश्च स्यादिति॥

अत्र श्लोकाः॥ पञ्चपञ्चकमुद्दिष्टं मनो हेतुचतुष्टयम्।
इन्द्रियोपक्रमेऽध्याये सद्वृत्तमखिलेन च॥
स्वस्थवृत्तं यथोद्दिष्टं यः सम्यगनुतिष्ठति।
स समाः शतमव्याधिरायुषा न वियुज्यते॥
नृलोकमापूरयते यशसा साधुसम्मतः।
धर्मार्थौ चेति भूतानां बन्धुतामुपगच्छति॥
परान् सुकृतिनो लोकान् पुण्यकर्मा प्रपद्यते।
तस्माद्वृत्तमनुष्ठेयमिदं सर्वेण सर्वदा॥
यच्चान्यदपि किञ्चित् स्यादनुक्तमिह पूजितम्।
वृत्तं तदपि चात्रेयः सदैवाभ्यनुमन्यते॥

इति स्वस्थवृत्तचतुष्कः॥ अग्निवेशकृते तन्त्रे चरक-प्रतिसंस्कृते इन्द्रियोपक्रमणीयोऽष्टमोऽध्यायः॥

---

## अथ नवमोऽध्यायः।

अथातः खुड्डाकचतुष्पादमध्यायं व्याख्यास्यामः॥
इति ह स्माह भगवानात्रेयः॥

भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।
गुणवत् कारणं ज्ञेयं विकारव्युपशान्तये॥

विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते ।
सुखसंज्ञकमारोग्यं विकारो दुःखमेव च ॥
चतुर्णां भिषगादीनां शस्तानां धातुवैकृते ।
प्रवृत्तिर्धातुसाम्यार्थां चिकित्सेत्यभिधीयते ॥
श्रुते पर्य्यवदातत्वं बहुशो दृष्टकर्मता ।
दाक्ष्यं शौचमिति ज्ञेयं वैद्ये गुणचतुष्टयम् ॥
बहुता तत्र योग्यत्वमनेकविधकल्पना ।
सम्पच्चेति चतुष्कोऽयं द्रव्याणां गुण उच्यते ॥
उपचारज्ञता दाक्ष्यमनुरागश्च भर्त्तरि ।
शौचञ्चेति चतुष्कोऽयं गुणः परिचरे जने ॥
स्मृतिर्निर्देशकारित्वमभीरुत्वमथापि च ।
ज्ञापकत्वञ्च रोगाणामातुरस्य गुणाः स्मृताः ॥
कारणं षोडशगुणं सिद्धौ पादचतुष्टयम् ।
विज्ञाता शासिता योक्ता प्रधानं भिषगत्र तु ॥
पक्तौ हि कारणं पक्तुर्यथा पात्रेन्धनानलाः ।
विजेतुर्विजये भूमिश्चमूः प्रहरणानि च ॥
आतुराद्यास्तथा सिद्धौ पादाः कारणसंज्ञिताः ।
वैद्यस्यातश्चिकित्सायां प्रधानं कारणं भिषक् ॥
मृद्दण्डचक्रसूत्राद्याः कुम्भकारादृते यथा ।
नावहन्ति गुणं वैद्यादृते पादत्रयं तथा ॥
गन्धर्व्वपुरवन्नाशं यद्विकाराः सुदारुणाः ।
यान्ति यच्चेतरे वृद्धिमाशूपायप्रतीक्षिणः ॥
सति पादत्रये ज्ञाज्ञौ भिषजावत्र कारणम् ।
वरमात्मा हुतोऽज्ञेन न चिकित्सा प्रवर्त्तिता ॥

पाणिचाराद्यथाचक्षुरज्ञानाद्भीतभीतवत् ।
नौर्मारुतवशेवाज्ञो भिषक् चरति कर्मसु ॥
यदृच्छया समापन्नमुत्तार्य्य नियतायुषम् ।
भिषग्मानी निहन्त्याशु शतान्यनियतायुषाम् ॥
तस्माच्छास्त्रेऽर्थविज्ञाने प्रवृत्तौ कर्मदर्शने ।
भिषक्चतुष्टये युक्तः प्राणाभिसर उच्यते ॥
हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे ।
ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः ॥
शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये ।
पात्रापेक्षीण्यतः प्रज्ञां चिकित्सार्थं विशोधयेत् ॥
विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया ।
यस्यैते षड्गुणास्तस्य न साध्यमतिवर्त्तते ॥
विद्या मतिः कर्मदृष्टिरभ्यासः सिद्धिराश्रयः ।
वैद्यशब्दाभिनिष्पत्तावलमेकैकमप्यदः ॥
यस्य त्वेते गुणाः सर्वे सन्ति विद्यादयः शुभाः ।
स वैद्यशब्दं सद्भूतमर्हन् प्राणिसुखप्रदः ॥
शास्त्रं ज्योतिःप्रकाशार्थं दर्शनं बुद्धिरात्मनः ।
ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन् नापराध्यति ॥
चिकित्सिते त्रयः पादा यस्माद्वैद्यव्यपाश्रयाः ।
तस्मात् प्रयत्नमातिष्ठेद्भिषक् स्वगुणसम्पदि ॥
मैत्री कारुण्यमार्त्तेषु शक्ये प्रीतिरुपेक्षणम् ।
प्रकृतिस्थेषु भूतेषु वैद्यवृत्तिश्चतुर्विधेति ॥

तत्र श्लोकौ ॥ भिषग्जितं चतुष्पादं पादः पादश्चतुर्गुणः ।
भिषक्प्रधानं पादेभ्यो यस्माद्वैद्यस्तु यद्गुणः ॥

ज्ञानानि बुद्धिर्ब्राह्मी च भिषजां या चतुर्विधा ।

सर्वमेतच्चतुष्पादे खुड्डाके सम्प्रकाशितमिति ।

खुड्डाकचतुष्पादोऽध्यायः समाप्तः ॥

---

## दशमोऽध्यायः ।

अथातो महाचतुष्पादमध्यायं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः ॥

चतुष्पादं षोडशकलं भेषजमिति भिषजो भाषन्ते । यदुक्तं पूर्वाध्याये षोडशगुणमिति तद्भेषजम् ॥ युक्तियुक्तमलमारोग्यायेति भगवान् पुनर्वसुरात्रेयः । नेति मैत्रेयः ॥ किं कारणं दृश्यन्ते ह्यातुराः केचिदुपकरणवन्तश्च परिचारकसम्पन्नाश्चात्मवन्तश्च कुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानास्तथा युक्ताश्चापरे म्रियमाणास्तस्माद्भेषजमकिञ्चित्करं भवति ॥ तद्यथा ॥ श्वभ्रे सरसि च प्रसिक्तमल्पमुदकम् ॥ नद्यां स्यन्दमानायां पांशुधाने पांशुमुष्टिप्रकीर्णा इति ॥ तथापरे दृश्यन्ते अनुपकरणाश्चापरिचारकाश्चानात्मवन्तश्चाकुशलैश्च भिषग्भिरनुष्ठिताः समुत्तिष्ठमानाः । तथा युक्ता म्रियमाणाश्चापरे यतश्च प्रतिकुर्वन् सिध्यति प्रतिकुर्वन् म्रियते अप्रतिकुर्वन् म्रियते ततश्चिन्त्यते भेषजमभेषजेनाविशिष्टमिति मैत्रेय मिथ्या चिन्त्यत इत्यात्रेयः किं कारणं ये ह्यातुराः षोडश-

गुणसमुदितेनानेन भेषजेनोपपद्यमाना इत्युक्तं तदनुपपन्नं न हि भेषजसाध्यानां व्याधीनां भेषजमकारणं भवति। ये पुनरातुराः केवलाद्भेषजादृते समुत्तिष्ठन्ति न तेषां सम्पूर्ण-भेषजोपपादानाय समुत्थानविशेषोऽस्ति। यथाहि पतितं पुरुषं समर्थमुत्थानायोत्थापयन् पुरुषो बलमस्योपाद्ध्यात्॥ स क्षिप्रतरमपरिक्लिष्ट एवोत्तिष्ठेत्तद्वत् सम्पूर्णभेषजोपलम्भादातुराः। ये चातुराः केवलाद्भेषजादपि म्रियन्ते न च सर्वे एव ते भेषजोपपन्नाः समुत्तिष्ठेरन् न हि सर्वे व्याधयो भवन्त्युपायसाध्याः न चोपायसाध्यानां व्याधीनामनुपायेन सिद्धिरस्ति न चासाध्यानां व्याधीनां भेषजसमुदायोऽस्ति न ह्यलं ज्ञानवान् भिषङ्मुमूर्षुमातुरमुत्थापयितुम्॥

परीक्ष्यकारिणो हि कुशला भवन्ति। यथा हि योगज्ञोऽभ्यासनित्य इष्वासो धनुरादायेषुमपस्यन् नातिविप्रकृष्टे महति काये नापराधो भवति। सम्पादयति चेष्टकार्य्यम्। तथा भिषक् स्वगुणसम्पन्न उपकरणवान् वीक्ष्यकर्मारभमाणः साध्यं रोगमनपराधः सम्पादयत्येवातुरमारोग्येण न तस्मात् भेषजमभेषजेनाविशिष्टं भवति इदञ्चेदञ्चनः प्रत्यक्षं यदनातुरेण भेषजेनातुरं चिकित्सामः।

क्षाममक्षामेनकृशं दुर्बलमाप्याययामः।

स्थूलं मेदस्विनमपतर्पयामः॥ शीतेनोष्णाभिभूतमुपचरामः। शीताभिभूतमुष्णेन न्यूनान्। धातून् पूरयामः व्यतिरिक्तान् ह्रासयामः। व्याधीन्मूलविपर्य्ययेणोपचरन्तः सम्यक् प्रकृतौ स्थापयामः। तेषां नस्तथा कुर्वतामयं भेषजसमुदायः। कान्ततमो भवति॥

भवति चात्र। साध्या साध्यविभागज्ञो ज्ञानपूर्वं चिकित्सकः।
काले चारभते कर्म यत्तत् साधयति ध्रुवम्॥
स्वार्थविद्यायशोहानिमुपक्रोशमसंग्रहम्।
प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत्॥
सुखसाध्यं मतं साध्यं कृच्छ्रसाध्यमथापि च।
द्विविधञ्चाप्यसाध्यं स्याद्याप्यं यदनुपक्रमम्॥
साध्यानां त्रिविधश्चाल्पमध्यमोत्कृष्टतां प्रति।
विकल्पो न त्वसाध्यानां नियतानां विकल्पना॥
हेतवः पूर्वरूपाणि रूपाण्यल्पानि यस्य च।
न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्॥
न च कालगुणस्तुल्यो न देशो दुरुपक्रमः।
गतिरेका नवत्वञ्च रोगस्योपद्रवो न च॥
दोषश्चैकः समुत्पत्तौ देहः सर्वौषधक्षमः।
चतुष्पादोपपत्तिश्च सुखसाध्यस्य लक्षणम्॥
निमित्तपूर्वरूपाणां रूपाणां मध्यमे बले।
कालप्रकृति दुष्टाणां सामान्योऽन्यतमस्य च॥
गर्भिणी वृद्धबालानां नात्युपद्रवपीडितम्।
शस्त्रक्षाराग्निकृत्यानामनवं कृच्छ्रदोषजम्॥
विद्यादेकपथं रोगं नातिपूर्णचतुष्पदम्।
द्विपथं नातिकालं वा कृच्छ्रसाध्यं द्विदोषजम्॥
शेषत्वादायुषो याप्यमसाध्यं पथ्यसेवया।
लब्धाल्पसुखमल्पेन हेतुनाशुप्रवर्त्तकम्॥
गम्भीरं बहुधातुस्थं मर्मसन्धिसमाश्रितम्।
नित्यानुशायिनं रोगं दीर्घकालमवस्थितम्॥

विरुद्धाद् द्विदोषजं तद्वत् प्रत्याख्येयं त्रिदोषजम्
क्रियापथमतिक्रान्तं सर्व्वमार्गानुसारिणम् ॥
औत्सुक्यारतिसंमोहकरमिन्द्रियनाशनम्।
दुर्ब्बलस्य सुसंवृद्धं व्याधिं सारिष्टमेव च ॥
भिषजा प्राक् परीक्ष्यैवं विकाराणां सुलक्षणम्।
पश्चात् कार्य्यसमारम्भः कार्य्यः साध्येषु धीमता ॥
साध्यासाध्यविभागज्ञो यः सम्यक् प्रतिपत्तिमान्।
न स मैत्रेय तुल्यानां मिथ्याबुद्धिं प्रकल्पयेदिति ॥
तत्र श्लोकौ। इहौषधं पादगुणाः प्रभावो भेषजाश्रयः।
आत्रेय मैत्रेय मतीमति द्वैविध्यनिश्चयः ॥
चतुर्व्विधविकल्पाश्च व्याधयः स्वस्वलक्षणाः।
उक्ता महाचतुष्पादे येष्वायत्तं भिषग्जितमिति ॥
अग्नीत्यादि ॥ महाचतुष्पदाध्यायः समाप्तः ॥

---

## एकादशोऽध्यायः ॥

अथातस्त्रिस्रैषणीयमध्यायं व्याख्यास्यामः ॥
इति ह स्माह भगवानात्रेयः।

इह खलु पुरुषेणानुपहतसत्त्वबुद्धिपौरुषपराक्रमेण हितमिह चामुष्मिंश्च लोके समनुपश्यता तिस्र एषणाः पर्य्येष्टव्या भवन्ति।

तद्यथा। प्राणैषणा धनैषणा परलोकैषणेति। आसान्तु खल्वेषणानां प्राणैषणां तावत् पूर्व्वतरमापद्येत्। कस्मात् प्राणपरित्यागे हि सर्व्वत्यागः। तस्यानुपालनं स्वस्थस्य स्वस्थवृत्तिरातुरस्य विकारप्रशमनेऽप्रमादस्तदुभयमेतदुक्तं वक्ष्यते च। तद्यथोक्तमनुवर्त्तमानः प्राणानुपालनाद्दीर्घमायुरवाप्नोतीति॥

प्रथमैषणा व्याख्याता भवति॥ अथ द्वितीयां धनैषणामापद्यते। प्राणेभ्यो ह्यनन्तरं धनमेव पर्य्येष्टव्यं भवति। न ह्यतःपापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुः तस्मादुपकरणानि पर्य्येष्टुं यतेत तत्रोपकरणोपायाननुव्याख्यास्यामः॥

तद्यथा। कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि। यानि चान्यान्यपि सतामविगर्हितानि कर्म्माणि वृत्तिपुष्टिकराणि विद्यात् तान्यारभेत कर्त्तुम्। तथा कुर्व्वन् दीर्घजीवितमनुवसतः पुरुषो भवतीति॥ द्वितीया धनैषणा व्याख्याता भवति॥

अथ तृतीयां परलोकैषणामापद्येत्। संशयश्चात्र कथं भविष्याम इतश्च्युता नवेति कुतः पुनः संशय इति उच्यते सन्ति ह्येके प्रत्यक्षपराः परोक्षत्वात् पुनर्भवस्य नास्तिक्यमाश्रिताः सन्ति चागमप्रत्ययादेव पुनर्भवमिच्छन्ति श्रुति, भेदाच्च। मातरं पितरञ्चैके मन्यन्ते जन्मकारणं स्वभावं परनिर्म्माणं यदृच्छाञ्चापरे जना इत्यतः संशयः। किं नु खल्वस्ति पुनर्भवो न वेति॥ तत्र बुद्धिमान्नास्तिक्यबुद्धिं

नमात् विचिकित्साच। कस्मात् प्रत्यक्षं ह्यल्पमनल्पमप्रत्यक्षमस्ति यदागमानुमानयुक्तिभिरुपलभ्यते॥ यैरेव तावदिन्द्रियैः प्रत्यक्षमुपलभ्यते तान्येव सन्ति चाप्रत्यक्षाणि॥

सताञ्च रूपाणामतिसन्निकर्षादतिविप्रकर्षादावरणात् करणदौर्बल्यान्मनोऽनवस्थानात् समानाभिहारादभिभावादतिसौक्ष्म्याच्च प्रत्यक्षानुपलब्धिः॥ तस्मादपरीक्षितमेतदुच्यते प्रत्यक्षमेवास्ति नान्यदस्तीति श्रुतयश्चैता न कारणं युक्तिविरोधात्॥

आत्मा मातुः पितुर्वा यः सोऽपत्यं यदि सञ्चरेत्।
द्विविधं सञ्चरेदात्मा सर्वो वाऽवयवेन वा॥
सर्वश्चेत् सञ्चरेन्मातुः पितुर्वा मरणं भवेत्।
निरन्तरं नावयवः कश्चित् सूक्ष्मस्य चात्मनः॥
बुद्धिर्मनश्च निर्णीते यश्चैवात्मा तथैव ते।
येषाञ्चैषा मतिस्तेषां योनिर्नास्ति चतुर्विधा॥
विद्यात् स्वाभाविकं षण्णां धातूनां यत् स्वलक्षणम्।
संयोगे च वियोगे च तेषां कर्म्मैव कारणम्॥
अनादेश्चेतना धातोर्नेष्यते परनिर्मितिः।
पर आत्मा स चेद्धेतुरिष्टोऽस्तु परनिर्मितिः॥
न परीक्षा न परीक्ष्यं न कर्त्ता कारणं न च।
न देवा नर्षयः सिद्धाः कर्म्म कर्म्मफलं न च॥
नास्तिकस्यास्ति नैवात्मा यदृच्छोपहतात्मनः।
पातकेभ्यः परञ्चैतत् पातकं नास्तिकग्रहः॥
तस्मान्मतिं विमुच्यैताममार्गप्रसृतां बुधः।
सतां बुद्धिप्रदीपेन पश्येत् सर्वं यथातथमिति॥

द्विविधमेव खलु सर्वं सच्चासच्च तस्य चतुर्विधा परीक्षा। आप्तोपदेशः प्रत्यक्षमनुमानं युक्तिश्चेति। आप्तास्तावत्।

रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा॥
आप्ताः शिष्टविबुद्धास्ते तेषां वाक्यमसंशयम्।
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः॥
आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्त्तते।
व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते॥
प्रत्यक्षपूर्वं त्रिविधं त्रिकालञ्चानुमीयते।
वह्निर्निगूढो धूमेन मैथुनं गर्भदर्शनात्॥
एवं व्यवस्यन्त्यतीतं वीजात् फलमनागतम्।
दृष्ट्वा वीजात् फलं जातमिहैव सदृशं बुधाः॥
जलकर्षणवीजर्त्तुसंयोगात् शस्यसंभवः।
युक्तिः षड्धातुसंयोगाद्गर्भाणां सम्भवस्तथा॥
मथ्यमन्थनमन्थानसंयोगादग्निसम्भवः।
युक्तियुक्ता चतुष्पादसम्पद्व्याधिनिवर्हणी॥
बुद्धिः पश्यति या भावान् बहुकारणयोगजान्।
युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया॥
एषा परीक्षा नास्त्यन्या यया सर्वं परीक्ष्यते।
परीक्ष्यं सदसच्चैवं तया चास्ति पुनर्भवः॥

तत्राप्तागमस्तावद्वेदो यश्चान्योऽपि कश्चिद्वेदार्थादविपरीतः परीक्षकैः प्रणीतः। शिष्टानुमतो लोकानुग्रहप्रवृत्तः शास्त्रवादः स चाप्तागमः। आप्तागमादुपलभ्यते। दानतपोयज्ञसत्याहिंसाब्रह्मचर्य्याण्यभ्युदयनिःश्रेयसकराणीति नचानतिवृत्त-

सत्वदोषाणामदोषैरपुनर्भवो धर्म्यंद्वारेषूपदिश्यते। धर्मद्वारावहितैश्च व्यपगतभयरागद्वेषलोभमोहमानैर्ब्रह्मपरैराप्तैः कर्मविद्भिरनुपहतसत्वबुद्धिप्रचारैः पूर्वैः पूर्वतरैः महर्षिभिर्दिव्यचक्षुर्भिर्दृष्ट्वोपदिष्टः पुनर्भव इति व्यवस्येदेवं प्रत्यक्षमपि चोपलभ्यते। मातापित्रोर्विसदृशान्यपत्यानि तुल्यसम्भवानां वर्णस्वराकृतिसत्वबुद्धिभाग्यविशेषाः। प्रवरावरकुलजन्मदास्यैश्वर्यसुखासुखमायुः। आयुषो वैषम्यमिहकृतस्यावाप्तिरशिक्षितानाञ्च रुदितस्तनपानहासत्रासादीनाञ्च प्रवृत्तिर्लक्षणोत्पत्तिः कर्मसामान्ये फलविशेषो मेधा क्वचित् क्वचित् कर्मण्यमेधा जातिस्मरणमिहागमनमितश्च्युतानाञ्च भूतानां समदर्शने प्रियाप्रियत्वम् अतएवानुमीयते। यत् स्वकृतमपरिहार्य्यमविनाशि पौर्वदेहिकं दैवसंज्ञकमानुबन्धिकं कर्म्म तस्यैतत् फलमितश्चान्यद्भविष्यतीति फलाद्बीजमनुमीयते। फलञ्च बीजात्। युक्तिश्चैषा षड्धातुसमुदयाद्गर्भजन्मकर्त्तृकरणसंयोगात् क्रियाकृतस्य कर्मणः फलं नाकृतस्य नाङ्कुरोत्पत्तिरबीजात्। कर्मसदृशं फलं नान्यस्माद्बीजादन्यस्योत्पत्तिरिति युक्तिः। एवं प्रमाणैश्चतुर्भिरुपदिष्टः पुनर्भवे धर्म्मद्वारेष्वनुविधीयते। तद्यथा गुरुशुश्रुषायामध्ययने व्रतचर्य्यायां दारक्रियायामपत्योत्पादने भृत्यभरणेऽतिथिपूजायां दानेनाभिध्यायां तपस्यनसूयायां देहवाङ्मनसे कर्म्मण्यक्लिष्टे देहेन्द्रियमनोऽर्थबुद्धात्मपरीक्षायां मनःसमाधाविति। यानि चान्यान्यप्येवं विधानि कर्म्माणि सतामविगर्हितानि स्वर्ग्याणि वृत्तिपुष्टिकराणि विद्यात्तान्यारभेत कर्त्तुम्। तथा कुर्वन्निह

चैव यशो लभते प्रेत्य च स्वर्गमिति। तृतीया परलोकैषणा व्याख्याता भवति। अथ खलु त्रय उपस्तम्भाः। त्रिविधं बलम्॥

त्रीण्यायतनानि। त्रयो रोगाः। त्रयो रोगमार्गाः त्रिविधा भिषजः त्रिविधमौषधमिति। त्रय उपस्तम्भा इत्याहारः स्वप्नो ब्रह्मचर्य्यमिति एभिस्त्रिभिर्युक्तियुक्तैरुपस्तब्धमुपस्तम्भैः शरीरं बलवर्णोपचयोपचितमनुवर्त्तते। यावदायुषः संस्कारात्। संस्कारसहितमनुपसेवमानस्य य इहैवोपदेक्ष्यते। त्रिविधं बलमिति सहजं कालजं युक्तिकृतञ्च सहजं यच्छरीरसत्त्वयोः प्राकृतम्। कालकृतमृतुविभागजं वयःकृतञ्च।

युक्तिकृतं पुनस्तदाहारचेष्टायोगजम्। त्रीण्यायतनानीति अर्थानां कर्म्मणः कालस्य चातियोगायोगाभियोगाः। तत्रातिप्रभावतां दृश्यानामतिमात्रं दर्शनमतियोगः। सर्वशोऽदर्शनमयोगः। अतिसूक्ष्मातिविकृष्टरौद्रभैरवाद्भुतद्विष्टबीभत्सविकृतादिरूपदर्शनं मिथ्यायोगः। तथातिमात्रस्तनितोपहतकुष्टादीनां शब्दानामतिमात्रं श्रवणमतियोगः। सर्वशोऽश्रवणमयोगः। परुषेष्टविनाशोपघातप्रधर्षणभीषणादिशब्दश्रवणं मिथ्यायोगः। तथातितीक्ष्णोग्राभिष्यन्दिनां गन्धानामतिमात्रं घ्राणमतियोगः। सर्वशोऽघ्राणमयोगः। पूतिद्विष्टामेध्यक्लिन्नविषपवनकुणपगन्धादिघ्राणं मिथ्यायोगः। तथा रसानामत्यादानमतियोगः। अनादानमयोगः। मिथ्यायोगो राशिवर्ज्येष्वाहारविधिविशेषायतनेषूपदिक्ष्यते।

तथातिशीतोष्णानां स्पृश्यानां स्नानाभ्यङ्गोत्सादनादीनाञ्चात्युपसेवनमतियोगः। सर्वशोऽनुपसेवनमयोगः।

त्रिषमस्थानाभिधाता शुचिं भूतसंस्पर्शादयश्चेति मिथ्यायोगः। तत्रैकं स्पर्शनेन्द्रियमिन्द्रियाणामिन्द्रियव्यापकं चेतः समवायिस्पर्शनव्याप्तेर्व्यापकमपि च चेतस्तस्मात् सर्वेन्द्रियाणां व्यापकःस्पर्शकृतो यो भावविशेषः सोऽयमनुपशयात् पञ्चविधस्त्रिविधविकल्पोभवत्यसात्म्ये न्द्रियार्थसंयोगः। सात्म्यार्थो ह्युपशयार्थः।

कर्म्मवाङ्मनःशरीरप्रवृत्तिः। तत्र वाङ्मनःशरीरातिप्रवृत्तिरतियोगः। सर्वशोऽप्रवृत्तिरयोगः। सूचकानृताकालकलहाप्रियाबद्धानुपचारपरुषवचनादिर्वाङ्मिथ्यायोगः। भयशोकक्रोधलोभमोहमानेर्ष्यामिथ्यादर्शनादिर्मानसो मिथ्यायोगः।

वेगधारणोदीरणविषमस्खलनपतनाङ्गप्रणिधानाङ्गप्रदूषणप्रहारमर्द्दनप्राणोपरोधसंक्लेशनादिः शारीरो मिथ्यायोगः।

संग्रहेण चातियोगायोगवर्जं कर्म्मवाङ्मनःशरीरजमहितमनुपदिष्टं यत्तच्च मिथ्यायोगं विद्यादिति। त्रिविध विकल्पं त्रिविधमेव कर्म्म प्रज्ञापराध इति व्यवस्येत्। शीतोष्णवर्षलक्षणाः पुनर्हेमन्तग्रीष्मवर्षाः संवत्सरः स कालः॥

तत्रातिमात्र स्वलक्षणः कालः कालातियोगः। हीनस्वलक्षणः कालयोगः। यथा स्वलक्षणविपरीतलक्षणस्तु कालोमिथ्यायोगः। कालः पुनः परिणाम उच्यते। इत्यसात्म्ये न्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति त्रयस्त्रिविधविकल्पाः कारणं विकाराणाम्॥

समयोगयुक्तास्तु प्रकृतिहेतवो भवन्ति। सर्वेषामेव भावानां भावाभावौ नान्तरेण योगायोगातियोगा मिथ्या-

योगात् समुपलभ्यते। यथा स्वस्वापेक्षिणौ हि भावाभावौ
त्रयो रोगा इति निजागन्तुमानसाः तत्र निजः शरीरदोष-
समुत्थः। आगन्तुर्भूतविषवाय्वग्निसम्प्रहारादिसमुत्थः।
मानसः पुनरिष्टस्यालाभाल्लाभाच्चानिष्टस्योपजायते॥

तत्र बुद्धिमता मानसव्याधिपरीतेनापि सता बुद्ध्या
हिताहितमवेक्ष्यावेक्ष्य धर्मार्थकामानामहितानामनुप-
सेवने हितानाञ्चोपसेवने प्रयतितव्यं न ह्यन्तरेण लोके
त्रयमेतन् मानसं किञ्चिन्निष्पद्यते सुखं वा दुःखं वा तस्मा-
देतच्चानुष्ठेयम्। तद्विद्याद्वानाञ्चोपसेवने प्रयतितव्यम्।
आत्मदेशकालबलशक्तिज्ञाने यथावच्चेति।
भवति चात्र॥ मानसं प्रति भैषज्यं त्रिवर्गस्यान्ववेक्षणम्।
तद्विद्यासेवाविज्ञानमात्मादीनाञ्च सर्वश इति॥

त्रयो रोगमार्गा इति। शाखा मर्मास्थिसन्धयः को-
ष्ठश्च। तत्र शाखा रक्तादयो धातवस्त्वक् च वाह्यो रोग-
मार्गः। मर्माणि पुनर्वस्तिहृदयमूर्द्धादीन्यस्थिसन्धयोऽस्थि-
संयोगास्तत्रोपनिबद्धाश्च स्नायुकण्डरा स मध्यमो रोग-
मार्गः। कोष्ठं पुनरुच्यते महास्रोतःशरीरमध्यं महानि-
म्नमामपक्वाशयश्चेति पर्यायशब्दैः स रोगमार्ग आभ्यन्तरः।
तत्र गण्डः पीड़कालज्यपचीचर्म्मकीलाधिमांसमसककुष्ठ-
व्यङ्गादयो विकारा वहिर्मार्गजाः वीसर्पश्वयथुगुल्मार्शोविद्र-
ध्यादयः शाखानुसारिणो भवन्ति रोगाः। पक्षवधग्रहापता-
नकार्दितशोषराजयक्ष्मास्थिसन्धिशूलगुदभ्रंशादयः शिरो-
हृद्वस्तिरोगादयश्च मध्यममार्गानुसारिणो भवन्ति रोगाः।
ज्वरातीसारच्छर्द्द्यलसकविसूचिकाकासश्वासहिक्कानाहोदर-

शोहादयोऽन्तमार्गजाश्च। विसर्पश्वयथुगुल्मार्शोविद्रध्यादय कोष्ठानुसारिणो भवन्ति रोगाः। त्रिविधा भिषजा इति। भिषक्छद्मचराः सन्ति सन्त्येके सिद्धाधिताः सन्ति वैद्यगुणैर्युक्तास्त्रिविधा भिषजो भुवि॥

वैद्यभाण्डौषधैः पुस्तैः पल्लवैरवलोकनैः।
लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपकाः॥
श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधाः।
वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः॥
प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः।
जीविताभिसरास्तेस्युर्वैद्यत्वं तेष्ववस्थितमिति॥

त्रिविधमौषधमिति। दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्त्वावजयश्च। तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादियुक्तिव्यपाश्रयं पुनराहारौषधद्रव्याणां योजना। सत्त्वावजयः पुनरहितेभ्योऽर्थेभ्यो मनोनिनिग्रहः। शरीरदोषप्रकोपे खलु शरीरमेवाश्रित्य प्रायशस्त्रिविधमौषधमिच्छन्ति। अन्तः परिमार्जनं वहिः परिमार्जनं शास्त्रप्रणिधानञ्चेति। तत्रान्तः परिमार्जनं यदन्तःशरीरमनुप्रविश्यौषधमाहारजातव्याधीन् प्रतिमार्ष्टि। यत् पुनर्वहिः स्पर्शमाश्रित्याभ्यङ्गस्वेदप्रदेहपरिषेकोन्मर्दनाद्यैरामयान् प्रमार्ष्टि तद्वहिः परिमार्जनम्।

शस्त्रप्रणिधानं पुनश्छेदनभेदनव्यधनदारणलेखनोत्पाटनप्रच्छन्नसीवनैषणक्षारजलौकाश्चेति।

प्राज्ञो रोगे समुत्पन्ने वाह्येनाभ्यन्तरेण वा।

कर्म्मणा लभते शर्म्म शस्त्रोपक्रमणेन वा ॥
बालस्तु खलु मोहाद्वा प्रमादाद्वा न बुध्यते।
उत्पद्यमानं प्रथमं रोगं शत्रुमिवाबुधः ॥
अणुर्हि प्रथमं भूत्वा रोगः पश्चाद्विवर्द्धते।
स जातमूलो मुष्णाति बलमायुश्च दुर्म्मतेः ॥
न मत्त्यो लभते संज्ञां तावद्यावन्न पीड्यते।
पीडितस्तु मतिं पश्चात् कुरुते व्याधिनिग्रहे ॥
अथ पुत्रांश्च दारांश्च ज्ञातींश्चाहूय भाषते।
सर्व्वस्वेनापि मे कश्चिद्भिषगानीयतामिति ॥
तथाविधञ्च कः शक्तो दुर्ब्बलं व्याधिपीड़ितम्।
कृशं क्षीणेन्द्रियं दीनं परित्रातुं गतायुषम् ॥
स त्रातारमनासाद्य बालस्त्यजति जीवितम्।
गोधालाङ्गूलबद्धेवाकृष्यमाणा बलीयसा ॥
तस्मात् प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा।
भेषजैः प्रतिकुर्व्वीत य इच्छेत् सुखमात्मनः ॥
तत्र श्लोकौ। एषणाः समुपस्तम्भा बलकारणमामयाः।
तिस्रैषणीये मार्गाश्च भिषजो भेषजानि च ॥
त्रित्वेनाष्टौ समुद्दिष्टाः कृष्णात्रेयेण धीमता।
भावाभावेषु शक्ते न येषु सर्व्वं प्रतिष्ठितमिति ॥
अस्तीत्यादि। तिस्रैषणीयाध्यायः समाप्तः।

# द्वादशोऽध्यायः।

अथातो वातकलाकलीयमध्यायं व्याख्यास्यामः।
इति ह स्माह भगवानात्रेयः।

वातकलाकलाज्ञानमधिकृत्य परस्परमतानि जिज्ञासमानाः समुपविश्य महर्षयः पप्रच्छुरन्योन्यं किंगुणो वायुः किमस्य प्रकोपनमुपशमनानि वास्य कानि। कथञ्चैनमसङ्घातमनवस्थितमनासाद्य प्रकोपनप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा। कानि चास्य कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु चरतः कर्माणि बहिःशरीरेभ्यो वेति॥

अत्रोवाच कुशः साङ्कृत्यायनः। रूक्षलघुशीतदारुणखरविशदाः षडिमे वातगुणा भवन्ति। तत् श्रुत्वा वाक्यं कुमारशिराभरद्वाज उवाच।

एवमेतद् यथा भगवानाह एत एव वातगुणा भवन्ति। सत्त्वैरेवं गुणैरेवं द्रव्यैरेवं प्रभावैश्च कर्म्मभिरभ्यस्यमानैर्वायुः-प्रकोपमापद्यते समानगुणाभ्यासो हि धातूनां वृद्धिकारणमिति।

तत् श्रुत्वा वाक्यं काङ्कायनो वाह्लीकभिषगुवाच। एवमेतद् यथा भगवानाह। एतान्येव वातप्रकोपनानि भवन्ति। अतो विपरीतानि खल्वस्य प्रशमनानि भवन्ति। प्रकोपनविपर्य्ययो हि धतूनां प्रशमकारणमिति।

तत् श्रुत्वा वाक्यं बडिशो धामार्गव उवाच। एवमेतद् यथा भगवानाह। एतान्येव वातप्रकोप प्रशमनानि

भवन्ति। यथा ह्यग्नेनमस्कृतमनवस्थितमनासाद्य प्रकोपनप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा। तथानुव्याख्यास्यामः। वातप्रकोपनानि खलु रूक्षलघुशीतदारुणखरविशदशुषिरकराणि शरीराणां तथाविधेषु शरीरेषु वायुराश्रयं गत्वा आप्याय्यमानः प्रकोपमापद्यते। वातप्रशमनानि पुनः स्निग्धगुरूष्णश्लक्ष्णमृदुपिच्छिलघनकराणि शरीराणां तथाविधेषु शरीरेषु वायुरासज्यमानश्चरन् प्रशान्तिमापद्यते। तच्छ्रुत्वा वडिशवचनमवितथमृषिगणैरनुमतमुवाच वार्य्योविदो राजर्षिः। एवमेतत् सर्वमनपवादं यथा भगवानाह। यानि तु खलु वायोः कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु चरतः कर्माणि बहिःशरीरेभ्यो वा भवन्ति।

तेषामवयवान् प्रत्यक्षानुमानोपमानैः साधयित्वा नमस्कृत्य वायवे यथाशक्ति प्रवक्ष्यामो वायुस्तन्त्रयन्त्रधरः प्राणोदानसमानव्यानापानात्मा प्रवर्त्तकश्चेष्टानामुच्चावचानां नियन्ता प्रणेता च मनसः। सर्व्वेन्द्रियाणामुद्योतकः। सर्व्वेन्द्रियार्थानामभिवोढ़ा सर्व्वशरीरधातुव्यूहकरः सन्धानकरः शरीरस्य प्रवर्त्तको वाचः प्रकृतिःस्पर्शशब्दयोः श्रोत्रस्पर्शनयोर्म्मूलं हर्षोत्साहयोर्योनि समीरणोऽग्नेर्दोषसंशोषणः। क्षेप्ता बहिर्मलानां स्थूलाणुस्रोतसां भेत्ता कर्त्ता गर्भाकृतीनां आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः। कुपितस्तु खलु शरीरे शरीरं नानाविधैर्व्विकारैरुपतपति बलवर्णसुखायुषामुपघाताय मनो व्याहर्षयति सर्व्वेन्द्रियाण्युपघ्नन्ति। विहन्ति गर्भान् विकृतिमापादयत्यतिकालं धार-

यन्ति। भयशोकमोहदैन्यातिप्रलापान् जनयति प्राणांश्चोपरुणद्धि। प्रकृतिभूतस्य खल्वस्य लोके चरतः कर्माणीमानि भवन्ति॥

तद्यथा। धरणीधारणं ज्वलनोज्ज्वालनम् आदित्यचन्द्रनक्षत्रग्रहगणानां सन्तानगतिविधानं सृष्टिश्च मेघानाम्। अपाञ्च विसर्गः प्रवर्त्तनं स्रोतसां पुष्पफलानाञ्चाभिनिर्वर्त्तनमुद्भेदनञ्चौद्भिदानामृतूनां प्रविभागः। विभागो धातूनां धातुमानसंस्थानव्यक्तिः। वीजाभिसंस्कारः शस्याभिवर्द्धनं विक्लेदोपशोषणमवैकारिकविकारश्चेति। प्रकुपितस्य खल्वस्य लोकेषु चरतः कर्माणीमानि भवन्ति। तद्यथा।

उत्पीडनं सागराणामुद्वर्त्तनं सरसां प्रतिसरणमापगानामाकम्पनञ्च भूमेराधमनमम्बुदानां शिखरिशिखरावमथनमुन्मथनमनोकहानां निहारनिर्ह्रादपांशुसिकतामत्स्यभेकोरगक्षाररुधिराश्माशनिविसर्गो व्यापादनञ्च षण्णामृतूनां शस्यानामसंघातो भूतानाञ्चोपसर्गो भावानाञ्चाभावकरणम्। चतुर्युगान्तकराणां मेघसूर्य्यानलानां विसर्गः स हि भगवान् प्रभवश्चाव्ययश्च भूतानां भावानामभावाकरः।

सुखासुखयोर्विधाता मृत्युर्यमो नियन्ता प्रजापतिरदितिर्विश्वकर्मा विश्वरूपः सर्वगः सर्वतन्त्राणां विधाता। भावानामणुर्विभुर्विष्णुः क्रान्ता लोकानां वायुरेव भगवानिति। तत् श्रुत्वा वाक्यविद्वचो मारीचिरुवाच। यद्यप्येवमेतत् किमर्थस्यास्य वचने विज्ञाने वा सामर्थ्यमस्ति भिषग्विद्यायाम् भिषग्विद्यां वाधिकृत्य कथा प्रवर्त्तते।

वायोर्विद् उवाच। भिषक् पवनमतिबलमतिपरुषमतिशीघ्रकारिणमात्ययिकञ्चेन्नानुनिशाम्येत्।

सहसा प्रकुपितमतिप्रयतः कथमग्रेऽभिरक्षितुमभिधास्यति। प्रागेवैनमत्ययभयादिति। वायोर्यथार्थास्तुतिरपि भवत्यारोग्याय बलवर्णवृद्धये वर्चस्वित्वायोपचयाय च। ज्ञानोपपत्तये परमायुःप्रकर्षाय चेति। मारीचिरुवाच। अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति। तद्यथा

पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमूष्मणः प्रकृतिविकृतिवर्णौ शौर्यं भयं क्रोधं हर्षं मोहं प्रसादमित्येवमादीनि चापराणि द्वन्द्वानीति। तत् श्रुत्वा मारीचिवचः। काश्यप उवाच। सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति। तद्यथा

दार्ढ्यं शैथिल्यमुपचयं काश्यमुत्साहमालस्यं वृषतां क्लीवतां ज्ञानमज्ञानं बुद्धिं मोहमेवमादीनि चापराणि द्वन्द्वानीति। तत् श्रुत्वा काश्यपवचो भगवान् पुनर्वसुरात्रेय उवाच। सर्व एव भवन्तः सम्यगाहुरन्यत्रैकान्तिकवचनात्।

सर्व एव खलु वातपित्तश्लेष्माणः प्रकृतिभूताः पुरुषमव्यापन्नेन्द्रियं बलवर्णसुखोपपन्नमायुषा महतोपपादयन्ति। सम्यगेवाचरिता धर्मार्थकामा निःश्रेयसेन महता पुरुषमिह चामुष्मिंश्च लोके विकृतास्त्वेनं महता विपर्ययेणोपपादयन्ति। ऋतवस्त्रय इव विकृतिमापन्ना लोकमशु-

भिनोपघातकाले इत्येतदृषयः सर्व्वे एवानुमेनिरे वचन-
मात्रेयस्य भगवतोऽभिनन्दुश्चेति ।

भवति चात्र ॥ तदात्रेयवचः श्रुत्वा सर्वे एवानुमेनिरे ।
ऋषयोऽभिननन्दुश्च यथेन्द्रवचनं सुराः ।
तत्र श्लोकौ ॥ गुणा षड्विधा हेतुर्विविधं कर्म्म तत् पुनः ।
वायोश्चतुर्विधं कर्म्म पृथक् च कफपित्तयोः ॥
महर्षीणां मतिर्य्या या पुनर्व्वसुमतिश्च या ।
कलाकलीये वातस्य तत् सर्व्वं सम्प्रकाशितमिति ॥
निर्द्देशचतुष्कम् ॥
अग्नीत्यादि । वातकलाकलीयोऽध्यायः समाप्तः ।

---

त्रयोदशोऽध्यायः ।

अथातः स्नेहाध्यायं व्याख्यास्यामः ।
इति ह स्माह भगवानात्रेयः ॥

सांख्यैः संख्यातसंख्येयैः सहासीनं पुनर्व्वसुम् ।
जगद्धितार्थं पप्रच्छ वह्निवेशः सुसंशयम् ॥
किं योनयः कति स्नेहाः के च स्नेहगुणाः पृथक् ।
कालानुपाने के कस्य कति काश्च विचारणाः ॥
कति मात्राः कथं माना का च केषूपदिश्यते ।
कश्च केभ्यो हितः स्नेहः प्रकर्षः स्नेहने च कः ॥

स्नेह्याः के केचन स्निग्धाः स्निग्धातिस्निग्धलक्षणम्।
किं पानात् प्रथमं पीते जीर्णे किञ्च हिताहितम्॥
के मृदुक्रूरकोष्ठाः का व्यापदः सिद्धयश्च काः।
अच्छे संशोधने चैव स्नेहे का वृत्तिरिष्यते॥
विचारणाः केषु योज्या विधिना केन तत् प्रभो!।
स्नेहस्यामिति विज्ञानज्ञानमिच्छामि वेदितुम्॥
अथ तत् संशयच्छेत्ता प्रत्युवाच पुनर्वसुः।
स्नेहानां द्विविधा चासौ योनिः स्थावरजङ्गमा॥
तिलः पियालाभिषुकौ बिभीतकचित्राभयैरण्डमधूकसर्षपाः।
कुसुम्भबिल्वारुकमूलकातसीनिकोचकाक्षोडकरञ्जशिग्रुकाः॥
स्नेहाशयाः स्थावरसंज्ञितास्तथा स्युर्जाङ्गमा मत्स्यमृगाः सपक्षिणः।
तेषां दधिक्षीरघृतामिषं वसा स्नेहेषु मज्जा च तथोपदिश्यते॥
सर्वेषां तैलजातानां तिलतैलं विशिष्यते।
बलार्थे स्नेहने चाग्र्यमैरण्डन्तु विरेचने॥
सर्पिस्तैलं वसा मज्जा सर्वस्नेहोत्तमा मता।
एभ्यश्चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात्॥
घृतं पित्तानिलहरं रसशुक्रौजसां हितम्।
निर्वापणं मृदुकरं स्वरवर्णप्रसादनम्॥
मारुतघ्नं न च श्लेष्मवर्द्धनं बलवर्द्धनम्।
त्वच्यमुष्णं स्थिरकरं तैलं योनिविशोधनम्॥
विद्धभग्नाहतभ्रष्टयोनिकर्णशिरोरुजि।
पौरुषोपचये स्नेहे व्यायामे चेष्यते वसा॥
बलशुक्ररसश्लेष्ममेदो मज्जविवर्द्धनः।
मज्जाविशेषतोऽस्थ्नाञ्च बलकृत् स्नेहने हितः॥

सर्पिः शरदि पातव्यं वसा मज्जा च माधवे ।
तैलं प्रावृषि नात्युष्णं शीते स्नेहं पिबेन्नरः ॥
वातपित्ताधिके रात्रावुष्णे चापि पिबेन्नरः ।
श्लेष्माधिके दिवाशीते पिबेच्चामलभास्करे ॥
अत्युष्णे वा दिवापीते वातपित्ताधिके न च ।
मूर्च्छां पिपासामुन्मादं कामलां वा समीरयेत् ॥
शीते रात्रौ पिबेत् स्नेहं नरः श्लेष्माधिकोऽपि वा ।
आनाहमरुचिं शूलं पाण्डुतां वासमृच्छति ॥
जलमुष्णं घृते पेयं यूषस्तैलेऽनुशस्यते ।
वसा मज्जोऽस्तु पिण्डःस्यात् सर्वेषूष्णमथाम्बु वा ॥
ओदनश्च विलेपी च रसो मांसं पयो दधि ।
यवागूः सूपशाकौ च यूषः काम्बलिकः खडः ॥
सक्तवस्तिलपिष्टञ्च मद्यं लेहास्तथैव च ।
भक्ष्यमभ्यञ्जनं वस्तिस्तथा चोत्तरवस्तयः ॥
गण्डूषः कर्णतैलञ्च नस्तः कर्णाक्षितर्पणम् ।
चतुर्विंशतिरित्येताः स्नेहस्य प्रविचारणा ॥
अच्छपेयस्तु यः स्नेहो न तामाहुर्विचारणाम् ।
स्नेहस्य स भिषग्दृष्टः कल्पः प्राथमकल्पिकः ॥
रसैश्चोपहतः स्नेहः समासव्यासयोगिभिः ।
षड्भिस्त्रिषष्टिधा सङ्ख्याः प्राप्नोत्येकश्च केवलः ॥
एवमेषा चतुःषष्टिः स्नेहानां प्रविचारणा ।
ते कर्त्तुं व्याधि पुरुषान् प्रयोज्या जानता भवेत् ॥
अहोरात्रमहःकृत्स्नमर्द्धाहञ्च प्रतीक्षते ।
प्रधाना मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति ॥

इति तिस्रः समुद्दिष्टा मात्राः स्नेहस्य मानतः।
तासां प्रयोगान् वक्ष्यामि पुरुषं पुरुषं प्रति॥
प्रभूतस्नेहनित्या ये क्षुत्पिपासासहा नराः।
पावकश्चोत्तमबलो येषां ये चोत्तमा बले॥
गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये।
उन्मत्ताः कृच्छ्रमूत्राश्च गाढ़वर्चस एव च॥
पिबेयुरुत्तमां मात्रां तस्याः पाने गुणान् शृणु।
विकारान् शमयत्येषा शीघ्रं सम्यक् प्रयोजिता॥
दोषानुकर्षिणी मात्रा सर्वमार्गानुसारिणी।
बल्या पुनर्नवकरी शरीरेन्द्रियचेतसाम्॥
अरुष्कस्फोटपीडका कण्डुपामाभिरर्दिता।
कुष्ठिनश्च प्रमीढ़ाश्च वातशोणितका श्च ये॥
नातिबह्वाशिनश्चैव मृदुकोष्ठास्तथैव च।
पिबेयुर्मध्यमां मात्रां मध्यमाश्चापि ये बले॥
मात्रैषा मन्दविभ्रंशा न चातिबलहारिणी।
सुखेन च स्नेहयति शोधनार्थे च युज्यते॥
ये तु वृद्धाश्च बालाश्च सुकुमाराः सुखोचिताः।
रिक्तकोष्ठत्वमहितं येषां मन्दाग्नय श्च ये॥
ज्वरातीसारकासाश्च येषां चिरसमुत्थिताः।
स्नेहमात्रां पिबेयुस्ते ह्रस्वां ये चावरा बले॥
परिहारे सुखा चैषा मात्रा स्नेहनबृंहणी।
दृष्या बल्या निराबाधा चिरञ्चाप्यनुवर्त्तते॥
वातपित्तप्रकृतयो वातपित्तविकारिणः।
चक्षुःकामाः चताः क्षीणा वृद्धा बालास्तथाबलाः॥

आयुःप्रकर्षकामाश्च बलवर्णस्वरार्थिनः ।
पुष्टिकामाः प्रजाकामाः सौकुमार्य्यार्थिनश्च ये ॥
दीप्त्यौजःस्मृतिमेधाग्निबुद्धीन्द्रियबलार्थिनः ।
पिबेयुः सर्पिरार्त्ताश्च दाहशस्त्रविषाग्निभिः ॥
प्रवृद्धश्लेष्ममेदस्काश्चलस्थूलगलोदराः ।
वातव्याधिभिराविष्टा वातप्रकृतयश्च ये ॥
बलं तनुत्वं लघुतां दृढ़तां स्थिरगात्रताम् ।
स्निग्धश्लक्ष्णतनुत्वक्तां ये च कांक्षन्ति देहिनः ॥
कृमिकोष्ठाः क्रूरकोष्ठास्तथा नाड़ीभिरर्दिताः ।
पिबेयुः शीतले काले तैलं तैलोचिताश्च ये ॥
वातातपसहा ये च रूक्षा भाराध्वकर्षिताः ।
संशुष्करेतोरुधिरा निष्पीतकफमेदसः ॥
अस्थिसन्धिशिरास्नायुमर्मकोष्ठमहारुजः ।
बलवान् मारुतो येषां खानि चावृत्य तिष्ठति ॥
महच्चाग्निबलं येषां वसासात्म्याश्च ये नराः ।
तेषां स्नेहयितव्यानां वसापानं विधीयते ॥
दीप्ताग्नयः क्लेशसहा घस्मरा स्नेहसेविनः ।
वातार्त्ताः क्रूरकोष्ठाश्च स्नेह्या मज्जानमाप्नुयुः ॥
येभ्यो येभ्यो हितो यो यः स्नेहः स परिकीर्त्तितः ।
स्नेहनस्य प्रकर्षौ तु सप्तरात्रत्रिरात्रकौ ॥
स्वेद्याः शोधयितव्याश्च रूक्षवातविकारिणः ।
व्यायाममद्यस्त्रीनित्याः स्नेह्याः स्युर्ये च चिन्तकाः ॥
संशोधनादृते येषां रूक्षणं संप्रवक्ष्यते ।
न तेषां स्नेहनं शस्तमुत्सन्नकफमेदसाम् ॥

प्रतिपत्तिं व्याधिबलं बुद्धास्रंसनमेव च।
तक्रारिष्टप्रयोगस्य रूक्षपानान्नसेवनम्॥
मूत्राणां त्रिफलायाश्च स्नेहव्यापत्तिभेषजम्।
अकाले चाहितस्यैव मात्रया न च योजितः॥
स्नेहो मिथ्योपचाराच्च व्यापद्येतातिसेवितः।
स्नेहात् प्रस्कन्दनो जन्तुस्त्रिरात्रोपरतः पिबेत्॥
स्नेहस्य द्रवमुष्णञ्च त्र्यहं भुक्त्वा रसौदनम्।
एकाहोपरतस्तद्वत् भुक्त्वा प्रच्छर्द्दनं पिबेत्॥
स्यात्तु संशोधनार्थीय वृत्तिः स्नेहे विरिक्तवत्।
स्नेहद्विषः स्नेहनित्या मृदुकोष्ठाश्च ये नराः॥
क्लेशासहा मद्यनित्यास्तेषामिष्टा विचारणा।
लावतैत्तिरिमायूरं सवाराहकौक्कुटाः॥
गव्या जौरभ्रमात्स्याश्च रसाः स्नेहने हिताः।
यवकोलकुलत्थाश्च स्नेहाः सगुडशर्कराः॥
दाड़िमं दधि सव्योषं रससंयोगसंग्रहः।
स्नेहयन्ति तिलाः पूर्वं जग्धाः सस्नेहफाणिताः॥
कृशराश्च बहुस्नेहास्तिलकाम्बलिकास्तथा।
फाणितं शृङ्गवेरस्य तैलञ्च सुरया सह॥
पिबेद्रूक्षो घृतैर्मांसैर्जीर्णेऽश्नीयाच्च भोजनम्।
तैलं सुराया मण्डेन वसां मज्जानमेव वा॥
पिबेत् सफाणितं क्षीरं नरः स्निह्यति वातिकः।
धारोष्णं स्नेहसंयुक्तं पीत्वा सलवणं पयः॥
नरः स्निह्यति पीत्वा वा सरं दध्नः सफाणितम्।
पाञ्च प्रसृतिकी पेया पायसो माषमिश्रकः॥

क्षीरसिद्धो बहुस्नेहः स्नेहयेदचिरान्नरम् ।
सर्पिस्तैलवसामज्जातक्रकुलप्रसृतैः कृता ॥
पाञ्च प्रसृतिकी पेया पेया स्नेहमभिच्छता ।
ग्राम्यानुपौदकं मांसं गुडं दधि पयस्तिलान् ॥
कुष्ठीशोथी प्रमेही च स्नेहने न प्रयोजयेत् ।
स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः ॥
पिप्पलीभिर्हरितक्या सिद्धैस्त्रिफलयापि वा ।
द्राक्षामलकयूषाभ्यां दध्ना चाम्लेन साधयेत् ॥
व्योषगर्भं भिषक् स्नेहं पीत्वा स्निह्यति तन्नरः ।
यवकोलकुलत्थानां रसाः क्षीरं सुरा दधि ॥
क्षीरः सर्पिश्च तत् सिद्धं स्नेहनीयं घृतोत्तमम् ।
तैलमज्जावसासर्पिर्वदरत्रिफलारसैः ॥
योनिशुक्रप्रदोषेषु साधयित्वा प्रयोजयेत् ।
गृह्णात्यम्बु यथा वस्त्रं प्रस्रवत्यधिकं यथा ॥
यथाग्निर्जीर्यति स्नेहस्तथा स्रवति चाधिकः ।
यथा वा क्लेद्यमृत्पिण्डमासिक्तं त्वरया जलम् ॥
स्रवति स्रंसते स्नेहस्तथा त्वरितसेवितः ।
लवणोपहिताः स्नेहाः स्नेहयन्त्यचिरान्नरम् ।
तद्ध्यभिष्यन्द्यरूक्षञ्च सूक्ष्ममुष्णं व्यवायि च ।
स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम् ॥
स्नेहस्वेदोपपन्नस्य संशोधनमथेतरमिति ।
तत्र श्लोकः ॥ स्नेहविधिः कृत्स्नव्यापत्सिद्धिः सभेषजा ।
यथा प्रश्नं भगवता व्याहृतं चान्द्रभागिना ॥
स्नेहाध्यायः समाप्तः ।

## चतुर्दशोऽध्यायः ।

---

अथातः स्वेदाध्यायं व्याख्यास्यामः ॥

इति ह स्माह भगवानात्रेयः ।

अतः स्वेदाः प्रवक्ष्यन्ते यैर्यथावत् प्रयोजितैः ।
स्वेदसाध्याः प्रशाम्यन्ति गदा वातकफात्मकाः ॥
स्नेहपूर्वं प्रयुक्तेन स्वेदेनावजितेऽनिले ।
पुरीषमूत्ररेतांसि न सज्जन्ति कथञ्चन ॥
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ।
नमयन्ति यथान्यायं किं पुनर्जीवतो नरान् ॥
रोगर्त्तुव्याधितापेक्षो नात्युष्णोऽतिमृदुर्न च ।
द्रव्यवान् कल्पितो देशे स्वेदः कार्य्यकरो मतः ॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले ।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो हितः ।
वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ॥
स्निग्धरूक्षस्तथा स्निग्धोऽरूक्षश्चाप्युपकल्पितः ।
आमाशयगते वाते कफे पक्वाशयाश्रिते ॥
रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च ।
वृषणौ हृदयं दृष्टी स्वेदयेन्मृदुनैव वा ॥
मध्यमं वंक्षणौ शेषमङ्गावयवमिष्टतः ।
सुशुद्धैर्नक्तकैः पिण्ड्या गोधूमानामथापि वा ॥
पद्मोत्पलपलाशैर्वा स्वेद्यः संवृत्य चक्षुषी ।

मुक्तावलीभिः शीताभिः शीतलैर्भाजनैरपि ॥
जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत् ।
शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ॥
सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ।
पित्तप्रकोपो मूर्च्छा च शरीरसदनं तृषा ॥
दाहः स्वेदाङ्गदौर्बल्यमतिस्विन्नस्य लक्षणम् ।
उक्तास्तस्याश्मितीये यो ग्रैष्मिकः सर्वशो विधिः ॥
सोऽतिस्विन्नस्य कर्त्तव्यो मधुरः स्निग्धशीतलः ।
कषायमद्यनित्यानां गर्भिण्या रक्तपित्तिनाम् ॥
पित्तिनां सातिसाराणां रूक्षाणां मधुमेहिनाम् ।
विदग्धभ्रष्टनाडीनां विषमद्यविकारिणाम् ॥
श्रान्तानां नष्टसंज्ञानां स्थूलानां पित्तमेहिनाम् ।
तृष्यतां क्षुधितानाञ्च क्रुद्धानां शोचतामपि ॥
कामल्युदरिणाञ्चैव क्षतानामाढ्यरोगिणाम् ।
दुर्बलातिविशुष्काणामुपक्षीणौजसां तथा ॥
भिषक्तैमिरिकाणाञ्च न स्वेदमवतारयेत् ।
प्रतिश्याये च कासे च हिक्काश्वासेष्वलाघवे ॥
कर्णमन्याशिरःशूले स्वरभेदे गलग्रहे ।
अर्दितैकाङ्गसर्वाङ्गपक्षाघाते विनामके ॥
कोष्ठानाह विबन्धेषु शुक्राघाते विजृम्भके ।
पार्श्वपृष्ठकटीकुक्षिसंग्रहे गृध्रसीषु च ॥
मूत्रकृच्छ्रे महत्त्वे च मुष्कयोरङ्गमर्दके ।
पादोरुजानुजङ्घार्त्तिसंग्रहे श्वयथावपि ॥
खल्लीष्वामेषु शीते च वेपथौ वातकण्टके ।

सङ्कोचायाम शूलेषु स्तम्भगौरवसुप्तिषु ॥
सर्वाङ्गेषु विकारेषु स्वेदनं हितमुच्यते ।
तिलमाषकुलत्थाम्लघृततैलामिषौदनैः ॥
पायसैः कृशरैर्मांसैः पिण्डस्वेदं प्रयोजयेत् ।
गोखरोष्ट्रवराहाश्वशकृद्भिः सतुषैर्यवैः ॥
सिकतापांशुपाषाणकरीषायसपुटकैः ।
श्लैष्मिकान् स्वेदयेत् पूर्वैर्वातिकान् समुपाचरेत् ॥
द्रव्याण्येतानि शस्यन्ते यथास्वं प्रस्तरेष्वपि ।
भूगृहेषु च जेन्ताकेषूष्णगर्भगृहेषु च ॥
विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति नासुखम् ।
ग्राम्यानूपौदकं मांसं पयोवस्तशिरस्तथा ॥
वराहमध्यपित्तासृक् स्नेहवत्तिलतण्डुलान् ।
इत्येतानि समुत्क्वाथ्य नाडीस्वेदं प्रयोजयेत् ॥
देशकालविभागज्ञो युक्त्यपेक्षो भिषक्तमः ।
वारुणामृतकैरण्डशिग्रुमूलकसर्षपैः ॥
वासावंशकरञ्जार्कपत्रैरश्मान्तकस्य च ।
शोभाञ्जनकशैरीयमालतीसुरसार्जकैः ॥
पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेत् ।
भूतीकपञ्चमूलाभ्यां सुरयादधिमस्तुना ॥
मूत्रैरम्लैश्च सस्नेहैर्नाडीस्वेदं प्रयोजयेत् ।
एत एव च निर्यूहाः प्रयोज्या जलकोष्टके ॥
स्वेदनार्थं घृतक्षीरतैलकोष्टांश्च कारयेत् ।
गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः ॥

सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते ।
गन्धैः सुरायाः किण्वेन जीवन्त्या शतपुष्पया ॥
उमया कुष्ठतैलाभ्यां युक्तया चोपनाहयेत् ।
चर्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः ॥
उष्णवीर्य्यैरलाभे तु कौशेयाविकशाटकैः ।
रात्रौ बद्धं दिवा मुञ्चेत् मुञ्चेद्रात्रौ दिवाकृतम् ॥
विदाहपरिहारार्थं स्यात् प्रकर्षस्तु शीतले ।
सङ्करः प्रस्तरो नाडीपरिषेकोऽवगाहनम् ॥
जेन्ताकोऽश्मघनः कर्षुकुटीभुः कुम्भिकैव च ।
कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश ॥
तान् यथावत् प्रवक्ष्यामि सर्वानेवानुपूर्वशः । इति ।

तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं शङ्करस्वेद इति विद्यात् । शूकशमीधान्यपुलाकानां वेशवारायसकृशरोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुवुकार्कपत्रप्रच्छदे वास्वभ्यक्तसर्वगात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेद इति विद्यात् ।

स्वेदनद्रव्याणां पुनर्मूलफलपत्रभङ्गादीनां मृगशकुनपिशितशिरःस्पदादीनामुष्णस्वभावानां वा यथार्हमम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वाष्पमनुद्वमन्त्यामुत्क्वथितानां नाड्याशरेषीकावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घया व्यामार्द्धदीर्घया वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्वतो वातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विनामितया वातहरसिद्धस्नेहाभ्यक्तगात्रो वाष्पमपहरेत् ।

बाष्पो ह्यनूर्द्ध्वगामी निहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः वातिकोत्तरवातिकानां पुनर्मूला-दीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वा गलन्तीर्वा प्रनाडीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषे-चयेदिति परिषेकः। वातहरोत्क्वाथक्षीरतैलघृतपिशि-तरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः।

अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत। तत्र पूर्वस्यां दिश्यु-त्तरस्यां वा गुणवति प्रशस्तेऽभूमिभागे कृष्णमृत्तिके सुवर्ण-मृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यत-मस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्त भूमि-भागे सप्ताष्टौ वा अरत्नी रुपक्रम्योदकात् प्राङ्मुखमुदङ्-मुखं वाभिमुखतीर्थं कूटागारं कारयेत्।

उत्सेधविस्तारतः परमरत्नीः षोड़श समन्तात् सुवृत्तं मृत्कर्म्मसम्पन्नमनेकवातायनम्। अस्य कूटागारस्यान्तः समन्ततो भित्तिमरत्नीविस्तारोत्सेधां पिण्डिकां कारयेत् कपाटवर्ज्जम्। मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्र-पुरुषप्रमाणं मृण्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गार-कोष्ठकस्तम्भं सपिधानं कारयेत्। तञ्च खादिराणामाश्व-कर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत्। स यदा जानीयात् साधुदग्धानि काष्ठानि गतधूमानि अवतप्तञ्च केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत् प्रवेशयंश्चैनमनुशिष्यात्। सौम्य प्रविश कल्याणायारोग्याय चेति। प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां

शयासुखं शयीथाः नच त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा विमोक्तव्यामा प्राणोच्छासात्। भ्रश्यमानो ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः ॥

तस्मात् पिण्डिकामेनां न कथञ्चन मुञ्चेथाः त्वं यदा जानीयाः विगताभिष्यन्दमात्मानं सम्यक् प्रस्रुतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनागौरवमिति। ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः। निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः। अपगतसन्तापक्लमस्तु मुहूर्त्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीया इति जेन्ताकः स्वेदः ॥

शयानस्य प्रमाणेन घनामश्ममयीं शिलाम्।
तापयित्वा मारुतघ्नैर्दारुभिः संप्रदीपितैः ॥
व्यपोह्य सर्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा।
तां शिलामथ कुर्वीत कौषेयाविकसंस्तराम् ॥
तस्यां स्वभ्यक्तसर्वाङ्गः शयानः स्विद्यते सुखम्।
रौरवाजिनकौषेयप्रावाराद्यैः सुसंवृतः ॥
इत्युक्तोऽश्मघनस्वेदः कर्षूस्वेदः प्रवक्ष्यते।
खानयेच्छयनस्याधः कर्षूं स्थानविभागवित् ॥
दीप्तैरधूमैरङ्गारैस्तां कर्षूं पूरयेत्ततः।
तस्यामुपरि शय्यायां स्वपन् स्विद्यति नासुखम् ॥
अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम्।
घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः सम्प्रलेपयेत् ॥

कुटीमध्ये भिषक् शय्यां स्वास्तीर्णाञ्चोपकल्पयेत् ।
प्रावाराजिनकौषेयकुथ्यकम्बलगोलकैः ॥
हसन्तिकाभिरङ्गारपूर्णाभिस्ताश्च सर्वशः ।
परिवार्य्यान्तरारोहेदभ्यक्तः स्विद्यती सुखम् ॥
य एवाश्मघनस्वेदविधिर्भूमौ स एव तु ।
प्रशस्तायां निवातायां समायामुपदिश्यते ॥
कुम्भीं वातहरक्वाथपूर्णां भूमौ निखातयेत् ।
अर्द्धभागं त्रिभागं वा शयनं तत्र चोपरि ॥
स्थापयेदासनं वापि नातिसान्द्रपरिच्छदम् ।
अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसो गुडान् ॥
पाषाणान् वोष्मणा तेन तत्स्थः स्विद्यति ना सुखम् ।
सुसंवृताङ्गः स्वभ्यक्तः स्नेहैरनिलनाशनैः ॥
कूपं शयनविस्तारं द्विगुणञ्चापि वेधतः ।
देशे निवाते शस्ते च कुर्य्यादन्तः सुमार्जितम् ॥
हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते ।
स्ववच्छन्नः ससंस्तीर्णोऽभ्यक्तःस्विद्यति ना सुखम् ॥
धीतीकान्तु करीषाणां यथोक्तानां प्रदीपयेत् ।
शयनान्तः प्रमाणेन शय्यामुपरि तत्र च ॥
सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् ।
स्ववच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति नासुखम् ॥
होलाकस्वेद इत्येष सुखः प्रोक्तो महर्षिणेति ।
इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः ॥
व्यायाम उष्णसदनं गुरुप्रावरणं क्षुधा ।
बहुपानं भयक्रोधावुपनाहाहवातपाः ॥

स्वेदयन्ति दशैतानि नरमग्निगुणाहते।
इत्युक्तो द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च ॥
एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च ।
इत्येतत् त्रिविधं द्वन्द्वं स्वेदमुद्दिश्य कीर्त्तितम् ॥
स्निग्धः स्वेदैरुपक्रम्यः स्विन्नः पथ्याशनो भवेत् ।
तदहः स्विन्नगात्रस्तु व्यायामं वर्जयेन्नर इति ॥
तत्र श्लोकाः ॥ स्वेदो यथा कार्य्यकरो हितो येभ्यश्च यद्विधः ।
यत्र देशे यथायोग्यो देशो रक्ष्यश्च यो यथा ॥
स्विन्नातिस्विन्नरूपाणि तथातिस्विन्नभेषजम् ।
अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि कल्पना ॥
त्रयोदशविधः स्वेदो विना दशविधोऽग्निना ।
संग्रहेण च षट्स्वेदाः स्वेदाध्याये निदर्शिताः ॥
स्वेदाधिकारे यद्वाच्यमुक्तमेतन्महर्षिणा ।
शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्वसुरिति ॥
अग्नीत्यादि ॥ स्वेदाध्यायः समाप्तः ।

---

पञ्चदशोऽध्यायः ।

अथात उपकल्पनीयमध्यायं व्याख्यास्यामः।
इति ह स्माह भगवानात्रेयः।

इह खलु राजानं राजमात्रमन्यं वा विपुलद्रव्यं संभृत सम्भारं वमनं विरेचनं वा पाययितुकामेन भिषजा प्रागेवौषधपानात् सम्भारा उपकल्पनीया भवन्ति । सम्यक् चैव

हि गच्छत्योषधे प्रतिभोगार्थाः व्यापन्ने चौषधे व्यापदः परि-संख्याय प्रतीकारार्थाः। न हि सन्निकृष्टे काले प्रादुर्भूतायामापदि सत्यपि क्रयाक्रये सुकरमाशु सम्भरणमौषधानां यथावदित्येवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच॥

ननु भगवन्नादावेव ज्ञानवता तथा प्रतिविधातव्यं यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन। सम्यक् प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा व्यापच्चासम्यक् प्रयोगनिमित्ता। अथ सम्यगसम्यक् च समारब्धं कर्म सिद्ध्यति व्यापद्यते वा नियमेन। तुल्यं भवति ज्ञानमज्ञानेनेति। तमुवाच भगवानात्रेयः।

शक्यं तथा प्रतिविधातुमस्माभिरस्मद्विधैर्वाप्यग्निवेश यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन तच्च प्रयोगसौष्ठवमुपदेष्टुं यथावन्न हि कश्चिदस्ति। य एतदेवमुपदिष्टमुपधारयितुमुत्सहेत। उपधार्य्य वा तथा प्रतिपत्तुं प्रयोक्तुं वा। सूक्ष्माणि हि देशभेषजदेशकालबलशरीराहारसात्म्यसत्वप्रकृतिवयसामवस्थान्तराणि।

यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः किं पुनरल्पबुद्धेः। तस्मादुभयमेतद्यथावदुपदेक्ष्यामः। सम्यक् प्रयोगञ्चौषधानां व्यापन्नानाञ्च व्यापत् साधनानि सिद्धिषूत्तरकालम्। इदानीं तावत् सम्भारान् विविधानपि समासेनोपदेक्ष्यामः तद्यथा॥

दृढं निवातं प्रवातैकदेशं सुखप्रविचारमनुपत्यकं धूमातपरजसामनभिगमनीयमनिष्टानाञ्च शब्दस्पर्शरसरूपगन्धानां सोपानोदूखलमुषलवर्चःस्थानस्नानभूमिमहानस-

सोपेतं वास्तुविद्याकुशलः प्रशस्तं गृहमेव तावत् पूर्वमुपकल्पयेत् ।

ततः शीलशौचाचारानुरागदाक्षप्रादक्षिण्योपपन्नानुपचारकुशलान् सर्वकर्मसु पर्य्यवदातान् सूपौदनपाचकस्नापकसंवाहकोत्थापकसंवेशकौषधपेषकांश्च परिचारकान् सर्वकर्मस्वप्रतिकूलान् तथा गीतवादित्रोल्लापकश्लोकगाथाख्यायिकेतिहासपुराणकुशलानभिप्रायज्ञानानुमतांश्च देशकालविदः पारिषद्यांश्च। तथा लावकपिञ्जलशशहरिणैनकालपुच्छकमृगमातृकोरभ्रान् ।

गां दोग्ध्रीं शीलवतीमनातुरां जीवद्वत्सां सुप्रतिविहितत्णशरणपानीयाम् । पात्र्याचमनीयोदकोष्ठमणिकघटपिठरपर्य्योगकुम्भीकुम्भकुण्डशरावदर्वीकटोदञ्चनपरिपचनमन्थानचर्म्मचेलसूत्रकार्पासोर्णादीनि च शयनासनादीनि चोपन्यस्तभृङ्गारप्रतिग्रहाणि सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानानि स्वापाश्रयाणि संवेशन संवाहनस्नेहस्वेदाभ्यङ्गप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनशिरोविरेचनमूत्रोच्चारकर्मणामुपचारसुखानि सुप्रक्षालितोपधानाश्च सुश्लक्ष्णखरमध्यमादृषदः शस्त्राणि चोपकरणार्थानि। धूमनेत्रञ्चावस्तिनेत्रञ्चोत्तरवस्तिकञ्च। कुशहस्तकञ्च तुलाञ्च मानभाण्डञ्च घृततैलवसामज्जक्षौद्रफाणितलवणेन्धनोदकमधुसीधुसुरासौवीरकतुषोदकमैरेयमेदकदधिदधिमण्डोदश्विद्धान्याम्लमूत्राणि च ।

तथा शालिषष्टिकमुद्गमाषयवतिलकुलत्थबदरमृद्वीकाकाश्मर्य्यपरूषकाभयामलकविभीतकानि नानाविधानि च स्नेहस्वेदो-

पकरणानि द्रव्याणि तथैवोर्द्ध्वहरानुलोमिकौ भयभाञ्जि-
संग्रहणीयदीपनीयपाचनीयोपशमनीयवातहराणि समा-
ख्यातानि चौषधानि यच्चान्यदपि किञ्चिदनापदः परि-
संख्यायोपकरणं विद्यात्। यच्च प्रतिभोगार्थं तत्तदुप-
कल्पयेत्।

ततस्तं पुरुषं यथोक्ताभ्यां स्नेहस्वेदाभ्यां यथार्हमुपपाद-
येत्। तस्मिंश्चेदन्तरे मानसः शारीरो वा व्याधिः कश्चित्ती-
व्रतरः सहसाभ्यागच्छेत्तमेव तावदस्योपावर्त्तयितुं यतेत।
ततस्तमुपावर्त्त्य तावन्तमेवेनं कालं तथाविधेनैव कर्मणो-
पाचरेत्। ततस्तं पुरुषं स्नेहस्वेदोपपन्नमनुपहतमानस-
मभिसमीक्ष्य सुखोषितं प्रजीर्णभक्तं शिरःस्नातमनुलिप्त-
गात्रं स्रग्विणमनुपहतवस्त्रसंवीतं देवताग्निद्विजगुरुवृद्ध-
वैद्यानर्चितवन्तम्। इष्टे नक्षत्रे तिथिकरणमुहूर्त्ते
कारयित्वा ब्राह्मणान् स्वस्तिवाचनं प्रयुक्ताभिराशीर्भिर-
भिमन्त्रितां मधुमधुकसैन्धवफाणितोपहितां मदनफल-
कषायमात्रां पाययेत्। मदनफलकषायमात्राप्रमाणन्तु
खलु सर्वं संशोधनमात्राप्रमाणानि च। प्रतिपुरुषमपे-
क्षितव्यानि भवन्ति। यावद्धि यस्य संशोधनं पीतं वैका-
रिकदोषहरणायोपपद्यते।

नचातियोगायोगाय तावदस्य मात्राप्रमाणं वेदितव्यं
भवति। पीतवन्तन्तु खल्वेनं मुहूर्त्तमनुकाङ्क्षेत्। तस्य
यदा जानीयात् स्वेदप्रादुर्भावेण दोषप्रविलयनमापद्यमानं
लोमहर्षेण च स्थानेभ्यः प्रचलितं कुक्षि समाध्मानेन च
कुक्षिमनुगतं हृल्लासास्य स्रवणाभ्यामपचितोर्द्ध्वमुखीभूत-

मथास्मै जानुसममसम्बाधं सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानं स्वापाश्रयमासनमुपवेष्टुं प्रयच्छेत्।

प्रसिग्रहांश्चोपचारयेत्॥ ललाटप्रतिग्रहे पार्श्वोपग्रहणे नाभिप्रपीड़ने पृष्ठोन्मर्द्दने च अभ्युपक्रमणीयाः सुहृदोऽनुमताः प्रयतेरन्। अथैनमनुशिष्यात्। विवृतौष्ठतालुकण्ठो नातिमहता व्यायामेन वेगानुदीर्णानुदीरयन् किञ्चिदवनम्य ग्रीवामूर्द्धशरीरमुपवेगमप्रवृत्तान् प्रवर्त्तयन् सुपलिखितनखाभ्यामङ्गुलीभ्यामुत्पलकुमुदसौगन्धिकनालैर्वा कण्ठमनभिस्पृशन् सुखं प्रवर्त्तयस्वेति॥

स तथाविधं कुर्य्यात् ततोऽस्य वेगान् प्रतिग्रहगतानवेक्षेतावहितः वेगविशेषदर्शनाद्धि कुशलो योगायोगातियोगविशेषानुपलभेत वेगविशेषदर्शी पुनः कृत्यं यथार्हमवबुद्ध्येत लक्षणेन। तस्माद्वेगानवेक्षेतावहितः। तत्र अत्यतियोगयोगातियोगविशेषज्ञानानि भवन्ति। तद्यथा अप्रवृत्तिः कुतश्चित्।

केवलस्य वाप्यौषधस्य विभ्रंशो विबन्धो वेगानां योगलक्षणानि भवन्ति। काले प्रवृत्तिरनतिमहतीव यथास्वं दोषहरणं स्वयञ्चावस्थानमिति योगलक्षणानि भवन्ति। योगेन तु दोषप्रमाणविशेषेण तीक्ष्णमृदुमध्यविभागो ज्ञेयः। योगाधिक्येन तु फेणिलरक्तचन्द्रिकोपगमनमित्यतियोगलक्षणानि भवन्ति। तत्रातियोगायोगनिमित्तानिमानुपद्रवान् विद्यात्। आध्मानं परिकर्त्तिका परिस्रावो हृदयोपशरणमङ्गग्रहो जीवादानं विभ्रंशः स्तम्भक्लम उपद्रव इति।

योगेन तु खल्वेनं छर्दितवन्तमभिसमीक्ष्य सुप्रक्षालित-

पाणिपादाश्च मुहूर्त्तमास्थाय स्नैहिक वैरेचनिकोपशमनीयानां धूमानामन्यतमं सामर्थ्यतः पाययित्वा पुनरेवोदकमुपस्पर्शयेत्। उपस्पृष्टोदकञ्चैनं निवातमगारमनुप्रवेश्य संवेश्य चानुशिष्यात्।

उच्चैर्भाष्यमत्यासनमतिस्थानमतिचंक्रमणं क्रोधशोकहिमातपावश्यायातिप्रवातान्। यानयानं ग्राम्यधर्म्ममस्वपनं निशि दिवा स्वप्नम्। विरुद्धाजीर्णासात्म्याकालप्रमितातिहीनगुरुविषमभोजनवेगसन्धारणोदीरणमिति भावानेतान् मनसाप्यसेवमानः सर्वमाहारमयादिति। स तथा कुर्य्यात्।

अथैनं सायाह्ने परे वाह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितण्डुलानां स्ववक्लिन्नानां मण्डपूर्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य चैवं द्वितीये तृतीये चान्नकाले चतुर्थे त्वन्नकाले तथाविधानामेव शालितण्डुलानामुत्स्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत्। एवं पञ्चमे षष्ठे चान्नकाले सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत्। एवमष्टमे नवमे चान्नकाले दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसरसेनोदकलावणिकेनापि सारवता भोजयेत्। उष्णोदकानुपानम् एवमेकादशे द्वादशे चान्नकाले। अत ऊर्द्ध्वमन्नगुणान् क्रमेणोपभुञ्जानः सप्तरात्रेण प्रकृतिभोजनमागच्छेत्। अथैनं पुनरेव स्नेहस्वेदाभ्यामुपपाद्यानुपहतमनस्कमभि-

सामीक्ष्य सुखोषितं सुप्रजीर्णभक्तं कृतहोमबलिमङ्गल-जप्यप्रायश्चित्तमिष्टतिथिनक्षत्रकरणमुहूर्त्ते ब्राह्मणान् स्वस्ति वाचयित्वा तद्वत्कल्कमक्षमात्रं यथार्हालोडन-प्रतिविनीतं पाययेत् प्रसमीक्ष्य दोषभेषजदेशकालबल-शरीराहारसात्म्यसत्वप्रकृतिवयसामवस्थान्तराणि विका-रांश्च सम्यक् विरिक्तश्चैनं वमनोक्तेन धूमवर्जेन विधिनोप-पादयेदाबलवर्णप्रतिलाभाद् बलवर्णोपपन्नश्चैनमनुपहत-मनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं शिरःस्नात-मनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतमनुरूपालङ्का-रालङ्कृतं सुहृदां दर्शयित्वा ज्ञातीनां दर्शयेदथैनं कामे-ष्ववसृजेत् ।

भवन्ति चात्र । अनेन विधिना राजा राजमात्रोऽथवा पुनः ।

यस्य वा विपुलं द्रव्यं स संशोधनमर्हति ॥

दरिद्रस्त्वापदं प्राप्य प्राप्तकालं विरेचनम् ।

पिबेत् काममसंभृत्य सम्भारानपि दुर्लभान् ॥

नहि सर्वमनुष्याणां सन्ति सर्वपरिच्छदाः ।

नच रोगा न बाधन्ते दरिद्रानपि दारुणाः ॥

यद्यच्छक्यं मनुष्येण कर्त्तुमौषधमापदि ।

तत्तत् सेव्यं यथाशक्ति वसनान्यशनानि च ॥

मलापहं रोगहरं बलवर्णप्रसादनम् ।

पीत्वा संशोधनं सम्यगायुषा युज्यते चिरम् ॥

तत्र श्लोकाः । ईश्वराणां वसुमतां वमनं सविरेचनम् ।

सम्भारा ये यदर्थञ्च समानीय प्रयोजयेत् ॥

यथा प्रयोज्यं या मात्रा यद्योगस्य लक्षणम् ।

योगातियोगयोगैश्च दोषा ये चाप्युपद्रवाः॥
यद्देवं विधानेन यश्च संसर्जनक्रमः।
तत्सर्वं कल्पनाध्याये व्याजहार पुनर्वसुः॥
इति कल्पनाचतुष्के उपकल्पनीयोऽध्यायः।

---

षोडशोऽध्यायः।

अथातः चिकित्साप्राभृतीयमध्यायं व्याख्यास्यामः॥

चिकित्साप्राभृतो विद्वान् शास्त्रवान् कर्मतत्परः।
नरं विरेचयति यं स योगात् सुखमश्नुते॥
दौर्बल्यं लाघवं ग्लानिर्व्याधीनामणुता रुचिः।
हृद्वर्णशुद्धिः क्षुत्तृष्णा काले वेगप्रवर्त्तनम्॥
बुद्धीन्द्रियमनःशुद्धिर्मारुतस्यानुलोमता।
सम्यग्विरिक्तलिङ्गानि कायाग्नेश्चानुवर्त्तनम्॥
ष्ठीवनं हृदयात् शुद्धिरुत्क्लेशः श्लेष्मपित्तयोः।
आध्मानमरुचिश्छर्दिरदौर्बल्यमलाघवम्॥
जङ्घोरुसादनं तन्द्रास्तैमित्यं पीनसागमः।
लक्षणान्यविरिक्तानां मारुतस्य च निग्रहः॥
विट्पित्तश्लेष्मवातानामागतानां यथाक्रमम्।
परं स्रवति यद्रक्तं मेदोमांसोदकोपमम्॥

निःश्लेष्मपित्तमुदकं शोणितं कृष्णमेव वा ।
तृष्यतो मारुतात्तस्य सोऽतियोगप्रमुह्यतः ॥
वमनातिकृतैर्लिङ्गान्येतान्येव भवन्ति हि ।
ऊर्द्ध्वगा वातरोगाश्च वाग्ग्रहश्चाधिकोपमः ॥
चिकित्साप्राभृतं तस्मादुपेयात्कारणं नरः ।
दुश्च्यावयेदनमत्यन्तमायुषा च सुखेन च ॥
अविपाकोऽरुचिः स्थौल्यं पाण्डुता गौरवं क्लमः ।
पित्तकाकोठकण्डूनां सम्भवो रतिरेव च ॥
आलस्यं श्रमदौर्बल्यं दौर्गन्ध्यमवसादकः ।
श्लेष्मपित्तसमुत्क्लेशो निद्रानाशोऽतिनिद्रता ॥
तन्द्राक्लैव्यमबुद्धित्वमशस्तस्वप्नदर्शनम् ।
बलवर्णप्रनाशश्च तृप्यतो बृंहणैरपि ॥
बहुदोषस्य लिङ्गानि तस्मै संशोधनं हितम् ।
ऊर्द्ध्वञ्चैवानुलोमञ्च यथादोषं यथाबलम् ॥
एवं विशुद्धकोष्ठस्य कायाग्निरभिवर्धते ।
व्याधयश्चोपशाम्यन्ति प्रकृतिश्चानुवर्त्तते ॥
इन्द्रियाणि मनो बुद्धिर्वर्णश्चास्य प्रसीदति ।
बलं पुष्टिरपत्यञ्च वृषता चास्य जायते ॥
जरां कृच्छ्रेण लभते चिरञ्जीवत्यनामयः ।
तस्मात् संशोधनं काले युक्तियुक्तं पिबेन्नरः ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
जिताः संशोधनैर्ये तु न तेषां पुनरुद्भवः ॥
दोषाणाञ्च द्रुमाणाञ्च मूलेऽनुपहते सति ।
रोगाणां प्रसवानाञ्च गतानामागतिर्ध्रुवा ॥

भेषजक्षपिते पथ्यमाहारैरेव बृंहणम्।
घृतमांसरसक्षीरहृद्ययूषोपसाधितैः॥
अभ्यङ्गोच्छादनैः स्नानैर्निरूहैः सानुवासनैः।
तथा स लभते शर्म युज्यते चायुषा चिरम्॥
अतियोगानुबद्धानां सर्पिःपानं प्रशस्यते।
तैलं मधुरकैः सिद्धमथवाप्यनुवासनम्॥
यस्य त्वयोगस्तं स्निग्धं पुनः संशोधयेन्नरम्।
मात्राकाले बलापेक्षी पूर्वस्यातिक्रमस्य वै॥
स्नेहने स्वेदने शुद्धौ रोगाः संसर्जने च ये।
जायन्ते मार्गविहिते तेषां सिद्धिषु साधनम्॥
जायन्ते हेतुवैषम्याद्विषमा देहधातवः।
हेतुसाम्यात् समास्तेषां स्वभावो परमः सदा॥
प्रवृत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम्।
केचित्तत्रापि मन्यन्ते हेतुं हेतोरवर्तनम्॥
एवमुक्तार्थमाचार्य्यमग्निवेशोऽभ्यभाषत।
स्वभावे परमे कर्म चिकित्साप्राभृतस्य किम्॥
भेषजैर्विषमान् धातून् कान् समीकुरुते भिषक्।
का वा चिकित्सा भगवन्! किमर्थं वा प्रयुज्यते॥
तच्छिष्यवचनं श्रुत्वा व्याजहार पुनर्वसुः।
श्रूयतामत्र या सौम्य! युक्तिर्दृष्टा महर्षिभिः॥
न नाशकारणाभावाद्भावानां नाशकारणम्।
ज्ञायते नित्यगस्येव कालस्यात्ययकारणम्॥
शीघ्रगत्वाद्यथा भूतस्तथा भावो विपद्यते।
विरोधकारणं तस्य नास्ति नैवान्यथा क्रिया॥

याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः ।
सा चिकित्सा विकाराणां कर्म तद्भिषजां स्मृतम् ॥
कथं शरीरे धातूनां वैषम्यं न भवेदिति ।
समानाञ्चानुबन्धः स्यादित्यर्थं कुरुते क्रिया ॥
त्यागाद्विषमहेतूनां समानाञ्चोपसेवनात् ।
विषमाननुबध्नन्ति जायन्ते धातवः समाः ॥
समैस्तु हेतुभिर्यस्माद्धातून् सञ्जनयेत् समान् ।
चिकित्साप्राभृतस्तस्माद्दाता देहसुखायुषाम् ॥
धर्मस्यार्थस्य कामस्य त्रिलोकस्याभयस्य च ।
दाता सम्पद्यते वैद्यो दानाद्देहसुखायुषाम् ॥ इति
तत्र श्लोकाः । चिकित्साप्राभृतगुणो दोषो यश्चेतनाश्रयः ।
योगायोगातियोगानां लक्षणं शुद्धिसंश्रयम् ॥
बहुदोषस्य लिङ्गानि संशोधनगुणाश्च ये ।
चिकित्सासूत्रमात्रञ्च सिद्धिर्व्यापत्तिसंश्रया ॥
या च युक्तिः चिकित्सायां यं चार्थं कुरुते भिषक् ।
चिकित्साप्राभृतेऽध्याये तत् सर्वमवदन्मुनिः ॥
इति कल्पनाचतुष्के चिकित्साप्राभृतीयोऽध्यायः ।
समाप्तं कल्पना चतुष्कं चतुर्थम् ॥

---

## सप्तदशोऽध्यायः ।

अथातः कियन्तःशिरसीयमध्यायं व्याख्यास्यामः ।

कियन्तःशिरसि प्रोक्ता रोगा हृदि च देहिनाम् ॥
कति चाप्यनिलादीनां रोगा मानविकल्पजाः ।
क्षयाः कति समाख्याताः पिडिकाः कति चानघ ! ॥
गतिः कतिविधा प्रोक्ता दोषाणां दोषसूदन ! ।
हुताशवेशस्य वचः तत् श्रुत्वा गुरुरब्रवीत् ॥
पृष्टवानसि यत्सौम्य ! तन्मे शृणु सुविस्तरम् ।
दृष्टाः पञ्च शिरोरोगाः पञ्चैव हृद्यामयाः ॥
व्याधीनां द्व्यधिका षष्टिर्दोषमानविकल्पजा ।
दशाष्टौ च क्षयाः सप्त पिडका मधुमेहिकाः ॥
दोषाणां त्रिविधा प्रोक्ता गतिर्विस्तरतः शृणु ।
सन्धारणाद्दिवास्वप्नाद्रात्रौ जागरणान्मदात् ॥
उच्चैर्भाष्यादवश्यायात् प्राग्वातादतिमैथुनात् ।
गन्धादसात्म्यादाघ्राताद्रजोधूमहिमातपात् ॥
गुर्वम्लहरितादानादतिशीताम्बुसेवनात् ।
शिरोऽभिघाताद्दुष्टामाद्रोदनाद्बाष्पनिग्रहात् ॥
मेघागमान्मनस्तापाद्देशकालविपर्ययात् ।
वातादयः प्रकुप्यन्ति शिरस्यस्रं प्रदुष्यति ॥
ततः शिरसि जायन्ते रोगा विविधलक्षणाः ।
प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च ॥
यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते ।

अर्धावभेदको वा स्यात् सर्वं वा रुजते शिरः ॥
प्रतिश्यामुखनासाक्षिकर्णरोगाः शिरोभ्रमाः ।
अर्दितं शिरसः कम्पो गलमन्याहनुग्रहः ॥
विविधाश्चापरे रोगा वातादिक्रिमिसम्भवाः ।
पृथगुद्दिष्टास्तु ये पञ्च संग्रहे परमर्षिणा ॥
शिरोगतांस्तान् शृणु मे यथास्वैर्हेतुलक्षणैः ।
उच्चैर्भाष्यातिभाष्याभ्यां तीक्ष्णपानात् प्रजागरात् ॥
शीतमारुतसंस्पर्शाद्व्यवायाद्वेगनिग्रहात् ।
उपवासादभीघातादतिरेकाद्वमनादपि ॥
वाष्पशोकपरित्रासाद्भारमार्गातिकर्षणात् ।
शिरोगताः शिरावृद्धो वायुराविश्य कुप्यति ॥
ततः शूलं महत्तस्य वातात् समुपजायते ।
निस्तुद्येते भृशं शङ्खौ घाटा सम्भिद्यते यथा ॥
सभ्रूमध्यं ललाटं च पततीवातिवेदनम् ।
बाध्येते स्वनतः श्रोत्रे निष्कृष्येते इवाक्षिणी ॥
घूर्णतीव शिरः सर्वं सन्धिभ्य इव मुच्यते ।
स्फुरत्यतिशिराजालं स्तभ्यते च शिरोधरा ॥
स्निग्धोष्णमुपशेते च शिरोरोगेऽनिलात्मके ॥
कट्वम्ललवणक्षारमद्यक्रोधातपानलैः ।
पित्तं शिरसि सन्दुष्टं शिरोरोगाय कल्पते ॥
दह्यते रुजते तेन शिरः शीतं सुखायते ।
दह्येते चक्षुषी तृष्णा भ्रमः स्वेदश्च जायते ॥
आस्यासुखैः स्वप्नसुखैर्गुरुस्निग्धातिभोजनैः ।
श्लेष्मा शिरसि सन्दुष्टं शिरोरोगाय कल्पते ॥

शिरो मर्म्मरुजं तेन सुषुप्तिस्तिमिराकुलम् ।
भवत्युत्पद्यते तन्द्रा तथालस्यमरोचकः ॥
वातात् शूलं भ्रमः कम्पः पित्ताद्दाहो मदस्तृषा ।
कफाद्गुरुत्वं तन्द्रा च शिरोरोगे त्रिदोषजे ॥
तिलक्षीरगुडाजीर्णपूतिसङ्कीर्णभोजनात् ।
क्लेदोऽसृक्कफमांसानां दोषस्यास्योपजायते ॥
ततः शिरसि संक्लेदात् क्रिमयः पापकर्म्मणः ।
जनयन्ति शिरोरोगान् जाता वीभत्सलक्षणान् ॥
व्यवच्छेदारुजा कण्डूशोफदौर्गन्ध्यदुःखताम् ।
क्रिमिरोगातुरं विद्यात् क्रिमीणां दर्शनेन च ॥
शोकोपवासव्यायामशुष्करूक्षाल्पभोजनैः ।
वायुराविश्य हृदयं जनयत्युत्तमां रुजम् ॥
वेपथुर्वेष्टनं स्तम्भः प्रमोहः शून्यता द्रवः ।
हृदि वातातुरे रूपं जीर्णे चात्यर्थवेदना ॥
उष्णाम्ललवणक्षारकटुकाजीर्णभोजनैः ।
मद्यक्रोधातपैश्चाशु हृदि पित्तं प्रकुप्यति ॥
हृद्दाहस्तिक्तता वक्त्रे क्लमः पित्ताम्लकोद्गरः ।
तृष्णा मूर्च्छा भ्रमः स्वेदः पित्तहृद्रोगलक्षणम् ।
अत्याशनं गुरुस्निग्धमचिन्तनमचेष्टनम् ॥
निद्रासुखं चाभ्यधिकं कफहृद्रोगलक्षणम् ।
हृदयं कफहृद्रोगे स्तब्धं स्तिमितकारकम् ॥
तन्द्रारुचिपरीतस्य भवत्यश्मावृतं यथा ।
हेतुलक्षणसंसर्गादुच्यते सान्निपातिकः ॥
त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते ।

तिलक्षीरगुडादीनि ग्रन्थिस्तस्योपजायते ॥
मर्मैकदेशे संक्लेदं रसश्चास्योपगच्छति ।
संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः ॥
मर्मैकदेशे ते जाताः सर्पन्तो भक्षयन्ति च ।
तुद्यमानं स हृदयं सूचीभिरिव मन्यते ॥
छिद्यमानं यथा शस्त्रैर्जातकण्डूं महारुजम् ।
हृद्रोगैः क्रिमिजैस्त्वेतैर्लिङ्गैर्बुद्ध्वा सुदारुणम् ॥
त्वरेत जेतुं तं विद्वान्विकारं शीघ्रकारिणम् ।
द्व्युल्बणैः कोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट् ॥
समैश्चैको विकारास्ते सन्निपाते त्रयोदश ।
संसर्गेण च षट् तेभ्यः एकवृद्ध्या समैस्त्रयः ॥
पृथक् त्रयश्च तैर्वृद्धैर्व्याधयः पञ्चविंशतिः ।
यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ॥
वृद्धिक्षयकृतश्चान्यो विकल्प उपदेक्ष्यते ।
वृद्धिरेकस्य समता चैकस्यैकस्य च संक्षयः ॥
द्वन्द्ववृद्धिः क्षयश्चैकस्यैका वृद्धिर्द्वयोः क्षयः ।
प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षयम् ॥
स्थानादादाय गात्रेषु तत्र तत्र विसर्पति ।
तदा भेदश्च दाहश्च तत्र तत्रानवस्थिताः ।
गात्रदेशे भवन्त्यस्य श्रमदौर्बल्यमेव च ॥
साम्ये स्थितं कफं वायुः क्षीणे पित्ते यदा बली ।
कर्षेत् कुर्यात्तदा शूलं सशैत्यस्तम्भगौरवम् ॥
यदानिलं प्रकृतिगं पित्तं कफपरिक्षये ।
संरुणद्धि तदा दाहः शूलं चास्योपजायते ॥

श्लेष्माणं हि समं पित्तं यदा वातपरिक्षये ।
संपीडयेत्तदा कुर्य्यात् सतन्द्रागौरवं ज्वरम् ॥
प्रवृद्धो हि यदा श्लेष्मा पित्ते क्षीणे समीरणम् ।
रुन्ध्यात्तदा प्रकुर्वीत शीतकं गौरवं रुजम् ॥
समीरणे परिक्षीणे कफः पित्तं समत्वगम् ।
कुर्वीत सन्निरुन्धानो मृद्वग्नित्वं शिरोग्रहम् ॥
निद्रां तन्द्रां प्रलेपञ्च हृद्रोगं गात्रगौरवम् ।
नखादीनाञ्च पीतत्वं ष्ठीवनं कफपित्तयोः ॥
हीनवातस्य तु कफः पित्तेन सहितश्चरन् ।
करोत्यरोचकापाकौ सदनं गौरवं तथा ॥
हृल्लासमास्यस्रवणं दूयनं पाण्डुतां मदम् ।
विरेकस्य हि वैषम्यं वैषम्यमनलस्य च ॥
क्षीणपित्तस्य तु श्लेष्मा मारुतेनोपसंहितः ।
स्तम्भं शैत्यं च तोदञ्च जनयत्यनवस्थितम् ॥
गौरवं मृदुतामग्नेर्भक्ताश्रद्धां प्रवेपनम ।
नखादीनाञ्च शुक्लत्वं गात्रपारुष्यमेव च ॥
क्षीणे कफे मारुतस्तु पित्तं तु कुपितं द्वयम् ।
करोति यानि लिङ्गानि शृणु तानि समासतः ॥
भ्रममुद्वेष्टनन्तोदं दाहं स्फोटनमुत्तमम् ।
अङ्गमर्दं परीशोषं दूयनं धूपनं तथा ॥
वातपित्तक्षये श्लेष्मा स्रोतांस्यपि दधद्भृशम् ।
चेष्टाप्रणाशं मूर्च्छाञ्च वाक्सङ्गञ्च करोति हि ॥
श्लेष्मवातक्षये पित्तं देहौजः स्रंसयच्चरन् ।
ग्लानिमिन्द्रियदौर्बल्यं तृष्णां मूर्च्छां क्रियाक्षयम् ॥

पित्तश्लेष्मक्षये वायुर्मर्माण्यतिनिपीडयन् ।
प्रणाशयति संज्ञां च वेपयत्यथवा नरम् ॥
दोषाः प्रवृद्धाः स्वंलिङ्गं दर्शयन्ति यथा बलम् ।
क्षीणा जहति लिङ्गं स्वं समाः स्वकर्म कुर्वते ॥
वातादीनां रसादीनां मलानामोजसस्तथा ।
क्षयास्तत्रानिलादीनामुक्तं संक्षीणलक्षणम् ॥
घट्टते सहते शब्दं नोच्चैर्द्रवति शूल्यते ।
हृदयं ताम्यति स्वल्पचेष्टस्यापि रसक्षये ॥
परुषास्फुटिता म्लाना त्वग्रूक्षा रक्तसंक्षये ।
मांसक्षये विशेषेण स्फिग्ग्रीवोदरशुष्कता ॥
सन्धीनां स्फुटनं ग्लानिरक्ष्णोरायास एव च ।
लक्षणं मेदसि क्षीणे तनुत्वं चोदरस्य च ॥
केशलोमनखश्मश्रुद्विजप्रपतनं श्रमः ।
ज्ञेयमस्थिक्षये रूपं सन्धिशैथिल्यमेव च ॥
शीर्यन्त इव चास्थीनि दुर्बलानि लघूनि च ।
प्रततं वातरोगाणि क्षीणे मज्जनि देहिनाम् ॥
दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं श्रमः ।
क्लैब्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥
क्षीणे शकृति चान्त्राणि पीडयन्निव मारुतः ।
रूक्षस्योन्नमयन् कुक्षिं तिर्यगूर्द्ध्वञ्च गच्छति ॥
मूत्रक्षये मूत्रकृच्छ्रं मूत्रवैवर्ण्यमेव च ।
पिपासा बाधते चास्य मुखञ्च परिशुष्यति ॥
मलायनानि चान्यानि शून्यानि च लघूनि च ।
विशुष्काणि च लक्ष्यन्ते यथास्वं मलसंक्षये ॥

बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ।
दुश्छायो दुर्मना रूक्षः क्षामश्चैवौजसः क्षये ॥
हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकम् ।
ओजः शरीरे संख्यातं तन्नाशान्ना विनश्यति ॥
व्यायामोऽनशनं चिन्ता रूक्षाल्पप्रमिताशनम् ।
वातातपौ भयं शोकौ रूक्षपानं प्रजागरः ॥
कफशोणितशुक्राणां मलानां चातिवर्तनम् ।
कालो भूतोपघातश्च ज्ञातव्याः क्षयहेतवः ॥
गुरुस्निग्धाम्ललवणं भजतामतिमात्रशः ।
नवमन्नं च पानं च निद्रामास्यासुखानि च ॥
त्यक्तव्यायामचिन्तानां संशोधनमकुर्वताम् ।
श्लेष्मा पित्तञ्च मेदश्च मांसं चातिप्रवर्धते ॥
तैरावृतः प्रसादं हि गृहीत्वा याति मारुतः ।
यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्त्तते ॥
समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः ।
दर्शयत्याकृतिं कृत्वा क्षयमाप्याय्यते पुनः ॥
उपेक्षयास्य जायन्ते पिठकाः सप्त दारुणाः ।
मांसलेष्ववकाशेषु मर्मस्वपि च सन्धिषु ॥
शराविका कच्छपिका जालिनी सर्षपी तथा ।
अलजी विनताख्या च विद्रधी चेति सप्तमी ॥
अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता ।
शरावका स्यात् पिठका शरावाकृतिसंस्थिता ।
अवगाढार्तिनिस्तोदा महावस्तुपरिग्रहा ॥
श्लक्ष्णा कच्छपपृष्ठाभा पिठका कच्छपी मता ।

स्तब्धा शिराजालवती स्निग्धस्रावा महाशया ॥
रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ।
पिडका नातिमहती क्षिप्रपाका महारुजा ॥
सर्षपी सर्षपाभाभिः पिडकाभिश्चिता भवेत् ।
दहति त्वचमुत्थाने तृष्णा मोहज्वरप्रदा ॥
विसर्पत्यनिशं दुःखाद्दहत्यग्निरिवालजी ।
अवगाढरुजा क्लेदा पृष्ठे वाप्युदरेऽपि वा ॥
महती विनता नीला पिडका विनता मता ।
विद्रधिं द्विविधामाहुर्बाह्यामाभ्यन्तरीं तथा ॥
बाह्या त्वक्स्नायुमांसोत्था काण्डराभा महारुजा ।
शीतकाम्लविदाह्युष्णरूक्षशुष्कातिभोजनात् ॥
विरुद्धाजीर्णसंक्लिष्टविषमासात्म्यभोजना ।
व्यापन्नबहुमद्यत्वाद्वेगसन्धारणात् श्रमात् ॥
जिह्मव्यायामशयनादतिभाराध्वमैथुनात ।
अन्तःशरीरे मांसासृगाविशन्ति यदा मलाः ॥
तदा सञ्जायते ग्रन्थिर्गम्भीरस्थः सुदारुणः ।
हृदये क्लोम्नि यकृति प्लीह्नि कुक्षौ च वृक्कयोः ॥
नाभ्यां वंक्षणयोर्वापि वस्तौ वा तीव्रवेदनः ।
दुष्टरक्तातिमात्रत्वात् स वै शीघ्रं प्रपच्यते ॥
ततः शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते ।
व्यधच्छेदभ्रमानाह शब्दस्फुरणसर्पणैः ॥
वातिकीं पैत्तिकीं तृष्णादाहमोहमदज्वरैः ।
जृम्भोत्क्लेशारुचिस्तम्भशीतकैः श्लैष्मिकीं विदुः ।
सर्वासु च महच्छूलं विद्रधीषूपजायते ॥

तप्तैः शस्त्रैर्यथाभ्येतोल्मुकैरिव दह्यते।
विद्रधौ व्यम्लतां याता वृश्चिकैरिव दह्यते॥
तनुरूक्षारुणस्रावं फेनिलं वातविद्रधी।
तिलमाषकुलत्थोदसन्निभं विद्रधी तथा॥
श्लैष्मिकी स्रवति श्वेतं बहुलं पिच्छिलं बहु।
लक्षणं सर्वमेवैतद्भजते सान्निपातिकी॥

अथासां विद्रधीनां साध्यासाध्यविशेषज्ञानार्थं स्थानकृतं लिङ्गविशेषमुपदेक्ष्यामः। तत्र प्रधानमर्मजायां विद्रध्यां हृद्घट्टनतमकप्रमोहकासश्वासाः क्लोमजायां पिपासा मुखशोषगलग्रहाः यकृज्जायां श्वासः। प्लीहजायामुच्छ्वासोपरोधः। कुक्षिजायां कुक्षिपार्श्वान्तरांसशूलम्। वृक्कजायां पृष्ठकटिग्रहः। नाभिजायां हिक्का वङ्क्षणजायां सक्थिसादो बस्तिजायां कृच्छ्रप्रतिमूत्रवर्चस्त्वं चेति। पक्वामभिन्नासु ऊर्द्ध्वजासु मुखात् स्रावः स्रवति। अधोजासु गुदात् उभयतस्तु नाभिजायां तासां हृन्नाभिबस्तिजाः परिपक्वा सान्निपातिकी च मरणाय। अवशिष्टाः पुनः कुशलमाशुप्रतिकारिणं चिकित्सकमासाद्योपशाम्यन्ति तस्मादचिरोत्थितां विद्रधीं शस्त्रसर्पविद्युदग्नितुल्याम् स्नेहविरेचनैराश्वेवोपक्रामेत् सर्वशो गुल्मवच्चेति चात्र।

विना प्रमेहमप्येता जायन्ते दुष्टमेदसः।
तावच्चैता न लक्ष्यन्ते यावद्वस्तुपरिग्रहः॥
शराविका कच्छपिका जालिनी चेति दुःसहाः।
जायन्ते ता ह्यतिबलाः प्रभूतश्लेष्ममेदसाम्॥

सर्षपी चालजी चैव विनता विद्रधी च या।
साध्याः पित्तोल्बणास्ता हि सम्भवन्त्यल्पमेदसाम्॥
मर्मस्वंसे गुदे पाण्योः स्तने सन्धिषु पादयोः।
जायन्ते यस्य पिडकाः स प्रमेही न जीवति॥
तथान्याः पिडकाः सन्ति रक्तपीतासितारुणाः।
पाण्डुराः पाण्डुवर्णाश्च भस्माभा मेचकप्रभाः॥
मृदवश्च कठिनाश्चान्याः स्थूलाः सूक्ष्मास्तथापराः।
मन्दवेगा महावेगाः स्वल्पशूला महारुजाः॥
ता बुद्ध्वा मारुतादीनां यथास्वैर्हेतुलक्षणैः।
ब्रूयादुपचरेच्चाशु प्रागुपद्रवदर्शनात्॥
तृट्श्वासमांससंकोथमोहहिक्कामदज्वराः।
वीसर्पमर्मसंरोधाः पिडकानामुपद्रवाः॥
चयः स्थानं च वृद्धिश्च दोषाणां त्रिविधा गतिः।
ऊर्द्ध्वं चाधश्च तिर्य्यक् च विज्ञेया त्रिविधापरा॥
त्रिविधा चापरा कोष्ठशाखामर्मास्थिसन्धिषु।
इत्युक्ता विधिभेदेन दोषाणां त्रिविधा गतिः॥
चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम्।
भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु॥
गतिः कालकृता चैषा चयाद्या पुनरुच्यते।
गतिश्च द्विविधा दृष्टा प्राकृती वैकृती च या॥
पित्तादूष्मणःसम्भवः पक्तिर्नराणामुपजायते,
तच्च पित्तं प्रकुपितं विकारान् कुरुते बहून्॥
प्राकृतस्तु मलं श्लेष्मा विकृतो मल उच्यते।
स चैवौजः स्मृतः काये स च पाप्मोपदिश्यते॥

सर्वा हि चेष्टा वातेन स प्राणः प्राणिनां स्मृतः।
तेनैव रोगा जायन्ते तेन चैवोपरुध्यते॥
नित्यमग्निहिताभिव समीक्ष्यात्मानमात्मवान्।
नित्यं युक्तः परिचरेत् विच्छन्नायुरभित्वरमिति॥
तत्र श्लोकौ॥ शिरोरोगाः सहृद्रोगा रोगा मानविकल्पजाः।
क्षयाः सपिठकाः प्रोक्ता दोषाणां गतिरेव च॥
कियन्तः शिरसीयेऽस्मिन्नध्याये तत्त्वदर्शिना।
ज्ञानार्थं भिषजाञ्चैव प्रजानाञ्च हितैषिणा॥
इति रोगचतुष्के कियन्तः शिरसीयोऽध्यायः समाप्तः॥

---

## अष्टादशोऽध्यायः।

अथातस्त्रिशोफीयमध्यायं व्याख्यास्यामः।

त्रयः शोफाऽभवन्ति। वातपित्तश्लेष्मनिमित्ताः ते पुनर्द्विविधाः निजागन्तुभेदेन। तत्रागन्तवः। छेदनभेदनक्षणनभञ्जनपिच्छनोपेषणप्रहाराबन्धनवेष्टनव्यधनपीड़नाभिर्वा भल्लातकपुष्पफलरसात्मगुप्ताशूकक्रिमिशूकाहितपत्रलतागुल्मसम्पादनैर्वा स्वेदनपरिसर्पणादिसूचनैर्वा विषाणांसविषाविषप्राणिदंष्ट्रादन्तविषाणनखनिपातैर्वा सागरविषवातहिमदहनसंस्पर्शनैर्वा शोफाः समुपजायन्ते। ते

यथा स्वहेतुजैश्चनेराद्वावुपलभ्यते। निजश्चनेकदेशविपरीतैर्बन्धमन्त्रागदप्रलेपप्रवातनिर्वापणादिभिश्चोपक्रमैरुपक्रम्यमाणाः प्रशान्तिमापद्यन्ते। निजाः पुनः स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनानामयथावत् प्रयोगात् मिथ्यासंसर्जनाद्वा छर्दिरलसकविषूचिकाश्वासकासातिसारशोषपाण्डुरोगज्वरोदरप्रदरभगन्दरार्शोविकारातितर्पणैर्वा कुष्ठकण्डूपिठकादिभिर्वा छर्दिक्षवथूद्गारशुक्रवातमूत्रपुरीषवेगधारणैर्वा कर्मरोगोपवासकर्षितस्य वा सहसातिगुर्वम्ललवणपिष्टान्नफलशाकरागदधिहरितकमद्यमन्दकविरूढनवशूकशमीधान्यानूपौदकपिशितोपयोगान्मृत्पङ्कलोष्टभक्षणाल्लवणातिभक्षणाद्वा गर्भसम्पीडनादामगर्भप्रपतनात् प्रजातानाञ्च मिथ्योपचारादुदीर्णदोषत्वात् शोफाः प्रादुर्भवन्ति। इत्युक्तः सामान्यो हेतुः। अयं त्वत्र विशेषः। शीतरूक्षलघुविशदश्रमोपवासकर्षणक्षपणादिभिर्वायुः प्रकुपितः त्वङ्मांसशोणितादीन्यभिभूय शोफञ्जनयति। स क्षिप्रोत्थापनप्रशमो भवति श्यामारुणवर्णः प्रकृतिवर्णो वा चालः स्पन्दनः खरपरुषभिन्नत्वग्लोमा छिद्यत इव भिद्यत इव पीड्यत इव सूचीभिरिव तुद्यते पिपीलिकाभिरिव संसृप्यते सर्षपकल्कालिप्त इव चिमिचिमायते संकुच्यते आयम्यते इति वातशोफः। उष्णतीक्ष्णकटुकक्षारलवणाम्लाजीर्णभोजनैरग्न्यातपप्रतापैश्च पित्तं प्रकुपितं त्वङ्मांसशोणितान्यभिभूय शोफञ्जनयति। स क्षिप्रोत्थानप्रशमो भवति। कृष्णपीतनीलताम्रवर्णावभासः उष्णो मृदुः कपिलताम्रलोमा उष्यते दह्यते धूयते धूप्यते कषायते क्लिद्यति

क्लिद्यते न च स्पर्शमुष्णं वा सुषूयते इति पित्तशोफः। गुरु-मधुरशीतस्निग्धैरतिस्वप्नव्यायामादिभिश्च श्लेष्मा प्रकुपितः त्वङ्मांसशोणितादीन्यभिभूय शोफञ्जनयति। स कृच्छ्रो-त्थानप्रशमो भवति। पाण्डुश्वेतावभासः स्निग्धः श्लक्ष्णः गुरुः स्थिरः स्त्यानः शुक्लाग्ररोमा स्पर्शोष्णसहश्चेति श्लेष्म-शोफः। यथा स्वकारणाकृतिसंसर्गाद्द्विदोषजास्त्रयः शोफाः कारणाकृतिसन्निपातात् सान्निपातिक एकः। एवं भेद-प्रकृतिभिस्ताभिस्ताभिर्भिद्यमानो द्विविधस्त्रिविधः चतुर्विधः सप्तविधश्च शोफ उपलभ्यते। पुनश्चैक एवोत्सेधसामान्या-दिति।

भवति चात्र॥ शूयन्ते यस्य गात्राणि स्वपन्तीव रुजन्ति च।

निपीडितान्युन्नमन्ति वातशोफन्तमादिशेत्॥

यश्चाप्यरुणवर्णाभः शोफो नक्तं प्रणश्यति।

स्नेहोष्णमर्दनाभ्याञ्च प्रणश्येत् स च वातिकः॥

यः पिपासाज्वरार्तस्य दूयतेऽथ विदह्यते।

स्विद्यति क्लिद्यते गन्धी स पैत्तः श्वयथुः स्मृतः॥

यः पीतनेत्रवक्त्रत्वक् पूर्वं मध्यात् प्रशूयते।

तनुत्वक् चातिसारी च पित्तशोफः स उच्यते॥

शीतसक्तगतिर्यस्तु कण्डूयेत् पाण्डुरेव च।

निपीडितो नोन्नमति श्वयथुः स कफात्मकः॥

यस्य शस्त्रकुशच्छिन्नाच्छोणितं न प्रवर्त्तते।

कृच्छ्रेण पिच्छां स्रवति स चापि कफसम्भवः॥

निदानाकृतिसंसर्गात् श्वयथुः स्याद् द्विदोषजः।

सर्वाकृतिः सन्निपाताच्छोफो व्यामिश्रहेतुजः॥

यस्तु पादाभिनिर्वृत्तः शोफः सर्वाङ्गगो भवेत् ।
जन्तोः स च सुकष्टः स्यात् प्रसृतः स्त्रीमुखश्च यः ॥
यश्चापि गुह्यप्रभवः स्त्रियो वा पुरुषस्य वा ।
स च कष्टतमो ज्ञेयो यस्य च स्युरुपद्रवाः ॥
छर्द्दिः श्वासोऽरुचिस्तृष्णाज्वरोऽतीसार एव च ।
सप्तकोऽयं स दौर्बल्यशोफोपद्रवसंग्रहः ॥
यस्य श्लेष्मा प्रकुपितः काकले व्यवतिष्ठते ।
आशु सञ्जनयन् शोफं करोति गलशुण्डिकाम् ॥
यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थितः ।
आशु सञ्जनयन् शोफं गलगण्डोऽस्य जायते ॥
यस्य श्लेष्मा प्रकुपितो गलबाह्येव तिष्ठते ।
शनैः सञ्जनयन् शोफं जायतेऽस्य गलग्रहः ॥
यस्य पित्तं प्रकुपितं सरक्तं त्वचि सर्पति ।
शोफं सरागं जनयन्विसर्पस्तस्य जायते ॥
यस्य पित्तं प्रकुपितं त्वचि रक्तेन तिष्ठते ।
रागं सशोफञ्जनयन् पिडिका तस्य जायते ॥
यस्य पित्तं प्रकुपितं शङ्खयोरवतिष्ठते ।
श्वयथुः शङ्खको नाम दारुणस्तस्य जायते ॥
यस्य पित्तं प्रकुपितं कर्णमूलेऽवतिष्ठते ।
ज्वरान्ते दुर्जयोऽन्ताय शोफस्तस्योपजायते ॥
वातश्लीहान मुद्धूय कुपितो यस्य तिष्ठति ।
शूलैः परितुदन् पार्श्वं प्लीहा तस्याभिवर्द्धते ॥
यस्य वायुः प्रकुपितो गुल्मस्थाने च तिष्ठते ।
शोफं सशूलञ्जनयन् गुल्मस्तस्योपजायते ॥

यस्य वायुः प्रकुपितः शोफमूलकरश्चरन्।
वंक्षणाद् वृषणौ याति वर्ध्मं तस्योपजायते॥
यस्य वातः प्रकुपितः त्वङ्मांसान्तरमाश्रितः।
शोफं सञ्जनयन् कुक्षावुदरं तस्य जायते॥
यस्य वातः प्रकुपितः कुक्षिमाश्रित्य तिष्ठति।
नाधो व्रजति नाप्यूर्द्ध्वमानाहस्तस्य जायते॥
रोगाश्चोत्सेधसामान्याद्धिमांसार्बुदादयः।
विशिष्टा नाम रूपाभ्यां निर्देश्याः शोफसंग्रहे॥
वातपित्तकफा यस्य युगपत् कुपितास्त्रयः।
जिह्वामूलेऽवतिष्ठन्ते विदहन्तः समुच्छ्रिताः॥
जनयन्ति भृशं शोफं वेदनाश्च पृथग्विधाः।
तं शीघ्रकारिणं रोगं रोहिणीं केऽतिनिर्दिशेत्॥
त्रिरात्रं परमं तस्य जन्तोर्भवति जीवितम्।
कुशलेन त्वनुप्राप्तः क्षिप्रं सम्पद्यते सुखी॥
सन्ति ह्येवंविधा रोगाः साध्या दारुणसम्मताः।
ये हन्युरनुपक्रान्ता मिथ्यारम्भेण वा पुनः॥
साध्याश्चाप्यपरे सन्ति व्याधयो मृदुसम्मताः।
यत्नायत्नकृतं येषु कर्म सिध्यत्यसंशयम्॥
असाध्याश्चापरे सन्ति व्याधयो ये सुसंज्ञिताः।
सुसाध्येऽपि कृतं येषु कर्म यात्राकरं भवेत्॥
सन्ति चाप्यपरे रोगाः कर्म येषु न सिध्यति।
अपि यत्नकृतं बालैर्न तान्विद्वानुपाचरेत्॥
साध्याश्चैवाप्यसाध्याश्च व्याधयो द्विविधाः स्मृताः।
मृदुदारुणभेदेन ते भवन्ति चतुर्विधाः॥

त एवापरसंख्येया भिद्यमाना भवन्ति हि ।
निदानवेदनावर्णस्थानसंस्थाननामभिः ॥
व्यवस्थाकारणं तेषां यथा स्थूलेषु संग्रहः ।
यथा प्रकृतिसामान्यं विकारेषूपदिश्यते ॥
विकारनामाकुशलो न जिह्रीयात् कदाचन ।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा गतिः ॥
स एव कुपितो दोषः समुत्थानविशेषतः ।
स्थानान्तरगतश्चैव जनयत्यामयान् बहून् ॥
तस्माद्विकारप्रकृतीनधिष्ठानान्तराणि च ।
समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत् ॥
यो ह्येतत्त्रिविधं ज्ञात्वा कर्माण्यारभते भिषक् ।
ज्ञानपूर्वं यथान्यायं स कर्मसु न मुह्यति ॥
नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः ।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः ॥
उत्साहोच्छ्वासनिःश्वासचेष्टा धातुः गतिः समा ।
समो मोक्षो गतिमतां वायुः कर्माविकारजम् ॥
स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृषता बलम् ।
क्षमा धृतिरलोभश्च कफकर्माविकारजम् ॥
वातपित्तकफेष्वेव न्यूने लक्षणमुच्यते ।
कर्मणां प्रकृतेर्हानिर्वृद्धिर्वापि विरोधिनाम् ॥
दोषप्रकृतिवैशेष्यं नियतं वृद्धलक्षणम् ।
दोषाणां प्रकृतिर्हानिर्वृद्धिर्वापि परीक्ष्यते इति ॥

तत्र श्लोकाः ॥

संख्यानिमित्तं रूपाणि शोफानां साध्यता नच ।

तेषां तेषां विकाराणां त्रिविधं बोध्यसंग्रहम् ॥
प्राकृतं कर्मदोषाणां लक्षणं हानिवृद्धिषु ।
वीतमोहरजोदोषमोहमानमदस्पृहः ॥
व्याख्यातवांस्त्रिशोफके ये रोगाध्याये पुनर्वसुः ।
इति रोगचतुष्के त्रिशोफीयोऽध्यायः समाप्तः ॥

---

ऊनविंशोऽध्यायः ।

अथातोऽष्टोदरीयमध्यायं व्याख्यास्यामः ।

इह खल्वष्टावुदराणि अष्टौ मूत्राघाताः अष्टौ क्षीरदोषा अष्टौ रेतोदोषाः सप्त कुष्ठानि सप्त पिडकाः सप्त वीसर्पाः षडतीसाराः षडुदावर्ताः पञ्च गुल्माः पञ्च प्लीहप्रदोषाः पञ्च कासाः पञ्च श्वासाः पञ्च हिक्काः पञ्च तृष्णाः पञ्च छर्द्दींषि पञ्च भक्तस्यानशनस्थानानि पञ्च शिरोरोगाः पञ्च हृद्रोगाः पञ्च पाण्डुरोगाः पञ्चोन्मादाः चत्वारोऽपस्माराः चत्वारोऽक्षिरोगाः चत्वारः कर्णरोगाः चत्वारः प्रतिश्यायाः चत्वारो मुखरोगाः चत्वारो ग्रहणीदोषाः चत्वारो मदाः चत्वारो मूर्च्छाः चत्वारः शोषाः चत्वारि क्लैब्यानि त्रयः शोफाः त्रीणि किलासानि त्रिविधं

लोहितपित्तं द्वौ ज्वरौ द्वौ व्रणौ द्वावायामौ द्वे गृध्रस्यौ द्वे कामले द्विविधं मांसं द्विविधं वातरक्तं द्विविधान्यर्शांसि एकः ऊरुस्तम्भः एकः सन्न्यासः एको महागदः विंशतिः क्रिमिजातयः विंशतिः प्रमेहाः विंशतिर्योनिव्यापदः। इत्यष्टाचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे भवन्ति। उद्दिष्टानि एतानि यथोद्देशमभिनिर्देक्ष्यामः। अष्टावुदराणीति वातपित्तकफसन्निपाताश्मरीशर्कराशुक्रशोणितजाः अष्टौ क्षीरदोषा इति वैवर्ण्यं वैगन्ध्यं वैरस्यं पैच्छिल्यं फेनसङ्घातं रौक्ष्यं गौरवमतिस्नेहश्चेति अष्टौ रेतोदोषा इति तनु शुष्कं फेनिलमश्वेतं प्रत्यपिच्छिलमन्यधातूपहितमवसादि चेति सप्त कुष्ठानीति कपालोदुम्बरमाण्डल्यर्ष्यजिह्वपुण्डरीकसिध्मकाकणकानि सप्त पिडका इति शराविका कच्छपिका जालिनी सर्षप्यलजी विनता विद्रधी च सप्त विसर्पा इति वातपित्तकफाग्निकर्दमग्रन्थिसन्निपाताख्याः षडतीसारास्त्रा इति वातपित्तकफसन्निपाताः शोणितजाः पञ्च प्लीहदोषा इति गुल्मैर्व्याख्याताः पञ्च कासा इति वातपित्तकफसन्निपातशोणितजाः पञ्च श्वासा इति महोर्द्ध्वच्छिन्नतमकक्षुद्राः पञ्च हिक्का इति महती गम्भीरा व्यपेता क्षुद्रा चान्नजा च पञ्च तृष्णा इति वातपित्तामक्षयोपसर्गात्मिकाः पञ्च छर्द्दय इति द्विष्टार्थसंयोगजा वातपित्तकफसन्निपातोद्रेकात्मिकाश्च पञ्च भक्तस्यानशनस्थानानीति वातपित्तकफद्वेषायामाः पञ्च शिरोरोगा इति पूर्वोद्देशमभिसमस्य वातपित्तकफसन्निपातकृमिजा इति। पञ्चोन्मादा इति वातपित्तकफ-

सन्निपातागन्तुनिमित्ता: चत्वारोऽक्षिरोगा: चत्वार: कर्ण-रोगा: चत्वार: प्रतिश्याया: चत्वारो मुखरोगा: चत्वारो ग्रहणीदोषा: चत्वारो मदा: चत्वारो मूर्च्छा इति अपस्मारे-ष्वधिगता: चत्वार: शोषा इति महत्सम्भरणक्षयविषमा-शनजा: चत्वारि क्लैव्यानीति बीजोपघाताद्ध्वजभङ्गाज्ज-रया शुक्रक्षयाच्च त्रय: शोफाश्चेति वातपित्तश्लेष्मनिमित्ता: त्रीणि किलासानीति रक्तताम्रशुक्लानि त्रिविधं लोहि-तपित्तमित्यूर्द्ध्वभागमधोभागमुभयभागञ्च द्वौ ज्वरौ इति उष्णाभिप्राय: शीतसमुत्थश्च शीताभिप्रायश्चोष्णसमुत्थ: द्वौ व्रणौ इति निजश्चागन्तुजश्च द्वावायामाविति बाह्यश्चा-भ्यन्तरश्च द्वे गृध्रस्याविति वाताद्वातकफाच्च द्वे कामले इति कोष्ठशाखाश्रया शाखाश्रया च द्विविधमाममित्यल-सको विषूचिका चेति एक ऊरुस्तम्भ इति। आमत्रिदोष समुत्थान: एक: सन्यास इति। त्रिदोषात्मको मनश्शरी-राधिष्ठानम् एको महागद इति तत्त्वाभिनिवेश: विं-शति: क्रिमिजातय इति यूका: पिपीलिकाश्चेति द्विविधा बहिर्मलजा: केशादा लोमादा लोमद्वीपा: सौरसा: औदु-म्बरा जन्तुमातरश्चेति षट् शोणितजा: अन्त्रादा उदरादा हृदयचरा: चुरवो दर्भपुष्पा: सौगन्धिका महाकुष्ठाश्चेति सप्त कफजा: ककेरुका मकेरुका लेलिहा: शालूनिका: सौसु-रादाश्चेति पञ्च पुरीषजा इति विंशति: क्रिमिजातय: । विंशति: प्रमेहा इति उदकमेहश्चेक्षुवालिका रसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च शीत-मेहश्च शनैर्मेहश्च सिकतामेहश्च लालामेहश्चेति क्षारनि-

मित्ताः क्षारमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च मञ्जिष्ठामेहश्च हरिद्रामेहश्चेति षट् पित्तनिमित्ताः। वसा-मेहश्च मज्जामेहश्च हस्तिमेहश्च मधुमेहश्चेति चत्वारो वातनिमित्ता इति विंशतिः प्रमेहाः विंशतिर्योनिव्यापद इति। वातिकी पैत्तिकी श्लैष्मिकी सान्निपातिकी चेति चतस्रः दोषदूष्यसंसर्गं प्रकृतिनिर्देशैरवशिष्टाः षोडश निर्दिश्यन्ते। तद्यथा रक्तयोनिश्चारजस्का चाचरणा चाति-चरणा च प्राक्चरणा चोपप्लुता चोदावर्त्तिनी च कर्णिनी च पुत्रघ्नी चान्तर्मुखी च सूचीमुखी च शुष्का च वामिनी च षण्ढयोनिश्च महायोनिश्चेति विंशतिर्योनिव्यापदः केवल-श्चायमुद्देशः। यथोद्देशमभिनिर्दिष्ट इति।

भवति चात्र। विंशकास्त्रैककाश्चैव त्रिकाश्चोक्तास्त्रयस्त्रयः।

द्विकाश्चाष्टौ चतुष्काश्च दश द्वादश पञ्चकाः॥
चत्वारश्चाष्टका वर्गाः षट्कौ द्वौ सप्तकास्त्रयः।
अष्टोदरीये रोगाणां रोगाध्यायः प्रकाशक इति॥

सर्व एव विकारा निजा नान्यत्र वातपित्तकफेभ्यो निवर्त्तन्ते यथा शकुनिः सर्वं दिवसमपि परिपतन् स्वां छायां नातिवर्त्तते। यथा स्वधातुवैषम्यनिमित्ताः सर्वविकारा वातपित्तकफान्नातिवर्त्तन्ते वातपित्तश्लेष्मणां पुनः समुत्था-नस्थानसंस्थानवेदनावर्णनामप्रभावचिकित्सितविशेषानभि-समीक्ष्य तदात्मकानपि च सर्वविकारांस्तानेवोपदिशन्ति-बुद्धिमन्त इति। तत्र श्लोकौ। स्वधातुवैषम्यनि-मित्तजा ये विकारसंघा बहवः। शरीरे न ते पृथक्पित्त-

कफानिलेभ्य आगन्तवस्त्वेव ततो विशिष्टाः॥
आगन्तुरन्वेति निजं विकारं निजस्तथागन्तुमतिप्रवृद्धः।
तत्रानुबन्धं प्रकृतिं च सम्यक् ज्ञात्वा ततः कर्म समारभेत॥

इति रोगचतुष्के अष्टोदरीयोऽध्यायः समाप्तः।

---

## विंशोऽध्यायः।

अथातो महारोगाध्यायं व्याख्यास्यामः।

चत्वारो रोगा भवन्ति आगन्तुवातपित्तश्लेष्मनिमित्ताः। तेषां चतुर्णामपि रोगाणां रोगत्वमेकविधं रुक्सामान्यं द्विविधा पुनः प्रकृतिरेषामागन्तुनिजविभागात् द्विविधं चैषामधिष्ठानं मनःशरीरविशेषाद्विशेषात् पुनरेषामपरिसंख्येयत्वात् मुखानि तु खल्वागन्तोः नखदशनपतनाभिचाराभिशापाभिषङ्गवधबन्धपीडनरज्जुदहनमन्त्राशनिभूतोपसर्गादीनि निजस्य तु मुखं वातपित्तश्लेष्मणां वैषम्यं द्वयोर्ऌ खलु आगन्तुनिजयोः प्रेरणमसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति सर्वेऽपि तु खल्वेतेऽभिप्रवृद्धाश्चत्वारो रोगाः परस्परमनुबध्नन्ति न चान्योन्यसन्देहमापद्यन्ते आगन्तुर्हि व्यथापूर्वसमुत्पन्नो जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति निजे तु वातपित्तश्लेष्माणः पूर्वं वैषम्य-

मापद्यन्ते जघन्यां व्यथामभिनिर्वर्त्तयन्ति तेषां त्रयाणामपि दोषाणां शरीरे स्थानविभाग उपदेक्ष्यते। तद्यथा वस्तिः पुरीषाधानं कटिः सक्थिनी पादावस्थीनि वातस्थानानि अत्रापि पक्वाशयो विशेषेण वातस्थानं स्वेदो रसो लसीका रुधिरमामाशयश्च पित्तस्थानान्यत्रापि आमाशयो विशेषेण पित्तस्थानं उरःशिरोग्रीवापर्वाण्यामाशयो मेदश्च श्लेष्मणः स्थानानि अत्रापि उदरो विशेषेण श्लेष्मणः स्थानं सर्वशरीरचरास्तु वातपित्तश्लेष्माणो हि सर्वस्मिन् शरीरे कुपिताकुपिताः शुभाशुभानि कुर्वन्ति प्रकृतिभुताः शुभानि उपचयबलवर्णप्रसादादीनि अशुभानि पुनः विकृतिमापन्नानि विकारसंज्ञकानि तत्र विकाराः सामान्यजा नानात्मजाश्च तत्र सामान्यजाः पूर्वमष्टोदरीये व्याख्याताः नानात्मजास्त्विहाध्यायेऽनुव्याख्यास्यामः। तद्यथा अशीतिर्वातविकाराः चत्वारिंशत् पित्तविकाराः विंशतिः श्लेष्मविकाराः तत्रादौ वातविकारानन्नुव्याख्यास्यामः। तद्यथा नखभेदश्च विपादिका च पादशूलञ्च पादभ्रंशश्च सुप्तपादता च वातखुडता च गुल्फग्रहश्च पिण्डिकोद्वेष्टनञ्च गृध्रसी च जानभेदश्च जानुविश्लेषश्च ऊरुस्तम्भश्च ऊरुसादश्च पाङ्गुल्यञ्च गुदभ्रंशश्च गुदार्तिश्च वृषणोत्क्षेपश्च शेफस्तम्भश्च वंक्षणानाहश्च श्रोणिभेदश्चोदावर्त्तश्च खञ्जत्वञ्च कुब्जत्वञ्च वामनत्वञ्च त्रिकग्रहश्च पृष्ठग्रहश्च पार्श्वावमर्दश्चोदरवेष्टश्च हृन्मोहश्च हृद्द्रवश्च वक्षउद्धर्षश्चोपरोधश्च बहुशोषश्च ग्रीवास्तम्भश्च मन्यास्तम्भश्च कण्ठोद्ध्वंसश्च हनुताडश्चोष्ठभेदश्च दन्तशैथिल्यञ्च मूकत्वञ्च वाक्सङ्गश्च कषायास्यता च मुखशोषश्चारसज्ञता घ्राणनाशता च

घ्राणनाशश्च कर्णशूलञ्चाशब्दश्रवणञ्चोच्चैःश्रुतिश्च बाधिर्यञ्च वर्त्मस्तम्भश्च वर्त्मसङ्कोचश्च तिमिरञ्चाक्षिशूलञ्च अक्षिव्युदासश्च शङ्खभेदश्च ललाटभेदश्च शिरोरुक् च केशभूमिस्फुटनञ्च अर्द्दितञ्च एकाङ्गरोगश्च सर्वाङ्गरोगश्च पक्षवधश्चाक्षेपकश्च दण्डकश्च श्रमश्च भ्रमश्च वेपथुश्च जृम्भा च विषादश्चातिप्रलापश्च ग्लानिश्च रौक्ष्यञ्च पारुष्यञ्च श्यावारुणावभासता चास्वप्नश्चानवस्थितत्वञ्चेति अशीतिवातविकाराः ।
वातविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः ।
सर्वेष्वपि खल्वेतेषु वातविकारेष्वन्येषु चानुक्तेषु वायोरिदमात्मरूपमपरिणामि कर्म्मणश्च स्वलक्षणं यदुपलभ्य तदवयवं वा विमुक्तसन्देहः वातविकारमेवाध्यवस्यन्ति कुशलाः ।
तद्यथा रौक्ष्यं लाघवं शैत्यङ्गतिरमूर्त्तत्वञ्चेति वायोरात्मरूपाणि एवंविधत्वाच्च कर्म्मणश्च स्वलक्षणमिदमस्य भवति ।
तं तं शरीरावयवमाविशतः स्रंसव्याससङ्गभेदसादहर्षवर्त्तमर्द्दचलतोदव्यथवेष्टभङ्गास्तथा खरपरुषविशदसुषिरारुणकषायविरसशोषशूलसुप्तिसंकुचनस्तम्भनानि वायोः कर्माणि तैरन्वितं वातविकारमेवाध्यवस्येत् । तं मधुराम्ललवणस्निग्धोष्णैरुपक्रमैरुपक्रमेत स्वेदस्नेहास्थापनानुवासननस्तःकर्मभोजनाभ्यङ्गोत्सादनपरिषेकादिभिर्वातहरैर्मात्राकालञ्च प्रमाणीकृत्यास्थापनानुवासनन्तु सर्व्वथोपक्रमेभ्यो वाते प्रधानतमं मन्यन्ते भिषजः । तद्ध्यादित एव पक्वाशयमनुप्रविश्य केवलं वैकारिकं वातमूलञ्छिनत्ति । तत्रावजिते वाते अपि शरीरान्तर्गता वातविकाराः प्रशान्तिमापद्यन्ते ।
यथा वनस्पतेर्मूले छिन्ने स्कन्धशाखावरोहकुसुमफलपला-

आदीनां नियतो विनाशस्तद्वत् पित्तविकाराः। ओषश्च प्लोषश्च दवश्च दवथुश्च धूमकश्चाम्लकश्च विदाहश्चान्तर्दाहश्चांसदाहश्चोष्मण आधिक्यं चाति स्वेदश्चाङ्गगन्धश्चाङ्गावयवशरणञ्च शोणितक्लेदश्च मांसक्लेदश्च त्वग्दाहश्च त्वङ्मांसदरणञ्च चर्म्मदरणञ्च रक्तकोठाश्च रक्तविस्फोटाश्च रक्तपित्तञ्च रक्तमण्डलानि च हरितत्वञ्च हरिद्रत्वञ्च नीलीका च कक्षा च कामला चातिक्तास्यता च लोहितगन्धास्यता च पूतिमुखता च तृष्णाया आधिक्यं चातृप्तिश्चास्यपाकश्च गलपाकश्चाक्षिपाकश्च गुदपाकश्च मेढ्रपाकश्च जीवादानञ्च तमःप्रवेशश्च हरितहारिद्रनेत्रमूत्रवर्चस्त्वञ्चेति चत्वारिंशत् पित्तविकाराः। पित्तविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः। सर्व्वेष्वपि खल्वेतेषु पित्तविकारेष्वन्येषु पित्तस्येदमात्मरूपमपरिणामिकर्म्मणश्च स्वलक्षणं यदुपलभ्य तदवयवं वा विमुक्तसंदेहाः पित्तविकारमेवाध्यवस्यन्ति कुशलाः। तद्यथा औष्ण्यं तैक्ष्ण्यं लाघवमनतिस्नेहो वर्णश्च शुक्लारुणवर्ज्जो गन्धश्चाङ्गविस्रो रसौ च कटुकाम्लौ पित्तस्यात्मरूपाण्येवंविधत्वाच्च कर्म्मणः स्वालक्षण्यमिदमस्य भवति। तं तं शरीरावयवम् आविशतो दाहौष्ण्यपाकस्वेदक्लेदकोदकण्डूस्रावरागाः। यथास्वञ्च गन्धवर्णरसाभिनिर्व्वर्त्तनं पित्तस्य कर्म्माणि तैरन्वितः पित्तविकारमेवाध्यवस्येत्। तं मधुरतिक्तकषायशीतैरुपक्रमैरुपक्रामेत्। स्नेहविरेकप्रदेहपरिषेकाभ्यङ्गादिभिः पित्तहरैर्मात्रां कालञ्च प्रमाणीकृत्य विरेचनन्तु सर्व्वोपक्रमेभ्यः पित्ते प्रधानतमं मन्यन्ते। भिषजस्तद्ध्याधित एवामाशयमनुप्रविश्य केवलं वैकारिकं पित्तमूलञ्चापकर्षति। तत्रावर्जिते

जितेऽपि शरीरान्तर्गताः पित्तविकाराः प्रशान्तिमापद्यन्ते। यथाग्नौ व्यपोढे केवलमग्निगृहञ्च शीतो भवति तद्वत् श्लेष्मविकाराश्च तृप्तिश्च तन्द्रा च निद्राया आधिक्यञ्च स्तैमित्यञ्च गुरुगात्रता चालस्यञ्च मुखमाधुर्यञ्च मुखस्रावश्चोद्गारश्च श्लेष्मोद्गरणञ्च मलस्याधिक्यञ्च बलासश्च हृदयोपलेपश्च धमनीप्रतिचयश्च गलगण्डश्चातिस्थौल्यञ्च शीताग्निता चोदर्दश्च श्वेतावभासता च श्वेतमूत्रनेत्रवर्चस्त्वञ्चेति विंशतिः श्लेष्मविकाराः। श्लेष्मविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः। सर्वेष्वपि तु खल्वेतेषु श्लेष्मविकारेष्वन्येषु चानुक्तेषु श्लेष्मण इदमात्मरूपमपरिणामिकर्मणश्च स्वलक्षणं यदुपलभ्यते तदवयवं वा विमुक्तसंदेहाः श्लेष्मविकारमध्यवस्यन्ति। तद्यथा श्वैत्यशैत्यगौरवमाधुर्यमात्स्न्यानि श्लेष्मण आत्मरूपाण्येवंविधत्वाच्च कर्मणः स्वलक्षणमिदमस्य भवति। तं तं शरीरावयवमाविशतः श्वैत्यशैत्यकण्डूस्थैर्यगौरवस्नेहस्तम्भसुप्तिक्लेदोपदेहबन्धमाधुर्यविकारित्वानि श्लेष्मणः कर्माणि तैरन्वितं श्लेष्मविकारमेवाध्यवस्येत्। तं कटुकतिक्तकषायतीक्ष्णोष्णरूक्षैरुपक्रमैरुपक्रामेत्।

स्वेदवमनशिरोविरेचनव्यायामादिभिः श्लेष्महरैर्मात्रां कालं च प्रमाणीकृत्य वमनन्तु सर्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यन्ते भिषजः तद्ध्यादित एवामाशयमनुप्रविश्य केवलं वैकारिकं श्लेष्ममूलमपकर्षयति। तत्रावजिते श्लेष्मण्यपि शरीरान्तर्गताः श्लेष्मविकाराः प्रशान्तिमापद्यन्ते। यथाभिन्ने केदारसेतौ शालियवषष्टिकादीन्यनभिष्यन्द्यमानानि अम्भसा प्रशोषमापद्यन्ते तद्वदिति।

भवति चात्र। रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्म्म भिषक्पश्चात् ज्ञानपूर्वं समाचरेत्॥
यस्तु रोगमविज्ञाय कर्म्माण्यारभते भिषक्।
अप्यौषधिविधानज्ञस्तस्य सिद्धिर्यदृच्छया॥
यस्तु रोगविशेषज्ञः सर्व्वभैषज्यकोविदः।
देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम्॥
संग्रहः प्रकृतिर्द्देशो विकारमुखमीरणम्।
असन्देहोऽनुबन्धश्च रोगाणां सम्प्रकाशितः॥
दोषस्थानानि रोगाणाञ्च नानात्वजाश्च ये।
रूपं पृथक्त्वाद्दोषाणां कर्म्म चापरिणामि यत्॥
पृथक्त्वेन च दोषाणां निर्द्दिष्टाः समुपक्रमाः।
सम्यक् महति रोगाणामध्याये तत्त्वदर्शिना॥ इति
रोगचतुष्के महारोगाध्यायः। समाप्तं रोगचतुष्कम्।

---

## एकविंशोऽध्यायः।

अथातोऽष्टौ निन्दितीयमध्यायं व्याख्यास्यामः।

इह खलु शरीरमधिकृत्याष्टौ पुरुषा निन्दिता भवन्ति। तद्यथा अतिदीर्घश्चातिह्रस्वश्चातिलोमा चालोमा च अति-कृष्णश्चातिगौरश्चातिस्थूलश्चातिकृशश्चेति। तत्रातिस्थूल-

ऽग्नयोर्भूय एवापरे निर्मितविशेषा भवन्त्यतिस्थूलस्य तावदायुषो ह्रासो जवोपरोधः कृच्छ्रव्यवायता दौर्बल्यं दौर्गन्ध्यं स्वेदाबाधः क्षुदतिमात्रं पिपासातियोगश्चेति भवन्त्यष्टौ दोषाः। तदतिस्थौल्यमतिसंपूरणाद्गुरुमधुरशीतस्निग्धोपयोगादव्यायामादव्यवायाद्दिवास्वप्नाद्धर्षनित्यत्वादचिन्तनाद्बीजस्वभावाच्चोपजायते तस्यातिमात्रं मेदस्विनो मेद एवोपचीयते। न तथेतरे धातवस्तस्मादस्यायुषो ह्रासः शैथिल्यात् सौकुमार्याद्गुरुत्वाच्च मेदसो जवोपरोधः शुक्राबहुत्वान्मेदसावृतमार्गत्वात् कृच्छ्रव्यवायता दौर्बल्यमसमत्वाद्धातूनां दौर्गन्ध्यं मेदोदोषान्मेदसः स्वभावत्वात् स्वेदनत्वाच्च मेदसः श्लेष्मसंसर्गाद्विष्यन्दित्वाद्बहुत्वाद्व्यायामासहत्वात् स्वेदाबाधः तीक्ष्णाग्नित्वात् प्रततकोष्ठवायुत्वाच्च क्षुदतिमात्रं पिपासातियोगश्चेति।

भवति चात्र। मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः।
चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि॥
तस्मात् स शीघ्रं जरयत्याहारं चाभिकाङ्क्षति।
विकारांश्चाश्नुते घोरान् कांश्चित्कालव्यतिक्रमात्॥
एतावुपद्रवकरौ विशेषादग्निमारुतौ।
एतौ हि दहतः स्थूलं वनदावो वनं यथा॥
मेदस्यति च संवृद्धे सहसैवानिलादयः।
विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम्॥
मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः।
अयथोपचितोत्साहो नरोऽतिस्थूल उच्यते॥
इति मेदस्विनो दोषा हेतवो रूपमेव च।

निर्दिष्टं वक्ष्यते वाच्यमतिकार्श्येऽप्यतःपरम् ॥
सेवा रूक्षान्नपानानां लङ्घनं प्रमिताशनम् ।
क्रियातियोगः शोकश्च वेग निद्राविनिग्रहः ॥
रूक्षस्योद्वर्त्तनं स्नानस्याभ्यासः प्रकृतिर्जरा ।
विकारानुशयः क्रोधः कुर्वन्त्यतिकृशं नरम् ॥
व्यायाममतिसौहित्यं क्षुत्पिपासामयौषधम् ।
कृशो न सहते तद्वदतिशीतोष्णमैथुनम् ॥
प्लीहा कासः क्षयः श्वासो गुल्मार्शांस्युदराणि च ।
कृशं प्रायोऽभिधावन्ति रोगाश्च ग्रहणीगताः ॥
शुष्कस्फिगुदरग्रीवो धमनीजालसन्ततः ।
त्वगस्थिशेषोऽतिकृशः स्थूलपर्वा नरो मतः ॥
सततव्याधितावेतावतिस्थूलकृशौ नरौ ।
सततं चोपचर्य्यौ हि कर्षणैर्बृंहणैरपि ॥
स्थौल्यकार्श्ये वरं कार्श्यं समोपकरणौ हितौ ।
यद्युभौ व्याधिरागच्छेत् स्थूलमेवातिपीडयेत् ॥
सममांसप्रमाणस्तु समसंहननो नरः ।
दृढेन्द्रियत्वाद्व्याधीनां न बलेनाभिभूयते ॥
क्षुत्पिपासातपसहः शीतव्यायामसंसहः ।
समपक्ता समजरः सममांसचयो मतः ॥
गुरु चातर्पणं चेष्टं स्थूलानां कर्षणं प्रति ।
कृशानां बृंहणार्थं च लघु सन्तर्पणञ्च यत् ॥
वातघ्नान्यन्नपानानि श्लेष्ममेदोहराणि च ।
रूक्षोष्णा वस्तयस्तीक्ष्णा रूक्षाण्युद्वर्त्तनानि च ॥
गुडूची भद्रमुस्तानां प्रयोगस्त्रैफलस्तथा ।

तक्रारिष्टप्रयोगश्च प्रयोगो माक्षिकस्य च ॥
विडङ्गं नागरः क्षारः काललोहरजो मधु ।
यवामलकचूर्णञ्च प्रयोगः श्रेष्ठ उच्यते ॥
विल्वादिपञ्चमूलस्य प्रयोगः क्षौद्रसंयुतः ।
शिलाजतुप्रयोगस्तु साग्निमन्थरसः परः ॥
प्रशातिका प्रियङ्गुश्च श्यामका यवकायवाः ।
जूर्णाह्वाः कोद्रवा मुद्गाः कुलत्थाश्च कमुद्गकाः ॥
आढकीनाञ्च बीजानि पटोलामलकैः सह ।
भोजनार्थं प्रयोज्यानि पानञ्चानुमधूदकम् ॥
अरिष्टाश्चानुपानार्थे मेदोमांसकफापहान् ।
अतिस्थौल्यविनाशाय संविभज्य प्रयोजयेत् ॥
प्रजागरं व्यवायञ्च व्यायामं चिन्तनानि च ।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणाभिप्रवर्धयेत् ॥
स्वप्नो हर्षः सुखा शय्या मनसो निर्वृतिः शमः ।
चिन्ताव्यवायव्यायामविरामः प्रियदर्शनम् ॥
नवान्नानि नवं मद्यं ग्राम्यानूपौदका रसाः ।
संस्कृतानि च मांसानि दधि सर्पिः पयांसि च ॥
इक्षवः शालयो माषा गोधूमा गुडवैकृतम् ।
वस्तयः स्निग्धमधुरास्तैलाभ्यङ्गश्च सर्वदा ॥
स्निग्धमुद्वर्त्तनं स्नानं गन्धमाल्यनिषेवणम् ।
शुक्लो वासो यथाकालं दोषाणामवसेचनम् ॥
रसायनानां वृष्याणां योगानामुपसेवनम् ।
हत्वातिकार्श्यमादत्ते नृणामुपचयं परम् ॥
अचिन्तनाच्च कार्याणां ध्रुवं सन्तर्पणेन च ।

स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति ॥
निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।
वृषता क्लीवता ज्ञानमज्ञानं जीवितं नच ॥
अकालेऽतिप्रसङ्गाच्च नच निद्रा निषेविता ।
सुखायुषी परा कुर्यात्कालरात्रिरिवापरा ॥
सैव युक्ता पुनर्युङ्क्ते निद्रा देहं सुखायुषा ।
पुरुषं योगिनं सिद्ध्या सत्या बुद्धिरिवागता ॥
गीताध्ययनमद्यस्त्रीकर्मभाराध्वकर्षिताः ।
अजीर्णिनः क्षताः क्षीणा वृद्धा बालास्तथाबलाः ॥
तृष्णातीसारशूलार्त्ताः श्वासिनः शूलिनः कृशाः ।
पतिताभिहतोन्मत्ताः क्लान्तायानप्रजागरैः ॥
क्रोधशोकभयक्लान्ता दिवास्वप्नोचिताश्च ये ।
सर्व एते दिवास्वप्नं सेवेरन् सार्वकालिकम् ॥
धातुसाम्यन्तथा ह्येषां बलञ्चाप्युपजायते ।
श्लेष्मा पुष्यति चाङ्गानि स्थैर्यं भवति चायुषः ॥
ग्रीष्मे चादानरूक्षाणां वर्धमाने च मारुते ।
रात्रीणां चातिसंक्षेपाद्दिवास्वप्नः प्रशस्यते ॥
ग्रीष्मवर्ज्येषु कालेषु दिवास्वप्नात् प्रकुप्यतः ।
श्लेष्मपित्ते दिवास्वप्नस्तस्मात्तेषु न शस्यते ॥
मेदस्विनः स्नेहनित्याः श्लेष्मलाः श्लेष्मरोगिणः ।
दूषीविषार्त्ताश्च दिवा न शयीरन् कदाचन ॥
हलीमकः शिरःशूलं स्तैमित्यं गुरुगात्रता ।
अङ्गमर्दोऽग्निनाशश्च प्रलेपो हृदयस्य च ॥
शोफारोचकहृल्लासपीनसावार्धभेदकाः ।

कोठाश्च: पिडका: कण्डूस्तन्द्रा कासो गलामया: ॥
स्मृतिबुद्धिप्रमोहाश्च संरोध: स्रोतसां ज्वर: ।
इन्द्रियाणामसामर्थ्यं विषवेगप्रवर्त्तनम् ॥
भवेन्नृणां दिवास्वप्नस्याहितस्य निषेवणात् ।
तस्माद्धिताहितं स्वप्नं बुद्ध्वा स्वप्यात् समं बुध: ॥
रात्रौ जागरणं रूक्षं स्निग्धमस्वपनं दिवा ।
अरूक्षमनभिष्यन्दित्वासीनप्रचलायितम् ॥
देहवृत्तौ यथाहार: तथा स्वप्न: समासत: ।
स्वप्नाहारसमुत्थे च स्थौल्यकार्श्ये विशेषत: ॥
अभ्यङ्गोच्छादनं स्नानं ग्राम्यानूपौदका रसा: ।
शाल्यन्नं सदधि क्षीरं स्नेहो मद्यं मन:सुखम् ॥
मनसोऽनुगुणा गन्धा: शब्दा: संवाहनानि च ।
चक्षुषस्तर्पणं लेप: शिरसो वदनस्य च ॥
स्वास्तीर्णं शयनं वेश्मसुखं काला यथोचितम् ।
आनयन्त्यचिरान्निद्रां प्रनष्टाया निमित्तत: ॥
कायस्य शिरसश्चैव विरेक: छर्द्दनं भयम् ।
चिन्ता क्रोध: कथा धूमो व्यवायो रक्तमोक्षणम् ॥
उपवास: सुखा शय्या सत्त्वौदार्यं तमोजय: ।
निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम् ॥
एत एव च विज्ञेया निद्रानाशस्य हेतव: ।
कार्य्यं कालविकाराश्च प्रकृतिर्वायुरेव च ॥

तमोभवा श्लेष्मसमुद्भवा च मन:शरीरश्रमसम्भवा च ।
आगन्तुकी व्याध्यनुवर्त्तिनी च रात्रिप्रभावप्रभवा च निद्रा ॥
रात्रिस्वभावप्रभवा मता या तां भूतधात्रीं प्रवदन्ति निद्राम् ।

ततोभवामाहुरचसत्र मूलं शेषं पुनर्व्याधिषु निर्दिशन्तीति ॥

अत्र श्लोकाः । निन्दिताः पुरुषास्तेषां यौ विशेषेण निन्दितौ ।

वक्ष्यामि कारणं दोषास्तयोर्निन्दितभेषजम् ॥

येभ्यो यदा हिता निद्रा येभ्यश्चापरहिता यदा ।

अतिनिद्रानिद्रयोश्च भेषजं यद्भवा च सा ॥

या या यथा प्रभावा च निद्रा तत्सर्वमत्रिजः ।

अष्टौ निन्दितसंख्याते व्याजहार पुनर्वसुः ॥

इति योजनाचतुष्के अष्टौ निन्दितीयोऽध्यायः ।

---

## द्वाविंशोऽध्यायः ।

अथातो लङ्घनबृंहणीयमध्यायं व्याख्यास्यामः ।

तपःस्वाध्यायनिरतानात्रेयः शिष्यसत्तमान् ।

षडग्निवेशप्रमुखानुक्तवान् परिचोदयन् ॥

लङ्घनं बृंहणं काले रूक्षणं स्नेहनं तथा ।

स्वेदनं स्तम्भनञ्चैव जानीते यः स वै भिषक् ॥

इति तमेव सुक्तवन्तं भगवन्तमात्रेयमग्निवेश उवाच ।

भगवंल्लङ्घनं किंस्विल्लङ्घनीयाश्च कीदृशाः ॥

बृंहणं बृंहणीयाश्च रूक्षणीयाश्च रूक्षणम् ।

स्नेहनं स्नेहनीयाश्च स्वेदाः स्वेद्याश्च के मताः ॥

स्तम्भनं स्तम्भनीयाश्च तद्धि शंसतिनो गुरुः ।

लङ्घनप्रभृतीनाञ्च षण्णामेषां समासतः।
कृताकृतातिरिक्तानां लक्षणं वक्तुमर्हसि॥
गुरुरुवाच। यत्किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम्।
बृंहत्वं यच्छरीरस्य जनयेत्तच्च बृंहणम्॥
रौक्ष्यं खरत्वं वैशद्यं यत् कुर्यात्तद्धि रूक्षणम्।
स्नेहनं स्नेहनिःष्यन्दमार्दवक्लेदकारकम्॥
स्तम्भगौरवशीतघ्नं स्वेदनं स्वेदकारकम्।
स्तम्भनं स्तम्भयति यद्गतिमन्तं चलं ध्रुवम्॥
लघूष्णतीक्ष्णविशदं रूक्षं सूक्ष्मं खरं सरम्।
कठिनञ्चैव यद्द्रव्यं प्रायस्तल्लङ्घनं स्मृतम्॥
गुरुशीतमृदुस्निग्धं बहुलं सूक्ष्मपिच्छिलम्।
प्रायो मन्दं स्थिरं सूक्ष्मं द्रव्यं बृंहणमुच्यते॥
रूक्षं लघु खरं तीक्ष्णमुष्णं स्थिरं अपिच्छिलम्।
प्रायशः कठिनञ्चैव यद्द्रव्यं तद्धि रूक्षणम्॥
द्रवं सूक्ष्मं सरं स्निग्धं पिच्छिलं गुरुशीतलम्।
प्रायो मन्दं मृदु च यद्द्रव्यं तत् स्नेहनं मतम्॥
उष्णं तीक्ष्णं सरं स्निग्धं रूक्षं सूक्ष्मं द्रवं स्थिरम्।
द्रव्यं गुरु च यत्प्रायः तद्धि स्वेदनमुच्यते॥
शीतं मन्दं मृदु श्लक्ष्णं रूक्षं सूक्ष्मं द्रवं सरम्।
यद्द्रव्यं लघु चोद्दिष्टं प्रायस्तत् स्तम्भनं स्मृतम्॥
चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ।
पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम्॥
प्रभूतश्लेष्मपित्तास्रमलाः संसृष्टमारुताः।

बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः ॥
येषां मध्यबला रोगाः कफपित्तसमुत्थिताः ।
वम्यतीसारहृद्रोगविसूच्यालसकज्वराः ॥
विबन्धगौरवोद्गारहृल्लासारोचकादयः ।
पाचनैस्तान् भिषक्प्राज्ञः प्रायेणादावुपाचरेत् ॥
एत एव यथोद्दिष्टा येषामल्पमता गदाः ।
पिपासानिग्रहैस्तेषामुपवासैश्च तान् जयेत् ॥
रोगान् जयेन्मध्यबलान् व्यायामातपमारुतैः ।
बलिनां किं पुनर्येषां रोगाणामवरं बलम् ॥
त्वग्दोषाणां प्रमूढानां स्निग्धाभिष्यन्दि वृंहिनाम् ।
शिशिरे लङ्घनं शस्तमपि वातविकारिणाम् ॥
अदिग्धविद्धमक्लिष्टं वयःस्थं सात्म्यचारिणाम् ।
मृगमत्स्यविहङ्गानां मांसं बृंहणमुच्यते ॥
क्षीणाः क्षताः कृशा वृद्धा दुर्बला नित्यमध्वगाः ।
स्त्रीमद्यनित्या ग्रीष्मे च बृंहणीया नराः स्मृताः ॥
शोषार्शोग्रहणीदोषैर्व्याधिभिः कर्शिताश्च ये ।
कृश्या मांसरसास्तेषां बृंहणं लाघवं मतम् ॥
स्नानमुच्छादनं स्वप्नो मधुराः स्नेहवस्तयः ।
शर्करा क्षीरसर्पींषि सर्वेषां विद्धि बृंहणम् ॥
कटुतिक्तकषायाणां सेवनं स्त्रीष्वसंयमः ।
खलीपिण्याकतक्राणां मध्वादीनां च रूक्षणम् ॥
अभिष्यन्ना महादोषा मर्मस्था व्याधयश्च ये ।
ऊरुस्तम्भप्रभृतयो रूक्षणीयानि दर्शिताः ॥
स्नेहाः स्नेहयितव्याश्च स्वेदाः स्वेद्याश्च ये नराः ।

स्वेदाध्याये मयोक्तास्ते स्वेदाख्ये च सविस्तराः ॥
द्रवस्तनुसरं यावच्छीतीकरणमौषधम् ।
स्वादु तिक्तं कषायञ्च स्तम्भनं सर्व्वमेव तत् ॥
पित्तक्षाराग्निदग्धा ये वम्यतीसारपीडिताः ।
विषस्वेदातियोगार्त्ताः स्तम्भनीयास्तथाविधाः ॥
वातमूत्रपुरीषाणां निसर्गे चात्र लाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ चैव क्षुत्पिपासासहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥
सर्व्वभेदाङ्गमर्द्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्वं वायुस्तमो हृदि ।
देहाग्निबलनाशश्च लङ्घनेऽतिकृते भवेत् ॥
बलं पुष्ट्युपलम्भश्च कार्श्यं दोषविवर्ज्जितम् ।
लक्षणं बृंहिते स्थौल्यमति चात्यर्थबृंहिते ॥
कृताकृतस्य चिह्नं यल्लङ्घिते तद्वि रूक्षिते ।
स्तम्भितः स्याद्बले लब्धे यथोक्तैश्चामयैर्ज्जितैः ॥
श्यावतास्तब्धगात्रत्वमुद्वेगो हनुसंग्रहः ।
हृद्वर्च्चोनिग्रहश्च स्यादतिस्तम्भितलक्षणम् ॥
लक्षणं चाकृतानां स्यात् षण्णामेषां समासतः ।
तदौषधानां व्याधीनामशमो वृद्धिरेव वा ॥
इति षट्सर्व्वरोगाणां प्रोक्ताः सम्यगुपक्रमाः ।
साध्यानां साधने सिद्धा मात्राकालानुरोधित इति ॥

भवति चात्र । दोषाणां बहुसंसर्गात् सङ्कीर्य्यन्ते ह्युपक्रमाः ।

षट्त्वं तु नातिवर्त्तन्ते त्रित्वं वातादयो यथा ॥
इत्यस्मिल्लङ्घनाध्याये व्याख्याताः षडुपक्रमाः ।
यथाप्रश्नं भगवता चिकित्सा यैः प्रवर्त्तिता ॥
इति योजनाचतुष्के लङ्घनबृंहणीयोऽध्यायः समाप्तः ।

---

## त्रयोविंशोऽध्यायः ।

अथातः सन्तर्पणीयमध्यायं व्याख्यास्यामः ।

सन्तर्पयति यः स्निग्धैर्मधुरैर्गुरुपिच्छिलैः ।
नवान्नैर्नवमद्यैश्च मांसैश्चानूपवारिजैः ॥
गोरसैर्गौडिकैश्चान्नैः पैष्टिकैश्चातिमात्रशः ।
चेष्टाद्वेषी दिवास्वप्नशय्यासनसुखेरतः ॥
रोगास्तस्योपजायन्ते सन्तर्पणनिमित्तजाः ।
प्रमेहकण्डूपिडकाः कोठपाण्ड्वामयज्वराः ॥
कुष्ठान्यामप्रदोषाश्च मूत्रकृच्छ्रमरोचकः ।
तन्द्राक्लैव्यमतिस्थौल्यमालस्यं गुरुगात्रता ॥
इन्द्रियस्रोतसां लेपो बुद्धेर्मोहः प्रमीलकः ।
शोफाश्चैवंविधाश्चान्ये शीघ्रमप्रतिकुर्वतः ॥
शस्तमुल्लेखनं तेषां विरेको रक्तमोक्षणम् ।
व्यायामश्चोपवासश्च धूमाश्च स्वेदनानि च ॥
सक्षौद्रश्चाभयाप्राशः प्रायो रूक्षान्नसेवनम् ।

पूर्वप्रमेहा ये चोक्ताः पाण्डुकोठविनाशनाः ॥
त्रिफलारग्वधं पाठां सप्तपर्णं सवत्सकम् ।
मुस्तं निम्बं समदनं जलेनोत्क्वथितं पिबेत् ॥
तेन मोहादयो यान्ति नाशमभ्यस्यतां ध्रुवम् ।
मात्राकालप्रयुक्तेन सन्तर्पणसमुत्थिताः ॥
मुस्तमारग्वधः पाठा त्रिफला देवदारु च ।
श्वदंष्ट्रा खदिरो निम्बो हरिद्रात्वक् च वत्सकात् ॥
रसमेषां यथादोषं प्रातः प्रातः पिबेन्नरः ।
सन्तर्पणकृतैः सर्वैर्व्याधिभिर्विप्रमुच्यते ॥
एभिश्चोद्वर्त्तनोद्घर्षस्नानयोगोपयोजितैः ।
त्वग्दोषाः प्रशमं यान्ति तथा स्नेहोपसंहितैः ॥
कुष्ठं गोमेदकं हिङ्गु क्रौञ्चास्थीन्यूषकं वचाम् ।
वृषकैलं श्वदंष्ट्रां च खराश्वाचाश्मभेदकम् ॥
तक्रेण दधिमण्डेन बदराम्लरसेन वा ।
मूत्रकृच्छ्रं प्रमेहञ्च पीतमेतदपोहति ॥
तक्राभयाप्रयोगैश्च त्रिफलायास्तथैव च ।
अरिष्टानां प्रयोगैश्च यान्ति मेहादयः शमम् ॥
त्र्यूषणं त्रिफला क्षौद्रं क्रिमिघ्नं साजमोदकम् ॥
मन्थोऽयं सक्तवस्तैलं हितो लोहोदकप्लुतः ।
व्योषं विडङ्गं शिग्रूणि त्रिफला कटुरोहिणी ॥
बृहत्यौ द्वे हरिद्रे द्वे पाठा सातिविषा स्थिरा ।
हिङ्गुकेवुकमूलानि यवानी धान्यचित्रकम् ॥
सौवर्चलमजाजीश्च हपुषां चेति चूर्णयेत् ।
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ॥

सक्तूनां षोडशगुणो भागः सन्तर्पणं पिबेत् ।
प्रयोगास्तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ॥
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ।
प्लीहापाण्ड्वामयः शोफो मूत्रकृच्छ्रमरोचकः ॥
हृद्रोगो राजयक्ष्मा च कासः श्वासो गलग्रहः ।
क्रिमयो ग्रहणीदोषाः श्वैत्र्यं स्थौल्यमतीव च ॥
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते ।
व्यायामनित्यो जीर्णाशी यवगोधूमभोजनः ॥
सन्तर्पणकृतैर्दोषैः स्थौल्यं मुक्त्वा विमुच्यते ।
उक्तं सन्तर्पणोत्थानामपतर्पणमौषधम् ॥
वक्ष्यन्ते सौषधाश्चोर्द्धमपतर्पणजा गदाः ।
ऊर्द्धवातादयः सर्वे जायन्ते तेऽपतर्पणात् ॥
तेषां सन्तर्पणं तज्ज्ञैः पुनराख्यातमौषधम् ।
यत्तदात्वे समर्थं स्यादभ्यासे यावदिष्यते ॥
सद्यः क्षीणो हि सद्यो वै तर्पणेनोपचीयते ।
तेन सन्तर्पणाभ्यासः चिरक्षीणास्तु पुष्यति ॥
देहाग्निदोषभैषज्यमात्राकालानुवर्त्तिनाम् ।
कार्यमत्वरमाणेन भेषजं चिरदुर्बले ॥
हिता मांसरसास्तस्मै पयांसि च घृतानि च ।
स्नानानि वस्तयोऽभ्यङ्गास्तर्पणास्तर्पणाश्च ये ॥
ज्वरकासप्रसक्तानां कृशानां मूत्रकृच्छ्रिणाम् ।
तृष्यतामूर्द्धवातानां हितं वक्ष्यामि तर्पणम् ॥
शर्करापिप्पलीमूलघृतक्षौद्रसमांशकः ।
सक्तुर्द्विगुणितो वृष्यस्तेषां मन्थः प्रशस्यते ॥

सक्तवो मदिरा क्षौद्रं शर्करा चेति तर्पणम्।
पिबेन्मारुतविण्मूत्रकफपित्तानुलोमनम् ॥
फाणितं सक्तवः सर्पि दधि मण्डोऽम्लकाञ्जिकम्।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्त्तहरं पिबेत् ॥
मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकादाडिमैः।
परूषकैः सामलकैर्युक्तो मद्यविकारवत् ॥
स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा।
सद्यः सन्तर्पणो मन्थः स्थैर्यवर्णबलप्रद इति ॥
तत्र श्लोकः। सन्तर्पणोत्था ये रोगा रोगा ये चापतर्पणात्।
सन्तर्पणे तेऽध्याये सौषधाः परिकीर्त्तिताः ॥

---

## चतुर्विंशोऽध्यायः।

अथातो विधिशोणितीयमध्यायं व्याख्यास्यामः।

विधिना शोधितं जातं शुद्धं भवति देहिनाम्।
देशकालौकसात्म्यानां विधिर्यः संप्रदर्शितः ॥
तद्विशुद्धं हि रुधिरं बलवर्ण सुखायुषा।
युनक्ति प्राणिनं प्राणः शोणितं ह्यनुवर्त्तते ॥
प्रदुष्टबहु तीक्ष्णोष्णैर्मद्यैरन्यैश्च तद्विधैः।
तथातिलवणक्षारैरम्लैः कटुभिरेव च ॥

कुलत्थमाषनिष्पावतिलतैलनिषेवणैः ।
पिण्डालमूलकादीनां हरितानाञ्च सर्वशः ॥
जलजानूपवैलानां प्रसिहानां च सेवनात् ।
दध्यम्लमस्तुयुक्तानां सुरा सौवीरकस्य च ॥
विरुद्धानामुपक्लिन्नपूतीनां भक्षणेन च ।
भुक्त्वा दिवा प्रस्वपतां द्रवस्निग्धगुरूणि च ॥
अत्यादानं तथा क्रोधं भजतां चातपानलौ ।
छर्दिवेगप्रतीघातात्काले चानवसेचनात् ॥
श्रमाभिघातसन्तापैरजीर्णाध्यशनैस्तथा ।
शरत्कालस्वभावाच्च शोणितं संप्रदुष्यति ॥
ततः शोणितजा रोगाः प्रजायन्ते पृथग्विधाः ।
मुखपाकोऽक्षिरोगश्च पूतिघ्राणास्यगन्धता ॥
गुल्मोपकुशवीसर्परक्तपित्तप्रमीलिकाः ।
विद्रधी रक्तमेहश्च प्रदरो वातशोणितम् ॥
वैवर्ण्यमग्निनाशश्च पिपासा गुरुगात्रता ।
सन्तापश्चातिदौर्बल्यमरुचिः शिरसश्च रुक् ॥
विदाहश्चान्नपानस्य तिक्ताम्लोद्गरणं क्लमः ।
क्रोधप्रचुरता बुद्धेः संमोहो लवणास्यता ॥
स्वेदः शरीरदौर्गन्ध्यं मदः कम्पः स्वरक्षयः ।
तन्द्रा निद्रातियोगश्च तमसश्चातिदर्शनम् ॥
कण्डोरुः कोठपिठकाः कुष्ठचर्मदलादयः ।
विकाराः सर्व एवैते विज्ञेयाः शोणिताश्रयाः ॥
शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ।
सम्यक् साध्या न सिध्यन्ति रक्तजांस्तान्विभावयेत् ॥

कुर्यात् शोणितरोगेषु रक्तपित्तहरीं क्रियाम्।
विरेकमुपवासं वा स्रावणं शोणितस्य वा॥
बलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा।
रुधिरं स्रावयेज्जन्तो राशयं प्रसमीक्ष्य वा॥
अरुणाभं भवेद्वातात् पिच्छिलं फेणिलं तनु।
पित्तात्पीतासितं रक्तं स्त्यायत्यौष्ण्यात् चिरात्॥
ईषत्पाण्डु कफाद्दुष्टं पिच्छिलं तन्तुमद्घनम्।
द्विदोषलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम्॥
तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम्।
गुञ्जाफलसवर्णञ्च विशुद्धं विद्धि शोणितम्॥

नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम्।
तदा शरीरं ह्यनवस्थितासृगग्निर्विशेषेण च रक्षितव्यः॥
प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तृवेगम्।
सुखान्वितं तुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति॥

यदा तु रक्तवाहीनि रससंज्ञावहानि च।
पृथक् पृथक् समस्ता वा स्रोतांसि कुपितामलाः॥
मलिनाहारशीलस्य रजोमोहावृतात्मनः।
प्रतिहत्यावतिष्ठन्ते जायन्ते व्याधयस्तदा॥
मदमूर्च्छायसन्यासास्तेषां विद्याद्विचक्षणः।
यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु॥
दुर्बलश्चेतसः स्थानं यदा वायुः प्रपद्यते।
मनो विक्षोभयन् जन्तोः संज्ञां संमोहयेत्तदा॥
पित्तमेवं कफश्चैवं मनोविक्षोभयन् नृणाम्।
संज्ञां नयत्याकुलतां विशेषश्चात्र वक्ष्यते॥

सक्तानल्पद्रुताभाषञ्चलस्खलितचेष्टितम् ।
विद्याद्वातमदाविष्टं रूक्षश्यावारुणाकृतिम् ॥
सक्रोधपरुषाभाषं संप्रहारकलिप्रियम् ।
विद्यात्पित्तमदाविष्टं रक्तपीतसिताकृतिम् ॥
स्वल्पसम्बन्धवचनं तन्द्रालस्यसमन्वितम् ।
विद्यात्कफमदाविष्टं पाण्डुप्रध्यानतत्परम् ॥
सर्वाण्येतानि रूपाणि सन्निपातकृते मदे ।
जायन्ते शाम्यति त्वाशु मदो मद्यमदाकृतिः ॥
यश्च मद्यमदः प्रोक्तो विषजो रौधिरश्च यः ।
सर्व एते मदा नर्ते वातपित्तकफत्रयात् ॥
नीलं वा यदि वा कृष्णमाकाशमथ वारुणम् ।
पश्यंस्तमः प्रविशति शीघ्रञ्च प्रतिबुध्यते ॥
वेपथुश्चाङ्गमर्दश्च प्रपीड़ा हृदयस्य च ।
कार्श्यं श्यावारुणा छाया मूर्च्छाये वातसम्भवे ॥
रक्तं हरितवर्णं वा वियत्पीतमथापि वा ।
पश्यंस्तमः प्रविशति स स्वेदश्च प्रबुध्यते ॥
सपिपासः ससन्तापो रक्तपित्ताकुलेक्षणः ।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसम्भवे ॥
मेघसङ्काशमाकाशमावृतं वा तमोघनैः ।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्म्मणा ।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसम्भवे ॥
सर्वाकृतिः सन्निपातादपस्मार इवागतः ।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥

दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ।
स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥
वाग्देहमनसां चेष्टामाक्षिप्यातिबलामलाः ॥
संन्यस्यन्त्यबलं जन्तुं प्राणायतनसंश्रिताः ॥
स ना संन्याससंन्यस्तः काष्ठभूतो मृतोपमः ।
प्राणैर्वियुज्यते शीघ्रं मुक्त्वा सद्यः फलां क्रियाम् ॥
दुर्गेऽम्भसि यथा मज्जद्भाजनं त्वरया बुधः ।
गृह्णीयादतलं प्राप्तं तथा संन्यासपीडितम् ॥
अञ्जनान्यवपीडाश्च धूमः प्रधमनानि च ।
सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ॥
लुञ्चनं केशलोम्नां च दन्तैर्दंशनमेव च ।
आत्मगुप्तावघर्षश्च मतास्तस्यावबोधने ॥
संमूर्च्छितानि तीक्ष्णानि मद्यानि विविधानि च ।
प्रभूतकटुयुक्तानि तस्यास्ये गालयेन्मुहुः ॥
मातुलुङ्गरसं तद्वन्महौषधसमायुतम् ।
तद्वत्सौवीरकं दद्याद्युक्तं मद्याम्लकाञ्जिकैः ॥
हिङ्गूषणसमायुक्तं यावत् संज्ञाप्रबोधनात् ।
प्रबोध संशमनैश्च लघुभिस्तमुपाचरेत् ॥
विस्मापनैः स्मारणैश्च प्रियश्रुतिभिरेव च ।
पटुभिर्गीतवादित्रशब्दैश्चित्रैश्च दर्शनैः ॥
स्रंसनोल्लेखनैर्धूमैरञ्जनैः कवलग्रहैः ।
शोणितस्यावसेकैश्च व्यायामोद्घर्षणैस्तथा ॥
प्रबुद्धसंज्ञं मतिमाननुबद्धमुपक्रमेत् ।
तस्य संरक्षितव्यं हि मनः प्रलयहेतुतः ॥

स्नेहस्वेदोपपन्नानां यथादोषं यथाबलम् ।
पञ्च कर्म्माणि कुर्व्वीत मूर्च्छायेषु मदेषु च ॥
अष्टाविंशौषधस्यैष्वमथवा तिक्तसर्पिषः ।
प्रयोगः शस्यते तद्वन्महतः षट्पलस्य वा ॥
त्रिफलायाः प्रयोगो वा सघृतक्षौद्रशर्करः ।
शिलाजतुप्रयोगो वा प्रयोगः पयसोऽपि वा ॥
पिप्पलीनां प्रयोगो वा प्रयोगः चित्रकस्य वा ।
रसायनां हि कौम्भस्य सर्पिषो वा प्रशस्यते ॥
रक्तावसेकात् शास्त्राणां सतां सत्त्ववतामपि ।
सेवनात् मदमूर्च्छायाः प्रशाम्यन्ति शरीरिणां इति॥
तत्रश्लोकौ ॥ विशुद्धञ्चाविशुद्धञ्च शोणितं तस्य हेतवः ।
रक्तप्रदोषजा रोगास्तेषु रोगेषु चौषधम् ॥
मदमूर्च्छाय संन्यासहेतुलक्षणभेषजम् ।
विधिशोणितकेऽध्याये सर्व्वमेतत् प्रकाशितम् ॥
इति योजनाचतुष्के विधिशोणिताध्यायः समाप्तः ॥

---

## पञ्चविंशोऽध्यायः ।

अथातो यज्ञः पुरुषीयमध्यायं व्याख्यास्यामः ॥

पुराप्रत्यक्षधर्म्माणं भगवन्तं पुनर्व्वसुम् ।
समितानां महर्षीणां प्रादुरासीदियं कथा ॥

आत्मेन्द्रियमनोऽर्थानां योऽयं पुरुषसंज्ञकः।
राशिरस्यामयानाञ्च प्रागुत्पत्तिविनिश्चये ॥
अथ काशिपतिर्वाक्यं वामकोऽर्थवदन्तरा।
व्याजहारर्षिसमितिमभिसृत्याभिवाद्य च ॥
किन्नु स्यात् पुरुषो यज्जस्तज्जास्तस्यामयाः स्मृताः।
न वेत्युक्ते नरेन्द्रेण प्रोवाचर्षीन् पुनर्वसुः ॥
सर्वं एवामितज्ञानविज्ञानच्छिन्नसंशयाः।
भवन्तः छेत्तुमर्हन्ति काशिराजस्य संशयम् ॥
पारीक्षिस्तत्परीक्षाग्रे मौद्गल्यो वाक्यमब्रवीत्।
आत्मजः पुरुषो रोगाश्चात्मजाः कारणं हि सः ॥
स चिनोत्युपभुङ्क्ते च कर्म्म कर्म्मफलानि च।
न ह्यृते चेतना धातोः प्रवृत्तिः सुखदुःखयोः ॥
शरलोमा तु नेत्याह न ह्यात्मात्मानमात्मना।
योजयेद्व्याधिभिर्दुःखैर्दुःखद्वेषी कदाचन ॥
रजस्तमोभ्यान्तु मनः परीतं सत्त्वसंज्ञकम्।
शरीरस्यासमुत्पत्तौ विकाराणाञ्च कारणम् ॥
वार्य्योविदस्तु नेत्याह न ह्येकं कारणं मनः।
नान्ते शरीरं शारीरा रोगा न मनसः स्थितिः ॥
रसजानि तु भूतानि व्याधयश्च पृथग्विधाः।
आपो हि व्याधिवत्यस्ताः स्मृता निर्वृतिहेतवः ॥
हैरण्याक्षस्तु नेत्याह न ह्यात्मा रसजः स्मृतः।
नातीन्द्रियं मनः सन्ति रोगाः शब्दादिजास्तथा ॥
षड्धातुजस्तु पुरुषो रोगाः षड्धातुजास्तथा।



13

राशिः षड्धातुजो ह्येष साङ्ख्यैराद्यः परीक्षितः ॥
तथा ब्रुवाणं कुशिकमाह तन्नेति शौनकः।
कस्मात्मातापितृभ्यां हि विना षड्धातुजो भवेत् ॥
पुरुषः पुरुषाद्गौर्गोरश्वादश्वः प्रजायते।
पित्र्या मेहादयश्चोक्ता रोगास्तावन्न कारणम् ॥
भद्रकाप्यस्तु नेत्याह न ह्यन्धोऽन्धात् प्रजायते।
मातापित्रोश्च ते पूर्वमुत्पत्तिर्नोपपद्यते ॥
कर्म्मजस्तु मतो जन्तुः कर्म्मजास्तस्य चामयाः।
नह्यृते कर्म्मणो जन्म रोगाणां पुरुषस्य च ॥
भरद्वाजस्तु नेत्याह कर्ता पूर्वं हि कर्म्मणः।
दृष्टो न चाकृतं कर्म्म यस्य स्यात् पुरुषः फलम् ॥
भावहेतुः स्वभावस्तु व्याधीनां पुरुषस्य च।
खरद्रवचलोष्णत्वं तेजोऽन्तानां यथैव हि ॥
काङ्कायनस्तु नेत्याह न ह्यारम्भे फलं भवेत्।
भवेत् स्वभावाद्भावानामसिद्धिः सिद्धिरेव वा ॥
स्रष्टा त्वमितसङ्कल्पो ब्रह्मापत्यं प्रजापतिः।
प्रजाहितैषी सततं दुःखैर्युञ्ज्यान्न साधुवत् ॥
कालजस्त्वेव पुरुषः कालजास्तस्य चामयाः।
जगत्कालवशं सर्वं कालः सर्वत्र कारणम् ॥
तथर्षीणां विवदतामुवाचेदं पुनर्वसुः।
मैवं वोचत तत्त्वं हि दुष्प्रापं पक्षसंश्रयात् ॥
वादान् सप्रतिवादान् हि वदन्तो निश्चितानि च।
पक्षान्तं नैव गच्छन्ति तिलपीडकवद्गतौ ॥
मुक्त्वैनं वादसङ्घट्टमध्यात्ममनुचिन्त्यताम्।

नाविधूतं तमः स्कन्धे ज्ञेये ज्ञानं प्रवर्त्तते ॥
येषामेव हि भावानां सम्पत् सञ्जनयेन्नरम्।
तेषामेव विपद्व्याधीन्विविधान् समुदीरयेत् ॥

अथात्रेयस्य भगवतो वचनमनुनिशम्य पुनरेव वामकः काशिपतिरुवाच भगवन्तमात्रेयं सम्पन्निमित्तजस्य पुरुषस्य विपन्निमित्तजानां रोगाणां किमभिवृद्धिकारणमिति। तमुवाच भगवानात्रेयो हिताहारोपयोगः पुनर्व्याधीनामित्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच। कथमिह भगवन्! हिताहितानामाहारजातानां लक्षणमनपवादमभिजानीयामहितसमाख्यातानां चैव ह्याहारजातानामभिहितसमाख्यातानाञ्च मात्राकालक्रियाभूमिदेहदोषपुरुषावस्थान्तरेषु विपरीतकारित्वमुपलभामहे इति तमुवाच भगवानात्रेयः। यदाहारजातानामग्निवेश! समांश्चैव शरीरधातून् प्रकृतौ स्थापयति विषमांश्च समीकरोतीत्येतद्धितं विद्धि विहितं विपरीतमिति एतद्धिताहितलक्षणमनपवादिनमेवंवादिनञ्च भगवन्तमात्रेयमग्निवेश उवाच। भगवन्नेतदेवमुपदिष्टं सर्वंभिषजो विज्ञास्यन्ति। तमुवाच भगवानात्रेयः। येषां विदितमाहारतत्त्वमग्निवेश! गुणतो द्रव्यतः कर्म्मतः सर्वावयवतो मात्रादयो भावास्त एतदेवमुपदिष्टं विज्ञातुमुत्सहन्ते यथा तु खल्वेतदुपदिष्टं भूयिष्ठकल्पाः सर्वंभिषजो विज्ञास्यन्ति तथैतदुपदेक्ष्यामः। मात्रादीन् भावाननुदाहरन्तः तेषां हि बहुविधविकल्पा भवन्ति। आहारविधिविशेषांस्तु खलु लक्षणतश्चावयवतश्चानुव्याख्यास्यामः। आहारस्यैकविधमर्थाभेदात् स पुन-

हि योनिः स्थावरजङ्गमात्मकत्वात् द्विविधप्रभावो हिताहितो-दर्कविशेषाच्चतुर्विधोपयोगः। पापनाशनभक्ष्यलेह्योपयो-गात् षडास्वादो रसभेदतः षड्विधत्वाद्विंशतिगुणो गुरु-लघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपि-च्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवानुगमनादपरिसंख्येयवि-कल्पो द्रव्यसंयोगकरणबाहुल्यात्तस्य ये ये विकारावयवा भूयिष्ठमुपयुज्यन्ते। भूयिष्ठकल्पना च मनुष्याणां प्रकृत्यैव हिततमाश्चाहिततमाश्च तांस्तान्यथावदनुव्याख्यास्यामः। लोहितकशालयः शूकधान्यानां पथ्यतमत्वे श्रेष्ठतमाः। मुद्गाः शमीधान्यानामन्तरिक्षमुदकानां सैन्धवं लवणानां जीवन्तीशाकं शाकानां ऐणेयं मृगमांसानां लावः पक्षिणां गोधा बिलेशयानां रोहितो मत्स्यानां गव्यं सर्पिः सर्पिषां गोक्षीरं क्षीराणां तिलतैलं स्थावरजातानां स्नेहानां वरा-हवसा आनूपमृगवसानां चुलुकीवसा मत्स्यवसानां पाकहंस-वसा जलचरविहङ्गवसानां कुक्कुटवसा विष्किरशकुनिवसानां अजमेदः शाखादिमेदसां शृङ्गवेरं कन्दानां मृद्वीका फलानां शर्करेक्षुविकाराणां प्रकृत्यैव हिततमानामाहारविकाराणां प्राधान्यतो द्रव्याणि व्याख्यातानि। अहितानामप्युपदेक्ष्यामः। यवकः शूकधान्यानामपथ्यत्वे प्रकृष्टतमा माषाः शमी-धान्यानां वर्षानादेयमुदकानाम् ऊषरं लवणानां सर्षपशाकं शाकानां गोमांसं मृगमांसानां काणकपोतः पक्षिणां भेको बिलेशयानां चिलिचिमो मत्स्यानाम् आविकं सर्पिः सर्पि-षाम् आविक्षीरं क्षीराणां कुसुम्भस्नेहः स्नेहानां स्थावराणां महिषवसा आनूपमृगवसानां कुम्भीरवसा मत्स्यवसानां काक-

मद्गुवसा जलचरविहङ्गवसानां मूलकं कन्दानां वाराहवसा विष्किरशकुनिवसानां हस्तिमेदः शाखादमेदसां लिकुच फलानां फाणितमिक्षुविकाराणामिति प्रकृत्यैव अहिततमानामाहारविकाराणां प्रकृष्टतमानि द्रव्याणि व्याख्यातानि । हिताहितावयवानामाहारविकाराणाम् अतोभूयः कर्मौषधानां प्राधान्यतः सानुबन्धानि द्रव्याणि व्याख्यातान्यनुव्याख्यास्यामः । अन्नं वृत्तिकराणां श्रेष्ठमुदकमाश्वासकराणां सुराश्रमहराणां क्षीरं जीवनीयानां मांसं वृंहणीयानां लवणमन्नद्रव्यरुचिकराणाम् अम्लं हृद्यानां कुक्कुटो बल्यानां नक्ररेतो वृष्याणां मधु श्लेष्मपित्तप्रशमनानां सर्पिर्वातपित्तप्रशमनानां तैलं वातवित्तप्रशमनानां वमनं श्लेष्महराणां विरेचनं पित्तहराणां वस्तिर्वातहराणां स्वेदो मार्दवकराणां व्यायामः स्थैर्यकराणां क्षारः पुंस्त्वोपघातिनां तिन्दुकमनन्नद्रव्यरुचिकराणाम् आमकपित्थमकण्ठ्यानां आविकं सर्पिरहृद्यानां अजाक्षीरं शोषघ्नस्तन्यसात्म्यरक्तसांग्राहिकप्रशमनानाम् अविक्षीरं श्लेष्मपित्तोपचयकराणां महिषीक्षीरं स्वप्नजननानां मन्दकं दध्यभिष्यन्दकराणां गवेधुकान्नं कर्शनीयानां उद्दालकान्नं विरूक्षणीयानाम् इक्षुर्मूत्रजननानां जाम्बवं वातजननानां शष्कुल्याः श्लेष्मपित्तजननानां कुलत्था अम्लपित्तजननानां माषाः श्लेष्मपित्तजननानां मदनफलं वमनास्थापनानुवासनोपयोगिनां त्रिवृत् सुखविरेचनानां चतुरङ्गुलं मृदुविरेचनानां स्नुक्पयस्तीक्ष्णविरेचनानां प्रत्यक्पुष्पा शिरोविरेचनानां विडङ्गं क्रिमिघ्नानां शिरीषो विषघ्नानां खदिरः कुष्ठघ्नानां रास्ना वातहराणाम् आमलकं

वयःस्थापनानां हरीतकी पथ्यानाम् एरण्डमूलं वृष्यवातह-
राणां पिप्पलीमूलं दीपनीयपाचनीयानाहप्रशमनानां चित्र-
कमूलं दीपनीयगुदशूलशोफहराणां पुष्करमूलं हिक्काश्वास-
कासपार्श्वशूलहराणां मुस्तं संग्राहकदीपनीयपाचनीयानाम्
उदीच्यं निर्वापणदीपनीयच्छर्दितीसारहराणां कट्वङ्गं
संग्राहकदीपनीयानाम् अनन्ता संग्राहकरक्तपित्तप्रशमनानां
अमृता संग्राहकवातहरदीपनीयश्लेष्मशोणितविबन्धप्रशम-
नानां विल्वं संग्राहकदीपनीयवातकफप्रशमनानाम् अति-
विषा दीपनीयपाचनीयसंग्राहकसर्वदोषहराणाम् उत्पल-
कुमुदपद्मकिञ्जल्कः संग्राहकरक्तपित्तप्रशमनानां दुरालभा
पित्तश्लेष्मोपशोषणानां गन्धप्रियङ्गुः शोणितपित्तातियोग-
प्रशमनानां कुटजत्वक् श्लेष्मपित्तरक्तसंग्राहकोपशोषणानां
काश्मर्य्यफलं रक्तसंग्राहकप्रशमनानां पृश्निपर्णी संग्रा-
हकवातहरदीपनीयवृष्याणां विदारगन्धा वृष्यसर्वदोष-
हराणां बला संग्राहकबल्यवातहराणां गोक्षुरको मूत्र-
कृच्छ्रानिलहराणां हिङ्गुनिर्यासश्छेदनीयदीपनीयानुलो-
मिकवातकफप्रशमनानाम् अम्लवेतसो भेदनीयदीपनीया-
नुलोमिकवातश्लेष्मप्रशमनानां यावशूकः स्रंसनीयपाच-
नीयार्शोघ्नानां तक्राभ्यासो ग्रहणीदोषार्शोघृतव्यापत्प्रशम-
नानां समघृतसक्तुप्राशाभ्यासो वृष्योदावर्त्तहराणां तैलगण्डू-
षाभ्यासो दन्तबलरुचिकराणां चन्दनोदुम्बरं निर्वापणा-
लेपनानां रास्ना गुरुशीतापनयप्रलेपनानां लामज्जको-
शीरं दाहत्वग्दोषस्वेदापनयनप्रलेपनानां कुष्ठं वातहरा-
भ्यङ्गोपनाहयोगिनां मधुकं चक्षुष्यकेश्यकण्ठ्यवर्ण्यविरजनीय-

रोपणीयानां वायुः प्राणसंज्ञाप्रदानहेतूनाम् अग्निरामस्तम्भशीतशूलोद्वेपनप्रशमनानाम् अतिमात्राशनमामप्रदोषहेतूनां यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानां यथासात्म्यं चेष्टाभ्यवहारौ सेव्यानां कालभोजनमारोग्यकराणां वेगसन्धारणमनारोग्यकराणां तृप्तिराहारगुणानां मद्यं सौमनस्यजननानां मद्याक्षेपो धीधृतिस्मृतिहराणां गुरुभोजनं दुर्विपाकानाम् एकाशनभोजनं सुखपरिणामकराणां स्त्रीप्रसङ्गः शोषहराणां शुक्रवेगनिग्रहः षाण्ड्यकराणां पराघातनमन्नाश्रद्धाजननानां अनशनमायुषो ह्रासकराणां प्रमिताशनं कर्शनीयानां अजीर्णाध्यशनं ग्रहणीदूषणानां विषमाशनमग्निवैषम्यकराणां विरुद्धवीर्याशनं निन्दितव्याधिकराणां प्रशमः पथ्यानां आयासः सर्वापथ्यानां मिथ्यायोगो व्याधिमुखानां रजस्वलाभिगमनमलक्ष्मीकानां ब्रह्मचर्यमायुष्यकराणां सङ्कल्पो वृष्याणां दौर्मनस्यमवृष्याणाम् अयथाप्रारम्भः प्राणोपरोधिनां विषादो रोगवर्द्धनानां स्नानं श्रमहराणां हर्षः प्रीणनानां शोकः शोषणानां निर्वृतिः पुष्टिकराणां स्वप्नस्तन्द्राकराणां सर्वरसाभ्यासो बलकराणाम् एकरसाभ्यासो दौर्बल्यकराणां गर्भशल्यमाहार्याणां अजीर्णमुद्धार्याणां बालो मृदुभेषजीयानां वृद्धो याप्यानां गर्भिणी तीक्ष्णौषधव्यायामवर्जनीयानां सौमनस्यं गर्भधारकाणां सन्निपातो दुश्चिकित्स्यानां आम विषमचिकित्स्यानां ज्वरो रोगाणां कुष्ठो दीर्घरोगाणां राजयक्ष्मा रोगसमूहानां प्रमेहोऽनुषङ्गिनां जलौकसोऽनुशस्त्राणां वस्तिस्तन्त्राणां हिमवानौषधिभूमीनां मरुभूरारोग्यदेशानां अनूपमहितदेशानां

निर्देशकारित्वमातुरगुणानां भिषक् चिकित्साङ्गानां नास्तिको वर्ज्यानां लौल्यं क्लेशकराणां अनिर्देशकारित्वमनिष्टानां अनिर्वेदो वार्त्तलक्षणानां योगो वैद्यगुणानां विज्ञानमौषधीनां शास्त्रसहितस्तर्कः साधनानां सम्प्रतिपत्तिः कालज्ञानप्रयोजनानां अनुयोगो व्यवसायकालातिपत्तिहेतूनां दृष्टकर्मता निःसंशयकराणां असमर्थता भयकराणां तद्विद्यसम्भाषा बुद्धिवर्द्धनानां आचार्यः शास्त्राधिगमहेतूनां आयुर्वेदोऽमृतानां सद्वचनमनुष्ठेयानां असंग्रहाणां सर्वाहितानां सर्वसन्न्यासः सुखानामिति ।
भवति चात्र । अग्र्याणां शतमुद्दिष्टं यद्द्विपञ्चाशदुत्तरम् ।

अलमेतद्विकाराणां विघातायोपदिश्यते ॥
समानकारणा येऽर्थास्तेषां श्रेष्ठस्य लक्षणम् ।
ज्यायस्त्वं कार्यकारित्वे वरत्वं चाप्युदाहृतम् ॥
वातपित्तकफेभ्यश्च यद्यत्प्रशमने हितम् ।
प्राधान्यतश्च निर्दिष्टं यद्व्याधिहरमुत्तमम् ॥
एतन्निशम्य निपुणं चिकित्सां सम्प्रयोजयेत् ।
एवं कुर्वन् सदा वैद्यो धर्मकामौ समश्नुते ॥
पथ्यं पथोऽनपेतं यद्यच्चोक्तं मनसः प्रियम् ।
यच्चाप्रियमपथ्यञ्च नियतं तन्न लक्षयेत् ॥
मात्राकालक्रियाभूमिदेहदोषगुणान्तरम् ।
प्राप्य तत्तद्धि दृश्यन्ते ततो भावास्तथातथा ॥
तस्मात् स्वभावो निर्दिष्टस्तथा मात्रादिराश्रयः ।
तदपेक्ष्योभयं कर्म प्रयोज्यं सिद्धिमिच्छता ॥

तदात्रेयस्य भगवतो वचनमनुनिशम्य पुनरपि भग-

वत्समात्रेयमग्निवेश उवाच। यथोद्देशमभिनिर्दिष्टः केवलोऽयमर्थो भगवता आसवद्रव्याणामिदानीं लक्षणमनतिसंक्षेपेणोपदिश्यमानः शुश्रूषामहे इति तमुवाच भगवानात्रेयः। धान्यफलसारपुष्पकाण्डपत्रत्वचो भवन्त्यासवयोनयः। अग्निवेश संग्रहेणाष्टौ शर्करा नवमास्तासु द्रव्यसंयोगकरणतोऽपरिसंख्येया सुधा यथा पथ्यतमाससचतुरशीतिं निबोध सुरासौवीरतुषोदकमैरेयमेदकधान्याम्लषष्ठधान्यावासवाः। मृद्वीकाखर्जूरकाश्मर्यधन्वनराजादनतृणशून्यपरूषाभयामलकमृगलिण्डिकाजाम्बवकपित्थकुवलबदरकर्कन्धुपीलुप्रियालुपनसन्यग्रोधाश्वत्थप्लक्षकपीतनोदुम्बराजमोदशृङ्गाटकशङ्खिनीफलासवाः षड्विंशतिः। विदारगन्धाश्वगन्धाकृष्णगन्धाशतावरीश्यामात्रिवृद्दन्तीद्रवन्तीबिल्वोरुबकचित्रकैकादश मामूलासवाः। शालप्रियकशालचन्दनस्यन्दनखदिरकन्दरसप्तपर्णार्जुनासनारिमेदतिन्दुककिणिहीशमीशुक्तिशिंशपाशिरीषवञ्जुलधान्यकन्नमधूकसाराविंशतिः। पद्मोत्पलनलिनकुमुदसौगन्धिकशतपत्रमधूकप्रियङ्गुधातकीपुष्पदशमाः पुष्पासवाः। इक्षुकाण्डेक्षुइक्षुवालिकापुण्ड्रकचतुर्थाः त्वगासवाः शर्करासव इत्येषामासवानामामतत्वादासवसंज्ञा एवमेषामासवाः चतुरशीतिः परस्परेणाऽसृष्टानामासवद्रव्यानामुपनिर्दिष्टाः। द्रव्यसंयोगविभागस्त्वेषां बहुविकल्पः संस्कारश्च यथास्वयोनिसंस्कारसंस्कृताश्चासवाः स्वकर्म कुर्वन्ति संयोगसंस्कारदेशकालमात्रादयः स्वभावास्तेषां तेषामासवानां ते ते समुपदिश्यन्ते तत्तत्कार्यमभिसमीक्ष्येति।

भवति चात्र।

मनःशरीराग्निबलप्रदानामस्वप्रशोकारुचिनाशनानाम् ।
संहर्षणानां प्रवरासनानामशीतिरुक्ता चतुरुत्तरैषा ॥
शरीरयोगप्रकृतौ मतानि तत्त्वेन चाहारविनिश्चयो यः ।
उवाच यज्ञः पुरुषादिकेऽस्मिन् मुनिस्तथाग्र्याणि वरासवांश्च इति

अन्नपानचतुष्के यज्ञपुरुषाध्यायः समाप्तः ।

---

## षड्विंशोऽध्यायः ।

अथात आत्रेयभद्रकापीयमध्यायं व्याख्यास्यामः ।

आत्रेयो भद्रकाप्यश्च शाकुन्तेयस्तथैव च ।
पूर्णाक्षश्चैव मौद्गल्यो हिरण्याक्षश्च कौशिकः ॥
यः कुमारशिरा नाम भरद्वाजः स चानघः ।
श्रीमान्वार्य्योविदश्चैव राजा मतिमतां वरः ॥
निमिश्च राजा वैदेहो वडिशश्च महामतिः ।
काङ्कायनश्च वाह्लीको वाह्लीकभिषजां वरः ॥
एते श्रुतवयोवृद्धा जितात्मानो महर्षयः ।
वने चैत्ररथे रम्ये समीयुर्विजिहीर्षवः ॥
तेषां तत्रोपविष्टानामियमर्थवती कथा ।
बभूवार्थविदां सम्यग्रसाहारविनिश्चये ॥

एक एव रस इत्युवाच भद्रकाप्यो यं तं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वा वैषयिकं भावमाचक्षते कुशलाः ।

स पुनरुदकादनन्य इति द्वौ रसाविति शाकुन्तेयो ब्राह्मण-
श्छेदनीयश्चोपशमनीयश्चेति त्रयो रसा इति पूर्णाक्षः मौद्-
गल्यो छेदनीयोपशमनीयौ साधारणश्चेति चत्वारो रसा इति
हिरण्याक्षः कौशिकः स्वादुश्चाहितश्चास्वादुरहितश्चास्वादुर-
हिताश्चास्वादुर्हितश्चेति पञ्चरसा इति कुमारशिरा भरद्वाजो
भौमोदकाग्नेयनाय्यवायान्तरिक्षाः षड्रसा इति वार्य्योविदो
राजर्षिः गुरुलघुशीतोष्णस्निग्धरूक्षाः सप्तरसा इति निमि-
वैदेहो मधुराम्ललवणकटुकतिक्तकषायक्षारा व्यक्ताः अपरि-
संख्येया रसा इति काङ्कायनः वाह्लीकभिषगाश्रयगुणकर्म-
संस्वादविशेषाणामपरिमेयत्वात् षडेव रसा इत्युवाच भग-
वानात्रेयः पुनर्वसुः मधुराम्ललवणकटुतिक्तकषायाः
तेषां षण्णां रसानां योनिरुदकम् ।

छेदनोपशमने द्वे कर्मणी तयोर्मिश्रीभावात् साधार-
णत्वं स्वाद्वस्वादुताभक्तिः हिताहितौ प्रभावौ पञ्च महा-
भूतविकाराः त्वाश्रयाः प्रकृतिविकृतिविचारदेशकालवशा-
स्तेषु आश्रयेषु द्रव्यसंज्ञकेषु गुणा गुरुलघुशीतोष्णस्निग्ध-
रूक्षाद्याः क्षरणात् क्षारो नासौ रसो द्रव्यं तदनेकरस-
समुत्पन्नमनेकरसकटुकलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं
करणाभिनिर्वृत्तम् अव्यक्तीभावस्तु खलु रसानां प्रकृतावनु-
रसे रससमन्विते वा द्रव्ये अपरिसंख्येयत्वं पुनरेतेषामाश्रया-
दीनां विशेषानाश्रयते न च तस्मादन्यत्वमुपपद्यते परस्परं
संसृष्टभूयिष्ठत्वान्न चैषामभिनिर्वृत्तिगुणप्रकृतीनामपरिसंख्ये-
यत्वं भवति । तस्मान्न संसृष्टानां रसानां कर्मोपदिशन्ति
बुद्धिमन्तः । तच्चैव कारणमपेक्षमाणाः षण्णां रसानां परस्प-

रेण संसृष्टानां लक्षणपृथक्त्वमुपदेक्ष्यामः। अग्रे तु तावद्‌द्रव्यभेदमभिप्रेत्य किञ्चिदभिधास्यामः। द्रव्यं पाञ्चभौतिकमस्मिन्नेवार्थे तच्चेतनावदचेतनञ्च। तस्य गुणाः शब्दादयो गुर्वादयश्च द्रवान्ताः कर्म पञ्चविधमुक्तं वमनादि तत्र द्रव्याणि गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धगुणा बहुलानि पार्थिवानि तान्युपचयसङ्घातगौरवस्थैर्यकराणि द्रवस्निग्धशीतमन्दमृदुपिच्छिलसररसगुणबहुलान्याप्यानि तानि उपक्लेदस्नेहबन्धविष्यन्दप्रह्लादकराणि उष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूपगुणबहुलानि आग्नेयानि तानि दाहपाकप्रभाप्रकाशवर्णकराणि लघुशीतरूक्षखरविशदसूक्ष्मस्पर्शगुणबहुलानि वायवीनि तानि रौक्ष्यग्लानिविचारवैशद्यलाघवकराणि मृदुलघुसूक्ष्मश्लक्ष्णशब्दगुणबहुलान्याकाशात्मकानि तानि मार्दवसौशिर्यलाघवकराणि अनेनोपदेशेन नानौषधिभूतं जगति किञ्चिद्‌द्रव्यमुपलभ्यते। तां युक्तिमर्थञ्च तं तमभिप्रेत्य न च गुणप्रभावादेव कार्मुकाणि भवन्ति। द्रव्याणि हि द्रव्यप्रभावाद् गुणप्रभावाद् द्रव्यगुणप्रभावाच्च तस्मिंस्तस्मिन् काले तत्तदधिष्ठानमासाद्य तां ताञ्च युक्तिं यत् कुर्वन्ति तत्कर्म येन कुर्वन्ति तद्वीर्यं यत्र कुर्वन्ति स कालो यथा कुर्वन्ति स उपायो यत्साधयन्ति तत् फलं भेदस्त्वेषां त्रिषष्टिविधिविकल्पो द्रव्यदेशकालप्रभावात्तदुपदेक्ष्यामः।

स्वादुरम्लादिभिर्योगं शेषैरम्लादयः पृथक्।
यान्ति पञ्चदशैतानि द्रव्याणि द्विरसानि तु॥
पृथगम्लादियुक्तस्य योगः शेषैः पृथग्भवेत्।

मधुरस्य तथाम्लस्य लवणस्य कटोस्तथा ॥
त्रिरसानि यथासंख्यं द्रव्याण्युक्तानि विंशतिः ।
वक्ष्यन्ते तु चतुष्केण द्रव्याणि दश पञ्च च ॥
स्वाद्वम्लौ सहितौ योगं लवणाद्यैः पृथग्गतौ ।
योगं शेषैः पृथग्यातः चतुष्कं रससंख्यया ॥
सहितौ स्वादुलवणौ तद्वत्कट्वादिभिः पृथक् ।
युक्तौ शेषैः पृथग्योगं यातः स्वादूषणौ यथा ॥
कट्वाद्यैरम्ललवणौ संयुक्तौ सहितौ पृथक् ।
यातः शेषैः पृथग्योगं शेषैरम्लकटू तथा ॥
युज्यते तु कषायेण सतिक्तौ लवणोषणौ ।
षट् तु पञ्चरसान्याहुरेकैकस्यापवर्जनात् ॥
षट् चैवैकरसानि स्युरेकं षड्रसमेव तु ।
इति त्रिषष्टिर्द्रव्याणां निर्दिष्टा रससंख्यया ॥
त्रिषष्टिः स्यात्त्वसंख्येया रसान्न रसकल्पनात् ।
रसास्तरतमाभ्यस्ताः संख्यामभिपतन्ति हि ॥
संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा ।
रसानां तत्र योग्यत्वात् कल्पिता रसचिन्तकैः ॥
क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित् ।
दोषौषधादीन् सञ्चिन्त्य भिषजा सिद्धिमिच्छता ॥
द्रव्याणि द्विरसादीनि संयुक्तांश्च रसान् बुधः ।
रसानेकैकशश्चैव कल्पयन्ति गदान् प्रति ॥
यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित् ।
न समुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु ॥

व्यक्तः शुक्तस्य चादौ च रसो द्रव्यस्य लक्ष्यते ।
विपर्ययेणानुरसो रसो नास्ति हि सप्तमः ॥
परापरत्वे युक्तिश्च संख्या संयोग एव च ।
विभागश्च पृथक्त्वञ्च परिमाणमथापि च ॥
संस्कारोऽभ्यास इत्येते गुणा ज्ञेयाः परादयः ।
सिद्धुपायः चिकित्साया लक्षणैस्तान् प्रवक्ष्यते ॥
देशकालवयोमानपाकवीर्यरसादिषु ।
परापरत्वे युक्तिस्तु योजनाया च युज्यते ॥
संख्या स्याद्गणितं योगः सहसा योग उच्यते ।
द्रव्याणां द्वन्द्वसर्वैककर्मजो नित्य एव च ॥
विभागस्तु विभक्तिस्तु वियोगो भागशो ग्रहः ।
पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता ॥
परिमाणं पुनर्मानं संस्कारः कारणं मतम् ।
भावाभ्यसनमभ्यासशीलनं सततक्रिया ॥
इति स्वलक्षणैरुक्ता गुणाः सर्वे परादयः ।
चिकित्सा यैरविदितैर्न यथावत् प्रवर्त्तते ॥
गुणा गुणाश्रया नोक्तास्तस्माद्रसगुणान् भिषक् ।
विद्याद्द्रव्यगुणान् कर्त्तुरभिप्रायाः पृथग्विधाः ॥
अतश्च प्रकृतिं बुद्धा देशकालान्तराणि च ।
तत्र कर्तुरभिप्रायानुपायांश्चार्थमादिशेत् ॥
परस्तातः प्रवक्ष्यन्ते रसानां षड्विभक्तयः ।
षट् पञ्च भूतप्रभवाः संख्यातास्च यथा रसा इति ॥

सौम्याः खल्वापोऽन्तरिक्षप्रभवाः प्रकृतिशीता लघ्व्यश्च । अव्यक्तरसाश्च तास्त्वन्तरिक्षाद्भ्रश्यमाना भ्रष्टाश्च पञ्चमहा-

भूतगुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्त्तीरभिप्रीणयन्ति यासु मूर्त्तिषु षडभिमूर्च्छन्ति रसास्तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो रसः पृथिव्यग्निभूयिष्ठादम्लः सलिलाग्निभूयिष्ठाल्लवणो वाय्वग्निभूयिष्ठत्वात् कटुको वाय्वाकाशातिरेकात्तिक्तः पवनकषायातिरेकात् कषायः। एवमेषां रसानां षट्त्वमुत्पन्नमूनातिरेकविशेषान्महाभूतानामिव जङ्गमस्थावराणां नानावर्णाकृतिविशेषाः षड्ऋतुकत्वाच्च कालस्योत्पन्नो महाभूतानामूनातिरेकविशेषः। तत्राग्निमारुतात्मका रसाः प्रायेणोर्द्ध्वभाजो लाघवत्वात् प्लवकत्वाच्च वायोरूर्द्ध्वज्वलनत्वाच्च वह्नेः सलिलपृथिव्यात्मकास्तु प्रायेणाधोभाजः पृथिव्या गुरुत्वान्निम्नगत्वाच्चोदकस्य व्यामिश्रात्मका पुनरुभयतो भाजः तेषां षण्णां रसानामेकैकस्य यथाद्रव्यगुणकर्माण्यनुव्याख्यास्यामः। तत्र मधुरो रसः शरीरसात्म्याद्रसरुधिरमांसमेदोऽस्थिमज्जौजः शुक्राभिवर्द्धन आयुष्यः षडिन्द्रियप्रसादनो बलवर्णकरः पित्तविषमारुतघ्नस्तृष्णाप्रशमनः त्वच्यः केश्यः कण्ठ्यः प्रीणनो जीवनस्तर्पणः स्नेहनः स्थैर्यकरः क्षीणक्षतसन्धानकरः घ्राणमुखकण्ठोष्ठतालुप्रह्लादनो दाहमूर्च्छाप्रशमनः षट्पदपिपीलकानामिष्टतमः स्निग्धः शीतो गुरुश्च स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः स्थौल्यं मार्द्दवमालस्यमतिस्वप्नं गौरवमनन्नाभिलाषमग्नेर्दौर्बल्यमास्यकण्ठमांसाभिवृद्धिं श्वासकासप्रतिश्यायालसकशीतज्वरानाहास्यमाधुर्य्यवमथुसंज्ञास्वरप्रणाशगलगण्डमालाश्लीपदगलशोफबस्तिधमनीगुदोपलेपाक्ष्यामयानभिष्यन्दमित्येवंप्रभृतीन् कफजान्विकारानुपजनयन्ति। अम्लो रसो

भक्तं रोचयति अग्निं दीपयति देहं बृंहयति ऊर्जयति मनो बोधयति इन्द्रियाणि बलं वर्द्धयति वातमनुलोमयति हृदयं तर्पयति आस्यं संस्रावयति भुक्तमनुकर्षयति क्लेदं जनयति लघुरूक्षः स्निग्धश्च स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो दन्तान् हर्षयति तर्पयति समीलयति अक्षिणी संवीजयति लोमानि कफं विलापयति पित्तमभिवर्द्धयति रक्तं दूषयति मांसं विदहति कायं शिथिलीकरोति चीणक्षतदुर्बलानां श्वयथुमापादयति अपिच क्षताभिहतदष्टदग्धभग्नशूनच्युतावमूत्रितपरिसर्पितमर्दितच्छिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात्परिदहति कण्ठमुरोहृदयं च लवणो रसः पाचनः क्लेदनः दीपनः च्यावनः छेदनः तीक्ष्णः सरोविकास्यधःस्रंस्यवकाशकरो वातहरः स्तम्भबन्धसङ्घातविधमनः सर्वरसप्रत्यनीकभूत आस्यं विस्रावयति कफं विष्यन्दयति मार्गान् शोधयति सर्वशरीरावयवान् मृदूकरोति रोचयत्याहारमाहारयोगीनात्यर्थंगुरुः स्निग्ध उष्णश्च स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानः पित्तं कोपयति रक्तं वर्द्धयति हर्षयति मूर्च्छयति तापयति दारयति कुष्णातिमांसानि प्रगालयति कुष्ठानि विषं दूषयति शोफान् स्फोटयति दन्तान् श्यावयति पुंस्त्वमुपहन्ति इन्द्रियाण्युपरुणद्धि वलीपालित्यखालित्यमापादयति च लोहितपित्ताम्लपित्तवीसर्पवातलोहितविचर्चिकेन्द्रलुप्तप्रभृतीन्विकारानुपजनयति कटुको रसो वक्त्रं शोधयति अग्निं दीपयति भुक्तं शोषयति घ्राणमास्रावयति चक्षुर्विरेचयति स्फुटीकरोतीन्द्रियाणि अलसकश्वयथूपचयो दर्काभिष्यन्दस्नेहस्वेद-

क्लेदमलानुपहन्ति रोचयत्यशनं कण्डूर्विनाशयति व्रणा-
नवसादयति क्रिमीन् हिनस्ति मांसं विलिखति शोणित-
सङ्घातं भिनत्ति बन्धांश्छिनत्ति मार्गान् विवृणोति श्लेष्माणं
शमयति लघुस्तीक्ष्णो रूक्षश्च स एवंगुणोऽप्येक एवात्यर्थमुप-
युज्यमानो विपाकप्रभावात्पौंस्त्वमुपहन्ति रसवीर्यप्रभावा-
न्मोहयति ग्लापयति सादयति कर्षयति मूर्च्छयति नमयति
कण्ठं परिदहति शरीरतापमुपजनयति बलं क्षिणोति
तृष्णां जनयति वाय्वग्निबाहुल्याद् भ्रमदवथुकम्पतोदभे-
दैश्चरणभुजपार्श्वपृष्ठप्रभृतिषु मारुतजान् विकारानुपजन-
यति तिक्तो रसः स्वयमरोचिष्णुररोचकघ्नो विषघ्नः क्रिमि-
घ्नः मूर्च्छादाहकण्डूकुष्ठतृष्णाप्रशमनः त्वङ्मांसयोः स्थिरी-
करणो ज्वरघ्नो दीपनः पाचनः स्तन्यशोधनो लेखनः क्लेद-
मेदोवसामज्जलसीकापूयस्वेदमूत्रपुरीषपित्तश्लेष्मोपशोषणः
रूक्षः शीतो लघुश्च स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमानो
रौक्ष्यात् खरविशदस्वभावाच्च रसरुधिरमांसमेदोऽस्थि-
मज्जाशुक्राण्युच्छोषयति वदनमुपशोषयति अपरांश्च वात-
विकारानुपजनयति कषायो रसः संशोषणः संग्राही सन्धा-
रणः पीडनो रोपणः शोषणः स्तम्भनः श्लेष्मरक्तपित्तप्रशमनः
शरीरक्लेदस्योपयुक्ता रूक्षः शीतो गुरुश्च स एवंगुणोऽप्येक
एवात्यर्थमुपयुज्यमानः आस्यं शोषयति हृदयं पीडयति उद-
रमाध्मापयति वाचं निगृह्णाति स्रोतांस्यवबध्नाति श्याव-
त्वमापादयति पौंस्त्वमुपहन्ति विष्टभ्य जरां गच्छति वात-
मूत्रपुरीषाण्यवगृह्णाति कर्शयति ग्लापयति तर्षयति स्तम्भ-
यति खरविशदरूक्षत्वात्पक्षवधग्रहापतानकार्दितप्रभृतींश्च

वातविकारानुपजनयतीत्येवमेते षड्रसाः पृथक्त्वेन वा मात्रशः सम्यगुपयुज्यमाना उपकारकरा अध्यात्मलोकस्या-पकारकराः पुनरतोऽन्यथोपयुज्यमानांस्तान्विद्वानुपकारार्थ-मेव मात्रशः सम्यगुपयोजयेदिति।

भवति चात्र। शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः।
तयोरम्लं यदुष्णं च यच्चोष्णं कटुकं तयोः॥
तेषां रसोपदेशेन निर्देश्यो गुणसंग्रहः।
वीर्यतो विपरीतानां पाकतश्चोपदेक्ष्यते॥
यथापयो यथासर्पिर्यथा वा चव्यचित्रकौ।
एवमादीनि चान्यानि निर्दिशेद्रसतो भिषक्॥
मधुरं किञ्चिदुष्णं स्यात् कषायं तिक्तमेव च।
यथा महत्पञ्चमूलं यथाब्जानूपमामिषम्॥
लवणं सैन्धवं नोष्णमम्लमामलकं तथा।
पिप्पली नागरं वृष्यं कटु चावृष्यमुच्यते॥
कषायः स्तम्भनः शीतः सोऽभयास्वन्यथा मतः।
तस्माद्रसोपदेशेन न सर्वं द्रव्यमादिशेत्॥
दृष्टं तुल्यरसेऽप्येवं द्रव्ये द्रव्ये गुणान्तरम्।
रौक्ष्यात् कषायो रूक्षाणामुत्तमो मध्यमः कटुः॥
तिक्तोऽवरस्तथोष्णानामुष्णत्वाल्लवणः परः।
मध्योऽम्लो लवणश्चान्त्यो रसः स्नेहान्नियच्छति॥
मध्यः कष्टावराः शैत्यात् कषायस्वादुतिक्तकाः।
स्वादुर्गुरुत्वादधिकः कषायाल्लवणोऽवरः॥
अम्लात् कटुस्ततस्तिक्तो लघुत्वादुत्तमो मतः।
केचिल्लघूनामवरमिच्छन्ति लवणं रसम्॥

गौरवे लाघवे चैव सोऽवरस्तूभयोरपि ।
परश्चातो विपाकानां लक्षणं सम्प्रवक्ष्यते ॥
कटुतिक्तकषायाणां विपाकः प्रायशः कटुः ।
अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा ॥
मधुरो लवणाम्लौ च स्निग्धभावात्त्रयो रसाः ।
वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः ॥
कटुतिक्तकषायास्तु रूक्षभावात्त्रयो रसाः ।
दुःखा विमोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम् ॥
शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः ।
मधुरः सृष्टविण्मूत्रो विपाकः कफशुक्रलः ॥
पित्तकृत् सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः ।
तेषां गुरुः स्यान्मधुरः कटुकाम्लावतोऽन्यथा ।
विपाकलक्षणस्याल्पमध्यभूयस्त्वमेव च ।
द्रव्याणां गुणवैशेष्यात्तत्र तत्रोपलक्षयेत् ॥
तीक्ष्णं रूक्षं मृदु स्निग्धं लघूष्णं गुरु शीतलम् ।
वीर्य्यमष्टविधं केचित् केचिद्द्विविधमास्थिताः ॥
शीतोष्णमिति वीर्य्यन्तु क्रियते येन या क्रिया ।
नावीर्य्यं कुरुते किञ्चित् सर्वा वीर्य्यकृता क्रिया ॥
रसो निपाते द्रव्याणां विपाकः कर्म्मनिष्ठया ।
वीर्य्यं यावदधीवासान्निपाताच्चोपलभ्यते ॥
रसवीर्य्यविपाकानां सामान्यं यस्य लक्ष्यते ।
विशेषः कर्म्मणाञ्चैव प्रभावस्तस्य च स्मृतः ॥
कटुकः कटुकः पाके वीर्य्योष्णश्चित्रको मतः ।
तद्वद्दन्ती प्रभावात्तु विरेचयति सा नरम् ॥

विषं विषघ्नमुक्तं यत्प्रभावस्तत्र कारणम्।
ऊर्द्धानुलोमनं यच्च तत्प्रभावप्रभावितम्॥
मणीनां धारणीयानां कर्म्म यद्विविधात्मकम्॥
तत्प्रभावकृतं तेषां प्रभावः विन्त्य इष्यते।
सम्यग्विपाकवीर्य्याणि प्रभावश्चाप्युदाहृतः॥
षखां रसानां विज्ञानमुपदेक्ष्याम्यतः परम्।
स्नेहनप्रीणनाह्लादमार्दवैरुपलभ्यते॥
मुखस्थो मधुरश्चास्यं व्याप्नुवंल्लिम्पतीव च।
दन्तहर्षान्मुखस्रावात् स्वेदनात् मुखबोधनात्।
विदाहाच्चास्यकण्ठस्य प्राश्यैवाम्लं रसं वदेत्॥
प्रलीयन् क्लेदविष्यन्दलाघवं कुरुते मुखे।
यः शीघ्रं लवणो ज्ञेयः स विदाहान्मुखस्य च॥
संवेदयेद् यो रसानां निपाते तुदतीव च।
विदहन् मुखनासाक्षि संस्रावी स कटुः स्मृतः॥
प्रतिहन्ति निपाते यो रसनं स्वादते न च।
स तिक्तो मुखवैशद्यशोषप्रह्लादकारकः।
वैशद्यस्तम्भजाड्यैर्यो रसनं योजयेद्रसः॥
बध्नातीव च यः कण्ठं कषायः स विकास्यपि इति॥

एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच। भगवन्! श्रुतमेतदवितथमर्थसम्प्रयुक्तं भगवतो यथावद्द्रव्यकर्म्माधिकारि वचः परन्त्वाहारविकाराणां वैरोधिकानां लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषामहेति। तमुवाच भगवानात्रेयः देहधातुप्रत्यनीकभूतानि द्रव्याणि देहधातुविरोधमापाद्यन्ते परस्परविरुद्धानि कानिचित् संयोगात् संस्कारादपराणि देशकालमात्रादिभिश्चापराणि तथास्वभावा-

पराणि तत्र यान्याहारमधिकृत्य भूयिष्ठमुपयुज्यन्ते तेषामेकदेशं वैरोधिकमधिकृत्योपदेक्ष्यामः। न मत्स्यान् पयसा सहाभ्यवहरेत् उभयं ह्येतन्मधुरं मधुरविपाकं महाभिष्यन्दि शीतोष्णत्वाद्विरुद्धवीर्य्यं विरुद्धवीर्यत्वात् शोणितप्रदूषणाय महाभिष्यन्दित्वान्मार्गोपरोधाय च तदनन्तरमात्रेयमनुमान्य भद्रकाप्योऽग्निवेशमुवाच सर्वानेव मत्स्यान् पयसा सहाभ्यवहरेत् अन्यत्रैकस्माच्चिलिचिमात् स पुनः शाकलीसर्वतो लोहितराजिः शाकलिर्लोहितप्रकारः प्रायो भूमौ चरति तच्चेत् पयसा सहाभ्यवहरेन्निःसंशयं शोणितजानां विबन्धजानां वा व्याधीनामन्यतमं प्राप्नुयादिति नेति भगवानात्रेयः सर्वानेव मत्स्यान् पयसाभ्यवहरेद्विशेषतस्तु चिलिचिमं स हि महाभिष्यन्दितमत्वात् स्थूललक्षणतरानेतान् व्याधीनुपजनयत्यामविषमुदीरयति च ग्राम्यानूपौदकपिशितानि मधुतिलगुडपयोमाषमूलकबिसैर्विरूढधान्यैश्च नैकधा अद्यात् तन्मूलं बाधिर्य्यान्ध्यवेपथुजाड्यकलमूकतामैण्मिण्यमथवा मरणमाप्नोति न पौष्करं रोहिणीकं वा शाकं न कपोतान् सर्षपतैलभृष्टान्मधुपयोभ्यां सहाभ्यवहरेत् तन्मूलं हि शोणिताभिष्यन्दधमनीप्रतिचयापस्मारशङ्खकगलगण्डरोहिणीकानामन्यतमं प्राप्नोत्यथवा मरणमिति न मूलकलशुनकृष्णगन्धार्जकसुमुखसुरसादीनि भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात् न वास्तुशाकं न लिकुचपक्वं मधुपयोभ्यां सहोपयोज्यम्। एतद्धि मरणायाथवा बलवर्णतेजोवीर्योपरोधायालघुव्याधये षाण्ढ्याय च तदेव लिकुचपक्वं न माषसूपगुडसर्पिर्भिः सहोपयोज्यं वैरोधिकत्वात् तथाम्राम्रातकमा-

तुलुङ्गलिकुचकरमर्द्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बव क-
पित्थतिन्तिडीकपारावताक्षोटपनसनालिकेरदाड़िमामलका-
न्येवम्प्रकाराणि चान्यानि सर्वं चाम्लं द्रवं मद्रवं च पयसा
सह विरुद्धं कङ्गुवरकमकुष्ठककुलुथमाषनिष्पावाः पयसा
सह विरुद्धाः पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहो-
पयुक्तं विरुद्धं वातञ्चातिकोपयति हारिद्रकः सर्षपतैल-
भृष्टो विरुद्धश्चातिकोपयति उपोदका तिलकल्कसिद्धा हेतुर-
तीसारस्य बलाका वारुण्याकुल्माषैरपि विरुद्धा सैव शूकर-
वसापरिभृष्टा सद्यो व्यापादयति मायूरमांसमेरण्डसीसका-
सक्तमेरण्डाग्निप्लुष्टं सद्यो व्यापादयति तदेव भस्मपांसुपरि-
ध्वस्तं सक्षौद्रं मरणाय मत्स्यनैलनिस्ताड़नसिद्धाः पिप्पल्य-
स्तथा काकमाची मधु च मरणाय मधु चोष्णमुष्णार्त्तस्य
मधु मरणाय मधुसर्पिषी तुल्ये मधु वारि चान्तरिक्षं समधृतं
मधु पुष्करबीजं मधु पीत्वोष्णोदकं भल्लातकोष्णोदकं तक्र-
सिद्धः काम्पिल्यकः पर्युषिताकाकमाची अङ्गारशूल्यो भास
इति विरुद्धानीत्येतद्यथा प्रश्नमभिनिर्दिष्टम् ।

भवन्ति चात्र श्लोकाः ।

यत्किञ्चिद्दोषमासाद्य न निर्हरति कायतः ।
आहारजातं तत् सर्वमहितायोपपद्यते ॥
यच्चापि देशकालाग्निमात्रासात्म्यानिलादिभिः ।
संस्कारतो वीर्य्यतश्च कोष्ठावस्थाक्रमैरपि ॥
परिहारोपचाराभ्यां पाकात् संयोगतोऽपि च ।
विरुद्धं तच्च न हितं हृत्सम्पद्विधिभिश्च यत् ॥
विरुद्धं देशतस्तावद्रूक्षतीक्ष्णादि धन्वनि ।

आनूपे स्निग्धशीतादि भेषजं यन्निषेव्यते ॥
कालतोऽपि विरुद्धं यच्छीतरूक्षादिसेवनम् ।
शीते काले तथोष्णे च कटुकोष्णादिसेवनम् ॥
विरुद्धमनले तद्वन्नानुरूपं चतुर्विधे ।
मधुसर्पिःसमधृतं मात्रया तद्विरुध्यते ॥
कटुकोष्णादिसात्म्यस्य स्वादुशीतादिसेवनम् ।
यत्तत् सात्म्यविरुद्धन्तु विरुद्धं त्वनलादिभिः ॥
या समानगुणाभ्यासविरुद्धाचौषधक्रिया ।
संस्कारतो विरुद्धन्तद्यद्भोज्यं विषवद्व्रजेत् ॥
ऐरण्डसीसकासक्तं शिखिमांसं तथैव हि ।
विरुद्धं वीर्यतो ज्ञेयं वीर्यतः शीतलात्मकम् ॥
तत् संयोज्योष्णवीर्येण द्रव्येण सह सेव्यते ।
क्रूरकोष्ठस्य चात्यल्पं मन्दवीर्यमभेदनम् ॥
मृदुकोष्ठस्य गुरुचभेदनीयं तथा बहु ।
एतत् कोष्ठविरुद्धन्तु विरुद्धं स्यादवस्थया ॥
श्रमव्यपाय व्यायामसक्तस्यानिलकोपनम् ।
निद्रालसस्यालसस्य भोजनं श्लेष्मकोपनम् ॥
यश्चानुत्सृज्य विण्मूत्रं भुङ्क्ते यश्चाबुभुक्षितः ।
तच्च क्रमविरुद्धं स्याद्यश्चातिक्षुद्वशानुगः ॥
परिहारविरुद्धन्तु वराहादीन्निषेव्य यत् ।
सेवेतोष्णं घृतादींश्च पीत्वा शीतं निषेवते ॥
विरुद्धं पाकतश्चापि दुष्टदुर्दारुसाधितम् ।
अपक्वतण्डुलात्यर्थपक्वदग्धं च यद्भवेत् ॥
संयोगतो विरुद्धं तद्यथाम्लं पयसा सह ।

अमनोरुचितं यच्च हृद्विरुद्धं तदुच्यते ॥
सम्पद्विरुद्धं तद्विद्यादसञ्जातरसन्तु तत् ।
अतिक्रान्तरसं वापि विपन्नरसमेव वा ॥
ज्ञेयं विधिविरुद्धन्तु भुज्यते निभृतेन यत् ।
तदेवंविधमन्नं स्याद्विरुद्धमुपयोजितम् ॥
सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च ।
स्नेहव्यायामबलिनो विरुद्धं वितथं भवेत् ॥
षाण्ढ्यान्ध्यवीसर्पदकोदराणां विस्फोटकोन्मादभगन्दराणाम्
मूर्च्छामदाध्मानगलग्रहाणां पाण्ड्वामयस्यामविषस्य चैव ॥
किलासकुष्ठग्रहणीगदानां शोथाम्लपित्तज्वरपीनसानाम् ।
सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम् इति ॥

एषाञ्च खलु परेषाञ्च वैरोधिकनिमित्तानां व्याधीनामिमे भावाः प्रतिकराः । यथा वमनं विरेचनञ्च तद्विरोधिनाञ्च द्रव्याणां संशमनार्थमुपयोगस्तथाविधैश्च द्रव्यैः पूर्वमभिसंस्कारः शरीरस्येति ।

भवति चात्र । विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ।
वमनं शमनञ्चैव पूर्वं वा हितसेवनम् इति ॥

तत्र श्लोकाः । मतिरासीन्महर्षीणां या या रसविनिश्चये ।
द्रव्याणि गुणकर्मभ्यां द्रव्यसंख्या रसाश्रयाः ॥
कारणं रससंख्या च रसानुरसलक्षणम् ।
परादीनां गुणानाञ्च लक्षणानि पृथक् पृथक् ॥
पञ्चात्मकानां षट्त्वञ्च रसानां येन हेतुना ।
ऊर्द्धानुलोमभाजश्च यद्गुणातिशयाद्रसाः ॥
षण्णां रसानां षट् चैव सुविभक्ता विभक्तयः ।

उद्देशश्चापविद्धस्य द्रव्याणां गुणकर्मणि ॥
प्रवरावरमध्यत्वं रसानां गौरवादिषु।
पाकप्रभावयोर्लिङ्गं वीर्य्यसंख्याविनिश्चयः ॥
यस्यामास्वाद्यमानानां रसानां यत् स्वलक्षणम्।
यद्यद्विरुध्यते यस्माद्येन यत्कारि चैव यत् ॥
वैरोधिकनिमित्तानां व्याधीनामौषधञ्च यत्।
आत्रेयभद्रकाप्यायौ तत्सर्वमवदन्मुनिः ॥
इत्यन्नपानचतुष्के आत्रेयभद्रकापीयोऽध्यायः समाप्तः।

---

## सप्तविंशोऽध्यायः।

अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः।

इष्टवर्णगन्धरसस्पर्शं विधिविहितमन्नपानं प्राणिनां प्राणसंज्ञकानां प्राणमाचक्षते कुशलाः। प्रत्यक्षफलदर्शनात्तदिन्धना ह्यन्तराग्नेः स्थितिस्तत् सत्त्वमूर्जयति। तच्छरीरधातुव्यूहबलवर्णेन्द्रियप्रसादकरं यथोक्तमुपसेव्यमानं विपरीतमहिताय सम्पद्यते। तस्माद्धिताहितावबोधनार्थमन्नपानविधिमखिलेनोपदेक्ष्यामः। अग्निवेश! तत्स्वभावादुदकं क्लेदयति लवणं विष्यन्दयति क्षारः पाचयति मधु सन्दधाति सर्पिः स्नेहयति क्षीरं जीवयति मांसं बृंहयति

रसं प्रीणयति सुरा जर्जरीकरोति सीधु अवधमयति द्राक्षासवं दीपयति फाणितमाचिनोति दधि शोफञ्जनयति पिण्याकशाकं ग्लपयति प्रभूतान्तर्मलो माषसूपः दृष्टिशुक्रघ्नः क्षारः प्रायः पित्तमम्लमन्यत्र दाडिमामलकात् प्रायः श्लेष्मलमन्यत्र मधुनः पुराणाच्च शालियवगोधूमात् प्रायः कटुकं वातलमवृष्यं चान्यत्र पिप्पली विश्वभेषजात् परमतो वर्गसंग्रहेणाहारद्रव्याण्यनुव्याख्यास्यामः ।

शूकधान्यशमीधान्यमांसशाकफलाश्रयान् ।
वर्गान् हरितमद्याम्बुगोरसेक्षुविकारिकान् ॥
दश द्वौ च परौ वर्गौ कृतान्नाहारयोगिनाम् ।
रसवीर्यविपाकैश्च प्रभावैश्चोपदेक्ष्यते ॥
रक्तशालिर्महाशालिः कलमः शकुनाहृतः ।
तूर्णको दीर्घशूकश्च गौरः पाण्डुकलाङ्कलौ ॥
सुगन्धिकालोहवालाः शारिवाख्याः प्रमोदकाः ।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥
शीता रसे विपाके च मधुराः स्वल्पमारुताः ।
बद्धाल्पवर्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः ॥
रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः ।
महांस्तस्यानु कलमस्तस्याप्यनु ततः परे ॥
यवका हायनाः पांसुवाप्यो नैषधकादयः ।
शालीनां शालयः कुर्वन्त्यनुकारं गुणागुणैः ॥
शीतः स्निग्धो गुरुः स्वादुस्त्रिदोषघ्नः स्थिरात्मकः ।
षष्टिकः प्रवरो गौरः कृष्णगौरस्ततोऽनु च ॥
वरकोद्दालकौ चीनशारदोज्ज्वलदर्दुराः ।

गन्धनाः कुरुविन्दाश्च षष्टिकाल्पान्तरा गुणैः ॥
मयूरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥
सकोरदूषः श्यामाकः कषायमधुरो लघुः ।
वातलः कफपित्तघ्नः शीतसंग्राहिशोषणः ॥
हस्तिश्यामाकनीवारतोदपर्णीगवेधुकाः ।
प्रशातिकाम्भःश्यामाकलौहित्याणुप्रियङ्गवः ॥
मुकुन्दाजम्बिगन्दूटीवरूकावरकास्तथा ।
शिम्बिरेत्कटजूर्णाह्वाश्यामाकसदृशा गुणैः ॥
रूक्षःशीतो गुरुः स्वादुः बहुवातशकृद्यवः ।
स्थैर्यकृत् सकषायस्तु बल्यः श्लेष्मविकारनुत् ॥
सन्धानकृद्वातहरो गोधूमः स्वादुशीतलः ।
जीवनो बृंहणो वृष्यः स्निग्धः स्थैर्यकरो गुरुः ॥
नान्दीमुखी मधूली च मधुरस्निग्धशीतले ।
इत्ययं शूकधान्यानां पूर्ववर्गः समाप्यते ॥

इति शूकधान्यवर्गः ।

कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः ।
विशदः श्लेष्मपित्तघ्नो मुद्गः सूप्योत्तमो मतः ॥
रूक्षश्चैव कषायश्च वातलः श्लेष्मपित्तहा ।
विष्टम्भी चाप्यनुष्णश्च राजमाषः प्रकीर्तितः ॥
वृष्यः परं वातहरः स्निग्धोष्णमधुरो गुरुः ।
बल्यो बहुमलः पुंस्त्वं माषः शीघ्रं ददाति च ॥
उष्णाः कषायाः पाकेऽम्लाः कफशुक्रानिलापहाः ।
कुलुत्था ग्राहिणः कासहिक्काश्वासार्शसां हिताः ॥

मधुरामधुराः पाके ग्राहिणो रूक्षशीतलाः ।
मकुष्ठकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु ॥
चणकाश्चमसूराश्च खण्डिकाः सह रेणवः ।
लघवः शीतमधुराः सकषाया विरूक्षणाः ॥
पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ।
तेषां मसूरः संग्राही कषायो वातलः परम् ॥
स्निग्धोष्णमधुरस्तीक्ष्णः कषायः कटुकस्तिलः ।
त्वच्यः केश्यश्च बल्यश्च वातघ्नः कफपित्तकृत् ॥
गुर्व्योऽथ मधुराः शीता बलघ्ना रूक्षणात्मिकाः ।
सस्नेहा बलिभिर्भोज्या विविधाः शिम्बिजातयः ॥
आढकी कफपित्तघ्नी वातला कफवातनुत् ।
अवल्गुजः सण्डगजो निष्पावा वातपित्तलाः ॥
काकाण्डोलात्मगुप्तानां माषवत् फलमादिशेत् ।
द्वितीयोऽयं शमीधान्यवर्गः प्रोक्तो महर्षिणा ॥
इति शमीधान्यवर्गः ।
गोखराश्वतरोष्ट्राश्च द्वीपिसिंहाश्ववानराः ।
वृको व्याघ्रस्तरक्षुश्च बभ्रुमार्जारमूषिकाः ॥
लोपाको जम्बुकः श्येनो वार्ताद्याषवायसौ ।
शशघ्नीमधुहाभासौ गृध्रोलूककुलिङ्गकाः ॥
धूमीका कुररश्चेति प्रसहा मृगपक्षिणः ।
श्वेतः श्यामः चित्रपृष्ठः कालकः काकुलीमृगः ॥
कूचीका चिल्लडी भेको गोधा शल्लकशण्डकौ ।
कदलीनकुलः श्वाविदिति भूमिशयाः स्मृताः ॥
सृमरश्चमरः खड्गो महिषो गवयो गजः ।

न्यंकुर्वराहश्चानूपा मृगाः सर्वे रुरुस्तथा ॥
कूर्मः कर्कटको मत्स्यः शिशुमारस्तिमिङ्गिलः ।
शुक्तिशङ्खोद्रकुम्भीरावुलूपीमकरादयः ॥
इति वारिशयाः प्रोक्ता वक्ष्यन्ते वारिचारिणः ।
हंसः क्रौञ्चो बलाका च बकः कारण्डवः प्लवः ॥
शरारी पुष्करावश्च केसरी मणितुण्डकः ।
मृणालकण्ठो मद्गुश्च कादम्बः काकतुण्डकः ॥
उत्क्रोशः पुण्डरीकाक्षो मेघरावोऽम्बुकुक्कुटी ।
आरानन्दीमुखावाटीसुमुखाः सहचारिणः ॥
रोहिणी कामकाली च सारसो रक्तशीर्षकः ।
चक्रवाकास्तथान्ये च खगाः सन्त्यम्बुचारिणः ॥
पृषतः शरभो रामः श्वदंष्ट्री मृगमातृकाः ।
शशो रणौ कुरङ्गश्च गोकर्णः कोट्टकारकः ॥
चारुष्को हरिणैणौ च शम्बरः कालपुच्छकः ।
ऋष्यश्च वरपोतश्च विज्ञेया जाङ्गला मृगाः ॥
लावो वार्त्तीरकश्चैव वार्तीकः सकपिञ्जलः ।
चकोरश्चोपचक्रश्च कर्कभो रक्तवर्मकः ॥
लावाद्या विष्किरास्त्वेते वक्ष्यन्ते वर्तकादयः ।
वर्त्तको वर्त्तिकाश्चैव वर्ही तित्तिरिकुक्कुटौ ॥
कङ्कशारपदेन्द्राभगोनर्दगिरिवर्त्तकाः ।
क्रकरो वकरश्चैव वारडाश्चेति विष्किराः ॥
शतपत्री भृङ्गराजः कोयष्टी जीवजीवकः ।
कैरातः कोकिलोऽत्यूहो गोपापुत्रः प्रियात्मकः ॥
लट्वा लटूषको दट्टुर्वेडभा डिण्डिमाणवः ।

जटी दुन्दुभिपाक्कारलोहपृष्ठकुलिङ्गकाः ॥
कपोतशुकशाकष्ठ चिरिटीकङ्कुयष्टिकाः ।
शारिका कलविङ्कश्च चटकोऽङ्गारचूडकः ॥
पारावतः पाण्डविक इत्युक्ताः प्रतुदा द्विजाः ।
प्रसह्य भक्षयन्तीति प्रसहास्तेन संज्ञिताः ॥
विकीर्य्य विष्किरास्चेति प्रतुद्य प्रतुदाः स्मृताः ।
योनिरष्टविधा त्वेषां मांसानां परिकीर्त्तिता ॥
प्रसहा भूशया नूपवारिजा वारिचारिणः ।
गुरूष्णस्निग्धमधुरा बलोपचयवर्द्धनाः ॥
वृष्याः परं वातहराः कफपित्ताभिवर्द्धिनः ।
हिता व्यायामनित्यानां नरा दीप्ताग्नयश्च ये ॥
प्रसहानां विशेषेण मांसं मांसाशिनो भिषक् ।
जीर्णार्शोग्रहणीदोषशोषार्त्तानां प्रयोजयेत् ॥
लावाद्यो वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ।
लघवः शीतमधुराः सकषाया हिता नृणाम् ॥
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ।
विष्करावर्तकाद्यास्तु प्रसहाल्पान्तरा गुणैः ॥
नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥
मांसं मधुरशीतत्वाद्गुरु बृंहणमाविकम् ।
योनावजाविके मिश्रगोचरत्वादनिश्चिते ॥
सामान्येनोपदिष्टानां मांसानां स्वगुणैः पृथक् ।
केषाञ्चिद्गुणवैशेष्याद्विशेष उपदेक्ष्यते ॥
दर्शनश्रोत्रमेधाग्निवयोवर्णस्वरायुषाम् ।

वर्हीं हिततमोवल्यो वातघ्नो मांसशुक्रलः॥
गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः।
वृंहणाः शुक्रलाश्चोक्ता हंसाः सस्वरनाशनाः॥
स्निग्धाश्चोष्णाश्च वृष्याश्च वृंहणाः स्वरबोधनाः।
बल्याः परं वातहराः स्वेदनाश्चरणायुधाः॥
गुरूष्णमधुरो नातिधान्वानूपनिषेवणात्।
तित्तिरिः सञ्जयेच्छीघ्रन्त्रीन्दोषाननिलोल्वणान्॥
पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः।
मन्दवातेषु शस्यन्ते शैत्यमाधुर्यलाघवात्॥
लावाः कषायमधुरा लघवोऽग्निविवर्धनाः।
सन्निपातप्रशमनाः कटुकाश्च विपाकतः।
कषायमधुराः शीता रक्तपित्तनिवर्हणाः॥
विपाके मधुराश्चैव कपोता गृहवासिनः।
तेभ्यो लघुतराः किञ्चित् कपोता वनवासिनः॥
शीताः संग्राहिणश्चैव स्वल्पमूत्राश्च ते मताः।
कषायविशदो रूक्षः शीतः पाके कटुर्लघुः॥
शशः स्वादुः प्रशस्तश्च सन्निपातेऽनिलो वरः।
चटका मधुराः स्निग्धा बलशुक्रविवर्धनाः॥
सन्निपातप्रशमनाः शमना मारुतस्य च।
मधुराः कटुकाः पाके त्रिदोषशमनाः शिवाः॥
लववो वर्द्धनिग्मूत्राः शीतार्यणाः प्रकीर्त्तिताः।
गोधा विपाके मधुराः कषायकटुका रसे॥
वातपित्तप्रशमनी वृंहणी बलवर्धनी।
शल्लको मधुराम्लश्च विपाके कटुकः स्मृतः॥

वातपित्तकफघ्नश्च कासश्वासहरस्तथा ।
शेवलाहारभोजित्वात् स्वप्नस्य च विवर्जनात् ॥
रोहितो दीपनीयश्च लघुः पाको महाबलः ।
गुरूष्णमधुरा बल्या बृंहणाः पवनापहाः ॥
मत्स्याः स्निग्धाश्च वृष्याश्च बहुदोषाः प्रकीर्तिताः ।
स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहम् ॥
वराहपिशितं बल्यं रोचनं स्वेदनं गुरु ॥
गव्यं केवलवातेषु पीनसे विषमज्वरे ।
शुष्ककासश्रमात्यग्निमांसक्षयहितञ्च यत् ॥
स्निग्धोष्णमधुरं वृष्यं माहिषं तर्पणम् ।
दार्ढ्यं बृहत्त्वमुत्साहं स्वप्नञ्च जनयत्यपि ॥
धार्त्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि ।
चटकानाञ्च यानि स्युरण्डानि च हितानि च ॥
रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च ।
मधुराण्यविपाकीनि सद्यो बलकराणि च ॥
शरीरबृंहणेनान्यत् दार्ढ्यं मांसाद्विशिष्यते ।
इति वर्गस्तृतीयोऽयं मांसानां परिकीर्त्तितः ॥

इति मांसवर्गः ।

पाठा शुषा शटीशाकं वास्तुकं सुनिषण्णकम् ।
विद्याद् ग्राहि त्रिदोषघ्नं भिन्नवर्चस्तु वास्तुकम् ॥
त्रिदोषशमनी वृष्या काकमाची रसायनम् ।
नात्युष्णशीता स्वर्या च भेदनी कुष्ठनाशनी ॥
राजक्षवकशाकन्तु त्रिदोषशमनं लघुः ।
ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम् ॥

कालशाकन्तु कटुकं दीपनङ्गरशोफजित्।
लघूष्णं वातलं रूक्षं करालं शाकमुच्यते॥
दीपनी चोष्णवीर्य्या च ग्राहणी कफमारुते।
प्रशस्यतेऽम्लचाङ्गेरी ग्रहण्यर्शोहिता च सा॥
मधुरा मधुरा पाके भेदनी श्लेष्मवर्द्धनी।
वृष्या स्निग्धा च शीता च मदघ्नी चाप्युपोदका॥
रूक्षो मदविषघ्नश्च प्रशस्तो रक्तपित्तिनाम्।
मधुरो मधुरः पाके शीतलस्तण्डुलीयकः॥
मण्डूकपर्णी वेत्राग्रं कुचेला वनतिक्तकम्।
कर्कोटकावल्गुजकौ पटोलं शकुलादनी॥
वृषपुष्पाणि शार्ङ्गेष्टा केदुकं सकटिल्लकम्।
नाडीकलायं गोजिह्वा वार्त्ताकं तिलपर्णिका।
कुलकं कार्कशं निम्बं शाकं पर्पटकस्य यत्॥
कफपित्तहरं तिक्तं शीतं कटु विपच्यते।
सर्वाणि सूप्यशाकानि फञ्जी चिल्ली कुतुम्बुकः॥
आलुकानि च सर्वाणि सपत्राणि कुटिञ्जकः।
शणशाल्मलिपुष्पाणि कर्बुदारः सुवर्चला॥
निष्पावः कोविदारश्च पत्तूरश्चुच्चुपर्णिका।
कुमारजीवो लट्टाकपालक्यामर्षकस्तथा॥
कलम्बो नालिका कुकुः कुसुम्भवृकधूमकौ।
लक्ष्मणः प्रपुनाडौ च नलिनीका कुठेरकः॥
लोणी कायवशाकश्च कुष्माण्डकमवल्गुजः।
यातुकः शालकल्याणी त्रिपर्णी पीलुपर्णिका॥
शाकङ्गुरु च रूक्षञ्च प्रायो विष्टभ्य जीर्य्यति।

मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम् ॥
स्विन्नं निष्पीड़ितरसं स्नेहाढ्यन्तत्प्रशस्यते ।
शणस्य कोविदारस्य कर्बुदारस्य शल्मलेः ॥
पुष्पं ग्राहि प्रशस्तञ्च रक्तपित्ते विशेषतः ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः ॥
कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम्
वायुं वत्सादनी हन्यात् कफङ्गण्डीरचित्रकौ ॥
श्रेयसी विल्वपर्णी च विलपत्रन्तु वातनुत् ।
भाण्डी शतावरी शाकं बलाजीवन्तिजञ्च यत् ॥
पार्वण्याः पर्वपुष्प्याश्च वातपित्तहरं स्मृतम् ।
लघु भिन्नशकृत्तिक्तं लाङ्गलक्युरुधूकयोः ॥
तिलवेतसशाकञ्च शाकं पञ्चाङ्गुलस्य वा ।
वातलं कटुतिक्ताम्लमधोमार्गप्रवर्त्तकम् ॥
रूक्षाम्लमुष्णङ्कौसुम्भं कफघ्नं पित्तवर्धनम् ।
त्रपुसैर्वारुकं स्वादु गुरु विष्टम्भि शीतलम् ॥
मुखप्रियञ्च रूक्षञ्च मूत्रलं त्रपुसं त्वति ।
वर्चोभेदीन्यलावूनि रूक्षशीतगुरूणि च ॥
चिर्भिटेर्वारुके तद्वद्वर्चोभेदहिते तु ते ।
केलूटञ्च कदम्बञ्च नदीमाषकमिन्दुकम् ॥
विषदं गुरुशीतं च समभिष्यन्दि चोच्यते ।
तरूटविसशालूककौञ्चादनकशेरुकम् ॥
शृङ्गाटकं कलोद्यञ्च गुरु विष्टम्भि शीतलम् ।
कुमुदोत्पलनालास्तु सपुष्पाः सफलाः स्मृताः ॥
शीताः स्वादुकषायास्तु कफमारुतकोपनाः ।

कषायमीषद्विष्टम्भि रक्तपित्तहरं स्मृतम् ॥
पौष्करन्तु भवेद्वीजं मधुरं रसपाकयोः।
बल्यः शीतो गुरुः स्निग्धस्तर्पणो बृंहणात्मकः॥
वातपित्तहरः स्वादुर्वृष्यो मुञ्जातकः परम्।
जीवनो बृंहणो वृष्यः कण्ठ्यः शस्तो रसायने ॥
विदारिकन्दो बल्यश्च मूत्रलः स्वादुशीतलः।
अम्लीकायाः स्मृतः कन्दो ग्रहण्यर्शोहितो लघुः ॥
नात्युष्णः कफवातघ्नो ग्राही शस्तो मदात्यये।
त्रिदोषं बद्धविण्मूत्रं सार्षपं शाकमुच्यते ॥
चतुर्थः शाकवर्गोऽयं पत्रकन्दफलाश्रयः।
इति शाकवर्गः।
तृष्णा दाहज्वरश्वासरक्तपित्तक्षतक्षयात्।
वातपित्तमुदावर्तं स्वरभेदं मदात्ययम् ॥
तिक्तास्यतामास्यशोषं कासञ्चाशु व्यपोहति।
मृद्वीका बृंहणी वृष्या मधुरस्निग्धशीतला ॥
मधुरं बृंहणं बल्यमाम्रातं तर्पणं गुरु।
सस्नेहं श्लेष्मलं शीतं वृष्यं विष्टभ्य जीर्यति ॥
तालसस्यानि सिद्धानि नारिकेरफलानि च।
बृंहणस्निग्धशीतानि बल्यानि मधुराणि च ॥
मधुराम्लकषायञ्च विष्टम्भि गुरुशीतलम्।
पित्तश्लेष्महरं भव्यं ग्राहि वक्त्रविशोधनम् ॥
अम्लं परूषकं द्राक्षा बदर्यारुकाणि च।
पित्तश्लेष्मप्रकोपीनि कर्कन्धुलिकुचान्यपि ॥
नात्युष्णं गुरु सम्पक्वं स्वादुप्रायं मुखप्रियम्।

बृंहणं जीर्यति क्षिप्रं नातिदोषलमारुकम् ॥
द्विविधं शीतमुष्णञ्च मधुरञ्चाम्लमेव च ।
गुरु पाके च तं श्रेयमरुच्यत्यग्निनाशनम् ॥
भव्यादल्पान्तरगुणं काश्मर्य्यफलमुच्यते ।
तथैवाल्पान्तरगुणन्तूदमम्लपरूषकम् ॥
कषायमधुरं टङ्कं वातलं गुरुशीतलम् ।
कपित्थं विषकण्ठघ्नमामं संग्राहि वातलम् ॥
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ।
परिपक्वं सदोषघ्नं विषघ्नं ग्राहि गुर्व्वपि ॥
दुर्ज्जरं बिल्वसिद्धन्तु दोषलं पूतिमारुतम् ।
स्निग्धोष्णतीक्ष्णन्तद्बालं दीपनं कफवातजित् ॥
वातपित्तकरं बालमापूर्णं पित्तवर्द्धनम् ।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम् ॥
कषायमधुरप्रायङ्गुरु विष्टम्भि शीतलम् ।
जाम्बवं कफपित्तघ्नं ग्राहि वातकरं परम् ॥
मधुरं वदरं स्निग्धं भेदनं वातपित्तजित् ।
कषायमधुरं शीतं ग्राहि सिञ्चतिकाफलम् ॥
गाङ्गारुकी करीरञ्च बिम्बीतोदनधन्वनम् ।
मधुरं सकषायञ्च शीतं पित्तकफापहम् ॥
क्षीरीकम्पनसं मोचं राजादनफलानि च ।
स्वादूनि सकषायाणि स्निग्धशीतगुरूणि च ॥
कषायविषदत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
अवदंशक्षमं वातवातलं लवलीफलम् ॥
नीपं शताह्वकम्पीलु तृणशून्यं विकङ्कतम् ।

प्राची नागरकञ्चैव दोषघ्नञ्ज्वरहारि च॥
इङ्गुदन्तिक्तमधुरं स्निग्धोष्णं कफवातजित्।
तिन्दुकं कफपित्तघ्नं कषायमधुरं लघु॥
विद्यादामलके सर्वान् स्वात्तुलवणवर्जितान्।
स्वेदमेदःकफोत्क्लेदपित्तरोगविनाशनम्॥
रूक्षं स्वादु कषायाम्लं कफपित्तहरं परम्।
रसासृङ्मांसमेदोजान्दोषान् हन्ति विभीतकम्॥
अम्लं कषायमधुरं वातघ्नं ग्राहि दीपनम्।
स्निग्धोष्णं दाड़िमं हृद्यं कफपित्तविरोधि च॥
रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनम्।
मधुरं पित्तनुत्तेषाम् पूर्वं दाडिममुत्तमम्॥
हृद्याम्लं ग्राहि रूक्षोष्णं वातश्लेष्मणि शस्यते।
अम्लिकायाः फलं शुष्कं तस्मादल्पान्तरं गुणैः॥
गुणैस्तैरेव संयुक्तं भेदनन्त्वम्लवेतसम्।
शूले रुचौ विबन्धे च मन्देऽग्नौ मद्यविप्लवे॥
हिक्काकासे च श्वासे च वम्यां वर्चोगदेषु च।
वातश्लेष्मसमुत्थेषु सर्वेष्वेतेषु दिश्यते॥
केसरं मातुलङ्गस्य लघु शीतमतोऽन्यथा।
रोचनो दीपनो हृद्यः सुगन्धिस्त्वग्निवर्जितः॥
कर्चुरः कफवातघ्नः श्वासहिक्कार्शसां हितः।
मधुरं किञ्चिदम्लञ्च हृद्यं भक्तप्ररोचनम्॥
गुरु वातप्रशमनं विद्यान्नारिङ्गजं फलम्।
वातामाभिषुकाक्षोटमकूलकनिकोचकाः॥

गुरूष्णस्निग्धमधुराः सोमाख्याः फलप्रदाः ।
वातघ्ना बृंहणा हृद्याः कफपित्ताभिवर्द्धनाः ॥
पियालमेषां सदृशं विद्यादौष्ण्यं विना गुणैः ।
श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु ॥
श्लेष्मलं गुरु विस्रंसि चाङ्कोटफलमग्निजित् ।
गुरूष्णमधुरं रूक्षं केशघ्नं च शमीफलम् ॥
विष्टम्भयति कारञ्जं पित्तश्लेष्माविरोधि च ।
आम्रातकं दन्तशठमम्लं सकरमर्दकम् ॥
रक्तपित्तकरं विद्यादैरावतकमेव च ।
वातघ्नं दीपनञ्चैव वार्ताकं कटु तिक्तकम् ॥
वातलं कफपित्तघ्नं विद्यात् पर्पटकीफलम् ।
पित्तश्लेष्मघ्नमम्लञ्च वातिकञ्चाक्षिकीफलम् ॥
मधुराण्यविपाकीनि वातपित्तहराणि च ।
अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि च ॥
कषायमधुराम्लानि वातलानि गुरूणि च ।
भल्लातकास्थ्यग्निसमं त्वङ्मांसं स्वादु शीतलम् ॥
पञ्चमः फलवर्गोऽयमुक्तः प्रायोपयोगिकः ।

इति फलवर्गः ।

रोचनं दीपनं वृष्यमार्द्रकं विश्वभेषजम् ।
वातश्लेष्मविबन्धेषु रसस्तस्योपदिश्यते ॥
रोचनो दीपनस्तीक्ष्णः सुगन्धिर्मुखशोधनः ।
जम्बीरः कफवातघ्नः क्रिमिघ्नो भुक्तपाचनः ॥
बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम् ।
स्निग्धसिद्धं विशुष्कन्तु मूलकं कफवातजित् ॥

हिक्काकासविषश्वासपार्श्वशूलविनाशनः।
पित्तकृत्कफवातघ्नः सुरसः पूतिगन्धनुत्॥
यवानी चार्जकश्चैव शिग्रुशालेय मृष्टकम्।
हृद्यान्यास्वादनीयानि पित्तमुत्क्लेशयन्ति च॥
गण्डीरो जलपिप्पल्यस्तुम्बुरुः शृङ्गवेरिका।
तीक्ष्णोष्णकटुरूक्षाणि कफवातहराणि च॥
पुंस्त्वघ्नः कटुरूक्षोष्णो भूतृणो वक्त्रशोधनः।
खराश्वा कफवातघ्नी वस्तिरोगरुजापहा॥
धान्यका चाजगन्धा च सुमुखश्चेति रोचनाः।
सुगन्धा नातिकटुका दोषानुत्क्लेशयन्ति तु॥
ग्राही गृञ्जनकस्तीक्ष्णो वातश्लेष्मार्शसां हितः।
स्वेदनेऽभ्यवहार्य्ये च योजयेत् तदपित्तिनाम्॥
श्लेष्मलो मारुतघ्नश्च पलाण्डुर्न च पित्तहृत्।
आहारयोगी बल्यश्च गुरुर्वृष्योऽथ रोचनः॥
क्रिमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः।
स्निग्धश्चोष्णश्च वृष्यश्च लशुनः कटुको गुरुः॥
शुष्काणि कफवातघ्नान्येतान्येषां फलानि तु।
हरितानामयं चैषां षष्ठो वर्गः समाप्यते॥

इति हरितवर्गः।

प्रकृता मद्यमम्लोष्णमम्लं चोक्तं विपाकतः।
सर्वं सामान्यतस्तस्य विशेष उपदेक्ष्यते॥
कृशानां सक्तमूत्राणां ग्रहण्यर्शोविकारिणाम्।
सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च॥
हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचौ।

वम्यानाहविबन्धेषु वातघ्नी मदिरा हिता ॥
शूलप्रवाहिकाटोपकफवातार्शसां हिताः ।
जगलो ग्राहिरूक्षोष्णः शोफघ्नो भुक्तपाचनः ॥
शोफार्शोग्रहणीदोषपाण्डुरोगारुचिज्वरान् ।
हन्त्यरिष्टः कफकृतान्रोगान्रोचनदीपनः ॥
मुखप्रियः सुखमदः सुगन्धिर्वस्तिरोगनुत् ।
जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः ॥
लेखनः शीतरसिको हितः शोफोदरार्शसाम् ।
सृष्टो भिन्नशकृद्वातो गौडस्तर्पणदीपनः ॥
पाण्डुरोगव्रणहिता दीपनी चाक्षिकी स्मृता ।
सुरासवस्तीव्रमदो वातघ्नो वदनप्रियः ॥
छेदीमध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः ।
धातक्याभिषुतो जीर्णो रूक्षो रोचनदीपनः ॥
मार्द्वीकवच्चाऽत्युष्णो मृद्वीकेक्षुरसासवः ।
रोचनं दीपनं हृद्यं बल्यं पित्ताविरोधि च ॥
विबन्धघ्नं कफघ्नञ्च मधु लघ्वल्पमारुतम् ।
सुरा समण्डारूक्षोष्णा यवानां वातपित्तला ॥
गुर्वी जीर्यति विष्टभ्य श्लेष्मलस्तु मधूलकः ।
दीपनं जरणीयं च हृत्पाण्डुक्रिमिरोगनुत् ॥
ग्रहण्यर्शोहितं भेदि सौवीरकतुषोदकम् ।
दाहज्वरापहं स्पर्शात् पानाद्वातकफापहम् ॥
विबन्धघ्नमविस्रंसि दीपनञ्चाम्लकाञ्जिकम् ।
प्रायशोऽभिनवं मद्यं गुरुदोषसमीरणम् ॥
स्रोतसां शोधनं जीर्णं दीपनं लघु रोचनम् ।

हर्षणं प्रीणनं वल्यं मद्यं शोकश्रमापहम् ॥
प्रागल्भ्यवीर्य्यप्रतिभातुष्टिपुष्टिबलप्रदम् ।
सात्त्विकैर्विधिवद्युक्त्या पीतं स्यादमृतं यथा ॥
वर्गोऽयं सप्तमो मद्यमधिकृत्य प्रकीर्त्तितः ।

इति मद्यवर्गः ।

जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात् ।
उत्पतत्पतितं चैव देशकालावपेक्षते ॥
खात्पतत्सोमवाय्वर्कैः स्पृष्टं कालानुवर्तिभिः ।
शीतोष्णस्निग्धरूक्षाद्यैर्यथासन्नं महीगुणैः ॥
शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम् ।
प्रकृत्या दिव्यमुदकं श्वेतायां मधुरं जलम् ॥
कपिले कटुकं तोयं ऊषरे लवणान्वितम् ।
एतत् षाड्गुण्यमाख्यातं महीस्थस्य जलस्य हि ॥
नद्यः पाषाणविच्छिन्नविक्षुब्धाभिहतोदकाः ।
हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ॥
नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ।
मलयप्रभवा याश्च जलन्तास्वमृतोपमम् ।
पश्चिमाभिमुखा याताः पथ्यास्ता निर्मलोदकाः ।
प्रायो मृदुवहा गुर्व्यो याश्च पूर्वसमुद्रगाः ।
प्राच्याश्च पारियात्राश्च विन्ध्यसह्यभवाश्च याः ॥
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ।
वसुधाकीटसर्पाखुमलसंदूषितोदकाः ॥
वर्षाजलवहा नद्यः सर्वदोषसमीरणाः ।
वापीकूपतड़ागोत्ससरःप्रस्रवणादिषु ॥

आनूपशैलधन्वानां गुणदोषैर्विभावयेत् ।
पिच्छिलं क्रिमिलं क्लिन्नं पर्णशैवालकर्दमैः ॥
विवर्णं विरसं सान्द्रं दुर्गन्धि न हितं जलम् ।
विस्रं त्रिदोषं लवणमम्बु यद्वरुणालये ॥
इत्यम्बुवर्गः प्रोक्तोऽयमष्टमः सुविनिश्चितः ।
इत्यम्बुवर्गः ।
स्वादु शीतं मृदु स्निग्धं बहलं श्लक्ष्णपिच्छिलम् ।
प्रवरं जीवनीयानां क्षीरमुक्तं रसायनम् ॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः ।
स्नेहादूनमनिद्राय हितमत्यग्नये च तत् ॥
रूक्षोष्णं क्षीरमुष्ट्रीणामीषत् सलवणं लघु ।
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ॥
बल्यं स्थैर्य्यकरं सर्वमुष्णञ्चैकशफं पयः ।
साम्लं सलवणं रूक्षं शाखावातहरं लघु ॥
छागं कषायमधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
हिक्काश्वासकरं तूष्णं पित्तश्लेष्मलमाविकम् ।
हस्तिनीनां पयो बल्यं गुरु स्थैर्य्यकरं परम् ॥
जीवनं बृंहणं सात्म्यं स्नेहनं बलवर्द्धनम् ।
पाकेऽम्लमुष्णं वातघ्नं मङ्गल्यं बृंहणं दधि ॥
पीनसे चातिसारे च शीतके विषमज्वरे ।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते ॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ।
रक्तपित्तकफोत्थेषु विकारेष्वहितञ्च तत् ॥

त्रिदोषं मन्दकं जातं वातघ्नं दधि शुक्रलम्।
सरः श्लेष्मानिलघ्नस्तु मण्डः स्रोतोविशोधनः॥
शोफार्शोग्रहणीदोषमूत्रकृच्छ्रोदरारुचौ।
स्नेहव्यापदि पाण्डुत्वे तक्रं दद्याद्गरेषु च॥
संग्राहि दीपनं हृद्यं नवनीतं नवोद्धृतम्।
ग्रहण्यर्शोविकारघ्नमर्दितारुचिनाशनम्॥
स्मृतिबुद्ध्यग्निशुक्रौजःकफमेदोविवर्द्धनम्।
वातपित्तविषोन्मादशोषालक्ष्मीविपापहम्॥
सर्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः।
सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत्॥
मदापस्मारमूर्च्छायशोफोन्मादगरज्वरान्।
योनिकर्णशिरःशूलं घृतं जीर्णमपोहति॥
सर्पींष्यजाविमहिषीक्षीरवत्स्वानि निर्दिशेत्।
पीयूषो मोरणं चैव किलाटा विविधाश्च ये॥
दीप्ताग्नीनामनिद्राणां सर्व एते सुखप्रदाः।
गुरवस्तर्पणा वृष्या बृंहणाः पवनापहाः॥
विशदा गुरवो रूक्षा ग्राहिणस्तक्रपिण्डकाः।
गोरसानामयं वर्गो नवमः परिकीर्तितः॥
इति गोरसवर्गः।
वृष्यः शीतः स्थिरः स्निग्धो बृंहणो मधुरो रसः।
श्लेष्मलो भक्षितश्चेक्षोर्यान्त्रिकस्तु विदह्यते॥
शैत्यात् प्रसादान्माधुर्यात्पौण्ड्रकाद्वांशको वरः।
प्रभूतक्रिमिमज्जासृङ्मेदोमांसकरो गुडः॥
क्षुद्रो गुडश्चतुर्भागत्रिभागार्धावशेषितः।

रसो गुरुर्यथापूर्वं धौतः स्वल्पमलो गुड़ः ॥
ततो मत्स्यण्डिकाखण्डशर्करा विमलाः परम् ।
यथा यथैषां वैमल्यं भवेच्छैत्यन्तथा तथा ॥
वृष्याः क्षीणक्षतहिताः सस्नेहा गुडशर्कराः ।
कषायमधुराः शीताः सतिक्ता यावशर्कराः ॥
रूक्षा वम्यतिसारघ्नी छेदनी मधुशर्करा ।
तृष्णासृक्पित्तदाहेषु प्रशस्ताः सर्वशर्कराः ॥
माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः ।
माक्षिकं प्रवरं तेषां विशेषाद् भ्रामरं गुरु ॥
माक्षिकं तैलवर्णं स्यात् श्वेतं भ्रामरमुच्यते ।
क्षौद्रं तु कपिलं विद्याद् घृतवर्णन्तु पैत्तिकम् ॥
वातलं गुरुशीतञ्च रक्तपित्तकफापहम् ।
सन्धातृच्छेदनं रूक्षं कषायकधुरं मधु ॥
हन्यान्मधूष्णमुष्णार्त्तमथवा सविषान्वयात् ।
गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥
नातः कष्टतमं किञ्चिन्मध्वामात्तद्धि मानवम् ।
उपक्रमविरोधित्वात् सद्यो हन्याद्यथाविषम् ॥
आमे सोष्णा क्रिया कार्या सा मध्वामे विरुध्यते ।
मध्वामं दारुणं तस्मात् सद्यो हन्याद्यथाविषम् ॥
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ।
इतीक्षुविकृतिप्रायो वर्गोऽयं दशमो मतः ॥

इतीक्षुवर्गः ।

मृतः पिप्पलिशुण्ठिभ्यां युक्तो लाजाम्लदाड़िमैः ।
मण्डः सन्दीपयत्यग्निं वातं चाप्यनुलोमयेत्॥

क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगविनाशिनी।
स्वेदाग्निजननी पेया वातवर्चोऽनुलोमनी॥
तर्पणी ग्राहिणी लघ्वी हृद्या चापि विलेपिका।
सुधौतः प्रस्रुतः स्विन्नः सन्तप्तः शोधनो लघुः॥
भृष्टतण्डुलमिच्छन्ति गलश्लेष्मामयेष्वपि।
अधौतः प्रस्रुतः स्विन्नः शीतश्चाप्योदनो गुरुः॥
मांसशाकवसातैलघृतमज्जफलौदनाः।
बल्याः सन्तर्पणा हृद्या गुरवो बृंहयन्ति च॥
तद्वन्माषतिलक्षीरमुद्गसंयोगसाधिताः।
कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः॥
स्विन्नभक्ष्यास्तु ये केचित्सौम्यगोधूमयावकाः।
भिषक् तेषां यथाद्रव्यमादिशेत् गुरुलाघवम्॥
अकृतं कृतयूषञ्च तनुं मांसादिकं रसम्।
सूपमम्लमनम्लञ्च गुरु विद्याद्यथोत्तरम्॥
सक्तवो वातला रूक्षा बहुवर्चोऽनुलोमिनः।
तर्पयन्ति नरं सद्यः पीताः सद्योबलाश्च ते॥
मधुरा लघवः शीताः सक्तवः शालिसम्भवाः।
ग्राहिणो रक्तपित्तघ्नास्तृषाच्छर्दिज्वरापहाः॥
हन्यात्दशाधीन्यश्चापूपो यावको वाट्य एव च।
उदावर्त्तप्रतिश्यायकासमेहगलग्रहान्॥
धानासंज्ञास्तु ये भक्ष्याः प्रायस्ते लेखनात्मकाः।
शुष्कत्वात्तर्पणाश्चैव विष्टम्भित्वाच्च दुर्जराः॥
विरूढधानाः शष्कुल्यो मधुक्रोड़ाः सपिण्डकाः।
पूपाः पूपलिकाश्चैव गुरवः पैष्टिकाः परम्॥

फलमांसवसाशाकपललक्षौद्रसंस्कृताः ।
भक्ष्या वृष्याश्च बल्याश्च गुरवो बृंहणात्मकाः ॥
वेशवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ।
गुरवः तर्पणा वृष्याः क्षीरेक्षुरसपूपकाः ॥
सगुड़ाः सतिलाश्चैव सक्षीरक्षौद्रशर्कराः ।
वृष्या बल्याश्च भक्ष्यास्तु ते परं गुरवः स्मृताः ॥
सस्नेहाः स्नेहसिद्धाश्च भक्ष्या विविधलक्षणाः ।
गुरवस्तर्पणा हृद्या वृष्या गोधूमिका मताः ॥
संस्काराल्लघवः सन्ति भक्ष्या गोधूमपैष्टिकाः ।
धानापर्पटपूपाद्याः तान् बुद्धा निर्दिशेत्तथा ॥
पृथुका गुरवो भृष्टान् भक्षयेदल्पशस्तु तान् ।
यथा विष्टभ्य जीर्यन्ति सतुषा भिन्नवर्चसः ॥
सूप्यान्नविकृता भक्ष्या वातला रूक्षशीतलाः ।
सकटुस्नेहलवणानल्पशो भक्षयेत्तु तान् ॥
मृदुपाकाश्च ये भक्ष्याः स्थूलाश्च कठिनाश्च ये ।
गुरवस्तेऽप्यतिक्रान्ताः पाकाः पुष्टिबलप्रदाः ॥
द्रव्यसंयोगसंस्कारं द्रव्यमानं पृथक्तथा ॥
भक्ष्याणामादिशेद्बुद्धा यथास्वं गुरुलाघवम्
नानाद्रव्यैः समायुक्ताः पक्वामक्लिन्नगर्जितैः ॥
निमर्दको गुरुर्हृद्यो वृष्यो बलवतां हितः ।
रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥
स्नेहनं तर्पणं हृद्यं वातघ्नं सगुड़ं दधि ।
द्राक्षाखर्जूरकोलानां गुरु विष्टम्भि पानकम् ॥
परूषकाणां क्षौद्रस्य यश्चेक्षुविकृतिं प्रति ।

तेषां कट्वम्लसंयोगाः पानकानां पृथक् पृथक् ॥
द्रव्यमानञ्च विज्ञाय गुणकर्माणि चादिशेत् ।
कट्वम्लस्वादुलवणा लघवो रागषाड़वाः ॥
मुखप्रियाश्च हृद्याश्च दीपना भक्तरोचनाः ।
आम्रामलकलेहाश्च वृंहणा मलवर्द्धनाः ॥
रोचनात्तर्पणाच्चोक्ताः स्नेहमाधुर्य्यगौरवात् ।
बुद्धा संयोगसंस्कारं द्रवमानञ्च तच्छृतम् ॥
गुणकर्माणि लेहानां तेषां तेषां तथा वदेत् ।
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ॥
कन्दमूलफलाद्यञ्च तद्वद्विद्यात्तदा सुतम् ।
शाण्डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु ॥
विद्याद्वर्गं कृतान्नानामेकादशतमं भिषक् ।
इति कृतान्नवर्गः ।
कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ।
पित्तलं बद्धविण्मूत्रं न च श्लेष्माभिवर्द्धनम् ॥
वातघ्नेषूत्तमं बल्यं त्वच्यं मेधाग्निवर्द्धनम् ।
तैलसंयोगसंस्कारात् सर्वरोगापहं मतम् ।
तैलप्रयोगादजरा निर्विकारा जितश्रमाः ॥
आसन्नतिबलाः संख्ये दैत्याधिपतयः पुरा ।
ऐरण्डतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ॥
वातासृग्गुल्महृद्रोगजीर्णज्वरहरं परम् ।
कटूष्णं सार्षपं तैलं रक्तपित्तप्रदूषणम् ॥
कफशुक्रानिलहरं कण्डूकोठविनाशनम् ।
प्रियालतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ॥

हितमिच्छन्ति नात्यौष्ण्यात् संयोगो वातपित्तयोः ।
फलानां यानि चान्यानि तैलान्याहारसन्निधौ ॥
युञ्ज्यन्ते गुणकर्मभ्यां तानि ब्रूयाद्यथाफलम् ।
मधुरो बृंहणो वृष्यो बलयो मज्जा तथा वसा ॥
यथा सत्वन्तु शैत्योष्णे वसा मज्जा विनिर्दिशेत् ।
सस्नेहं दीपनं वृष्यमुष्णं वातकफापहम् ॥
विपाकमधुरं हृद्यं रोचनं विश्वभेषजम् ।
श्लेष्मला मधुरा चार्द्रा गुर्वी स्निग्धा च पिप्पली ॥
सा शुष्का कफवातघ्नी कटूष्णा वृष्यसम्मता ।
नात्यर्थमुष्णं मरिचमवृष्यं लघु रोचनम् ॥
छेदित्वाच्छोषणत्वाच्च दीपनं कफवातजित् ।
वातश्लेष्मविबन्धघ्नं कटूष्णं दीपनं लघु ॥
हिङ्गु शूलप्रशमनं विद्यात् पाचनरोचनम् ।
रोचनं दीपनं हृद्यं चक्षुष्यमविदाहि च ॥
त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम् ।
तैक्ष्ण्यादौष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ॥
सौवर्चलं विबन्धघ्नं हृद्यमुद्गारशोधि च ।
सौक्ष्म्यादौष्ण्याद्व्यवायित्वाद्दीपनं शूलनाशनम् ॥
ऊर्द्ध्वञ्चाधश्च वातानामानुलोम्यकरं विड़म् ।
सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ॥
न काललवणे भेदः सौवर्चलगुणाश्च ते ।
सामुद्रकं समधुरं सतिक्तकटु पांशुजम् ॥
रोचनं लवणं सर्वं पाकि स्रंस्यनिलापहम् ।
कृमिपाण्डुग्रहणीदोषघ्नीहानाहगलग्रहान् ॥

काथं कफजमर्शांसि यावशूको व्यपोहति।
तीक्ष्णोष्णो लघुरूक्षश्च क्लेदी पाकी विदारणः॥
दाहनो दीपनश्छेत्ता सर्वः क्षारोऽग्निसन्निभः।
कारव्यः कुञ्चिका जाजी कवरी धान्यतुम्बुरु॥
रोचनं दीपनं वातकफदौर्गन्ध्यनाशनम्।
आहारयोगिनां भक्तिनिश्चयो न तु विद्यते॥
समाप्तो द्वादशश्चायं वर्ग आहारयोगिनाम्।

इत्याहारयोगवर्गः।

शूकधान्यं शमीधान्यं समातीतं प्रशस्यते।
पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु॥
यद्यदागच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम्।
निस्तुषं युक्तिभृष्टन्तु सूप्यं लघु विपच्यते॥
मृतं कृशातिमेध्यञ्च वृद्धं बालं विषैर्हतम्।
अगोचरभृतं व्यालसूदितं मांसमुत्सृजेत्॥
अतोऽन्यथा हितं मांसं बृंहणं बलवर्द्धनम्।
प्रीणनः सर्वभूतानां हृद्यो मांसरसः परम्॥
शुष्यतां व्याधिमुक्तानां कृशानां क्षीणरेतसाम्।
बलवर्णार्थिनाञ्चैव रसं विद्यादथामृतम्॥
सर्वरोगप्रशमनं यथास्वं विहितं रसम्।
विद्यात् स्वर्यं बलकरं वयोबुद्धीन्द्रियायुषाम्॥
व्यायामनित्याः स्त्रीनित्या मद्यनित्याश्च ये नराः।
नित्यं मांसरसाहारा नातुराः स्युर्न दुर्बलाः॥
क्रिमिवातातपहतं शुष्कं जीर्णमनार्त्तवम्।

शाकं निःश्वेदितञ्च वर्ज्यं यच्चापरिस्रुतम् ॥
पुराणमांसं संक्लिष्टं क्रिमिव्याड्हिमातपैः ।
अदेशाकालजं क्लिन्नं यत् स्यात् फलमसाधु तत् ॥
हरितानां यथा शाकं निर्देशः साधनादृते ।
मद्याम्बुगोरसादीनां स्वे स्वे वर्गे विनिश्चयः ॥
यदाहारगुणैः पानं विपरीतं तदिष्यते ।
अन्नानुरूपं धातूनां दृष्टं यच्च विरोधि च ॥
आसवानां समुद्दिष्टं अशीतिं चतुरुत्तराम् ।
जलं पेयमपेयञ्च परीक्ष्यानुपिबेद्धितम् ॥
स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ।
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसः परम् ॥
उपवासाध्वभाष्यस्त्रीमारुतातपकर्मभिः ।
क्लान्तानामनुपानार्थं पयः पथ्यं यथामृतम् ॥
सुराकृशानां पुष्ट्यर्थमनुपानं प्रशस्यते ।
कार्श्यार्थमतिभक्तानामनुशस्तं मधूदकम् ॥
अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः ।
मद्यमांसोचितानाञ्च मद्यमेवानुशस्यते ॥

अथानुपानकर्म प्रवक्ष्याम्यनुपानं तर्पयति प्रीणयति ऊर्जयति पर्य्याप्तिमभिनिर्वर्त्तयति भुक्तमवसादयति अन्नसङ्घातं भिनत्ति मार्द्दवमापादयति क्लेदयति जरयति सुखपरिणामितामाशुव्यवायितां चाहारस्योपजनयतीति । तत्र श्लोकाः ।

अनुपानं हितं युक्तं तर्पयत्याशु मानवम् ।
सुखं पचति चाहारमायुषे च बलाय च ॥

गोप्वाङ्गमावृताविष्टा न हिक्काश्वासकासिनः।
न गीतभाषाध्ययनप्रसक्ता नोरसि क्षताः॥
पिबेयुरुदकं भुक्ता तद्धि कण्ठोरसि स्थितम्।
स्नेहमाहारजं हत्वा भूयो दोषाय कल्पते॥
अनुपानेष्वदोषोऽयमुक्तः प्रायोपयोगिकः।
द्रव्याणि न हि निर्दिष्टं शक्यं कृत्स्नेन नामभिः॥
यथानानौषधं किञ्चिद्देशजानां वचो यथा।
द्रव्यं तत्तत्तथा वाच्यमनुक्तमिह तद्भवेत्॥
चरः शरीरावयवाः स्वभावो धातवः क्रिया।
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते॥
चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः।
जलजानूपजाश्चैव जलानूपचराश्च ये॥
गुरुभक्ष्याश्च ये सत्त्वाः सर्वे ते गुरवः स्मृताः।
लघुभक्ष्यास्तु लघवो धन्वजाधन्वचारिणः॥
शरीरावयवाः सक्थिशिरःस्कन्धादयस्तथा।
सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः॥
वृषणौ चर्म मेढ्रञ्च श्रोणी वृक्कौ यकृद्गुदः।
मांसाद्गुरुतरं विद्याद् यथास्वं मध्यमस्थि च॥
स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः।
स्वभावाद्गुरवो माषा वराहमहिषास्तथा॥
धातूनां शोणितादीनां गुरुं विद्याद्यथोत्तरम्।
अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः॥
गौरवे लिङ्गसामान्ये पुंसां स्त्रीणाञ्च लाघवम्।
महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा॥

गुरूणां लाघवं विद्यात् संस्कारात् सविपर्य्ययम् ।
व्रीहेर्लाजा यथा न स्युः सक्तूनां सिद्धपिण्डकाः ॥
अत्यादाने गुरूणाञ्च लघूनां चातिसेवने ।
मात्राकारणमुद्दिष्टं द्रव्याणां गुरु लाघवे ॥
गुरूणामल्पमादेयं लघूनां तृप्तिरिष्यते ।
मात्रामपेक्षते द्रव्यं मात्रा चाग्निमुपेक्षते ॥
बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः ।
अन्नपानेन्धनश्चाग्निर्ज्वलति व्येति चान्यथा ॥
गुरुलाघवचिन्तेयं प्रायेणाल्पबलान् प्रति ।
मन्दकर्मानिनारोग्यान् सुकुमारान् सुखोचितान् ॥
दीप्ताग्नयः खराहाराः कर्म्मनित्या महोदराः ।
ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरु लाघवम् ॥
हिताभिर्जुहुयान्नित्यमन्तराग्निं समाहितः ।
अन्नपानसमिद्भिर्ना मात्राकालौ विचारयन् ॥
आहिताग्निः सदा पथ्यान्यन्तराग्नौ जुहोति यः ।
दिवसे दिवसे ब्रह्म जपत्यथ ददाति च ।
नरं निःश्रेयसे युक्तं सात्म्यज्ञं पानभोजनैः ॥
भजन्ते नाम याः केचिन्नाविनोऽप्यन्तराहते ।
षट्त्रिंशच्च सहस्राणि रात्रीणां हितभोजनः ॥
जीवत्यनातुरो जन्तुर्जितात्मा सम्मतः सतामिति ।

तत्र श्लोकाः । अनुपानगुणाः साग्र्या वर्गा द्वादशनिश्चिताः ।
सगुणान्यन्नपानानि गुरुलाघवसंग्रहः ॥
अनुपानविधावुक्तं तत्परीक्ष्यं विशेषतः ।
प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ॥

वर्णप्रसादः सौस्वर्यं जीवितं प्रतिभासुखम्।
तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम्॥
लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम्।
कर्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम्॥
इत्यन्नपानचतुष्के ऽन्नपानविधिरध्यायः।

---

## अष्टाविंशोऽध्यायः।

अथातो विविधाशितपीतीयमध्यायं व्याख्यास्यामः।

विविधमशितपीतलीढखादितं जन्तोर्हितमन्तरग्निसन्धुक्षितबलेन यथा स्वेनोष्मणा सम्यग्विपच्यमानं कालवदनवस्थितसर्वधातुपाकमनुपहतसर्वधातूष्ममारुतस्रोतः केवलं शरीरमुपचयबलवर्णसुखायुषा योजयतीति शरीरधातूनूर्जयन्धातवो ह्याहाराः प्रकृतिमनुवर्त्तन्ते। तत्राहारप्रसादाख्यो रसः किट्टञ्च मलाख्यमभिनिर्वर्त्तते किट्टं मूत्रस्वेदपुरीषवातपित्तश्लेष्माणः कर्णाक्षिनासिकास्यलोमकूपप्रजननमलकेशश्मश्रुलोमादयश्चावयवाः पुष्यन्ति त्वाहाररसात्। रसरुधिरमांसमेदोऽस्थिमज्जशुक्रौजांसि पञ्चेन्द्रियद्रव्याणि धातुप्रसादसंज्ञकानि शरीरसन्धिबन्धपिच्छादयश्चावयवाः ते सर्व एव धातवो मलाख्याः प्रसादाख्याश्च रस-

मलाभ्यां पुष्यन्तः स्वं मानमनुवर्त्तते यथा वयः शरीरं एवं रसमलौ स्वप्रमाणावस्थितौ आश्रयस्य समधातो धातुसाम्यमनुवर्त्तयतो निमित्ततस्तु क्षीणवृद्धानां प्रसादाख्यानां धातूनां वृद्धिक्षयाभ्यामाहारमूलाभ्यां रसः साम्यमुपपादयति। आरोग्याय किट्टञ्च मलानामेवमेव स्वमानातिरिक्ताच्चोत्सर्गेण शीतोष्णपर्यायगुणैश्चोपचर्यमाणा मलाः शरीरधातुसाम्यकराः समुपलभ्यन्ते तेषान्तु मलप्रसादाख्यानां धातूनां स्रोतांस्ययनमुखानि यथास्वं तानि यथा विभागेन यथा स्वं धातूनापूरयन्त्येवमिदं शरीरमशितपीतलीढखादितप्रभवम् अशितलीढखादितप्रभवाश्चास्मिन् शरीरे व्याधयो भवन्ति। हिताहितोपयोगविशेषास्त्वत्र शुभाशुभविशेषकरा इति। एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच। दृश्यन्ते हि भगवन्! हितसमाख्यातमाहारमुपयुञ्जाना व्याधिमन्तश्चागदाश्च तथैवाहितसमाख्यातमेवं दृष्टे कथं हिताहितोपयोगविशेषात्मकं शुभाशुभविशेषात्मकमुपलभेमहीति। तमुवाच भगवानात्रेयः।

न हिताहारोपयोगिनामग्निवेश! तन्निमित्ता व्याधयो जायन्ते। नच केवलं हिताहारोपयोगादेव सर्वं व्याधिभयमतिक्रान्तं भवति। सन्ति हि ऋतेऽपि हिताहारोपयोगादन्यारोगप्रकृतयः। तद्यथा कालविपर्ययः प्रज्ञापराधश्शब्दस्पर्शरूपरसगन्धाश्च सात्म्या इति। ताश्च रोगप्रकृतयो रसान् सम्यगुपयुञ्जानं पुरुषमशुभेनोपपादयन्ति। तस्माद्धिताहारोपयोगिनोऽपि दृश्यन्ते व्याधिमन्तः अहिताहारोपयोगिनां पुनः कारणतो न सद्यो दोषवान् भवति। अप-

षारो न हि सर्वाण्यपथ्यानि तुल्यदोषाणि न च सर्वे दोषा-स्तुल्यबलाः न च सर्वाणि शरीराणि व्याधिक्षमत्वे समर्थानि तदेव ह्यपथ्यं देशकालसंयोगवीर्य्यप्रमाणातियोगात् भूयस्तरमपथ्यं सम्पद्यते। स एव दोषः संसृष्टयो निर्विरुद्धोपक्रमो गम्भीरानुगतः चिरस्थितः प्राणायतनसमुत्थो मर्म्मोपघाती वा भूयान् कष्टतमः क्षिप्रकारितमश्च सम्पद्यते शरीराणि चातिस्थूलानि अतिकृशानि अनाविष्टमांसशोणितास्थीनि दुर्बलानि असात्म्याहारोपचितान्यल्पाहाराणि अल्पसत्त्वानि वा भवन्ति। अव्याधिसहानि विपरीतानि पुनर्व्याधिसहानि एभ्यश्चैवापथ्याहारदोषशरीरविशेषेभ्यो व्याधयो मृदवो दारुणाः क्षिप्रसमुत्थाः चिरकारिणश्च भवन्ति। एत एव च वातपित्तश्लेष्माणः स्थानविशेषे प्रकुपिता व्याधिविशेषानभिनिर्वर्त्तयन्ति। अग्निवेश। तत्र रसादिषु स्थानेषु प्रकुपितानां यस्मिन्यस्मिन् स्थाने ये ये व्याधयः सम्भवन्ति तांस्तान्यथावदनुव्याख्यास्यामः।

अश्रद्धा चारुचिश्चास्य वैरस्यमरसज्ञता।
हृल्लासो गौरवं तन्द्रा साङ्गमर्द्दो ज्वरस्तमः॥
पाण्डुत्वं स्रोतसां रोधः क्लैव्यं सादः कृशाङ्गता।
नाशोऽग्नेरयथाकालं वलयः पलितानि च॥
रसप्रदोषजा रोगा वक्ष्यन्ते रक्तदोषजाः।
कुष्ठवीसर्पपिडका रक्तपित्तमसृग्दरः॥
गुदमेढ्रास्यपाकश्च प्लीहा गुल्मोथ विद्रधी।
नीलीका कामला व्यङ्गं पिप्लवस्तिलकालकाः॥
दद्रूश्चर्मदलं श्वित्रम्पामा कोठास्रमण्डलम्।

रक्तप्रदोषाज्जायन्ते शृणु मांसप्रदोषजान् ॥
अधिमांसार्बुदं कीलगलशालूकशुण्डिकाः ।
पूतिमांसालजीगण्डगण्डमालोपजिह्विकाः ॥
मांसप्रदोषजान्विद्यान्मेदःप्रदोषजान् ।
रुक्पर्वणां भ्रमो मूर्च्छा दर्शनं तमसो मताः ॥
अरुषां स्थूलमूलानां पर्वजानां च दर्शनम् ।
मज्जाप्रदोषात् शुक्रस्य दोषात् क्लैव्यमहर्षणम् ॥
रोगिणं क्लीवमल्पायुं विरूपं वा प्रजायते ।
न वा सञ्जायते गर्भः पतति प्रस्रवत्यपि ॥
शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरम् ।
इन्द्रियाणि समाश्रित्य प्रकुप्यन्ति यदा मलाः ॥
उपतापोपघाताभ्यां योजयन्तीन्द्रियाणि ते ।
स्नायौ शिराकाण्डरयोर्दुष्टाः क्लिश्नन्ति मानवम् ॥
स्तम्भसङ्कोचखल्लीभिर्ग्रन्थिस्फुरणसुप्तिभिः ।
मलानाश्रित्य कुपिता भेददोषप्रदूषणम् ॥
दोषा मलानां कुर्वन्ति सङ्गोत्सर्गावती न च ।
विविधादशितात्पीतादहिताल्लीढखादितात् ॥
भवन्त्येते मनुष्याणां विकारा ये उदाहृताः ।
तेषामिच्छन्ननुत्पत्तिं सेवेत मतिमान् सदा ॥
हितान्येवाशितादीनि न स्युर्मज्जास्तथामयाः ।
रसजानां विकाराणां सर्वं लङ्घनमौषधम् ॥
विधिशोणितकेऽध्याये रक्तजानां भिषग्जितम् ।
मांसजानान्तु संशुद्धिः शस्त्रक्षाराग्निकर्म्म च ॥
अष्टौ निन्दितसंख्याते मेदोजानां चिकित्सितम् ।

अस्थ्याश्रयाणां व्याधीनां पञ्चकर्माणि भेषजम् ॥
बस्तयः क्षीरसर्पींषि तिक्तकोपहितानि च ।
मज्जशुक्रसमुत्थानामौषधं स्वादुतिक्तकम् ॥
अन्नं व्यवायव्यायामौ शुद्धिः काले च मात्रया ।
शान्तिरिन्द्रियजानां तु त्रिमर्मीये प्रवक्ष्यते ॥
स्नाय्वादिजानां प्रशमो वक्ष्यते वातरोगिके ।
न वेगान्धारणेऽध्याये चिकित्सासंग्रहः कृतः ॥
मलजानां विकाराणां सिद्धिश्चोक्ता क्वचित् क्वचित् ।
व्यायामादूष्मणस्तैक्ष्ण्याद्धितस्यानवधारणात् ॥
कोष्ठाच्छाखामला यान्ति द्रुतत्वान्मारुतस्य च ।
तत्रस्थाश्च विलम्बन्ते कदाचिन्न समीरिताः ॥
नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः ।
वृद्ध्याभिष्यन्दनात् पाकात् स्रोतोमुखविशोधनात् ॥
शाखांमुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात् ।
अजातानामनुत्पत्तौ जातानां विनिवृत्तये ॥
रोगाणां यो विधिर्दृष्टः सुखार्थी तं समाचरेत् ।
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ॥
ज्ञानाज्ञानविशेषात्तु मार्गामार्गप्रवृत्तयः ।
हितमेवानुरुध्यन्ते प्रसमीक्ष्य परीक्षकाः ॥
रजोमोहावृतात्मानः प्रियमेव तु लौकिकाः ।
श्रुतं बुद्धिः स्मृतिर्दाक्ष्यं धृतिर्हितनिषेवणम् ॥
वाक्प्रशुद्धिः शमो धैर्यमाश्रयन्ति परीक्षकम् ।
लौकिकं नाश्रयन्त्येते गुणा मोहरजःश्रितम् ॥
तन्मूला बहुलायैवं रोगाः शारीरमानसाः ।

प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते ॥
सन्धारयति वेगांश्च सेवते साहसानि च ।
तदा त्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते ॥
रज्यते न तु विज्ञाता विज्ञाने ह्यमलीकृते ।
न रागान्नाप्यविज्ञानादाहारमुपयोजयेत् ॥
परीक्ष्य हितमश्नीयाद्देहो ह्याहारसम्भवः ।
आहारस्य विधावष्टौ विशेषा हेतुसंज्ञकाः ॥
शुभाशुभसमुत्पत्तौ तान् परीक्ष्योपयोजयेत् ।
परिहार्याण्यपथ्यानि सदा परिहरन्नरः ॥
भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः ।
यत्तु रोगसमुत्थानमशक्यमिह केनचित् ॥
परिहर्तुं न तत्प्राप्य शोचितव्यं मनीषिभिरिति ।
तत्र श्लोकाः । आहारप्रभवो यस्तु रोगाश्चाहारसम्भवाः ।
हिताहितविशेषाश्च विशेषः सुखदुःखयोः ॥
सहत्वे चासहत्वे च दुःखानां देहसत्त्वयोः ।
विशेषा रोगसङ्घाश्च धातुजा ये पृथक् पृथक् ॥
तेषाञ्चैव प्रशमनं कोष्ठाच्छाखा उपेत्य च ।
दोषा यथा प्रकुप्यन्ति शाखाभ्यः कोष्ठमेव च ॥
प्राज्ञाज्ञयोर्विशेषश्च स्वस्थातुरहितञ्च यत् ।
विविधाशितपीतीये तत्सर्वं सम्प्रकाशितम् ॥
इत्यन्नपानचतुष्के विविधाशितपीतीयोऽध्यायः समाप्तः ।
समाप्तमन्नपानचतुष्कं सप्तमम् ।

---

## ऊनत्रिंशोऽध्यायः ।

अथातो दशप्राणायतनीयमध्यायं व्याख्यास्यामः ।

दशैवायतनान्याहुः प्राणो येषु प्रतिष्ठितः ।
शङ्खौ मर्मत्रयं कण्ठो रक्तशुक्रौजसी गुदः ॥
तानीन्द्रियाणि विज्ञानं चेतना हेतुमामयम् ।
जानीते यः स विद्वान् वै प्राणाभिसर उच्यते इति ॥

द्विविधास्तु खलु भिषजो भवन्ति अग्निवेश ! प्राणानामेकेऽभिसरा हन्तारो रोगाणामेकेऽभिसरा हन्तारः प्राणिनामिति । एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच भगवंस्ते कथमस्माभिर्वेदितव्या भवेयुरिति । भगवानुवाच य इमे कुलीनाः पर्यवदातश्रुताः परिदृष्टकर्माणो दक्षाः शुचयो जितहस्ता जितात्मानः सर्वोपकरणवन्तः सर्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञास्ते प्राणानामभिसरा हन्तारो रोगाणां तथाविधा हि केवले शरीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानाञ्च रोगाणां समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषविज्ञाने व्यपगतसन्देहाः त्रिविधस्यायुर्वेदसूत्रस्य ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः पञ्चत्रिंशतश्च मूलफलानां चतुर्णां महास्नेहानां पञ्चानां लवणानामष्टानाञ्च सूत्राणामष्टानाञ्च मूत्राणामष्टानाञ्च क्षीराणां क्षीरत्वग्वृक्षाणाञ्च षण्णां शिरोविरेच-

नादेश्च पञ्चकर्माश्रयस्यौषधगणस्याष्टाविंशतेश्च यवागूनां द्वात्रिंशतश्च चूर्णप्रदेहानां षण्णां विरेचनशतानां पञ्चानाञ्च कषायशतानामिति स्वस्थवृत्ते च भोजनपाननियमस्थानचङ्क्रमणशय्यासनमात्राद्रव्याञ्जनधूमनावनाभ्यञ्जनपरिमार्जनवेगविधारणाविधारणव्यायामसात्म्येन्द्रियपरीक्षोपक्रमसद्वृत्तकुशलाः चतुष्पादोपगृहीते च भेषजे षोडशकले सविनिश्चये सत्रिपर्येषणे सवातकलाकलज्ञाने व्यपगतसन्देहाः चतुर्विधस्य च स्नेहस्य चतुर्विंशत्युपनयस्य चतुःषष्टिपर्यन्तस्य व्यवस्थापयितारो बहुविधविधानयुक्तानाञ्च स्नेह्यस्वेद्यवम्यविरेच्यौषधोपचाराणां कुशलाः शिरोरोगादेश्च दोषांशविकल्पजस्य व्याधिसंग्रहस्य संक्षयपिडकविद्रधेः त्रयाणाञ्च शोफानाम्बहुविधशोफानुबन्धानामष्टाचत्वारिंशतश्च रोगाधिकारिणाञ्चत्वारिंशस्य च नानात्वजस्य व्याधिशतस्य तथाविगर्हितातिस्थूलातिकृशानां सहेतुलक्षणोपक्रमाणां स्वप्नस्य च हिताहितस्यास्वप्नातिस्वप्नस्य च सहेतूपक्रमस्य षण्णाञ्च लङ्घनादीनामुपक्रमाणां सन्तर्पणापतर्पणजानां रोगाणां सरूपप्रशमनानां शोणितजानाञ्च व्याधीनां मदमूर्च्छायसंन्यासानाञ्च सकारणरूपौषधानां कुशलाः कुशलाश्चाहारविधिविनिश्चयस्य प्रकृत्या हिततमानामाहारविकाराणामग्र्यसंग्रहस्यासवानाञ्च चतुरशीतेः द्रव्यगुणविनिश्चयस्य रसानुरससंश्रयस्य सविकल्पवैरोधिकस्य द्वादशवर्गाश्रयस्य चान्नपानस्य सगुणप्रभावस्य सानुपानगुणस्य नवविधार्थसंग्रहाया आहारगतेश्च हिताहितोपयोगविशेषात्मकस्य च शुभाशुभविशेषस्य धात्वाश्रयाणाञ्च रोगाणामौषधसंग्रहा-

याश्च दशानाश्च प्राणायतनानां यश्च वक्ष्याम्यर्थे दशमहा-
मूलीयं त्रिंशतमाध्याये तत्र च कृत्स्नस्य तन्त्रोद्देशलक्षणस्य
तन्त्रस्य च ग्रहणधारणविज्ञानप्रयोगकर्म्मकार्य्यकालकर्तृक-
रणकुशलाः कुशलाश्च स्मृतिमतिशास्त्रयुक्तिज्ञानस्यात्मनः
शीलगुणैरविसंवादनेन सम्पादनेन सर्वप्राणिषु चेतसो
मैत्रस्य मातृपितृभ्रातृबन्धुवदेवं युक्ता भवन्त्यग्निवेश।
प्राणानामभिसरा हन्तारो रोगाणामिति। अतो विपरीता
रोगाणामभिसरा हन्तारः प्राणिनामिति भिषक्छद्मप्रति-
च्छन्ना कण्टकभूता लोकस्य प्रातिरूपिकसधर्म्माणो
राज्ञां प्रमादाच्चरन्ति राष्ट्राणि तेषामिदं विशेषविज्ञानमत्यर्थं
वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति कर्म्मलोभात्
श्रुत्वा च कस्यचिदातुर्य्यमभितः परिपतन्ति संश्रवणे
चास्यात्मनो वैद्यगुणानुच्चैर्वदन्ति यश्चास्य वैद्यः प्रतिकर्म्म
करोति तस्य च दोषान् मुहुर्मुहुरुदाहरन्त्यातुरमित्राणि च
प्रहर्षणोपजापोपसेवाभिरिच्छन्त्यात्मीकर्त्तुमल्पेच्छताञ्चात्म-
नः ख्यापयन्ति कर्म्म चासाद्य मुहुर्मुहुरवलोकयन्ति दाक्ष्ये-
णाज्ञानमात्मनः छादयितुकामा व्याधिञ्चापवर्तयितुमशक्नु-
वन्तो व्याधितमेवानुपकरणमपचारिकमनात्मवन्तमुद्दिशन्ति
अन्तगतञ्चाभिसमीक्ष्यान्यमाश्रयन्ति देशमपदेशमात्मनः
कृत्वा प्राकृतजनसन्निपाते चात्मनः कौशलमकुशलवद्वर्णयन्ति
अधीरवच्च धैर्य्यमपवदन्ति धीराणां विद्वज्जनसन्निपातञ्चाभि-
समीक्ष्य प्रतिभयमिव कान्तारमध्वगाः परिहरन्ति दूरा-
द्यश्चैषाङ्कश्चित् सूत्रावयव उपयुक्तः तमप्रकृतं प्रकृतान्त-

रेषामततमुदाहरन्ति न चानुयोगमिच्छन्ति अनुपयोक्तुं वा मृत्योरिव चानुयोगादुद्विजन्ते न चैषामाचार्य्यः शिष्यो वा सब्रह्मचारी वैवादिको वा कश्चित् प्रज्ञायते इति। भवति चात्र। भिषक्छद्म प्रविश्यैव व्याधितांस्तर्कयन्ति ये।

वतंसमिव संश्रित्य वने शाकुन्तिको द्विजान्॥
श्रुतदृष्टक्रियाकालमात्राज्ञानवहिष्कृताः।
वर्ज्जनीया हि ते मृत्योश्चरन्त्यनुचरा भुवि॥
वृत्तिहेतोर्भिषङ्मानपूर्णान् मूर्खविशारदान्।
वर्ज्जयेदातुरो विद्वान् सर्पास्ते पीतमारुताः॥
ये तु शास्त्रविदो दक्षाः शुचयः कर्म्मकोविदाः।
जितहस्ता जितात्मानः तेभ्यो नित्यकृतं नम इति॥

तत्र श्लोकः। दशप्राणायतनिके श्लोकस्थानार्थसंग्रहः।
द्विविधा भिषजश्चोक्ताः प्राणस्यायतनानि च॥

इति दशप्राणायतनीयोऽध्यायः समाप्तः।

---

त्रिंशोऽध्यायः।

अथातोऽर्थे दशमूलीयमध्यायं व्याख्यास्यामः।

अर्थे दश महामूलाः समासक्ता महाफलाः।
महच्चार्थश्च हृदयं पर्य्यायैरुच्यते बुधैः॥

षडङ्गमङ्गविज्ञानमिन्द्रियाण्यर्थपञ्चकम्।
आत्मा च सगुणश्चेतः चिन्त्यञ्च हृदि संश्रितम्॥
प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते।
गोपानसीनामागारकर्णिके वार्थचिन्तकैः॥
तस्योपघातान्मूर्च्छां यं भेदान्मरणमृच्छति।
यद्धि तत् स्पर्शविज्ञानन्धारितन्तत्र संश्रितम्॥
तत्परस्यौजसः स्थानन्तत्र चैतन्यसंग्रहः।
हृदयं महदर्थश्च तस्मादुक्तश्चिकित्सकैः॥
तेन मूलेन महता महामूला मता दश।
तेजो वाह्यः शरीरे वा विधम्यन्ते समन्ततः॥
येनौजसा वर्तयन्ति प्रीणिताः सर्वदेहिनः।
यदृते सर्वभूतानां जीवितं नावतिष्ठते॥
यत् सारमादौ गर्भस्य योऽसौ गर्भरसाद्रसः।
संवर्तमानं हृदयं समाविशति यत् पुरा॥
यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम्।
यः शरीररसः स्नेहः प्राणो यत्र प्रतिष्ठितः॥
तत्फला विविधा वाताः फलन्तीति महाफलाः।
ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात् सिराः॥
तन्महत्ता महामूलास्तच्चौजः परिरक्षता।
परिहार्या विशेषेण मनसा दुःखहेतवः॥
हृद्यं यत् स्याद्यदौजस्यं स्रोतसां यत्प्रसादनम्।
तत्तत् सेव्यं प्रयत्नेन प्रशमो ज्ञानमेव चेति॥

अथ खल्वेकं प्राणवर्धनानामुत्कृष्टतममेकम्बलवर्द्धनानामेकं बृंहणानामेकं हर्षणानामेकमयनानामिति तत्रा-

हिंसा प्राणिनां प्राणवर्द्धनानामुत्कृष्टतमं वीर्य्यम्बलवर्द्धनानां विद्या बृंहणानामिन्द्रियजयो नन्दनानान्तत्त्वावबोधो हर्षणानां ब्रह्मचर्य्यमयनानामित्यायुर्वेदविदो मन्यन्ते। तत्रायुर्वेदविदस्तन्त्रस्थानाध्यायप्रश्नानां पृथक्त्वेन वाक्यशो वाक्यार्थशोऽर्थावयवशश्च प्रवक्तारो मन्तव्याः। अत्राह कथं तन्त्रादीनि वाक्यशो वाक्यार्थशोऽवयवशश्चेति उक्तानि भवन्ति अत्रोच्यते तन्त्रमार्षङ्कात्स्न्येन यथाम्नायमुच्यमानं वाक्यशो भवत्युक्तं बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं वाग्भिर्व्याससमासप्रतिज्ञाहेतूदाहरणोपनयनिगमनयुक्ताभिः त्रिविधशिष्यबुद्धिगम्याभिरुच्यमानं वाक्यार्थशो भवत्युक्तं तन्त्रनियतानामर्थदुर्गाणां पुनर्विभावनैरुक्तमर्थावयवशो भवति। तत्र चेत्प्रष्टारः स्युः चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः। किमायुः कस्मादायुर्वेदविदः किञ्चायमायुर्वेदः शाश्वतोऽशाश्वत इति। कानि चास्याङ्गानि कैश्चायमध्येतव्यः किमर्थञ्चेति। तत्र भिषजा पृष्टे नैवञ्चतुर्णामृक्सामयजुरथर्ववेदानां आत्मनोऽथर्ववेदे भक्तिरादेश्या वेदो ह्याथर्वणः स्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादिपरिग्रहाच्चिकित्सां प्राह चिकित्सा चायुषो हितायोपदिश्यते वेदञ्चोपदिश्य अर्वाच्यं तत्रायुश्चेतनाप्रवृत्तिर्जीवितमनुबन्धोधारि चेत्येकोऽर्थः तदा आयुर्वेदयतीत्यायुर्वेदः कथमित्युच्यते स्वलक्षणतः सुखासुखतो हिताहिततः प्रमाणाप्रमाणतश्च यतश्चायुष्यानयुष्याणि च द्रव्यगुणकर्माणि वेदयत्यतोऽप्यायुर्वेदः तत्रायुष्याणि अनायुष्याणि च द्रव्यगुणकर्माणि केवलेनोपदेक्ष्यन्ते तन्त्रेण तत्रायुक्तं स्वलक्ष-

णतो यथावदिष्टैव तत्र शारीरमानसाभ्यां रोगाभ्यामन-
भिद्रुतस्य विशेषेण यौवनवतः समन्वागतबलवीर्यपौरुषप-
राक्रमस्य ज्ञानविज्ञानेन्द्रियेन्द्रियार्थबलसमुदाये वर्तमानस्य
परमर्द्धिरुचिरविविधोपभोगस्य समृद्धसर्वारम्भस्य यथेष्टवि-
चारणात् सुखमायुरुच्यते। असुखमतो विपर्ययेण हितै-
षिणः पुनर्भूतानाम्परस्वादुपरतस्य सत्यवादिनः शमपरस्य
परीक्ष्यकारिणोऽप्रमत्तस्य त्रिवर्गं परस्परेणानुपहतमुप-
सेवमानस्य पूजार्हसम्पूजकस्य ज्ञानविज्ञानोपशमशीलस्य
वृद्धोपसेविनः सुनियतरागरोषेर्ष्यामदमानवेगस्य सततं
विविधप्रदानपरस्य तपोज्ञानप्रशमनित्यस्य अध्यात्मविद-
स्तत्परस्य लोकमिमञ्चामुञ्चापेक्षमाणस्य स्मृतिमतो हित-
मायुरुच्यते। अहितमतो विपर्ययेण प्रमाणमायुषस्त्व-
र्थेन्द्रियमनोबुद्धिचेष्टादीनां विकृतिलक्षणैरुपलभ्यते नि-
मित्तैः इदमस्मात् क्षणान्मुहूर्त्ताद्दिवसात्त्रिपञ्चसप्तदश-
द्वादशाहात् पक्षान्मासात् षण्मासात् संवत्सराद्वा स्वभावमाप-
त्स्यते इति। तत्र स्वभावः प्रवृत्तेः उपरमो मरणमनित्य-
तानिरोध इत्येकोऽर्थः। इत्यायुषः प्रमाणमतो विपरीत-
मप्रमाणम्। अरिष्टाधिकारे देहप्रकृतिलक्षणमधिकृत्य चोप-
दिष्टमायुषः प्रमाणम् आयुर्वेदे सोऽयमायुर्वेदः शाश्वतो निर्दि-
श्यते नादित्वात् स्वभावसंसिद्धलक्षणत्वाद्भावस्वभावनित्य-
त्वाच्च न हि नाभूत्कदाचिदायुषः सन्तानं बुद्धिसन्तानं
वा शाश्वतश्चायुषोवेदिता अनादि च सुखदुःखं सद्रव्य-
हेतुलक्षणमपरापरयोगादेष चार्थसंग्रहो विभाव्यते। आ-
युर्वेदलक्षणमिति गुरुलघुशीतोष्णस्निग्धरूक्षादीनाञ्च द्वन्द्वानां

सामान्यविशेषाभ्यां वृद्धिह्रासौ यथोक्तं गुरुभिः अभ्यमानै-गुरूणामुपचयो भवत्यपचयो लघूनां एवमेवितरेषां इत्येष भावस्य भावो नित्यः स्वलक्षणञ्च द्रव्याणां पृथिव्यादीनां सन्ति तु द्रव्याणि गुणाश्च नित्यानित्याः । स आयुर्वेदस्य भूत्वोत्पत्तिरुपलभ्यते । अन्यत्रावबोधोपदेशाभ्यामेतद्धि द्वय-मधिकृत्यमुत्पत्तिमुपदिशन्त्येके स्वाभाविकं चास्य लक्षण-मकृतकं यदुक्तं इह चाद्ये चाध्याये यथाग्नेरौष्ण्यम् अपां द्रवत्वं भावस्वभावनित्यत्वमपि चास्य यथोक्तं गुरुभिरभ्यस्य-मानैर्गुरूणामुपचयो भवत्यपचयो लघूनामित्येवमादित आयुर्वेदस्याङ्गान्यष्टौ । तद्यथा कायचिकित्साशालाक्यं शल्यहर्तृकं विषगरवैरोधिकप्रशमनं भूतविद्या कौमारभृ-त्यकं रसायनानि वाजीकरणमिति स चाध्येतव्यो ब्राह्मण-राजवैश्यैः । तत्रानुग्रहार्थं प्राणिनां ब्राह्मणैरारक्षार्थं राजन्यैः वृत्त्यर्थं वैश्यैः सामान्यतो वा धर्मार्थकामप्रतिग्रहार्थं सर्वैः । तत्र च यदध्यात्मविदां धर्मपथस्थानां धर्मप्रकाशानां वा मातृपितृभ्रातृबन्धुगुरुजनस्य वा विकारप्रशमने प्रयत्न-वान् भवति । यच्चायुर्वेदोक्तमध्यात्ममनुध्यायति वेत्त्यधीते वा सोऽप्यपरो धर्मः । या पुनरीश्वराणां वसुमतां वा सका-शात् सुखोपहारनिमित्ता भवत्यर्थलवावाप्तिरारक्षणञ्च या च स्वपरिगृहीतानां प्राणिनामातुर्यादारक्षा सोऽस्यार्थः । यत्पुनरस्य विद्वद्ग्रहणं यशः शरण्यत्वं या च समानशुश्रूषा यच्चेष्टानां विषयाणामारोग्यमाधत्ते सोऽस्य काम इति । यथा प्रश्नमुक्तमशेषेण अथ भिषगादित एव भिषजा प्रष्टव्य इति अष्टविधम् । तद्यथा तन्त्रं तन्त्रार्थं स्थानानि स्थानार्थान-

ध्यायानध्यायार्थान् प्रश्नान् प्रश्नार्थांश्चेति पृष्टे चैतद्वक्तव्यमशेषेण वाक्यशो वाक्यार्थशोऽर्थावयवशश्चेति। तत्रायुर्वेदः शाखा विद्या सूत्रं ज्ञानं शास्त्रं लक्षणं तन्त्रमित्यनर्थान्तरं तन्त्रार्थः पुनः स्वलक्षणेनोपदिष्टः स चार्थः प्रकरणैर्विभाव्यमानो भूय एव शरीरवृत्तिहेतुव्याधिकर्म्मकार्य्यकालकर्त्तृकरणविधिविनिश्चयाद्दशप्रकरणाः। तानि च प्रकरणानि केवलेनोपदिश्यन्ते तन्त्रेण तन्त्रमष्टौ स्थानानि तद्यथा श्लोकस्थाननिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्धिस्थानानि। तत्र त्रिंशदध्यायकं श्लोकस्थानम्। अष्टाध्यायकानि निदानविमानशारीरे स्थानानि द्वादशकमिन्द्रियाणां त्रिंशत्कश्चिकित्सितानां द्वादशके कल्पसिद्धिस्थाने इति।

भवति चात्र।

द्वाविंशके द्वादशकत्रयश्च त्रीण्यष्टकान्येषु समाप्तिरुक्ता।
श्लोकौषधारिष्टविकल्पसिद्धिनिदानमानाश्रयसंज्ञकेषु॥

स्वे स्वे स्थाने यथास्वं च स्थानार्थ उपदेक्ष्यते।
सविंशतमध्यायशतं शृणु क्रमागतम्॥
दीर्घंजीवोऽप्यपामार्गतण्डुलारग्वधादिकौ।
षड्विरेकाश्रयश्चेति चतुष्को भेषजाश्रयः॥
मात्रा तस्याशितीयौ च न वेगाधारणस्तथा।
इन्द्रियोपक्रमश्चेति चत्वारः स्वास्थ्यवृत्तिकाः॥
खुड्डाकश्च चतुष्पादो महांस्तिस्रैषणस्तथा।
सह वातकलाख्येन विद्यान्नैर्देशिकावुदः॥
स्नेहनस्वेदनाध्यायावुभौ यश्चोपकल्पनः।
चिकित्साप्राभृतश्चैव सर्वा एवोपकल्पनाः॥

क्रियन्तः शिरसीयश्च त्रिशोफाष्टोदरादिकौ ।
रोगाध्यायो महांश्चैव रोगाध्यायचतुष्टयम् ॥
अष्टौ निर्मितसंख्यातस्तथा लङ्घनतर्पणौ ।
विधिशोणितकश्चेति व्याख्यातास्तत्र योजनाः ॥
यज्जः पुरुषकः खुड्डौ भद्रकाप्यान्नपानिकौ ।
विविधाशितपीतश्च चत्वारोऽन्नविनिश्चये ॥
दशप्राणायतनिकस्तथार्थे दशमूलिकः ।
द्वावेतौ प्राणदेहार्थं प्रोक्तौ वैद्यगुणाश्रयौ ॥
औषधस्वस्थनिर्देशकल्पनारोगयोजनाः ।
चतुष्काः षट्क्रमेणोक्ताः सप्तमश्चान्नपानिकः ॥
द्वौ चान्यौ संग्रहाध्यायाविति त्रिंशत्कमर्थवत् ।
श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरःशुभम् ॥
चतुष्काणां महार्थाणां स्थानेऽस्मिन् सङ्ग्रहः कृतः ।
श्लोकार्थः सङ्ग्रहार्थश्च श्लोकस्थानमतः स्मृतम् ॥ १
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः ।
शोषोन्मादनिदाने च स्यादपस्मारणञ्च यत् ॥
इत्यध्यायाष्टकमिदं निदानस्थानमुच्यते । २
रसेषु त्रिविधे कुक्षौ ध्वंसे जनपदस्य च ॥
त्रिविधे रोगविज्ञाने स्रोतःस्वपच वर्त्तते ।
रोगानीके व्याधिरूपे रोगाणाञ्च भिषज्यिते ॥
अष्टौ विमानान्युक्तानि मानार्थानि महर्षिणा । ३
कतिधा पुरुषीयञ्च गोत्रेणातुल्यमेव च ॥
खुड्डीका महती चैव गर्भावक्रान्तिरुच्यते ।
पुरोषस्य शरीरस्य पुरुषौ द्वौ विनिश्चितौ ॥

शरीरसंख्या सूत्रञ्च जातिरष्टममुच्यते ।
इत्युद्दिष्टानि मुनिना शरीराण्यत्रिसूनुना ॥ ४
वर्णस्वरीयं पुष्पाख्यस्तथैव परिमर्षणः ।
तथैव चेन्द्रियानीकः पौर्वरूपकमेव च ॥
कतमानि शरीरीयः पूर्वरूपोऽप्यवाक्शिराः ।
यस्य श्यावनिमित्तश्च सद्यो मरण एव च ॥
अणुज्योतिरिति ख्यातः तथा गोमयचूर्णवान् ।
द्वादशाध्यायकं स्थानमिन्द्रियाणां प्रकीर्तितम् ॥ ५
अभयामलकीयञ्च प्राणकामीयमेव च ।
करप्रचितिकं वेद समुत्थानं रसायनम् ॥
संयोगशरमूलीयमासक्षीरकं तथा ।
माषपर्णभृतीयञ्च पुमान् जातबलादिकम् ॥
चतुष्कद्वयमप्येतदध्यायद्वयमुच्यते ।
रसायनमिति ज्ञेयं वाजीकरणमेव च ॥
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः ।
शोषेऽर्शसामतीसारे वीसर्पे च मदात्यये ॥
द्विव्रणीये तथोन्मादे स्यादपस्मार एव च ।
क्षतशोषो दरे चैव ग्रहणीपाण्डुरोगयोः ॥
हिक्काश्वासे च कासे च छर्दिस्तृष्णाविषेषु च ।
मर्मत्रये चोरुस्तम्भे सवाते वातशोणिते ॥
त्रिंशच्चिकित्सितान्यत्र योनीनां व्यापदा सह । ६
फलजीमूतकेक्ष्वाकुकल्पोधामार्गवस्य च ॥
पञ्चमो वत्सकस्योक्तः षष्ठश्च कृतवेदने ।
श्यामात्रिवृतयोः कल्पस्तथैव चतुरङ्गुले ॥

तिल्वकस्य सुधायाश्च सप्तलाशङ्खिनीष्वपि ।
दन्तीद्रवन्त्योः कल्पश्च द्वादशोऽयं समाप्यते ॥ ७
कल्पना पञ्चकर्माख्या वस्तिसूत्रा तथैव च ।
स्नेहव्यापादिका सिद्धिर्नेत्रव्यापादिका तथा ॥
सिद्धिः शोधनयोश्चैव वस्ति सिद्धिस्तथैव च ।
प्रास्तता मर्मसंख्याता सिद्धिर्वस्त्याश्रया च या ॥
फलमात्रा तथा सिद्धिः सिद्धिश्चोत्तरसंज्ञिता ।
सिद्धयो द्वादशैवैतास्तन्त्रश्चासु समाप्यते ॥
स्वे स्वे स्थाने तथाध्याये चाध्यायार्थः प्रवक्ष्यते । ८
तं ब्रूयात् सर्वतः सर्वं यथास्वं ह्यर्थसंग्रहात् ॥
पृच्छातन्त्रात् यथाम्नायं विधिना प्रश्न उच्यते ।
प्रश्नार्थो युक्तिमांस्तस्य तन्त्रेणैवार्थनिश्चयः ।
निरुक्तं तन्त्रणात्तन्त्रं स्थानमर्थप्रतिष्ठया ॥
अधिकृत्यायमध्याय नाम संज्ञा प्रतिष्ठिताः ।
इति सर्वं यथा प्रश्नमष्टकं सम्प्रकाशितम् ॥
कात्स्न्येन चोक्तस्तन्त्रस्य संग्रहः सुविनिश्चितः ।
सन्ति पाल्लविकोत्पाताः संक्षोभं जनयन्ति ये ॥
वर्त्तकानामिवोत्पाताः सहसैवाविभाविताः ।
तस्मात्तान् पूर्वसंजल्पे सर्वत्राष्टकमादिशेत् ।
परापरपरीक्षार्थं मात्रशास्त्रविदां बलम् ॥
शब्दमात्रेण तन्त्रस्य केवलस्यैकदेशिकाः ।
भ्रमन्त्यल्पबलास्तन्त्रे ज्याशब्देनेव वर्त्तकाः ॥
पशुः पशूनां दौर्बल्यात् कश्चिम्मध्ये वृकायते ।
स सत्वं वृकमासाद्य प्रकृतिं भजते पशुः ॥

तद्वदज्ञोऽप्रमध्यस्थः कश्चिन्मौखर्यसाधनः ।
स्थापयत्याप्तमात्मानमाप्तं त्वासाद्य भिद्यते ॥
यस्तु मूढ इवोर्णाभिरज्ञुरबहुश्रुतः ।
किं वै वक्ष्यति संजल्पे कुण्डभेदी जडो यथा ॥
सद्वृत्तैर्न विगृह्णीयाद्भिषगल्पश्रुतैरपि ।
हन्यात् प्रश्नाष्टकेनादावितरांस्त्वात्ममानिनः ॥
दम्भिनो मुखरा ह्यज्ञाः प्रभुता बहुभाषिणः ।
प्रायः प्रायेण सुमुखाः सन्तो युक्ताल्पभाषिणः ॥
तत्त्वज्ञानप्रकाशार्थमहङ्कारमनाश्रिताः ।
स्वल्पाधाराज्ञमुखरान्दर्शयेन विवादिनः ॥
परोभतेष्वनुक्रोशस्तत्त्वज्ञाने परा दया ।
येषां तेषामसद्वादनिग्रहे निरता मतिः ॥
असत्पक्षाक्षणिकत्वात्तिदम्भपारुष्यसाधनाः ।
भवन्त्यनाप्ताः स्वे तन्त्रे प्रायः परविकत्थनाः ॥
तत्कालपाशसङ्काशान्वर्जयेच्छास्त्रदूषकान् ।
प्रशमज्ञानविज्ञानपूर्णाः सेव्या भिषक्तमाः ।
समग्रं दुःखमायत्तमविज्ञाने द्वयाश्रयम् ॥
सुखं समग्रं विज्ञाने विमले च प्रतिष्ठितम् ।
इदमेव सुदारार्थमज्ञानात्मप्रकाशकम् ॥
शास्त्रं दृष्टप्रणष्टानां यथैवादित्यमण्डलमिति ।

तत्र श्लोकाः । अर्थे दश महामूलाः संज्ञास्तेषां यथाकृताः ।
अयनान्ताः षडग्र्याश्च रूपं वेदविदाञ्च यत् ॥
सप्तकश्चाष्टकश्चैव परिप्रश्नः सनिर्णयः ।
यथा वाच्यं यदर्थञ्च यद्विधाश्चैकदेशिकाः ॥

अस्मिं दशमहामूले सर्वमेतत् प्रकाशितम् ।
संग्रहश्चैवमध्यायस्तन्त्रस्यास्यैव केवलः ॥
यथा सुमनसां सूत्रं संग्रहार्थं विधीयते ।
संग्रहार्थं यथार्थानामृषिणा संग्रहः कृतः ॥
इति युक्ते दश महामूलीयोऽध्यायः समाप्तः ।

इति आचार्य्यचरकमुनिविरचितायां संहितायां
सूत्रस्थानं समाप्तम् ।

---

प्रथमोऽध्यायः ।

अथातो निदानस्थानं लिख्यते।

अथातो ज्वरनिदानं व्याख्यास्यामः ।
इति हस्माहुरात्रेयादयो महर्षयः ।

इह खलु हेतुर्निमित्तमायतनं कर्त्ता कारणं प्रत्ययः समुत्थानं निदानमित्यनर्थान्तरं तत्त्रिविधम् असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेत्यतस्त्रिविधत्रिकल्पा व्याधयः प्रादुर्भवन्त्याग्नेयसौम्यवायव्याः द्विविधाश्चापरे

राजयक्ष्मणामसाय तत्र व्याधिरामयो गद आतङ्को यक्ष्मा-
ज्वरो विकारो रोग इत्यनर्थान्तरं तस्योपलब्धिर्निदानपूर्व-
रूपलिङ्गोपशयसम्प्राप्तितस्तत्र निदानं कारणमित्युक्तमग्रे पूर्व-
रूपं प्रागुत्पत्तिलक्षणं व्याधेः प्रादुर्भूतलक्षणं पुनर्लिङ्गं तत्र
लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरम्
तस्मिन्नर्थे उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थ-
कारिणाञ्चौषधाहार विहाराणां सुखानुबन्धः संप्राप्तिर्जाति-
रागतिरित्यनर्थान्तरं व्याधेः संख्याप्राधान्यविधिविकल्पबल-
कालविशेषैर्भिद्यते संख्या यथाष्टौ ज्वराः पञ्चगुल्माः सप्तकुष्ठा-
न्येवमादिप्राधान्यं पुनर्दोषाणान्तरतमयोगेनोपलभ्यते तत्र
द्वयोस्तरस्त्रिषु तम इति विधिना द्विविधाव्याधयो निजा-
गन्तुभेदेन त्रिविधास्त्रिदोषभेदेन चतुर्विधाः साध्यासाध्य-
मृदुदारुणभेदेन समवेतानां पुनर्दोषाणामंशांशबलविकल्पो-
ऽस्मिन्नर्थे बलकालविशेषः पुनर्व्याधीनामृत्वहोरात्राहार-
कालविधिनियतस्तस्माद्व्याधीन् भिषगनुपहतबुद्धिर्हेत्वादि-
भिर्भावैर्यथावदनुबुध्येतेत्यर्थसंग्रहो निदानस्थानस्योद्दिष्टः तं
विस्तरेण भूयः परमतोऽनुव्याख्यास्यामः । तत्र प्रथमत एव
तावदाद्यास्त्रोहाभिद्रोहप्रभवानष्टौ व्याधीन्निदानपूर्वेण क्रमेण
व्याख्यास्यामः । तथा सूत्रसंग्रहमात्रं चिकित्सायाः चिकि-
त्सितेषु चोत्तरकालं यथाचितं विकारानुव्याख्यास्यामः ।

इह तु ज्वर एवादौ विकाराणामुपदिश्यते । तत्
प्रथमत्वात् शारीराणाम् अष्टाभ्यः कारणेभ्यो ज्वरः
सञ्जायते मनुष्याणां तद्यथा वातात् पित्तात् कफाद्वातपि-

ष्माभ्यां पित्तश्लेष्मभ्यां वातश्लेष्मभ्यां वातपित्तश्लेष्मभ्यः आगन्तोरष्टमात् कारणात्तस्य निदानपूर्वरूपलिङ्गोपशयविशेषाननुपदेक्ष्यामः। रूक्षलघुशीतव्यायामवमनविरेचनस्थापनातियोगसन्धारणानशनाभिघातव्यवायोद्वेगशोकशोणितातिषेकजागरणविषमशरीरन्यासेभ्योऽतिसेवितेभ्यो वायुः प्रकोपमापद्यते। स यदा प्रकुपितः प्रविश्यामाशयमूष्मणा मिश्रीभूत आद्यमाहारपरिणामधातुं रसनामानमन्ववेत्य रसस्वेदवाहानि च स्रोतांसि च पिधाय पक्तिस्थानादूष्माणं वहिर्वासं निरस्य केवलं शरीरमुपपद्यते तदा ज्वरमभिनिर्वर्त्तयति तस्येमानि लिङ्गानि भवन्ति। तद्यथा विषमारम्भविसर्गित्वमूष्मणो वैषम्यं तीव्रतनुभावानवस्थानं जरणान्ते दिवसान्ते घर्मान्ते वा ज्वराभ्यागमनमभिवृद्धिर्वा ज्वरस्य विशेषेण परुषारुणत्वं नखनयनमूत्रपुरीषत्वचामत्यर्थं क्लिन्नीभावश्चानेकविधोपमाचलाचला च वेदना तेषां तेषामङ्गावयवानाम् तद्यथा पादयोः सुप्तता पिण्डिकयोरुद्वेष्टनं जान्वनोः केवलानाञ्च सन्धीनां विश्लेषणमूर्वोः सादः कटीपार्श्वपृष्ठस्कन्द बाहुंसरसाञ्च भग्नरुग्णमृदितमथितचटितावपीड़ितावतुन्नत्वमिव हन्वोरप्रसिद्धिः स्वकर्णयोः शङ्खयोर्निस्तोदः कषायास्यत्वमास्यवैरस्यं वा मुखतालुकण्ठशोषः पिपासाहृदयग्रहः शुष्ककासः क्षवथूद्गारविनिग्रहोऽन्नरसखेटप्रसेकारोचकाविपाकविषादविजृम्भविरामवेपथुश्रमभ्रमप्रलापजागरणलोमहर्षदन्तहर्षास्तथोष्णाभिप्रायतानिदानोक्तानामनुपचयो विपरीतोपचयश्चेति वातज्वरलिङ्गानि उष्णाम्ललवणक्षारकटुकाजीर्णभोजनेभ्योऽतिसे-

वितेभ्यस्तथातितीक्ष्णातपाग्निसन्तापश्रमक्रोधविषमाहारेभ्यः पित्तं प्रकोपमापद्यते। तद्यदा प्रकुपितमामाशयादेवो-ष्माणमुपसंसृज्याद्यमाहारपरिणामधातुं रसनामानम-न्वावेत्य रसस्वेदवाहानि च स्रोतांस्यपिधाय द्रवत्वादग्नि-मुपहत्य पक्तिस्थानादूष्माणं बहिर्वासं प्रपीड़यन् केवलं शरीरमुपपद्यते तदा ज्वरमभिनिर्वर्त्तयति तस्येमानि लिङ्गानि। तद्यथा युगपदेव केवले शरीरे ज्वराभ्यागमन-मभिवृद्धिर्वा उक्तस्य विदाहकाले मध्यन्दिनेऽर्द्धरात्रे वाशरा-दि विशेषेण कटुकास्यताघ्राणमुखकण्ठौष्ठतालुपाकस्तृष्णा भ्रमो मोहो मूर्च्छा पित्तच्छर्दनमतीसारोऽन्नद्वेषः स्वेदः प्र-लापो रक्तकोठाभिनिर्वृत्तिः हरितहारिद्रत्वं नखनयनवदन-मूत्रपुरीषत्वचामत्यर्थमुष्णास्तीव्रभावोऽतिमात्रं दाहः शीता-भिप्रायतानिदानोक्तानामनुपचयो विपरीतोपचयश्चेति पि-त्तज्वरलिङ्गानि। स्निग्धमधुरगुरुशीतपिच्छिलाम्ललवणदि-वास्वप्नहर्षव्यायामेभ्योऽतिसेवितेभ्यः श्लेष्मप्रकोपमापद्यते। स यदा प्रकुपितः प्रविश्यामाशयमूष्मणामिश्रीभूतमाद्यमा-हारपरिणामधातुं रसनामानमन्ववेत्य रसस्वेदवाहानि च स्रोतांस्यपिधायाग्निमुपहत्य पक्तिस्थानादूष्माणं वा-बहिः प्रपीड़यन् केवलं शरीरमुपपद्यते तदा ज्वरमभि-निर्वर्त्तयति तस्येमानि लिङ्गानि। तद्यथा युगपदेव केवले शरीरे ज्वराभ्यागमनमभिवृद्धिर्वा भुक्तमात्रे पूर्वाह्णे वसन्त-काले वा विशेषेण गुरुगात्रत्वमनन्नाभिलाषः श्लेष्मप्रसेको मुखस्य च माधुर्यं हृल्लासो हृदयोपलेपः स्तिमितत्वं छर्दिर्मृदग्निता निद्राया आधिक्यं स्तम्भः तन्द्रा श्वासः

कासः प्रतिश्यायः शैत्यञ्च नयननखवदनमूत्रपुरीषत्वचा-
मत्यर्थं शीतपिडकाभ्युदयमङ्गेभ्य उत्तिष्ठन्त्युष्णाभिप्रायता नि-
दानोक्तानामनुपशयो विपरीतोपशयश्चेति श्लेष्मज्वरलिङ्गानि
॥ विषमाशनादनशनादृतुपरिवर्त्तादृतुव्यापत्तेरसात्म्यगन्धो-
पघ्राणाद्विषोपहतस्योदकस्योपयोगाद्गरेभ्यो गिरीणामुपश्ले-
षात् स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचना-
नामयथावत्प्रयोगात् स्त्रीणाञ्च विषमप्रजननात् प्रजातानाञ्च
मिथ्योपचाराद्यथोक्तानाञ्च हेतूनां मिश्रीभावाद्यथानिदानं
द्वन्द्वानामन्यतमः सर्वे वा त्रयो दोषा युगपत्प्रकोपमापद्यन्ते।
ते प्रकुपितास्तयैवानुपूर्व्या ज्वरमभिनिर्वर्त्तयन्ति तत्र यथोक्ता-
नां ज्वरलिङ्गानां मिश्रीभावविशेषदर्शनाद्द्वान्द्विकमन्यतमं
ज्वरं सान्निपातिकं वा विद्यात्। अभिघाताभिषङ्गाभिचारा-
भिशापेभ्य आगन्तुर्व्यथापूर्वो ज्वरोऽष्टमो भवति। स कञ्चित्का-
लमागन्तुः केवलो भूत्वा दोषैरनुबध्यते। अभिघातजो वायुना
शोणिताधिष्ठानेन अभिषङ्गजः पुनर्वातपित्ताभ्यां अभिचारा-
भिशापजौ तु सन्निपातेनोपनिबध्यते। सप्तविधाज्ज्वराद्विशिष्ट-
लिङ्गोपक्रमसमुत्थितत्वाद्विशिष्टो वेदितव्यः कर्म्मणा साधार-
णेन चोपक्रमस्येति अष्टविधा ज्वरप्रकृतिरुक्ता। ज्वरस्त्वेक एव
सन्तापलक्षणस्तमेवाभिप्रायविशेषाद्द्विविधमाचक्षते निजाग-
न्तुविशेषाच्च तत्र निजं द्विविधन्त्रिविधञ्चतुर्विधं सप्तविधञ्चाहु-
र्वातादिविकल्पात्तस्येमानि पूर्वरूपाणि। तद्यथा मुखवैरस्यं
गुरुगात्रत्वमनन्नाभिलाषश्चक्षुषोराकुलत्वमस्रागमनं निद्राया
आधिक्यमरतिर्जृम्भा विनामो वेपथुः श्रमभ्रमप्रलापजागर-
णलोमहर्षशब्दगीतवातातपसहत्वासहत्वमरोचिकाविपाको

दौर्ब्बल्यमङ्गमर्द्दः सदनमल्पप्राणता दीर्घसूत्रता आलस्यमुपचितस्य कर्म्मणो हानिः प्रतीपता स्वकार्य्येषु गुरूणां वाक्येषु अभ्यसूया बालेषु प्रद्वेषः स्वधर्म्मेष्वचिन्ता माल्यानुलेपनभोजनक्लेशनं मधुरेषु प्रद्वेषोऽम्ललवणकटुकप्रियता चेति ज्वरपूर्व्वरूपाणि प्राक्सन्तापादपि चैनं सन्तापातमनुबध्नन्तीत्येतानि एकैकज्वरलिङ्गानि । विस्तरसमासाभ्यां ज्वरस्तु खलु महेश्वरकोपप्रभवः सर्व्वप्राणिनां प्राणहरो देहेन्द्रियमनस्तापकरः प्रज्ञाबलवर्णहर्षोत्साहह्रासदनार्त्तिश्रमक्लममोहाहारोपरोधसञ्जननो जरयति शरीराणि इति । ज्वरः । नान्ये व्याधयः । तथा दारुणा बहूपद्रवा दुश्चिकित्स्या यथायमिति । सर्व्वरोगाधिपतिर्नानातिर्य्यग्योनिषु बहुविधैः शब्दैरभिधीयते सर्व्वप्राणभृतश्च सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते स महामोहस्तेनाभिभूताः प्राग्दैहिकं देहिनः कर्म्म किञ्चन स्मरन्ति सर्व्वप्राणिभ्यश्च ज्वर एव प्राणानादत्ते। तत्रास्य पूर्व्वरूपदर्शने ज्वरादौ वाहितं लघ्वशनमतर्पणं वा ज्वरस्यामाशयसमुत्थत्वात् ततः कषायपानाभ्यङ्गस्वेदप्रदेहपरिषेकानुलोमनविरेचनास्थापनानुवासनोपशमननस्तःकर्म्म धूपधूमपानाञ्जनाभोजनविधानं यथास्वं युक्त्या जीर्णज्वरेषु सर्व्वेष्वेव सर्पिषः पानं प्रशस्यते । यथास्वमौषधसिद्धस्य सर्पिर्हि स्नेहाद्वातं शमयति संस्काराद् कफं शैत्यात्पित्तं उष्माणं च तस्माज्जीर्णज्वरेषु तु सर्व्वेष्वेव सर्पिर्हितमुदकमिवाग्निप्लुष्टेषु द्रव्येष्विति ।

तत्र श्लोकाः । यथा प्रज्वलितं वेश्म परिषिञ्चन्ति वारिणा ।

नराः शान्तिमभिप्रेत्य तथा जीर्णज्वरे घृतम् ॥

स्नेहाद्वातं शमयति शैत्यात्पित्तं नियच्छति।
घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम्॥
नान्यः स्नेहः तथा कश्चित् संस्कारमनुवर्त्तते।
यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तरं परम्॥
गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते।
तद्व्यक्ति व्यवसायार्थं द्विरुक्तः स न गर्ह्यते॥
त्रिविधं नाम पर्य्यायैर्हेतुं पञ्चविधान् गदान्।
गदलक्षणपर्य्यायान् व्याधेः पञ्चविधं ग्रहम्॥
ज्वरमष्टविधं तस्य प्रत्यष्टासन्नकारणम्।
पूर्व्वरूपञ्च रूपञ्च संग्रहं भेषजस्य च॥
व्याख्यातवान् ज्वरस्याये निदाने विगतज्वरः।
भगवानग्निवेशाय प्रणताय पुनर्वसुः॥

इति ज्वरनिदानं समाप्तम्।

---

## द्वितीयोऽध्यायः।

अथातो रक्तपित्तनिदानं व्याख्यास्यामः।

पित्तं यथाभूतं लोहितपित्तसंज्ञां लभते तत्तथानुव्याख्यास्यामः। यदा जन्तुर्यवकोद्दालककोरदूषकप्रायाण्यन्नानि भुङ्क्ते भृशोष्णतीक्ष्णमपि चान्यदन्नजातं निष्पावमाषकुलत्थक्षारसूपोपहितं दधिमण्डोदश्वित्कट्वाम्लकाञ्जिकोपसेकं वाराहमाहिषाविकमात्स्यगव्यपिशितं पिण्याकं पिण्डाल-

कशाकोपहितं मूलकसर्षपलशुनकरञ्जशिग्रुकखरपुषोभु-स्तृणकप्रमुखा सुरसकुठेरकगण्डीरकालकपर्णासक्षवकफणि-ज्झकोपदंशं सुरा सौवीरतुषोदकमैरेयमेदकमधूलककुवर-बदराम्लप्रायानुपानं पिष्टान्नोत्तरभूयिष्ठमुष्णाभितप्तो वाति-मात्रमतिवेलं वा पयसा समश्नाति रौहिणीककापोतं वा सर्षपतैलक्षारसिद्धं कुलत्थमाषपिण्याकजाम्बवलिकुचपक्वैः शौक्तिकैर्वा सह क्षीरमाममतिमात्रं वातिशा पिबत्युष्णाभि-तप्तस्तस्यैवमाचरतः पित्तं प्रकोपमापद्यते। लोहितञ्च स्वप्रमाणमतिवर्त्तते। तस्मिन् प्रमाणातिवृत्ते पित्तप्रकुपितं शरीरमनुसर्पद्यदैव यकृत्प्लीहप्रभवानां लोहितवाहानां स्रो-तसां लोहिताभिष्यन्दगुरूणि मुखान्यासाद्य प्रतिपद्यते तदेव लोहितं दूषयति। संसर्गाल्लोहितप्रदूषणाल्लोहित-गन्धवर्णानुविधानाच्च पित्तं लोहितमित्याचक्षते। तस्येमानि पूर्वरूपाणि। तद्यथा अनन्नाभिलाषो भुक्तस्य विदाहः शुक्ताम्लरसगन्ध उद्गारश्छर्दिषोऽभीक्ष्णागमनं छर्दितस्य बीभ-त्सता स्वरभेदो गात्राणां सदनं परिदाहश्च मुखाद्धूमा-गम इव लोहलोहितमत्स्यामगन्धित्वमपि चास्य रक्तहरित-हारिद्रत्वमङ्गावयवशकृन्मूत्रस्वेदलालासिङ्घाणकास्यक-र्णमलपिड़कोलिका पिड़का रागसंवेदना लोहितनील-पीतश्यावानामर्चिष्मताञ्च रूपाणां स्वप्नदर्शनमभीक्ष्णमिति लोहितपित्तपूर्वरूपाणि उपद्रवास्तु खलु दौर्बल्यारोचका-विपाकश्वासकासज्वरातीसारशोफशोषपाण्डुरोगस्वरभेदाः मार्गौ पुनरस्य द्वौ ऊर्द्ध्वञ्चाधश्च तद्बहुश्लेष्माणि शरीरे श्लेष्म-संसर्गादूर्द्ध्वं प्रपद्यमानं कर्णनासिकानेत्रास्यात् प्रच्यवते

बहुवातानि शरीरे श्लेष्मवातसंसर्गादधः प्रपद्यमानं मूत्रपुरीषमार्गाभ्यां प्रच्यवते बहुवातश्लेष्मे तु शरीरे श्लेष्मवातसंसर्गाद्द्वावपि मार्गौ प्रपद्यते तौ मार्गौ प्रपद्यमानं सर्वेभ्य एव यथोक्तेभ्यो दुःखेभ्यः प्रच्यवते शरीरस्य तत्र यदूर्द्धभागं तत् साध्यं विरेचनोपक्रमणीयत्वात् बह्वौषधत्वाच्च यदधोभागं तद्याप्यं वमनोपक्रमणीयत्वात् अल्पौषधत्वाच्च यदुभयभागन्तदसाध्यं वमनविरेचनायोगित्वादनौषधत्वाच्च रक्तपित्तप्रकोपस्तु खलु पुरा दक्षयज्ञोद्ध्वंसे रुद्रकोपामर्षाग्निना प्राणिनां परिगतशरीरप्राणानामभुज्ज्वरमभवत्तस्याशुकारिणो दावाग्नेरिवापतितस्यात्ययिकस्याशुप्रशान्तौ यतितव्यं मात्रां देशं कालञ्चाभिसमीक्ष्यास्तर्पणेनापतर्पणेन वा मृदुमधुरशिशिरतिक्तकषायैरभ्यवहार्य्यैः प्रदेहपरिषेकावगाहसंस्पर्शनैर्वमनादिर्वा वहितेनेति । तत्र श्लोकाः ।

साध्यं लोहितपित्तं तद्यदूर्द्धं प्रतिपद्यते ।
विरेचनस्य योगित्वात्तद्बहुत्वाद्भेषजस्य च ॥
वमनं न हि पित्तस्य हरणे श्रेष्ठमुच्यते ।
यश्च तत्रान्वयो वायुस्तच्छान्तौ चावरं मतम् ॥
तच्चायोगावहं तत्र कषायं तिक्तकानि च ।
तस्माद्याप्यं समाख्यातं यदुक्तमनुलोमगम् ॥
रक्तपित्तन्तु यन्मार्गौ द्वावपि प्रतिपद्यते ।
असाध्यमपि तत् ज्ञेयं पूर्वोक्तादपि कारणात् ।
न हि संशोधनं किञ्चिदस्त्यस्य प्रतिमार्गगम् ॥
प्रतिमार्गञ्च हरणं रक्तपित्ते विधीयते ।
एवमेवोपशमनं सर्वशोनास्य विद्यते ॥

संसृष्टेषु च दोषेषु सर्वजिच्छमनं मतम्॥
इत्यक्तं त्रिविधोदर्कं रक्तं मार्गविशेषतः।
एभ्यस्तु खलु हेतुभ्यः किञ्चित् साध्यं न सिध्यति॥
प्रेष्योपकरणाभावाद्दौरात्म्याद्वैद्यदोषतः।
अकर्मतश्च साध्यत्वं किञ्चिद्रोगोऽतिवर्त्तते॥
तत्र साध्यत्वमेकं स्यात् साध्ययाप्यपरिक्रमात्।
रक्तपित्तस्य विज्ञानमिदं तस्योपदेक्ष्यते॥
यत् कृष्णमथवा नीलं यद्वा शक्रधनुष्प्रभम्।
रक्तपित्तमसाध्यं तद्वाससो रञ्जनञ्च यत्॥
भृशं प्रत्यतिमात्रञ्च सर्वोपद्रववच्च यत्।
बलमांसक्षये यच्च तच्च रक्तमसिद्धिमत्॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः।
पश्येद्दृश्यं वियच्चैव तच्चासाध्यमसंशयम्॥
तत्रासाध्यं परित्याज्यं याप्यं यत्नेन यापयेत्।
साध्यञ्चावहितः सिद्धैर्भेषजैः साधयेद्भिषगिति॥
तत्र श्लोकौ। कारणं नाम निर्वृत्तिं पूर्वरूपाण्युपद्रवान्।
मार्गौ दोषानुबन्धञ्च साध्यत्वं न च हेतुमत्॥
निदाने रक्तपित्तस्य व्याजहार पुनर्वसुः।
वीतमोहरजोदोषलोभमानमदस्पृहः॥

इति रक्तपित्तनिदानं समाप्तम्।

.......................

तृतीयोऽध्यायः।

अथातो गुल्मनिदानं व्याख्यास्यामः।

इह खलु पञ्च गुल्मा भवन्ति। तद्यथा वातगुल्मः पित्तगुल्मः श्लेष्मगुल्मो निचयगुल्मः शोणितगुल्म इति एवं

वादिनं भगवन्तमात्रेयमग्निवेश उवाच कथमिह भगवन्। पञ्चानां गुल्मानां प्रति विशेषमभिजानीयाम। अनवस्थितविशेषविद्रोगाणामौषधविदपि भिषक् प्रशमनमसमर्थं इति तमुवाच भगवानात्रेयः। समुत्थानपूर्वं लिङ्गवेदनोपशयविशेषेभ्यो विशेषविज्ञानं गुल्मानां भवत्यन्येषां रोगाणाम्। अग्निवेश! तत्तु खलु गुल्मेषु मानं निबोध यत्र। पुरुषो वातलविशेषेण ज्वरवमनविरेचनातीसाराणामन्यतमेन कर्षनेन कर्शितो वातलमाहारमाहारमतिशीतं वा विशेषेणातिमात्रमस्नेहपूर्वं वा वमनविरेचने पिबत्यनुदीर्णां वा छर्दिमुदीरयत्युदीर्णान्वातमूत्रपुरीषवेगान्विरुणद्धत्याशितो वा पिबति नवोदकमतिमात्रमभिमात्रसंक्षोभिनावा यानेन यात्यभिव्यवायव्यायाममद्यरुचिर्वाभिघातमिच्छति वा विषमासन शयनस्थानचङ्क्रमणसेवी वा भवत्यन्यद्वा किञ्चिदेवं विधं विधं अतिमात्रं व्यायामजातमारभते। तस्यापचाराद्वातः प्रकोपमापद्यते। स प्रकुपितो महास्रोतोऽनुप्रविश्य रौक्ष्यात्कठिनीकृत्याप्लुत्य पिण्डितोऽवस्थानङ्करोति। हृदि वस्तौ पार्श्वयोर्नाभ्यां वा स शूलमुपजनयति। ग्रन्थींश्चानेकविधान् पिण्डितश्चावतिष्ठते स पिण्डितत्वाद्गुल्म इत्युपचर्यते स मुहुराध्माति मुहुरणुत्वमापद्यते अनियतवेदनाश्चलत्वाद्वायोः पिपीलिकासंप्रकीर्ण इव तोदस्फुरणायामसङ्कोचहर्षप्रलयोदयबहुलस्तदातुरः सूच्येव शङ्कुनेव चातिविद्धमात्मानं मन्यतेऽपि च दिवसान्ते ज्वर्यते शुष्यति चास्यास्यमुच्छ्वासश्चोपरुध्यते हृष्यन्ति रोमाणि वेदनायाः प्रादुर्भावे प्लीहाटोपान्त्रकूजाविपाकोदावर्ताङ्गमर्दमन्याशिरःशङ्ख-

शूलवृन्नरोगाश्चैनमुपाद्रवन्ति कृष्णारुणपरुषत्वङ्नखनयनव-
दनमूत्रपुरीषश्च भवति निदानोक्तानि चास्य नोपशेरते
विपरीतानि चोपशेरते इति वातगुल्मः तैरेव तु कर्शनैः
कर्शितस्याम्ललवणकटुकक्षारोष्णतीक्ष्णशुष्कव्यापन्नमद्यहरि-
तकफलाम्लानां विदाहिनाञ्च शाकमांसानां उपयोगादजी-
र्णाध्यशनाद्रौक्ष्यानुगते चामाशये वमनमतिवेलं सन्धारणं
वातातपौ चातिसेवमानस्य पित्तं सह मारुतेन प्रकोपमाप-
द्यते। तत् प्रकुपितम्मारुत आमाशयैकदेशे संवर्त्यभारैव वेद-
नाप्रकारानुपजनयति या उक्ता वातगुल्मे पित्तञ्चैनं विदहति
कुक्षौ हृद्युरसि कण्ठे वा स दह्यमानः धूममिवोद्गारमुद्गिरत्य-
म्लान्वितङ्गुल्मावकाशश्चास्य दह्यते दूयते ऊषायते स्विद्यति
क्लिद्यति शिथिल इव चास्य स्पर्शसहोऽल्परोमा च भवति ज्वर-
भ्रमदवथुपिपासागलवदनशोषप्रमोहविड्भेदाश्च न प्रभवन्ति
हरितहारिद्रत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति निदा-
नोक्तानि चास्य नोपशेरत इति पित्तगुल्मः तैरेव तु कर्शनैः
कर्शितस्यात्यशनात् स्निग्धगुरुमधुरशीताशनात् पिष्टेक्षुक्षीर-
माषविकृति सेवनात् मन्दक अतिक्रान्त मद्यपानाद्धरितकाति
प्रणयादानूपौदकग्राम्यमांसातिभक्षणात् सन्धारणादति सु-
भिक्षस्य चातिप्रगाढमुदकपानात् संक्षोभणाद्वा शरीरस्य
श्लेष्मा सह मारुतेन प्रकोपमापद्यते। तं प्रकुपितं मारुत
आमैकदेशे संवर्त्य तानेव वेदनाप्रकारानुपजनयति। अपिच
गुल्मस्थैर्यगौरवकठिनावसुप्ततां तथा कासश्वासप्रतिश्या-
यान् राजयक्ष्माणाश्चातिप्रवृद्धः श्वैत्यं त्वङ्नखनयनवदन-
मूत्रपुरीषेषूपजनयति। निदानोक्तानि चास्य नोपशेरत इति

पित्तगुल्मः। त्रिदोषहेतुलिङ्गसन्निपातात्तु सान्निपातिकं गुल्ममुपदिशन्ति कुशलाः। सप्रतिविधोपक्रमत्वाद् साध्यो निचय गुल्मः शोणितगुल्मस्तु स्त्रिय एव भवति। न पुरुषस्य गर्भकोष्ठार्त्तवागमनवैशेष्यात्पारतन्त्र्याद्वैशारद्यात् सततमपचारानुरोधाद्वेगानुदीर्णानुपरुन्धत्या आमगर्भे वाप्यचिरात्पतितेऽथ प्रचिरप्रजातायाः ऋतौ वा वातप्रकोपनोपसेवमानायाः वातः प्रकोपमापद्यते। स प्रकुपितो योन्या मुखमनुप्रविश्यार्त्तवमुपरुणद्धि मासि मासि तदार्त्तवमुपरुध्यमानं कुक्षिमभिवर्धयति तस्याः शूलकासातीसारच्छर्द्दिररोचिकाविपाकाङ्गमर्द्दनिद्रालस्यकफप्रसेकाः समुपजायन्ते शुनयोः शून्यमोष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यं ग्लानिः चक्षुषोर्मूर्च्छा ह्लासो दौहृदः श्वयथुः पादयोरीषल्लोमराज्या योन्याश्चाजालत्वमपि च योन्या दौर्गन्ध्यमास्रावश्चोपजायते केवलश्चोपगुल्मः स्पन्दते तां सगर्भाङ्गर्भिणीमित्याहुर्मूढाः। तेषां तु खलु पञ्चानां गुल्मानां प्रागभिनिर्वृत्तेरिमानि रूपाणि। तद्यथा अनन्नाभिलषणमरोचकाविपाकावग्निवैषम्यं विदाहो भुक्तस्य विपाककाले चायुक्त्या छर्द्दिरुद्गारो वातमूत्रपुरीषवेगानामप्रादुर्भावः प्रादुर्भूतानां चाप्रवृत्तिः सङ्गः ईषदागमनं वातशूलाटोपान्त्रकूजापरिहर्षणाभिवृत्तपुरीषता बुभुक्षा दौर्बल्यं सौहित्यस्य चासहत्वमिति गुल्मपूर्वरूपाणि सर्वेष्वपि च गुल्मेषु न कश्चिद्वाताद्दृते सम्भवति गुल्मस्तेषां सन्निपातजमसाध्यं ज्ञात्वा नोपक्रमेत्। एकदोषजे तु यथास्वमारम्भं प्रणयेत् संसृष्टांस्तु साधारणेन कर्म्मणोपचरेत् यद्वा अन्यदप्यविरुद्धं

मन्यते तदवचारयेदिहभज्य गुरुलाघवमुपद्रवाणां गुरूपद्रवां-स्त्वरमाणः चिकित्सेत्त्ववन्यमितरांस्त्वरमाणस्तु विशेषमुपलभ्य गुल्मेष्वात्ययिके कर्मणि वातचिकित्सितं प्रणयेत्। स्नेहस्वेदौ वातहरौ स्नेहोपसंहितञ्च मृदु विरेचनं वस्तीनम्ललवण-मधुरांश्च रसान्युक्तितोऽवचारयेन्मारुते ह्युपशान्ते स्वल्पेनापि प्रयत्नेन शक्यमन्योऽपि दोषो नियन्तुं गुल्मेष्विति। तत्र श्लोकौ

गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरितव्या मारुतेह्यवजितेऽन्यमुदीर्णन्दोषमल्पमपि कर्म निहन्यते।

संख्यानिमित्तं रूपाणि पूर्वरूपमथापि च।
दृष्टं निदाने गुल्मानामुपदिश्यञ्च कर्मणाम्॥

इति गुल्मनिदानं समाप्तम्।

---

## चतुर्थोऽध्यायः।

अथातः प्रमेहनिदानं व्याख्यास्यामः।

त्रिदोषकोपनिमित्ता विंशतिः प्रमेहविकाराः चापरे-ऽपरिसंख्येयाः। तत्र यथा त्रिदोषप्रकोपः प्रमेहानभिनिवर्त-यति तथानुव्याख्यास्यामः। इह खलु निदानदोषदूष्यविशे-षेभ्यो विकाराणां विघातभावाभावप्रतिविशेषा भवन्ति।

यदा ह्येते त्रयो निदानादिविशेषाः परस्परं नानुबध्नन्त्यथवा-
प्रकर्षादबलीयांसो वानुबध्नन्ति न तथा विकाराभिनिर्वृ-
त्तिः। चिराद्वाप्यभिनिवर्त्तन्ते ते नवा भावा भवन्त्यथवाप्य
यथोक्तसर्वलिङ्गा विपर्य्ययेण विपरीता इति सर्वविकार-
विघातभावाभावप्रतिविशेषाभिनिर्वृत्तिहेतुरुक्तस्तत्र प्रमेह-
निदानादिविशेषाः श्लेष्मनिमित्तानां प्रमेहानामा-
श्वभिनिर्वृत्तिकरास्तद्यथा हायनकयवचीनकोद्दालकनै-
षधोत्कटमुकुन्दकमहाव्रीहिप्रमोदकसुगन्धकानां नवाना-
मतिवेलमतिप्रमाणेनोपयोगः। तथा सर्पिष्मतां नवहरे-
णुमाषसूपानां ग्राम्यानूपौदकानां मांसानां शाकतिलप-
ललपिष्टान्नपायसकृशरविलेपीक्षुविकाराणां क्षीरमर्दकदधित-
रुणमधुपानोपयोगो मृजाव्यायामवर्जनस्वप्नशयनासनप्रसङ्गो-
यश्च कश्चिद्विधिरन्योऽपि श्लेष्ममेदोमूत्रसञ्जननः सर्वः स नि-
दानविशेषः। बहुद्रवश्लेष्मता दोषविशेषः बहुबद्धमांस-
शरीरक्लेदः शुक्रः शोणितञ्च वसा मज्जा लसीका रसश्चौजः
संख्याता इति दूष्यविशेषाः। त्रयाणामेषां निदानादिविशे-
षाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते। प्रागतिभूय-
स्त्वात् स प्रकुपितः क्षिप्रमेव शरीरे विसृतिं लभते। शरीर-
शैथिल्यात् स विसर्पन् शरीरे मेदसैवादितो मिश्रीभावं
गच्छति। मेदसश्चैव बहुबद्धत्वान्मेदसश्च गुणानां गुणैः
समानगुणभूयिष्ठत्वात् स मेदसा मिश्रीभावं गच्छन् दूषय-
त्येतद्विकृतत्वात् स विकृतो दुष्टेन मेदसोपहितः शरीरक्लेद-
मांसाभ्यां संसर्गं गच्छति। क्लेदमांसयोरतिप्रमाणवृद्धत्वात्
स मांसे मांसप्रदोषात् पूतिमांसपिडकाः शराविकाकच्छ-

पिकायाः सञ्जनयत्यप्रकृतिभूतत्वात् शरीरक्लेदं पुनः दूषयन्
मूत्रत्वेन परिणामयति । मूत्रवाहानां स्रोतसां वंक्षणवस्ति-
प्रभवाणां मेदःक्लेदोपहितगुरूणि मुखान्यासाद्य प्रति-
रुध्यते ततः स्थैर्य्यं साध्यतां वा जनयति । प्रकृतविकृतभूत-
त्वात् । शरीरक्लेदस्तु श्लेष्ममेदोमिश्रः प्रविशन् मूत्राशये
मूत्रत्वमापद्यमानः श्लैष्मिकैरेभिर्दशभिर्गुणैरुपसृज्यते । वैषम्य
हानिवृद्धियुक्तैस्तद्यथा श्वेतशीतमूर्त्तपिच्छिलाच्छस्निग्धगुरु-
मधुरसान्द्रमन्दैस्तत्र येन गुणेनैकेन केन वा भूयस्तरमुप-
सृज्यते । तत्समाख्यं गौणं नामविशेषं प्राप्नोति । ते खल्विमे
दशप्रमेहा नामविशेषेण भवन्ति । तथा उदकमेहश्चेक्षुवालि-
कारसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च
शुक्रमेहश्च शीतमेहश्च सिकतामेहश्च शनैर्मेहश्च लाला-
मेहश्चेति । तत्र श्लोकाः श्लेष्मप्रमेहविज्ञानार्थाः ।

अच्छं बहुसितं शीतं निर्गन्धमुदकोपमम् ।
श्लेष्मकोपान्नरो मूत्रमुदमेही प्रमेहति ॥
अत्यर्थमधुरं शीतमीषत्पिच्छिलमाविलम् ।
काण्डेक्षुरससङ्काशं श्लेष्मकोपात् प्रमेहति ॥
यस्य पर्युषितं मूत्रं सान्द्रीभवति भाजने ।
पुरुषं कफकोपेन तमाहुः सान्द्रमेहिनम् ॥
यस्य संहन्यते मूत्रं किञ्चित् किञ्चित् प्रसीदति ।
सान्द्रप्रसादमेहीति तमाहुः श्लेष्मकोपतः ॥
शुक्लं पिष्टनिभं मूत्रमभीक्ष्णं यः प्रमेहति ।
पुरुषं कफकोपेन तमाहुः शुक्लमेहिनम् ॥
शुक्राभं शुक्रमिश्रं वा मुहुर्मेहति यो नरः ।

शुक्रमेहिनमित्याहुः पुरुषं श्लेष्मकोपतः ॥
अत्यर्थशीतमधुरं मूत्रं चरति यो भृशम् ।
शीतमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥
मूर्त्तान्मूत्रगतान्दोषानणून्मेहति यो नरः ।
सिकतामेहिनं विद्यान्नरं तं श्लेष्मकोपतः ॥
मन्दं मन्दमावेगन्तु कृच्छ्रं यो मूत्रयेत् शनैः ।
शनैर्मेहिन माहुस्तं पुरुषं श्लेष्मकोपतः ॥
तन्तुबद्धमिवालालं पिच्छिलं यः प्रमेहति ।
आलालमेहिनं विद्यात्तं नरं श्लेष्मकोपतः ॥

इत्येते दश प्रमेहाः श्लेष्मप्रमेहनिमित्ता व्याख्याताः ।

उष्णाम्ललवणक्षारकटुकाजीर्णभोजनोपसेविनस्तथातितीक्ष्णातपाग्निसन्तापश्रमक्रोधविषमाहारोपसेविनश्च तथात्मकशरीरस्यैव क्षिप्रं पित्तं प्रकोपमापद्यते। तत् प्रकुपितं तयैवानुपूर्व्या प्रमेहानिमान् षट् क्षिप्रमभिनिर्वर्त्तयति। तेषामपि च पूर्ववद्गुणविशेषेण नामविशेषाः। तद्यथा क्षारप्रमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च माञ्जिष्ठामेहश्च हारिद्रमेहश्चेति ते षड्भिरेव क्षारलवणकटुकाम्लविस्रोष्णैः पित्तगुणैः पूर्ववत् समन्विताः सर्वे याप्याः संसृष्टदोषमेदःस्थानत्वाद्विरुद्धोपक्रमत्वाच्चेति ।

तत्र श्लोकाः पित्तप्रमेहविज्ञानार्थाः ।

गन्धवर्णरसस्पर्शैर्यथा क्षारस्तथात्मकम् ।
पित्तकोपान्नरो मूत्रं क्षारमेही प्रमेहति ॥
मषीवर्णमजस्रं यो मूत्रमुष्णं प्रमेहति ।
पित्तस्य परिकोपेण तं विद्यात् कालमेहिनम् ॥

चाषपक्षनिभं मूत्रं मन्दं मेहति यो नरः ।
पित्तस्य परिकोपेण तं विद्यान्नीलमेहिनम् ॥
विस्रं लवणमुष्णञ्च रक्तं मेहति यो नरः ।
पित्तस्य परिकोपेण तं विद्याद्रक्तमेहिनम् ॥
मञ्जिष्ठाम्बुपि योऽजस्रं भृशं विस्रं प्रमेहति ।
पित्तस्य परिकोपात्तं विद्यान् माञ्जिष्ठ मेहिनम् ।
हरिद्रोदक सङ्काशं कटुकं यः प्रमेहति ॥
पित्तस्य परिकोपात्तु विद्याद्धारिद्रमेहिनम् ॥
इति षट्प्रमेहाः पित्तप्रकोपनिमित्ता व्याख्याताः ।

कटुकषायतिक्तरूक्षलघुशीतव्यायामवमनविरेचनास्थापनशिरोविरेचनातियोगसन्धारणानशनाभिघातव्यवायोद्वेगशोकशोणितातिसेकजागरणविषमशरीरन्यासानभुपसेवमानस्य तथात्मकशरीरस्यैव क्षिप्रं वायुः प्रकोपमापद्यते। स प्रकुपितस्तथात्मके शरीरे विसर्पन् यदा वसामादाय मूत्रवहानि स्रोतांसि प्रतिपद्यते तदा वसामेहमभिनिर्वर्तयति। यदा पुनर्मज्जानं मूत्रवस्तावाकर्षति तदा मज्जमेहमभिनिर्वर्त्तयति। यदा लसीकां मूत्राशयेऽभिवहन्मूत्रमनुबन्धं श्च्योतयति लसीकातिबहुत्वाद्विक्षेपणाच्च वायोः खल्वस्यातिमूत्रप्रवृत्तिसङ्गं करोति। स मत्त इव गजः क्षरत्यजस्रं मूत्रमवेगन्तं हस्तिमेहिनमाचक्षते। तेजः पुनर्मधुरस्वभावम् तद्यदा रौक्ष्याद्वायुः कषायत्वेनाभिसंसृज्य मूत्राशयेऽभिवहति तदा मधुमेहिनं करोति। तानिमांश्चतुरः प्रमेहान्वातजानसाध्यानाचक्षते। महात्ययिकत्वाद्विप्रतिषिद्धोपक्रमत्वात्तेषामपिच पूर्ववद्गुणविशेषेण नामवि-

मेहाः। तद्यथा वसामेहश्च मज्जमेहश्च हस्तिमेहश्च मधुमेहश्चेति। तत्र श्लोकाः वातप्रमेह विशेषविज्ञानार्थाः।

वसामिश्रं वसाभञ्च मुहुर्मेहति यो नरः।
वसामेहिनमाहुस्तमसाध्यं वातकोपतः॥
मज्जानं सहमूत्रेण मुहुर्मेहति यो नरः।
मज्जामेहिनमाहुस्तमसाध्यं वातकोपतः॥
हस्तीमत्त इवाजस्रं मूत्रं चरति योऽभृगम्।
हस्तिमेहिनमाहुस्तमसाध्यं वातकोपतः॥
कषायमधुरं पाण्डुं रूक्षं मेहति यो नरः।
वातकोपादसाध्यं तं प्रतीयान्मधुमेहिनम्॥
इति चत्वारो वातप्रकोपनिमित्ताः।

ते एवं त्रिदोषप्रकोपनिमित्ता विंशतिप्रमेहा व्याख्याताः।

त्रयस्तु दोषाः प्रकुपिताः प्रमेहानभिनिर्वर्त्तयिष्यन्त इमानि पूर्वरूपाणि दर्शयन्ति। तद्यथा जटिलीभावं केशेषु माधुर्य्यमास्ये सुखतालुकण्ठशोषं पिपासामालस्यं मलञ्च काये कायच्छिद्रेषूपदेहं परिदाहं सुप्ततां चाङ्गेषु षट्पदपिपीलिकाभिः शरीरमूत्राभिचरणं मूत्रे च मूत्रदोषान्विस्रं शरीरगन्धं निद्रां तन्द्राञ्च सर्वकालमित्युपद्रवाश्च खलु प्रमेहिनां तृष्णातीसारज्वरदाहदौर्बल्यारोचका विपाकाः पूतिमांसपिडका अलजीविद्रध्यादयश्च तत्प्रसङ्गात् भवति। तत्र साध्यान् प्रमेहान् संशोधनोपशमनैर्यथार्हमुपपादयेच्चिकित्सेदिति।

तत्र श्लोकाः। गुरुमभ्यवहार्य्येषु स्थानचंक्रमणाद्विषम्।
प्रमेहः क्षिप्रमभ्येति नीडद्रुममिवाण्डजः॥

मन्दोत्साहमतिस्थूलमतिस्निग्धं महाशनम्।
मृत्युः प्रमेहरूपेण क्षिप्रमादाय गच्छति॥
यस्त्वाहारं शरीरस्य धातुसाम्यकरं नरः।
सेवते विविधाश्चान्याश्चेष्टाः स सुखमश्नुते॥
हेतुर्व्याधिविशेषाणां प्रमेहाणाञ्च कारणम्।
दोषधातुसमायोगो रूपं विविधमेव च॥
दश श्लेष्मकृता यस्मात्प्रमेहाः षट् च पित्तजाः।
यथा करोति वायुश्च प्रमेहांश्चतुरो बली॥
साध्यासाध्यविशेषाश्च पूर्वरूपाण्युपद्रवाः।
प्रमेहाणां निदानेऽस्मिन् क्रिया सूत्रे च भाषितम्॥
इति प्रमेहनिदानं समाप्तम्।

---

पञ्चमोऽध्यायः।

अथातः कुष्ठनिदानं व्याख्यास्यामः।

सप्त द्रव्याणि कुष्ठानां प्रकृति विकृति मापन्नानि भवन्ति। तद्यथा त्रयो दोषा वातपित्तश्लेष्माणः प्रकोपणविकृता दूष्याश्च शरीरधातवः त्वङ्मांसशोणितलसीकाः चतुर्धा दोषोपघातविकृताः। इति एतत्सप्तानां सप्तधातुकमेवङ्गतमाजननं कुष्ठानामतः प्रभवान्यभिनिर्वर्तमानानि केवलं शरीरमुपतपन्ति। नच किञ्चिदस्ति कुष्ठमेकदोष-

प्रकोपनिमित्तम्। अस्ति तु खलु समानप्रकृतीनामपि सप्तानां कुष्ठानां दोषांशांशबलविकल्पस्थानविभागेन वेदनावर्णसंस्थाननामप्रभावाचिकित्सितविशेषाः। सप्तविधोऽष्टादशविधोऽपरिसंख्येयविधो वा। दोषा हि विकल्पनैर्विकल्प्यमाना विकल्पयन्ति विकारानन्यानसाध्यभावात्तेषां विकल्पविकारसंख्यानेऽभिप्रसङ्गमभिसमीक्ष्य सप्तविधमेव कुष्ठविशेषमुपदेक्ष्यामः। इह वातादिषु त्रिषु प्रकुपितेषु त्वगादींश्चतुरः प्रदूषयन् स वातेऽधिकतरे कपालकुष्ठं अभिनिर्वर्त्तते। पित्ते त्वौदुम्बरके श्लेष्मणि मण्डलकुष्ठं वातपित्तयोरृष्यजिह्वं पित्तश्लेष्मणोः पुण्डरीकं श्लेष्ममारुतयोः सिध्म कुष्ठं सर्वदोषातिवृद्धौ काकणकमभिनिर्वर्त्तते। इत्येवमेष सप्तविधः कुष्ठविशेषो भवति। स चैष भूयोतः प्रकृतिविकल्पनया भूयसीं विकारसंख्यामापद्यते। तत्रेदं सर्वकुष्ठनिदानं समासेन उपदेक्ष्यामः शीतोष्णव्यत्यासमलानुपूर्व्योपसेवमानस्य तथापतर्पणाभ्यवहार्यं व्यत्यासं मधुफाणितमत्स्यमूलककाकमाचीः सततमतिमात्रमप्य जीर्णे समश्नुतः चिलिचिमश्चपयसा हायनकयवकाचीनकोद्दलककोरदूषप्रायाणि चान्नानि क्षीरदधितक्रकोलकुलुत्थमाषकुसुम्भस्नेहवन्त्येतैर्यातिसुभिक्षव्यवायव्यायामसन्तापानत्युपसेवमानस्य भयश्रमसन्तापोपहतस्य सहसा शीतोदकमवतरतो विदग्धमाहारमनुल्लिख्य विदाहीन्यभ्यश्नतः छर्दिञ्च प्रतिघ्नतः स्नेहांश्चाभिचरतः युगपत् त्रयो दोषाः प्रकोपमापद्यन्ते। त्वगादयः चत्वारः शैथिल्यमापद्यन्ते। तेषु शिथिलेषु दोषाः प्रकुपिताः स्थानमभिगम्य सन्तिष्ठमानाः तानेव त्वगादीन् दूषयन्तः कुष्ठान्यभि-

निर्वर्त्तयन्ति। तत्रेमानि पूर्वरूपाणि। तद्यथा अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णता वैवर्ण्यं कण्डूर्निस्तोदः सुप्तता परिदाहः परिहर्षो लोमहर्षो वीसर्पागमनम् अभीक्ष्णं कायच्छिद्रेषूपदाहः पक्वदग्धदष्टक्षतोपस्खलितेष्वतिमात्रं वेदना स्वल्पानामपि च व्रणानां दुष्टिरसंरोहणञ्चेति तेभ्योऽनन्तरं कुष्ठानि जायन्ते। तेषामिदं वेदनावर्णसंस्थानप्रभावनामविशेषविज्ञानम्। तद्यथा रूक्षारुणपरुषविषमविसृतखरपर्यन्तानि तनून्युद्वृत्तबहिस्तनूनि सुप्तसुप्तानि हृषितलोमाचितानि निस्तोदबहुलानि अल्पकण्डूदाहपूयलसीकान्याशुगतिसमुत्थानानि आशुभेदीनि जन्तुमतिकृष्णारुणकपालवर्णानि कपालकुष्ठानीति विद्यात्। ताम्राणि ताम्रगौरराजीविनद्धानि बहलानि बहलरक्तपूयलसीकानि कण्डूक्लेदकोथदाहपाकवन्त्याशुगतिसमुत्थानभेदीनि ससन्तापक्रिमीण्युदुम्बरफलपक्ववर्णान्युदुम्बरकुष्ठानीति विद्यात्। स्निग्धानि गुरूण्युत्सेधवन्ति श्लक्ष्णस्थिरपीनपर्यन्तानि शुक्लरक्तावभासानि बहुलबहलशुक्लपिच्छलस्रावीणि बहुकण्डूक्रिमीणि सक्तगतिसमुत्थानभेदीनि परिमण्डलानि परिमण्डलकुष्ठानीति विद्यात्। परुषाण्यरुणवर्णानि बहिरन्तः श्यावानि नीलपीतताम्रावभासान्याशुगतिसमुत्थान्यल्पकण्डूक्लेदक्रिमीणि दाहभेदनिस्तोदपाकबहुलानि शूकोपहतोपमानवेदनान्युत्सन्नमध्यानि तनुपर्यन्तानि कर्कशपिडकाचितानि दीर्घपरिमण्डलानि ऋष्यजिह्वाकृतीनि ऋष्यजिह्वानीति विद्यात्। शुक्लरक्तावभासानि रक्तपर्यन्तानि रक्तराजीसन्ततान्युत्सेधवन्ति। बहुबहलरक्त-

पूयलसीकानि कण्डूक्रिमिदाहपाकवन्त्याशुगतिसमुत्थान-भेदीनि पुण्डरीकाणीति विद्यात् । परुषारुणविशीर्णां बहिः तनून्यन्तः स्निग्धानि शुक्लरक्तावभासानि बह्वन्यल्पवेदनान्य-ल्पकण्डूदाहपूयलसीकानि लघुसमुत्थानान्यल्पभेदक्रिमीण्य-लावुपुष्पसङ्काशानि सिध्मकुष्ठानीति विद्यात् । काकणन्तिका वर्णादौ पश्चात्सर्वकुष्ठलिङ्गसमन्वितानि पापीयसां सर्वकुष्ठ-लिङ्गसम्भवेनानेकवर्णानि काकवर्णानीति विद्यात् । तान्यसा-ध्यानि साध्यानि पुनरितराणि । तत्र यदसाध्यं तदसाध्यतां नातिवर्त्तते । साध्यं पुन किञ्चिदसाध्यतामतिवर्त्तते । कदाचि-दुपचारात् साध्यानीह षट्काकणकवर्ज्यान्यचिकित्स्यमा-नान्यपचारतो वा दोषैरभिष्यन्दमानान्यसाध्यतामुपयान्ति । साध्यानामपि ह्युपेक्षमाणानां मेषां त्वङ्मांसशोणितलसीका-कोथक्लेदसंस्वेदजाः क्रिमयोऽभिमूर्च्छन्ति । ते भक्षयन्तो दो-षाश्च पुनर्दूषयन्तः पुनरिमानुपद्रवान् पृथक् पृथगुत्पादयन्ति । तत्र वातः श्यावारुणपरुषवर्णतामपि च रौक्ष्यशूलदोषतो-दवेपथुहर्षसङ्कोचाः पित्तं पुनर्दाहस्वेदक्लेदकोथकण्डूस्राव-पाकमारटन् श्लेष्मत्वास्यश्वैत्यशैत्यकण्डूस्थैर्यगौरवोत्सेधोप स्नेहोपलेपान् क्रिमयस्त्वगादींश्चतुरः शिराः स्नायून्यस्थीन्यपि च तरुणानि भादद्तोऽस्यामवस्थायामुपद्रवाः कुष्ठिनं स्पृशन्ति । तद्यथा प्रस्रवणमङ्गभेदः पतनान्यङ्गावयवानां तृष्णाज्वरातीसारदाहदौर्बल्यारोचका विपाकाश्च तद्विधम-साध्यं विद्यादिति । तत्र श्लोकाः ।

साध्योऽयमिति यः पूर्वं नरो रोगमुपेक्षते ।
स किञ्चित्कालमासाद्य मृत एवावबुध्यते ॥

यस्तु प्रागेव रोगेभ्यो रोगेषु तरुणेषु च।
भेषजं कुरुते सम्यक् सुचिरं सुखमश्नुते॥
यथा ह्यल्पेन यत्नेन छिद्यते तरुणस्तरुः।
स एवातिप्रवृद्धस्तु न सुच्छेदतमो भवेत्॥
एवमेव विकारोऽपि तरुणः साध्यते सुखम्।
विवृद्धः साध्यते कृच्छ्रादसाध्यो वापि जायते॥
संख्याद्रव्याणि दोषाश्च हेतवः पूर्वलक्षणम्।
रूपाण्युपद्रवाश्चोक्ताः कुष्ठानां कौष्ठिके पृथक्॥

इति कुष्ठनिदानं समाप्तम्।

---

षष्ठोऽध्यायः।

अथातः शोषनिदानं व्याख्यास्यामः।

इह खलु चत्वारि शोषस्यायतनानि। तद्यथा। साहसं सन्धारणं क्षयो विषमाशनमिति। तत्र यदुक्तं साहसं शोषस्यायतनमिति तदनुव्याख्यास्यामः। यदा पुरुषो दुर्बलो हि सन् बलवता सह विगृह्णाति। अतिमहता वा धनुषा व्यायच्छति। जल्पति वातिमात्रमतिमात्रं वा भारमुद्वहति अप्सु वा प्लवते चाति दूरमुत्सादनपदाघातने वातिप्रगाढमासेवते अतिप्रकृष्टं वा ध्वानं द्रुतमभिपतति

पतति वाभिहन्यते वान्यद्वा किञ्चिदेवंविधं विषमतिमात्रं व्यायामजातमारभते तस्यातिमात्रेण कर्मणोरः क्षण्यते तस्योरः क्षतमुपप्लवते वायुः। स तत्रावस्थितः श्लेष्माणमुरःस्थमुपसंगृह्य शोषयन् विहरत्यूर्द्ध्वमधस्तिर्यक् च। योंऽशस्तस्य शरीरं सन्धीनाविशति तेन जृम्भाऽङ्गमर्दौ ज्वरश्चोपजायते। यस्त्वामाशयमुपैति तेन रोगा भवन्ति उरस्याः अरोचकश्च यः कण्ठं प्रपद्यते कण्ठस्तेनोद्ध्वंस्यते स्वरश्चावसीदति यः प्राणवहानि स्रोतांस्यन्वेति श्वासः प्रतिश्यायश्चोपजायते यः शिरस्यवतिष्ठते शिरस्तेनोपहन्यते। ततः क्षणनाच्चैवोरसो विषमगतित्वाच्च वायोः कण्ठस्योद्ध्वंसनात्कासः संजायते स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति शोणितगमनाच्चास्य दौर्बल्यमुपजायते। एवमेते साहसप्रभवाः साहसिकमुपद्रवाः स्पृशन्ति। ततः सोऽप्युपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमान् बलमात्मनः समीक्ष्य तदनुरूपाणि कर्माण्यारभते कर्त्तुं बलसमाधानं हि शरीरं शरीरमूलश्च पुरुष इति।

तत्रश्लोकाः। साहसं वर्जयेत्कर्म रक्षन् जीवितमात्मनः।
जीवन् हि पुरुषस्त्विष्टं कर्मणः फलमश्नुत इति॥

सन्धारणं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः।

यदा पुरुषो राजसमीपे भर्त्तृसमीपे वा गुरोर्वा पादमूले द्यूतसभं सभाजयन् स्त्रीमध्यं वानुप्रविश्य यानैर्वाप्युच्चावचैर्गच्छन्भयात्प्रसङ्गाद्ध्रीमत्त्वाद्घृणित्वाद्वा निरुणद्ध्यागतानि वातमूत्रपुरीषाणि तस्य सन्धारणाद्वायुः प्रकोपमापद्यते स प्रकुपितः शूलं जनयति भिनत्ति पुरीषमुच्छोषयति

वा। पार्श्वं चाभिरुजति गृह्णात्यं सो कण्ठमुरश्चावधमति, शिरश्चोपहन्ति। कासं श्वासं ज्वरं स्वरभेदं प्रतिश्यायञ्चोप-जनयति। ततः सोऽप्यु पोषणैरेतैरुपद्रवैरुपद्रुतः शनैःशनैरुप-शुष्यति। तस्मात् पुरुषो मतिमानात्मनः शरीरेष्वेव योगक्षेमेषु प्रयतेत विशेषेण शरीरं ह्यस्य मूलं शरीरमूलं पुरुष इति।

तत्र श्लोकः। सर्वमन्यत् परित्यज्य शरीरमनुपालयेत्।
तदभावे हि भावानां सर्वाभावः शरीरिणामिति ॥

अथः शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः। यदा पुरुषोऽतिमात्रं शोकचिन्तापरीतहृदयो भवति। ईर्षोत्-कण्ठाभयक्रोधादिभिर्वा समाविश्यते। कृशो वा सन् रूक्षान्न-पानसेवी भवति दुर्बलप्रकृतिरनाहारोऽल्पाहारो वास्ते तदा तस्य हृदयस्थायी रसः क्षयमुपैति। स तस्योपक्षयात् संशोषं प्राप्नोति। अप्रतिकाराच्चानुबध्यते। यक्ष्मणा यथोप-देक्ष्यमाणरूपेण यदा पुरुषोऽतिहर्षात् प्रसक्तभावः स्त्रीषु अति-प्रयोगमारभते तस्यातिप्रयोगाद्रेतः क्षयमुपैति क्षयमपि चो-पगच्छति रेतसि यदि मनः स्त्रीभ्यो नैवास्य निवर्तते अति-प्रवर्तते एव तस्यातिप्रणीतसङ्कल्पस्य मैथुनमापद्यमानस्य शुक्रं न प्रवर्तते अत्रापक्षीणत्वात् अथास्य वायुर्व्यायच्छमान-स्येव धमनीरनुप्रविश्य शोणितवाहिनीस्ताभ्यः शोणितं प्रच्यावयति तच्छुक्रक्षयात् शुक्रमार्गेण शोणितं प्रवर्तते वाता-नुसृतलिङ्गमथास्य शुक्रक्षयाच्छोणितप्रवर्त्तनाच्च सन्धयः शिथि-लीभवन्ति रौक्ष्यमुपजायते। भूयः शरीरं दौर्बल्यमाविशति। वायुः प्रकोपमापद्यते। स प्रकुपितोऽवशकं शरीरमनुसर्पन्

परिशोषयति मांसशोणिते प्रच्यावयति श्लेष्मपित्ते संरुजति पार्श्वे चावरुजत्यंसौ कण्ठमुद्ध्वंसयति शिरः श्लेष्माणमुपक्लिश्य प्रतिपूरयति श्लेष्मणा सन्धींश्च प्रपीडयन् करोत्यङ्गमर्दमरोचकाविपाकौ च पित्तश्लेष्मोत्क्लेशात् प्रतिलोमगत्वाच्च वायुर्ज्वरं कासं स्वरभेदं प्रतिश्यायञ्चोपजनयति। ततः सोऽप्युपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमानात्मनः शरीरमनुरक्षन् शुक्रमनुरक्षेत्। परा ह्येषा फलनिर्वृत्तिराहारस्येति।

तत्र श्लोकः। आहारस्य परं धाम शुक्रं तद्रक्ष्यमात्मनः।
क्षये ह्यस्य बहून् रोगान्मरणं वा नियच्छति॥

विषमाशनं शोषस्यायतनमिति यदुक्तं
तदनुव्याख्यास्यामः।

यदा पुरुषः पानाशनभक्ष्यलेह्योपयोगान् प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयविषमानासेवते। तदा तस्य वातपित्तश्लेष्माणो वैषम्यमापद्यन्ते। ते विषमाः शरीरमनुपसृत्य यदा स्रोतसामतिमुखानि प्रतिवार्यावतिष्ठन्ते तदा जन्तुर्यदाहारजातमाहरति तदस्य मूत्रपुरीषमेवोपचीयते। भूयिष्ठं नान्यस्तथा शरीरधातुः स पुरीषोपष्टम्भाद्वर्तयति। तस्मात् शुष्यतो विशेषेण पुरीषमनुरक्ष्यं तथा सर्वेषामत्यर्थकृशदुर्बलानां तस्यानाप्यायमानस्य विषमाशनोपचिता दोषाः पृथक् पृथगुपद्रवैर्युञ्जन्तो भूयः शरीरमुपशोषयन्ति। तत्र वातः शूलमङ्गमर्दं कण्ठोद्ध्वंसनं पार्श्वसंरुजनं मांसमर्दनं स्वरभेदं प्रतिश्यायं चोपजनयति। पित्तं पुनर्ज्वरमतीसारं सान्तर्दाहञ्च। श्लेष्मा प्रतिश्यायं शिरसो गुरुत्वं कास-

मरीचकञ्च। स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति। शोणितगमनाचास्य दौर्बल्यमुपजायते। एवमेते विषमाशनोपचिता दोषा राजयक्ष्माणमभिनिर्वर्तयन्ति। स तैरुपशोषणैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमान् प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयादविषममाहारमाहरेदिति।

तत्र श्लोकः। हिताशी स्यान्मिताशी स्यात्कालभोजी जितेन्द्रियः।
पश्यन् रोगान् बहून् कष्टान् बुद्धिमान्विषमाशनादिति॥

एतैः चतुर्भिः शोषस्यायतनैरभ्युपसेवितैर्वातपित्तश्लेष्माण एव प्रकोपमापद्यन्ते। ते प्रकुपिता नानाविधैरुपद्रवैः शरीरमुपशोषयन्ति। तं सर्वरोगाणां कष्टतमं मत्वा राजयक्ष्माणमाचक्षते भिषजः। यस्माद्वा पूर्वमासीद्भगवतः सोमस्योडुराजस्य तस्माद्राजयक्ष्मेति। तस्येमानि पूर्वरूपाणि। तद्यथा प्रतिश्यायः क्षवथुरभीक्ष्णं श्लेष्मप्रसेको मुखमाधुर्यमनन्नाभिलाषोऽन्नकाले चायासो दोषदर्शनमदोषेष्वल्पदोषेषु वा पात्रोदकान्नसूपापूपदंशपरिवेशकेषु भुक्तवतो हृल्लासस्तथोल्लेखनमाहारस्यान्तरान्तरा मुखपादस्य शोथः पाण्योरेवेक्षणमत्यर्थमक्ष्णोः श्वेतता बाह्वोः प्रमाणजिज्ञासा स्त्रीकामतातिघृणित्वम्बीभत्सदर्शनता च काये स्वप्ने हि अभीक्ष्णं दर्शनमनुदकानामुदकस्थानानां शून्यानाञ्च ग्रामनगरनिगमजनपदानां शुष्कदग्धभग्नानाञ्च कृकलासमयूरवानरशुकसर्पकाकोलूकादिभिः संस्पर्शनमधिरोहणं वाश्वोष्ट्रखरवराहैः केशास्थिभस्मतुषाङ्गारराशीनाञ्चाधिरोहणमिति शोषपूर्वरूपाणि भवन्ति। अत ऊर्द्ध्वमेकादशरूपाणि। तद्यथा शिरसः

प्रतिपूरणं कासः श्वासः स्वरभेदः श्लेष्मच्छर्दनं शोणित-ष्ठीवनं पार्श्वसंरोजनं ग्रसावमर्दो ज्वरः अतीसारस्तथा-रोचक इति। तत्रापरिक्षीणमांसशोणितो बलवानजातारि-ष्टः सर्वैरपि शोषलिङ्गैरुपद्रुतः साध्यो ज्ञेयो बलवर्णोपचयो-पचितो हि सहत्वाद्व्याध्यौषधबलस्य कामं बहुलिङ्गोऽप्यल्प-लिङ्ग एव दुर्बलस्त्वतिक्षीणमांसशोणितमल्पलिङ्गमप्यजा-तारिष्टमपि बहुलिङ्गमेव विद्यात्तदसहत्वाद्व्याध्यौषध-बलस्य तं परिवर्जयेत्। क्षणेन हि प्रादुर्भवन्त्यरिष्टानि। अन्यनिमित्तश्चारिष्टप्रादुर्भाव इति।

तत्र श्लोकः। समुत्थानञ्च लिङ्गञ्च यः शोषस्यावबुध्यते।
पूर्वरूपञ्च तत्त्वेन स राज्ञः कर्तुमर्हति॥

इति शोषनिदानं समाप्तम्।

---

## सप्तमोऽध्यायः।

### अथात उन्मादनिदानं व्याख्यास्यामः।

इह खलु पञ्चोन्मादा भवन्ति। तद्यथा वातपित्तकफ-सन्निपातागन्तुनिमित्तास्तत्र दोषनिमित्ताश्चत्वारः। पुरुषा-णामेवंविधानां क्षिप्रमभिनिर्वर्तन्ते। तद्यथा भीरूणामुप-क्लिष्टसत्त्वाना मुत्सन्नदोषाणाञ्च मलविकृतोपहितानि मनु-

षितान्याहारजातानि वैषम्ययुक्तेनोपयोगविधिनोपयुञ्जा-
नानां तन्त्रप्रयोगं वा विषममाचरतामन्यां वा चेष्टां विषमां
समाचरतामत्युपक्षीणदेहानाञ्च व्याधिवेगसमुद्भ्रमितानां-
मुपहतमनसां वा कामक्रोधलोभहर्षभयशोकचिन्तोद्वेगा-
दिभिः पुनरभिघाताभ्याहतानां वा मनस्युपहते बुद्धौ च
प्रचलितायामभ्युदीर्णा दोषाः प्रकुपिता हृदयमुपसृत्य मनो-
वहानि स्रोतांसि आवृत्य जनयन्त्युन्मादम्। पुनर्मनोबुद्धि-
संज्ञाज्ञानस्मृतिभक्तिशीलचेष्टाचारविभ्रमं विद्यात्। तस्ये-
मानि पूर्वरूपाणि। तद्यथा शिरसः शून्यभावः चक्षुषो-
रस्वस्थता स्वनः कर्णयोरुच्छासस्याधिक्यमास्यसंस्रवणमन-
न्नाभिलाषोऽरोचकाविपाकौ हृदयग्रहो ध्यानायाससम्मो-
होद्वेगाश्चास्थाने सततं लोमहर्षो ज्वरश्चाभीक्ष्णमुन्मत्त-
चित्तत्वमुदर्दितत्वमर्दिताकृतिकरणञ्च व्याधेः स्वप्ने च
दर्शनमभीक्ष्णं भ्रान्तचलितानवस्थितानाञ्च रूपाणामप्र-
शस्तानाञ्च तिलपीड़कचक्राधिरोहणं वातकुण्डलिका-
भिश्चोन्मथनं निमज्जनं कलुषाणामम्भसामावर्त्तेषु चक्षु-
षोश्चापसर्पणमिति दोषनिमित्तानामुन्मादानां पूर्वरू-
पाणि। ततोऽनन्तरमुन्मादाभिनिर्वृत्तिस्तत्रेदमुन्मादवि-
ज्ञानं भवति। तद्यथा परिसर्पणमक्षिभ्रुवामोष्ठांसहनुह-
स्तपादविक्षेपणमकस्मादनियतानाञ्च सततङ्गिरामुत्सर्गः
फेनागमनमास्यात्। स्मितहसितनृत्तगीतवादित्रप्रयोगाश्चा-
स्थाने वीणावंशशङ्खशम्यातालशब्दानुकरणमसाम्नायानमया-
नैरलङ्करणमनलङ्कारिकैर्द्रव्यैर्लोभोऽभ्यवहार्य्येषु लब्धेषु चाल-
ब्धेषु चावमानस्तीव्रं मात्सर्यं कार्श्यं पारुष्यमुत्पिण्डिताक्षता

वातोपशयविपर्यासानुपशयता चेति वातोन्मादलिङ्गानि। अमर्षक्रोधसंरम्भाश्चास्थाने शस्त्रलोष्टकाष्ठमुष्टिभिरभिद्रवणं स्वेषां परेषां वा प्रच्छायशीतोदकान्नाभिलाषः सन्तापोऽतिवेलं ताम्रहरितहारिद्रसंरब्धाक्षतपित्तोपशयविपर्यासानुपशयता चेति पित्तोन्मादलिङ्गानि। स्थानमेकदेशे तूष्णीम्भावोऽल्पशः चंक्रमणं लालाशिङ्घानकास्रवणमनन्नाभिलाषो रहस्कामता बीभत्सत्वं शौचद्वेषस्वप्ननिद्रताश्वयथुराननेशुक्लस्तिमितलोपदिग्धाक्षता श्लेष्मोपशयविपर्यासानुशयता चेति श्लेष्मोन्मादलिङ्गानि। त्रिदोषलिङ्गसन्निपाते तु सान्निपातिकं विद्यात्तमसाध्यमाचक्षते कुशलाः साध्यानान्तु त्रयाणां साधनानि स्नेहस्वेदवमनविरेचनास्थापनानुवासनोपशमननस्तःकर्मधूपधूमपानाञ्जनावपीडप्रधमनाभ्यङ्गप्रदेहपरिषेकानुलेपनबधबन्धनावरोधनवित्रासनविस्मापनविस्मारणापतर्पणशिराव्याधनानि भोजनविधानञ्च यथास्वं युक्त्या यच्चान्यदपि किञ्चिन्निदानविपरीतमौषधं कार्यं तत् स्यादिति।

तत्र श्लोकः। उन्मादान् दोषजान् सम्यक्साधयेद्भिषगुत्तमः।
अनेन विधियुक्तेन कर्मणा यत्प्रकीर्तितमिति॥

यस्तु दोषनिमित्तेभ्य उन्मादेभ्यः समुत्थानपूर्वरूपलिङ्गविशेषसमन्वितो भवत्युन्मादस्तागन्तुमाचक्षते। केचित् पुनः पूर्वकृतं कर्माप्रशस्तमिच्छन्ति। तस्य निमित्तं प्रज्ञापराध एवेति भगवान् पुनर्वसुरात्रेय उवाच प्रज्ञापराधाद्ध्ययं देवर्षिपितृगन्धर्वयक्षराक्षसपिशाचगुरुवृद्धसिद्धाचार्यपूज्यानवमन्याहितान्याचरति। अन्यद्वा किञ्चित् कर्माप्रशस्तमारभते।

तमात्मनोऽहितमुपपन्नो देवादयः कुर्वन्त्युन्मत्तम्। तत्र देवादिप्रकोपनिमित्तेनागन्तून्मादेन पुरस्कृतस्येमानि पूर्वरूपाणि। तद्यथा देवगोब्राह्मणतपस्विनां हिंसारुचित्वं कोपनत्वं नृशंसाभिप्रायता अरतिरोजोवर्णच्छायाबलवपुषामुपतप्तिः स्वप्ने च देवादिभिरभिभर्त्सनं प्रवर्त्तनञ्चेति ततोऽनन्तरमुन्मादाभिनिर्वृत्तिः। तत्रायमुन्मादकराणां भूतानामुन्मादयिष्यतामारम्भविशेषः। तद्यथा अवलोकयन्तो देवा जनयन्त्युन्मादं गुरुवृद्धसिद्धर्षयोऽभिशपन्तः पितरो धर्षयन्तः स्पृशन्तो गन्धर्वाः समाविशन्तो यक्षराक्षसास्त्वं गन्धमाघ्रापयन्तः पिशाचाः पुनरधिरुह्य वाहयन्तः। तस्येमानि पूर्वरूपाणि। तद्यथा अत्यात्मबलवीर्य्यपौरुषपराक्रमज्ञानवचनविज्ञानानि अनियतश्चोन्मादकालः उन्मादयिष्यतामपि खलु देवर्षिगन्धर्वयक्षराक्षसपिशाचानामित्यान्तरेषु गमनीयः पुरुषः। तद्यथा पापस्य कर्मणः समारम्भे पूर्वकृतस्य वा परिणामकाले एकस्य वा शून्यगृहवासे चतुष्पथाधिष्ठाने वा सन्ध्यावेलायामप्रयतभावे वा पर्वसन्धिषु वा मिथुनभावे रजस्वलाभिगमने वा विगुणे वाध्ययनबलिमङ्गलहोमप्रयोगे नियमव्रतब्रह्मचर्य्ये वा महाहवे वा देशकुलपुरविनाशे वा महाग्रहोपगमने वा स्त्रिया वा प्रजननकाले विविधभूताशुचिस्पर्शने वा वमनरुधिरस्रावाशुचेरप्रयतस्य चैत्यदेवायतनाभिगमने वा मांसमधुतिलगुड़मद्योच्छिष्टे वा दिग्वाससि वा निशि नगरनिगमचतुष्पथोपवनश्मशानाभिगमने वा द्विजगुरुसुरयतिपूज्याभिधर्षणे वा धर्माख्यातव्यतिक्रमे वान्यस्य कर्मणो प्रशस्तस्यारम्भे वा इत्याघात-

त्मानः। विविधस्तून्मादकराणां भूतानामुन्मादने प्रयोजनम्। तद्यथा हिंसारतिरभ्यर्च्चनञ्चेति तेषां तत्प्रयोजनमुन्मत्ताचारविशेषलक्षणैर्विद्यात्। तत्र हिंसार्थमुन्माद्यमानोऽग्निं प्रविशति अप्सु निमज्जति स्थलात् श्वभ्रे निपतति शस्त्रकषाकाष्ठलोष्टमुष्टिभिर्हन्त्यात्मानमन्यच्च प्राणवधार्थमारभते। तमसाध्यं विद्यात्। साध्यावितरौ तयोः साधनानि मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणतिपातगमनादीन्येवमेते पञ्चोन्मादा भवन्ति। ते तु खलु निजागन्तुविशेषेण साध्यासाध्यविशेषेण च प्रविभज्यमानाः पञ्च सन्तो द्वौ भवतः तौ परस्परमनुबध्नीतः। कदाचिद्यथोक्तहेतुसंसर्गाच्च तयोः संसृष्टमेव पूर्व्वरूपं संसृष्टञ्च लिङ्गमभिज्ञेयं तत्रासाध्यसंयोगं तस्य साधनं साधनसंयोगमेव विद्यादिति।

तत्र श्लोकाः। नैव देवा न गन्धर्व्वा न पिशाचा न राक्षसाः।

न चान्ये स्वयमक्लिष्टमुपक्लिश्यन्ति मानवम्॥
ये त्वेनमनुवर्त्तन्ते क्लिश्यमानं स्वकर्म्मणा।
न तन्निमित्तः क्लेशोऽसौ न ह्यस्ति कृतकृत्यता॥
प्रज्ञापराधात् सम्भूते व्याधौ कर्म्मज आत्मनः।
नाभिशंसेत् बुधो देवान्न पितृन्नापि राक्षसान्॥
आत्मानमेव मन्येत कर्त्तारं सुखदुःखयोः।
तस्मात् श्रेयस्करं मार्गं प्रतिपद्येत न त्रसेत्॥
देवादीनामपचितिर्हितानामुपसेवनम्।
न च तेभ्यो विरोधश्च सर्व्वमायत्तमात्मनि॥
संख्यानिमित्तं द्विविधं लक्षणं साध्यमेव च।

उन्मादानां निदानेऽस्मिन् क्रियासूत्रञ्च भाषितमिति॥
इति उन्माद्निदानं समाप्तम्।

---

अष्टमोऽध्यायः।

अथातोऽपस्मारनिदानं व्याख्यास्यामः।

इह खलु चत्वारोऽपस्माराः वातपित्तकफसन्निपातनिमित्ताः। त एवंविधानां प्राणभृतां क्षिप्रमभिनिवर्त्तन्ते। तद्यथा रजस्तमोभ्यामुपहतचेतसामुद्भ्रान्तविषमबहुदोषाणां समलविकृतोपहितान्यशुचीनभ्यवहारजातानि वैषम्ययुक्तेन उपयोगविधिनोपयुञ्जानानां तन्त्रप्रयोगमपि च विषममाचरतामन्याश्च शरीरचेष्टा विषमाः समाचरतामनूपक्षीणदेहानां वा दोषाः प्रकुपिता रजस्तमोभ्यामुपहतचेतसोऽन्तरात्मनः श्रेष्ठतममायतनं हृदयमुपसृज्य पर्य्यवतिष्ठन्ते। तथेन्द्रियायतनानि तत्र चावस्थिताः। सन्तो यदा हृदयमिन्द्रियायतनानि चेरिताः कामक्रोधभयलोभमोहहर्षशोकचिन्तोद्वेगादिभिः सहसा पूरयन्ति तदा जन्तुरपस्मरति अपस्मारं पुनः स्मृतिबुद्धिसत्त्वसंप्लवाद्बीभत्सचेष्टमावस्थिकं तमःप्रवेशमाचक्षते। तस्येमानि पूर्वरूपाणि। तद्यथा भ्रूव्युदासः सततमक्ष्णोर्वैकृतमशब्दश्रवणं लालासिंघानकप्रस्रवणमनन्ना-

भिषणमरोचिकाविपाको हृदयग्रहः कुक्षेराटोपो दौर्बल्यम-
ङ्गमर्दो मोहस्तमसो दर्शनं मूर्च्छा भ्रमश्चाभीक्ष्णं च स्वप्ने मद-
नर्त्तनपीडनवमनव्यथनपतनानीति। ततोऽनन्तरमपस्मारा-
भिनिर्वृत्तिः। तत्रेदमपस्मारविशेषज्ञानम्। तद्यथा अभीक्ष्ण-
मपस्मरन्तं क्षणे क्षणे संज्ञां प्रतिलभमानमुत्पिण्डिताक्ष-
मसाम्ना वा विलपन्तमुद्वमन्तं फेनमतीवाध्मातग्रीवमाविद्धशिर-
स्कं विषमविनताङ्गुलिमनवस्थितसक्थिपाणिपादमरुणपरु-
षश्यावनखनयनवदनत्वचमनवस्थितचपलपरुषरूपदर्शिनं
वातलानुपशयं विपरीतोपशयं वातेनापस्मरन्तं विद्यात्।
अभीक्ष्णमपस्मरन्तं क्षणे क्षणे संज्ञां प्रतिलभमानम् अनुकूज-
यन्तम् आस्फालयन्तं भूमिं हरितहारिद्रताम्रनखनयनवदन-
त्वचं रुधिरोक्षितोग्रभैरवदीप्तरुषितरूपदर्शिनं पित्तला-
नुपशयं विपरीतोपशयं पित्तेनापस्मरन्तं विद्यात्। चिरादप-
स्मरन्तं चिरात् संज्ञां प्रतिलभमानं पतन्तमनतिविकृतचेष्टं
लालामुद्वमन्तं शुक्लनखनयनवदनत्वचं शुक्लगुरुरूपदर्शिनं
श्लेष्मलानुपशयं विपरीतोपशयं श्लेष्मणापस्मरन्तं विद्यात्।
समवेतलिङ्गमपस्मारं सान्निपातिकम् विद्यात्। तमसाध्यमा-
चक्षते इति चत्वारोऽपस्माराः। तेषामागन्तुरनुबन्धो भवत्येव।
कदाचित् स उत्तरकालमुपदेक्ष्यते। तस्य विशेषविज्ञानं
यथोक्तैर्लिङ्गैर्लिङ्गाधिक्यमदोषलिङ्गानुरूपं किञ्चित् तत्स्वप-
स्मारिभ्यस्तीक्ष्णानि चैव संशोधनानि उपशमनानि यथास्वं
मन्त्रादीनि चागन्तुसंयोगे तस्मिन् हि दक्षाध्वरोद्ध्वंसे
देहिनां दिक्षु विद्रवतामतिसरणप्लवनलङ्घनाद्यैर्देहवि-
क्षोभनैः पुरा गुल्मोत्पत्तिरभूत्। हविष्प्राशात्प्रमेहकुष्ठानां

यत्राग्नशोकैरुन्मादानां विविधभूताः शुचिसंसर्गादपस्मा-
राणाम्। ज्वरस्तु महेश्वरललाटप्रभवः। तत्सन्तापाद्रक्त-
पित्तमतिव्यवायात् पुनर्नक्षत्रराजस्य राजयक्ष्मेति।

तत्र श्लोकाः। अपस्मरति वातेन पित्तेन च कफेन च।
चतुर्थः सन्निपातेन प्रत्याख्येयस्तथाविधः॥
साध्यांस्तु भिषजः प्राज्ञाः साधयन्ति समाहिताः।
तीक्ष्णैः संशोधनैश्चैव यथास्वं शमनैरपि॥
यदा दोषनिमित्तस्य भवत्यागन्तुरन्वयः।
तदा साधारणं कर्म प्रवदन्ति भिषग्वराः॥
सर्वरोगविशेषज्ञः सर्वौषधविशेषवित्।
भिषक् सर्वमयान् हन्ति न च मोहं नियच्छति॥
इत्येतदाखिलेनोक्तं निदानस्थानमुत्तमम्।
निदानार्थकरो रोगो रोगस्याप्युपलभ्यते॥
तद्यथा ज्वरसन्तापाद्रक्तपित्तमुदीर्य्यते।
रक्तपित्तज्वरस्ताभ्यां शोषश्चाप्युपजायते॥
प्लीहाभिजठरश्चैव जठराच्छोफ एव च।
अर्शोभ्यो जठरदुःखं गुल्मश्चाप्युपजायते॥
प्रतिश्यायादथो कासः कासात् संजायते क्षयः।
क्षयो रोगस्य हेतुत्वे शोषस्याप्युपजायते॥
ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः।
उभयार्थकरा दृष्टास्तथैवैकार्थकारिणः॥
कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति।
न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च॥
एवं कृच्छ्रतमा नॄणां दृश्यन्ते व्याधिसङ्कराः।

प्रयोगोपविशुद्धत्वात्तथा चान्योऽन्यसम्भवात् ॥
प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत् ।
नासौ विशुद्धः शुद्धस्तु शमयेद् यो न कोपयेत् ॥
एको हेतुरनेकस्य तथैकस्यैक एव हि ।
व्याधेरेकस्य चानेको बहूनां बहवोऽपि च ॥
ज्वरभ्रमप्रलापाद्या दृश्यन्ते रूक्षहेतुजाः ।
रूक्षेणैकेन चाप्येको ज्वर एवोपजायते ॥
हेतुभिर्बहुभिश्चैको ज्वरो रूक्षादिभिर्भवेत् ।
रूक्षादिभिर्ज्वराद्याश्च व्याधयः सम्भवन्ति हि ॥
लिङ्गञ्चैकमनेकस्य तथैकस्यैकमुच्यते ।
बहून्येकस्य च व्याधेर्बहूनां स्युर्बहूनि च ॥
विषमारम्भमूलानां लिङ्गमेकं ज्वरो मतः ।
ज्वरस्यैकस्य चाप्येकः सन्तापो लिङ्गमुच्यते ॥
विषमारम्भमूलैश्च ज्वर एको निरुच्यते ।
लिङ्गैरेतैर्ज्वरश्वासहिक्काद्याः सन्ति चामयाः ॥
एका शान्तिरनेकस्य तथैवैकस्य लक्ष्यते ।
व्याधेरेकस्य चानेका बहूनां बह्व्य एव च ॥
शान्तिरामाशयोत्थानां व्याधीनां लङ्घनक्रिया ।
ज्वरस्यैकस्य चाप्येका शान्तिर्लङ्घनमुच्यते ॥
तथा लघ्वशनाद्याश्च ज्वरस्यैकस्य शान्तयः ।
एताश्चैव ज्वरश्वासहिक्कादीनां प्रशान्तयः ॥
सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते ।
साध्यते कृच्छ्रसाध्यस्तु यत्नेन महता चिरात् ॥
याति नाशेषतां व्याधिरसाध्यो याप्यसंज्ञितः ।

परोऽसाध्यः क्रियाः सर्व्वाः प्रत्याख्येयोऽतिवर्त्तते॥
नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्।
पादापचाराद्दैवाद्वा यान्ति भावान्तरं गदाः॥
वृद्धिस्थानक्षयावस्थां दोषाणामुपलक्षयेत्।
सुसूक्ष्मामपि च प्राज्ञो देहाग्निबलचेतसाम्॥
व्याध्यवस्था विशेषान् हि ज्ञात्वा ज्ञात्वा विचक्षणः।
तस्यां तस्यामवस्थायां तत्तु श्रेयः प्रपद्यते॥
प्रायस्तिर्य्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम्।
तेषु न त्वरया कुर्य्यात् देहाग्निबलक्रियाम्॥
प्रयोगैः क्षपयेद्वातान् सुखं वा कोष्ठमानयेत्।
ज्ञात्वा कोष्ठप्रपन्नां स्तान् यथास्वं तं हरेद्बुधः॥
ज्ञानार्थं यानि चोक्तानि व्याधिलिङ्गानि संग्रहे।
व्याधयस्ते तदा ते तु लिङ्गानीष्टानि नामशः॥
विकाराः प्रकृतिश्चैव द्वयं सर्वं समासतः।
तद्धेतुवशगं हेतो रभावान्नानुवर्त्तते॥ इति।
तत्र श्लोकाः। हेतवः पूर्वरूपाणि रूपाण्युपशयस्तथा।
संप्राप्तिः पूर्वमुत्पत्तिः सूत्रमात्रं चिकित्सितम्॥
ज्वरादीनां विकाराणां अष्टानां साध्यता न च।
पृथगेकैकशश्चोक्ता हेतुलिङ्गोपशान्तयः॥
हेतुपर्य्यायनामानि व्याधीनां लक्षणस्य च।
निदानस्थानमेतावत् संग्रहेणोपदिश्यते इति॥

इत्यपस्मारनिदानम्।

निदानस्थानं समाप्तम्।

## अथ विमानस्थाने प्रथमोऽध्यायः ।

### अथातो रसविमानं व्याख्यास्यामः ।

इति ह स्माह भगवानात्रेयः। इह खलु व्याधीनां निमित्तपूर्वरूपरूपोपशयसंख्याप्राधान्यविधिविकल्पबलकालविशेषाननुप्रविश्य आतुरं दोषभेषजदेशकालबलशरीराहारसारसात्म्यसत्त्वप्रकृतिवयसां मानमवहितमनसा यथावज्ज्ञेयं भवति। भिषजा दोषादिमानज्ञानायत्तत्वात् क्रियायाः । न ह्यमानज्ञो दोषादीनां भिषक् व्याधिनिग्रहसमर्थो भवति। तस्मात् दोषादिमानज्ञानार्थं विमानस्थानमुपदेक्ष्यामोऽग्निवेश!। तत्रादौ रसद्रव्यदोषविकारप्रभवान् वक्ष्यामः। रसास्तावत् षट् मधुराम्ललवणकटुतिक्तकषायास्ते सम्यगुपयुज्यमानाः शरीरं यापयन्ति।

मिथ्योपयुज्यमानास्तु खलु दोषप्रकोपणायोपकल्पयन्ति। दोषा पुनस्त्रयो वातपित्तश्लेष्माणः ते प्रकृतिभूताः शरीरोपकारका भवन्ति। विकृतमापन्नास्तु खलु नानाविधैर्विकारैः शरीरमुपतापयन्ति। तत्र दोषमेकैकं त्रयस्त्रयो रसा जनयन्ति। त्रयस्त्रयश्चोपशमयन्ति। तद्यथा कटुतिक्तकषाया वातं जनयन्ति। मधुराम्ललवणास्त्वेनं शमयन्ति। कट्वम्ललवणाः पित्तं जनयन्ति। मधुरतिक्तकषायास्त्वेतच्छमयन्ति। मधुराम्ललवणाः श्लेष्माणं जनयन्ति। कटुतिक्तकषायास्त्वेनं शमयन्ति। रसदोषसन्निपाते तु ये रसा यैर्दोषैः समानगुणाः समानगुणभूयिष्ठा वा ते तानभिवर्द्धयन्ति। विपरीतगुणास्तु विपरीतगुणभूयिष्ठा वा शमयन्त्यभ्यस्यमानाः इत्येषा व्यवस्था हेतोः

षट्त्वमुपदिश्यते रसानां परस्परेणासंसृष्टानां त्रित्वञ्च दोषाणाम्। संसर्गविकल्पविस्तारो ह्येषामपरिसंख्येयो भवन्ति विकल्पभेदापरिसंख्येयत्वात्। तत्र खल्वनेकरसेषु द्रव्येष्वनेकदोषात्मकेषु च विकारेषु रसदोषप्रभावमेकैकत्वेनाभिसमीक्ष्य ततो द्रव्यविकारप्रभावतत्त्वं व्यवस्येत्। नत्वेवं खलु सर्वत्र। न हि विकृतिविषमसमवेतानां नानात्मकानां परस्परेण चोपहतानामन्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमानेन समुदायप्रभावतत्त्वमध्यवसातुं शक्यम्। तथायुक्ते हि समुदाये समुदायप्रभावतत्त्वमेवोपलभ्य ततो रसद्रव्यविकारप्रभावतत्त्वं व्यवस्येत्। तस्माद्रसप्रभावतश्च द्रव्यप्रभावतश्च दोषप्रभावतश्च विकारप्रभावतश्च तत्त्वमुपदेक्ष्यामः। तत्रैष रसद्रव्यदोषविकारप्रभाव उपदिष्टो भवति द्रव्यप्रभावं पुनरुपदेक्ष्यामः। तैलसर्पिर्मधूनि वातपित्तश्लेष्मप्रशमनानि द्रव्याणि भवन्ति। तत्र तैलं स्नेहौष्ण्यगौरवोपपन्नत्वाद्वातं जयति सततमभ्यस्यमानम्। वातो हि रौक्ष्यशैत्यलाघवोपपन्नो विरुद्धगुणो भवति। विरुद्धगुणसन्निपाते हि भूयसाल्पमवजीयते।

तस्मात् तैलं वातं जयति सततमभ्यस्यमानम्।

सर्पिः खल्वेवमेव पित्तं जयति। माधुर्य्यात् शैत्यात् मन्दत्वाच्च पित्तं ह्यमधुरमुष्णं तीक्ष्णम्। मधु च श्लेष्माणं जयति। रौक्ष्यात् तैक्ष्ण्यात् कषायत्वाच्च। श्लेष्मा हि स्निग्धो मन्दो मधुरश्च। यच्चान्यदपि किञ्चित्द्रव्यमेवं वातपित्तकफेभ्यो गुणतो विपरीतम्। तच्चैतान् जयत्यभ्यस्यमानम्।

अथ खलु त्रीणि द्रव्याणि नात्युपयुञ्जीताधिकमन्येभ्यो द्रव्येभ्यः। तद्यथा पिप्पली क्षारं लवणमिति। पिप्पल्यो हि कटुकाः सत्यो मधुरविपाका गुर्व्व्यो नात्यर्थम्। स्निग्धोष्णाः प्रक्लेदिन्यो भेषजाभिमताश्च। ताः सद्यः शुभाशुभकारिण्यो भवन्त्यापातभद्राः प्रयोगसमसाद्गुण्याद्दोषसञ्चयानुबन्धाः सततमुपयुज्यमाना हि गुरुप्रक्लेदित्वात् श्लेष्माणमुत् क्लेशयन्ति। औष्ण्यात् पित्तम्। न च वातप्रशमनायोपकल्पन्ते। अल्पस्नेहोष्णभावात्। योगवाहिन्यस्तु खलु भवन्ति। तस्मात् पिप्पलीर्नात्युपयुञ्जीत। क्षारः पुनरौष्ण्यतैक्ष्ण्यलाघवोपपन्नः क्लेदयत्यादौ पश्चात् विशोषयति स पचनदहनभेदनार्थमुपयुज्यते। सोऽतिप्रयुज्यमानः केशाक्षिहृदयपुंस्त्वोपघातकरः सम्पद्यते। ये ह्येनं ग्रामनगरनिगमजनपदाः सतत मुपयुञ्जते। तेऽप्यान्ध्यषाण्ढ्यखालित्य पालित्य भाजो हृदयोपकर्त्तिनश्च भवन्ति। तद्यथा। प्राच्याश्चीनाश्च तस्मात् क्षारं नात्युपयुञ्जीत। लवणं पुनरौष्ण्यतैक्ष्ण्योपपन्नमनतिगुरु। अनतिस्निग्धमुपक्लेदिविस्रंसनसमर्थमन्नद्रव्यरुचिकरम् आपातभद्रम्। प्रयोगसमसाद्गुण्याद्दोषसञ्चयानुबन्धम्। तद्रोचनपाचनोपक्लेदनविस्रंसनार्थमुपयुज्यते। तदत्यर्थमुपयुज्यमानं शैथिल्यदौर्वल्याभिनिर्वृत्तिकरं शरीरस्य भवति। ये ह्येतत् ग्रामनगरनिगमजनपदाः सततमुपयुञ्जते। ते भूयिष्ठं ग्लास्नवः शिथिलमांसशोणिताः। अपरिक्लेशसहाश्च। तद्यथा वाह्लीकसौराष्ट्रिकसैन्धवसौवीरकाः। ते हि पयसापि सदा लवणमश्नन्ति। येऽपीह भूमेरत्यूषरा देशास्तेष्वोषधिवीरुद्वनस्पति-

वातस्यत्या न जायन्ते। अल्पतेजसो वा भवन्ति। लवणो-पहतत्वात्। तस्माल्लवणं नात्युपयुञ्जीत। ये ह्यतिलवण-सात्म्यास्तेषामपि खालित्येन्द्रियलुप्तपालित्यानि वलयश्चा-काले भवन्ति। तस्मात्तेषां तत् सात्म्यतः क्रमेणापगमनं श्रेयः। सात्म्यमपि हि क्रमेणोपनिवर्त्त्यमानमदोषमल्प-दोषं वा भवति। सात्म्यं नाम तत्। यदात्मन्युपशेते। सात्म्यार्थो ह्युपशयार्थः। तत्त्रिविधं प्रवरावरमध्यविभागेन सप्तविधन्तु रसैकैकत्वेन सर्वरसोपयोगाच्च। तत्र सर्वरसं प्रवरमवरमेकरसम्। मध्यन्तु प्रवरावरमध्यस्थम्। तत्रा-वरमध्याभ्यां सात्म्याभ्यां क्रमेण प्रवरमुपपादयेत् सात्म्यम्। सर्वरसमपि च सात्म्यमुपपन्नं सर्व्वाण्याहारविधिविशेषा-यतनान्यभि समीक्ष्याहितमेवानुरुध्यते। तत्र खल्विमान्यष्टावाहारविधि विशेषा यतनानि भवन्ति। तद्यथा प्रकृतिकरणसंयोगराशि देशकालोपयोगसंस्थोपयोक्तष्टमानि भवन्ति। तत्र प्रकृतिरुच्यते स्वभावो यः। स पुनराहारौ-षधद्रव्याणां स्वाभाविको गुर्वादिगुणयोग्यः। तद्यथा माष-मुद्गयोः सूकरैणयोश्च करणं पुनःस्वाभाविकानां द्रव्याणा-मभि संस्कारः। संस्कारो हि गुणाधानमुच्यते। ते गुणास्तु तोयाग्नि सन्निकर्षशौच मन्थनदेशकालवासभवनादिभिः कालप्रकर्षभाजनादिभिश्चाधीयन्ते। संयोगस्तु द्वयोर्बह्वूनां वा द्रव्याणां संहती भावः सविशेषमारभते यत्नैकशो द्रव्याणि नारभन्ते यथा मधु सर्पिषोः मधुमत्स्य पयसाञ्च संयोगः। राशिस्तु सर्वग्रहपरिग्रहौ। मात्राऽमात्राफल-विनिश्चयार्थः प्रकृतः। तत्र सर्वस्याहारस्य प्रमाणग्रहणः

मेकपिण्डेन सर्वग्रहः। परिग्रहश्च पुनः प्रमाणं ग्रहणमेकैककश्येनाहारद्रव्याणां सर्वस्य हि ग्रहः सर्वग्रहः सर्वतश्च ग्रहः परिग्रह उच्यते। देशः पुनः स्थानं द्रव्याणामुत्पत्तिं प्रचारौ देशसाम्यञ्चाचष्टे। कालो हि नित्यगश्चावस्थिकश्च। तत्रावस्थिको विकारमपेक्षते। नित्यगस्तु ऋतु सात्म्यापेक्षः। उपयोगसंस्थातूपयोगनियमः स जीर्णलक्षणापेक्षः। उपयोक्ता पुनः यः तमाहारमुपयुंक्ते। यदा यत्तमोकसात्म्यमित्यष्टावाहारविधिविशेषायतनानि भवन्ति। एषां विशेषाः शुभाशुभफलप्रदाः परस्परोपकारका भवन्ति। तान् बुभुत्सेत बुद्धा च हितेप्सुरेव स्यान्नच मोहात् प्रमादाद्वा प्रियमहितमसुखोदर्कमुपसेव्यमाहारजातमन्यद्वा तत्रेदमाहारविधिविधानमरोगाणामपि चातुराणां केषाञ्चित्काले प्रकृत्यैव हिततमं भुञ्जानानां भवति। उष्णं स्निग्धं मात्रावज्जीर्णे वीर्य्याविरुद्धम्। इष्टे देशे। इष्ट सर्वोपकरणं नाति द्रुतं नाति विलम्बितं अजल्पं सहसंस्तभ्मना भुञ्जीत आत्मानमभि समीक्ष्य सम्यक्। तस्य षाड्गुण्यमुपदेक्ष्यामः। उष्णमश्नीयादुष्णं हि भुज्यमानं स्वदते भुक्तश्चाग्निमुदीर्य्यमुदीरयति। क्षिप्रञ्च जरां गच्छति वातञ्चानुलोमयति श्लेष्माणञ्च परिशोषयति तस्मादुष्णमश्नीयात् स्निग्धमश्नीयात्। स्निग्धं हि भुज्यमानं स्वदते। भुक्तमुदीर्य्यमग्निमुदीरयति क्षिप्रं जरां गच्छति वातमनुलोमयति दृढीकरोति शरीरोपचयं बलाभि वृद्धिञ्चोपजनयति। वर्णप्रसादमपि चाभिनिर्वर्त्तयति, तस्मात्। स्निग्धमश्नीयात्। मात्रावदश्नीयात्। मात्रावद्धि भुक्तं वातपित्तकफान प्रपीड़यदायु-

रेव विवर्द्धयति केवलम्। सुखं गुदमनुपर्य्येति न चोष्मा-णमुपहन्ति। अव्यथश्च परिणाकमेति। तस्मात् मात्रावदश्नीयात्। जीर्णेऽश्नीयात्। अजीर्णे हि भुञ्जानः। पूर्वस्याहारस्य रसमपरिणतमुत्तरेणाहाररसेनोपसृजन् सर्वान् दोषान् प्रकोपयति। आशुजीर्णे भुञ्जानस्य स्वस्थानस्थेषु दोषेष्वग्नौ चोदीर्णे जातायाञ्च बुभुक्षायां विवृतेषु च स्रोतसां मुखेषु चोद्गारे विशुद्धे हृदये विशुद्धे वातानुलोम्ये विसृष्टेषु च वातमूत्रपुरीषवेगेषु जीर्णेऽभ्यवहृतमाहारजातं सर्वशरीरधातून् प्रदूषयदायुरेवाभिवर्द्धयति केवलम्। तस्माज्जीर्णेऽश्नीयात्। वीर्य्याविरुद्धमश्नीयात्। अविरुद्धवीर्य्यमश्नन् हि न विरुद्धवीर्य्याहारजैर्विकारैरग्रमुपसृज्यते। तस्माद्वीर्य्याविरुद्धमश्नीयात्। इष्टे देशेऽश्नीयात्। इष्टे हि देशे भुञ्जानो नानिष्टदेशजैर्मनोविघातकरैर्भावैर्मनोविघातं प्राप्नोति। तथेष्टैः सर्वोपकरणैस्तस्मादिष्टे देशे तथेष्टसर्वोपकरणश्चाश्नीयात्। नातिद्रुतमश्नीयात्। अतिद्रुतं हि भुञ्जानस्य तत् स्नेहनमवसादनं भोजनस्या प्रतिष्ठानं भोज्यदोषसाद्गुण्योपलब्धिश्च न नियता। तस्मान्नातिद्रुतमश्नीयात्। नातिविलम्बितमश्नीयात्। अतिविलम्बितं हि भुञ्जानो न तृप्तिमधिगच्छति। बहुभुङ्क्ते शीतीभवति चाहारजातं विषमपाकञ्च भवति। तस्मान्नातिविलम्बितमश्नीयात्। अजल्पन्नहसन् तन्मना भुञ्जीत। जल्पतो हसतोऽन्यमनसो वाभुञ्जानस्य तएव हि दोषा भवन्ति यएवातिद्रुतमश्नतः। तस्मादजल्पन्नहसंस्तन्मना भुञ्जीत। आत्मानमभिसमीक्ष्य भुञ्जीत सम्यक्। इदं ममोपशेते इदं नोपशेते। इति। विदितं ह्यस्यात्मन

चात्मसात्म्यञ्च भवति। तस्मादात्मानमभिसमीक्ष्य भुञ्जीत सम्यगिति। रसान् द्रव्याणि दोषांश्च विकारांश्च प्रभावतः।
तत्र श्लोकौ। वेदयो देशकालौ च शरीरञ्च मनोभिषक्।
विमानार्थो रसद्रव्यदोषरोगाः प्रभावतः॥
द्रव्याणि नातिसेव्यानि त्रिविधं सात्म्यमेव च।
आहारायतनान्यष्टौ भोज्यषाड्गुण्यमेव च॥
विमाने रससंख्याते सर्व्वमेतत् प्रकाशितमिति।
अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।
विमानस्थाने रसविमानं नाम प्रथमोऽध्यायः।

—

## द्वितीयोऽध्यायः।

अथ त्रिविधकुक्षीयं विमानं व्याख्यास्यामः।

इति ह स्माह भगवानात्रेयः। त्रिविधं कुक्षौ स्थापयेदवकाशांशमाहारस्याहारमुपयुञ्जानः। तद्यथैकमवकाशांशं मूर्त्तानामाहारविकाराणामेकं द्रवाणामेकं पुनर्वातपित्तश्लेष्मणामेतावतीं ह्याहारमात्रामुपयुञ्जानो नामात्राहारजं किञ्चिदशुभं प्राप्नोति न च केवलं मात्रावत्त्वादेवाहारस्य कृत्स्नमाहारफलसौष्ठवमवाप्तुं शक्यं प्रकृत्यादीनामष्टानामाहारविधिविशेषायतनानां विभक्तफलत्वात्। तत्र तावदाहारराशिमधिकृत्य मात्रामात्राफलविनिश्चयार्थः प्रकृतः। एतावानेव ह्याहारराशि र्विधिविकल्पो यावत् मा-

ञ्चावत्त्वममात्रावत्त्वञ्च । तत्र मात्रावत्त्वं पूर्व्वमुद्दिष्टं कुक्ष्यंश
विभागेन । तद्भूयोविस्तरेणानुव्याख्यास्यामः । तद्यथा कुक्षे-
रप्रपीड़नमाहारेण हृदयस्यानवरोधः । पार्श्वयोरविपाट-
नमनति गौरवमुदरस्य प्रीणनमिन्द्रियाणां क्षुत्पिपासो-
परमः स्थानासनशयनगमनोच्छ्वासप्रश्वास हास्यसंकथासु च
सुखानुवृत्तिः सायं प्रातश्च सुखेन परिणमनं बलवर्णोपचय-
करत्वञ्चेति मात्रावतो लक्षणमाहारस्य भवति । अमात्रा-
वत्त्वं पुनर्द्विविधमाचक्षते । हीनमधिकञ्च तत्र हीनमात्र-
माहारराशिं बलवर्णोपचयक्षयकरमतृप्तिकरमुदावर्त्तकर-
मवृष्यमनायुष्यमनौजस्यं मनोबुद्धीन्द्रियोपघातकरं सार-
विधमनमलक्ष्म्यावहमशीतेश्च वातविकाराणामायतनमाच-
क्षते । अतिमात्रं पुनः सर्व्वदोषप्रकोपनमिच्छन्ति सर्व्वे
कुशलाः । यो हि मूर्त्तानामाहारविकाराणां सौहित्यं
गत्वा पश्चाद्द्रवैस्तृप्तिमापद्यते । भूयस्तस्यामाशयगता वात-
पित्तश्लेष्माणोऽभ्यवहारेणातिमात्रेणाति प्रपीड्यमानाः सर्व्वे
युगपत् प्रकोपमापद्यन्ते । ते प्रकुपितास्तमेवाहारराशि-
मपरिणतमाविश्य कुक्ष्येकदेशमन्नाश्रिता विष्टम्भयन्तः सहसा
वाप्युत्तराधराभ्यां मार्गाभ्यां प्रच्यावयन्तः पृथक् पृथग्
विकारानभिनिर्व्वर्त्तयन्ति अतिभोक्तुः । तत्र वातः । शूला-
नाहाङ्गमर्दमुखशोषमूर्च्छा भ्रमाग्नि वैषम्य सिरा सङ्को-
चनस्तम्भनानि करोति । पित्तं पुनः ज्वरमतीसारमन्तर्दाहं
तृष्णामदभ्रमप्रलपनानि । श्लेष्मा तु छर्द्यरोचकाविपाक-
शीतज्वरालस्य गात्रगौरवाभिनिर्वृत्तिकरः सम्पद्यते । न
तु खलु केवलमतिमात्रमेवाहारराशि माम प्रदोषकर-

मिच्छन्ति। अपि तु खलु गुरु रूक्षशीतशुष्कद्विष्टविष्टम्भि विदाह्य शुचि विरुद्धानामकाले अन्नपानानामुपसेवनम्। कामक्रोधलोभमोहेर्ष्या ह्रीशोकमनोद्वेगभयोपतप्तेन मनसा वा यदन्नपानमुपयुज्यते। तदप्याम मेव प्रदूषयति।
भवतिचात्र। मात्रयाप्यभ्यवहृतं पथ्यं चान्नं न जीर्य्यति।

चिन्ताशोकभयक्रोध दुःखशय्या प्रजागरैः॥

तं द्विविधमाम प्रदोषमाचक्षते भिषजः।

विसूचिकामलसञ्च। तत्र विसूचिकामूर्द्धञ्चाधश्च प्रवृत्तामदोषां यथोक्तरूपां विद्यात्। अलसकमुपदेक्ष्यामः। दुर्व्वलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्र पुरीषवेगविधारिणः स्थिरगुरुबहुरूक्ष शीतशुष्कान्नसेविनस्तदन्न पानमनिल प्रपीड़ितम् श्लेष्मणाच विबद्धमार्गमतिमात्र प्रलीनमलसत्वान्न बहिर्मुखो भवति। ततश्छर्द्यतीसार वर्ज्ज्यान्याम प्रदोषलिङ्गान्यभिदर्शयति अतिमात्राणि। अतिमात्र प्रदुष्टाश्च दोषाः प्रदुष्टामबद्धमार्गा स्तिर्य्यग्गच्छन्तः कदाचित् केवलमेवास्य शरीरं दण्डवत् स्तम्भयन्ति। ततस्तमलसकमसाध्यं ब्रुवते। विरुद्धाध्यशना जीर्णाशनशीलिनः पुनरेव दोषमाम विषमित्याचक्षते भिषजोविषसदृश लिङ्गत्वात्। तत् परमसाध्यमाशुकारित्वात् विरुद्धोपक्रमत्वाच्चेति। तत्र साध्यमामं प्रदुष्टमलसीभूत मुल्लेखयेत्। पाययित्वा सलवणमुष्णञ्च वारि। ततः स्वेदनवर्त्ति प्रणिधानाभ्यामुपाचरेदुपवासयेच्चैनम्। विसूचिकायान्तु लङ्घनमेवाग्रे विरिक्तवच्चानुपूर्व्वी। आमप्रदोषेषु त्वन्नकाले जीर्णाहारं पुनर्दोषावलिप्तमामाशयं स्तिमितगुरुकोष्ठमन-

अभिलाषिणमभिसमीक्ष्य पाययेद्दोषशेषपाचनार्थमौषधमग्निसन्धुक्षणार्थञ्च नत्वजीर्णाशनम्। आमप्रदोषदुष्टं-क्षीणोह्यग्निर्युगपद्दोषमौषधमाहारजातञ्च शक्तः पक्तुम्। अपिचाम प्रदोषाहारौषधिविभ्रमोऽति बलत्वादुपरतकायाग्निं सहसैवातुरमबलमभिपातयेत्। आमप्रदोषजानां पुनर्विकाराणामपतर्पणेनैवोपरमो भवति। सति त्वनुबन्धे कृता पतर्पणानां व्याधीनां निग्रहे निमित्तविपरीतमपास्यौषधमातङ्क विपरीतमेवावचारयेत्। यथास्वं सर्व्वविकाराणामपि च निग्रहे हेतु व्याधिविपरीतमौषधमिच्छन्ति कुशलाः। तदर्थकारिवा विमुक्तामप्रदोषस्य पुनः परिपक्वदोषस्य दीप्ते चाग्नौ अभ्यङ्गास्थापनानुवासनं विधिवत् स्नेहपानञ्च युक्त्या प्रयोज्यम्। प्रसमीक्ष्यदोषभेषजदेश कालबलशरीराहार सात्म्यसत्वप्रकृतिवयसामवस्थान्तराणि विकारांश्च सम्यगिति॥

भवतिचात्र। अशितं खादितं पीतं लीढञ्च क्व विपच्यते।
एतत्त्वां धीर! पृच्छामस्तन्न आचक्ष्व बुद्धिमान्॥
इत्यग्निवेशप्रमुखैः शिष्यैः पृष्टः पुनर्व्वसुः।
आचचक्षे ततस्तेभ्यो यत्राहारो विपच्यते॥
नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः।
अशितं खादितं पीतं लीढञ्चात्र विपच्यते॥
आमाशयगतः पाकमाहारः प्राप्य केवलम्।
पक्वः सर्व्वाशयं पश्चाद् धमनीभिःप्रपद्यते॥
तस्य मात्रावतो लिङ्गं फलञ्चोक्तं यथायथम्।
अमात्रस्य तथा लिङ्गं फलञ्चोक्तं विभागशः॥

आहारविध्यायतनानि चाष्टौ सम्यक् परोच्यात्महितं विदध्यात्
अन्यश्च यः कश्चिदिहास्ति मार्गो हितोपयोगेषु भजेत तञ्च ॥
इति अग्निवेशकृते तन्त्रे चरक प्रति संस्कृते ।
विमानस्थाने त्रिविधकुचीयं विमानं नाम द्वितीयोऽध्यायः २॥

---

तृतीयोऽध्यायः ।

अथातो जनपदोद्ध्वंसनीयं विमानं व्याख्यास्यामः ।
इति हस्माह भगवानात्रेयः ।

जनपदमण्डले पञ्चालक्षेत्रे द्विजातिवराध्युषिते काम्पिल्यराजधान्यां भगवान् पुनर्व्वसु रात्रेयोऽन्तेवासिगणपरिवृतः । पश्चिमे घर्म्ममासे गङ्गातीरे वनविचारमनुविचरन् शिष्यमग्निवेशमब्रवीत् । दृश्यन्ते हि खलु सौम्य! नक्षत्र ग्रह चन्द्रसूर्य्यानिलानलानां दिशां च प्रकृतिभूता ऋतुविकारिकाभावा अचिरादितो भूरपि च न यथा वद्रसवीर्य्यविपाक प्रभावमोषधीनां प्रतिविधास्यति । तद्वियोगाच्चातङ्क प्रायता नियता तस्मात् प्राक् उद्ध्वंसात् प्राक् च भूमेर्व्विरसीभावा दुद्धर सौम्य भैषज्यानि । यावन्नोपहतरसवीर्य्यविपाक प्रभावानि । वयं चैषां रसवीर्य्यविपाक प्रभावानुपयोक्ष्यामहे । ये चास्माननुकाङ्क्षन्ति । यांश्च वयमनुकाङ्क्षामो न हि सम्यगुद्धृतेषु भैषजेषु सम्य-

गुहृतेषु सम्यग्विहितेषु सम्यक् विचारचारितेषु जनपदोद्ध्वं-
सकराणां विकाराणां किञ्चिन्न प्रतीकार गौरवं भवति।
एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच। उद्धृतानि खलु
भगवन्! भेषजानि सम्यग्विहितानि च सम्यक् विचारि-
तानि। अपि तु खलु जनपदोध्वंस न मेकेन व्याधिना युग-
पदसमानप्रकृत्याहार देहबलसात्म्य सत्त्ववयसां मनुष्याणां
कस्माद्भवतीति। तमुवाच भगवानात्रेयः। एवमसामान्याना-
मेभिरप्यग्निवेश! प्रकृत्यादिभिर्भावैर्मनुष्याणां येऽन्येभावाः
सामान्यास्तद्वैगुण्यात् समानकालाः समानलिङ्गाश्च व्याधयोऽ-
भिनिर्वर्त्तमाना जनपदमुद्ध्वंसयन्ति। ते तु खल्विमे-
भावाः सामान्या जनपदेषु भवन्ति। तद्यथा। वायुरुदकं
देशः काल इति। तत्र वातमेवं विधमनारोग्यकरं वि-
द्यात्। तद्यथा। ऋतु विषममतिस्तिमितमतिचलमति
परुषमति शीतमत्युष्णमतिरूक्षमत्यभिष्यन्दिनमति भैरवा-
रावमति प्रतिहत परस्परगतिमतिकुण्डलिनमसात्म्यगन्ध-
वाष्पसिकतापांशुधूमोपहतमिति। उदकन्तु खलु अत्यर्थ-
विकृतगन्धवर्णरसस्पर्शवत् क्लेदबहुलमपक्रान्त जलचरविह-
ङ्गमुपक्षीण जलाशयमप्रीतिकरमपगत गुणं विद्यात्। देशं
पुनः प्रकृतिविकृतिवर्णगन्धरसस्पर्शं क्लेदबहुलमुपसृष्टं स-
रीसृपव्यालमशकशलभमक्षिकामूषकोलूकश्मशानिकशकुनि
जम्बुकादिभिस्तृणोलूपोपवनवन्तं प्रतानादिबहुलमपूर्व्वव-
दवपतितं शुष्कनष्टशस्यं धूम्रपवनं प्रध्मातपतत्रिगणमुत्-
क्रुष्टश्वगणमुद्भ्रान्तव्यथित विविधमृगपक्षिसंघमुत सृष्ट-

नष्टधर्म्मसत्य लज्जाचारगुण जनपदं शश्वत्क्षुभितोदीर्णसलिलाशयं प्रततोल्कापातनिर्घात भूमिकम्पं प्रतिभयारावरूपं रूक्षताम्रारुणसिताभ्रजालसंवृतार्कचन्द्रतारकमभीक्ष्णं सम्भ्रमोद्वेगमिव सत्रासरुदितमिव सतमस्कमिव गुह्यकाचरितमिवाक्रन्दितशब्दबहुलञ्चाहितं विद्यात्। कालन्तु खलु यथर्त्तुलिङ्गाद्विपरीतलिङ्गमति लिङ्गं हीनलिङ्गञ्चाहितं व्यवस्येत्। इमानेवं युक्तांश्चतुरो भावान् जनपदोद्ध्वंसकरान् वदन्ति कुशलाः। अतोऽन्यथा भूतांस्तु हितानाचक्षते। विगुणेष्वपि तु खलु जनपदोद्ध्वंसनकरेषु भावेषु भेषजेनोपपाद्यमानानां सभयं भवति रोगेभ्य इति। भवतिचात्र। वैगुण्यमुपपन्नानां देशकालानिलाम्भसाम्।

गरीयस्त्वं विशेषेण हेतुमत् संप्रवक्ष्यते॥
वातात् जलं जलात् देशं देशात्कालं स्वभावतः।
विद्यादपरिहार्य्यत्वाद्गरीयस्तरमर्थवित्॥
वाय्वादिषु यथोक्तानां दोषाणान्तु विशेषवित्।
प्रतिकारस्य सौकार्य्ये विद्याल्लाघवलक्षणम्॥
चतुर्ष्वपि तु दुष्टेषु कालान्तेषु यदा नरः।
भेषजेनोपपाद्यन्ते न भवन्त्यातुरास्तदा॥
येषां न मृत्युसामान्यं सामान्यं न च कर्म्मणाम्।
कर्म्मपञ्चविधं तेषां भेषजं परमुच्यते॥
रसायनानां विधिवच्चोपयोगः प्रशस्यते।
शस्यते देहवृत्तिश्च भेषजैः पूर्व्वमुद्धृतैः॥
सत्यं भूते दया दानं बलयो देवतार्च्चनम्।
सद्वृत्तस्यानुवृत्तिश्च प्रशमोगुप्तिरात्मनः॥

हितं जनपदानाञ्च शिवानामुपसेवनम्।
सेवनं ब्रह्मचर्य्यस्य तथैव ब्रह्मचारिणाम्॥
सङ्कथा धर्म्मशास्त्राणां महर्षीणां जितात्मनाम्।
धार्म्मिकैः सात्त्विकैर्नित्यं सहास्या वृद्धसम्मतैः॥
इत्येतत् भेषजं प्रोक्तमायुषः परिपालनम्।
येषामनियतो मृत्युस्तस्मिन् काले सुदारुणे॥

इति श्रुत्वा जनपदोध्वंसने कारणान्यात्रेयस्य भगवतः पुनरपि भगवन्तमात्रेयमग्निवेश उवाच। अथ खलु भगवन्। कुतो मूलमेषां वाय्वादीनां वैगुण्यमुत्पद्यते। येनोपपन्ना जनपदमुद्ध्वंसयन्तीति। तमुवाच भगवानात्रेयः। सर्वेषामग्निवेश! वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्म्मः तन्मूलञ्चासत्कर्म्म पूर्व्वकृतम्। तयोर्योनिः प्रज्ञापराध एव। तद्यथा। यदा देशनगरनिगमजनपदप्रधाना धर्म्ममुत्क्रम्याधर्म्मेण प्रजां वर्त्तयन्ति। तदाश्रितोपाश्रिताः पौरजनपदाव्यवहारोपजीविनश्च तमधर्म्ममभिवर्द्धयन्ति। ततः सोऽधर्म्मः प्रसभं धर्म्ममन्तर्धत्ते। ततस्तेऽन्तर्हितधर्म्माणो देवताभिरपित्यज्यन्ते। तेषां तथान्तर्हितधर्म्माणामधर्म्मप्रधानानामपक्रान्तदेवतानामृतवो व्यापद्यन्ते। तेनापो यथाकालं देवो वर्षति न वा वर्षति विकृतं वा वर्षति। वाता न सम्यगभिवान्ति क्षितिर्व्यापद्यते सलिलान्युपशुष्यन्ति। ओषधयः स्वभावं परिहायापद्यन्ते विकृतिम्। तत उद्ध्वंसन्ते जनपदाः। स्पर्शाभ्यवहार्य्यदोषात्। तथा शस्त्रप्रभवस्याप्यधर्म्म एव हेतुर्भवति। तेऽतिप्रवृद्धलोभरोषमाना दुर्व्वलानवमत्य आत्मस्वजनपरोपघाताय शस्त्रेण परस्परमभिक्रामन्ति।

परान् वाभिक्रामन्ति। परैर्वाभिक्राम्यन्ते रक्षोगणादिभि-र्वा विविधैर्भूतसङ्घैस्तमधर्ममन्यद्वाप्यपचारान्तरमुपलभ्याभि-हन्यन्ते। तथाभिशापस्याप्यधर्म एव हेतुर्भवति। ते लुप्त-धर्म्माणो धर्मादपेता गुरुवृद्धसिद्धर्षिपूज्यानवमत्याहिता-न्याचरन्ति। ततस्ताः प्रजा गुर्वादिभिरभिशप्ता भस्म-तामुपयान्ति। प्रागेवानेक पुरुष कुलविनाशाय। नियत प्रत्ययोपलम्भान्नियताश्च परे। अनियत प्रत्ययोपलम्भादनि-यताश्चापरे। प्रागपि चाधर्म्माहते नाशुभोत्पत्तिरन्यतोऽभूत्। आदिकाले ह्यदिति सुतसमौजसोऽति विमल विपुलप्रभा-वाः प्रत्यक्षदेवदेवर्षिधर्म्मयज्ञविधिविधानाः शैलेन्द्रसारसंह-तस्थिर शरीराः प्रसन्नवर्णेन्द्रियाः पवनसमबल जव पराक्र-माश्चारुस्फिचोऽभिरूप प्रमाणाकृति प्रसादोपचयवन्तः सत्या-र्जवानृशंस्य दानदमनियमतप उपवास ब्रह्मचर्य्यव्रतपरा-व्यपगतभयरागद्वेषमोहलोभक्रोधशोकमान रोगनिद्रात-न्द्राश्रमक्लमालस्य परिग्रहाश्च पुरुषा बभूवुरमितायुष-स्तेषामुदार सत्वगुणकर्म्मणामचिन्त्यत्वात् रसवीर्य्यवि-पाक प्रभावगुण समुदितानि प्रादुर्बभूवुः शस्यानि सर्व-गुणसमुदितत्वात् पृथिव्यादीनां कृतयुगस्यादौ। भ्रश्यति-तु कृतयुगे केषाञ्चिदत्यादानात् साम्पन्निकानां शरीरगौरव मासीत्। सत्वानां गौरवाच्छ्रमः श्रमादालस्य मालस्यात् सञ्चयः सञ्चयात् परिग्रहः परिग्रहाल्लोभः प्रादुर्भूतः। ततः कृत युगे गते। त्रेतायां लोभादभिद्रोहः। अभिद्रोहाद-नृतवचनमनृत वचनात् कामक्रोधमानद्वेषपारुष्याभिघात भयतापशोकचित्तोद्वेगादयः प्रवृत्ताः। ततस्त्रेतायां धर्म्म-

पादोऽन्तर्धानमगमत्। तस्यान्तर्धानात् पृथिव्यादीनां गुण पाद प्रणाशोऽभूत्। तत्‌ प्रणाशकृतश्च शस्यानां स्नेहवैमल्य रसवीर्य्यविपाक प्रभावगुण पादभ्रंशः। ततस्तानि प्रजा शरीराणि हीन गुणपादैर्हीयमान गुणैश्चाहार विहारैर्यथापूर्वमुपष्टभ्यमानानि अग्निमारुत परीतानि प्राग् व्याधिभिर्ज्वरादिभिराक्रान्तान्यतः प्राणिनो ह्रासमवापुरायुषः क्रमश इति।

भवतिचात्र। युगे युगे धर्म्मपादः क्रमेणानेन हीयते।

गुण पादश्च भूतानामेवं लोकः प्रलीयते॥

सम्वत् सरशते पूर्णे याति सम्वत्सरः क्षयम्।

देहिनामायुषः काले यत्र यन्मान मिष्यते॥

इति विकाराणां प्रागुत्पत्ति हेतुरुक्तोभवत्येवंवादिनं भगवन्त मात्रेय उवाच। किन्नु खलु भगवन्! नियतकाल प्रमाणमायुः सर्वं न वेति भगवानुवाच। इहाग्निवेश! भूतानामायुर्युक्तिमपेक्षते।

दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम्।

दैवमात्मकृतं विद्यात् कर्म्म यत्पूर्वदैहिकम्॥

स्मृतः पुरुषकारस्तु क्रियते यदिहापरम्।

बलाबलविशेषोऽस्ति तयो रपि च कर्म्मणोः॥

दृष्टं हि त्रिविधं कर्म्म हीनं मध्यममुत्तमम्।

तयोरुदारयोर्युक्तिर्दीर्घस्य स्व सुखस्य च॥

नियतस्यायुषो हेतु र्विपरीतस्य चेतरा।

मध्यमा मध्यमस्येष्टा कारणं शृणु चापरम्॥

दैवं पुरुषकारेण दुर्ब्बलं ह्युपहन्यते।

दैवेन चेतरत् कर्म्मविशिष्टेनोपहन्यते॥
दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः।
कर्म्म किञ्चित् क्वचित् काले विपाके नियतं महत्॥
किञ्चित् न काल नियतं प्रत्ययैः प्रतिबोध्यते इति।

तस्मादुभयदृष्टत्वादेकान्तग्रहणमसाधु। निदर्शनमपि चात्रोदाहरिष्यामः। यदि हि नियतकालप्रमाणमायुः सर्व्वं स्यादायुष्कामानां न मन्त्रौषधि मणिमङ्गलबल्युपहार-होमनियमप्रायश्चित्तोपवासस्वस्त्ययन प्रणिपात गमनाद्याः क्रिया इष्टयश्च प्रयोक्ष्येरन्। नोद्भ्रान्तचण्डचपलगोगजोष्ट्र खरतुरगमहिषादयः पवनादयश्च दुष्टाः परिहार्य्याःस्युः। न प्रपातगिरि विषमदुर्गाम्बुवेगाः। तथा न प्रमत्तोन्मत्तोद्-भ्रान्तचण्डचपलमोहलोभाकुलमतयो नारयो न प्रवृद्धोऽग्निर्न च विविधविषाश्रयाः सरीसृपोरगादयः। न साहसं न देशकालचर्य्या न नरेन्द्रप्रकोप इत्येवमादयो भावाना-भावकराः स्युरायुषः सर्व्वस्य नियतकालप्रमाणत्वात्। न चानभ्यस्ताकालमरणभयनिवारकाणामकालमरणभयमाग-च्छेत् प्राणिनाम्। व्यर्थाश्चारम्भकथाप्रयोगबुद्धयः स्युर्म-हर्षीणां रसायनाधिकारे। नापीन्द्रो नियतायुषं शत्रुं वज्रेणाभिहन्यात्। नाश्विनावार्त्तं भेषजेनोपपादयेतां नर्षयो यथेष्टं आयुस्तपसा प्राप्नुयुर्न च विदितवेदितव्या महर्षयः ससुरेशाः सम्यक् पश्येयुरुपदिशेयुराचरेयुर्वा अपि च सर्व-चक्षुषामेतत्परं यदैन्द्रं चक्षुरिदं चास्माकं प्रत्यक्षं यथा पुरुषसहस्राणामुत्थायोत्थायाहवं कुर्व्वतामकुर्व्वतां च तुल्या-युष्ट्वं तथा जातमात्राणामप्रतिकाराच्चाविषप्राशिनां प्राश्य-

तुल्यायुष्ट्वं न च तुल्यो योगक्षेम उदपानघटकानां चित्र-घटकानां चोपसीदताम्। तस्माद्धितोपचारमूलं जीवितं अतो विपर्य्ययान् मृत्युरपि च देशकालात्मगुणविपरीतानां कर्म्मणामाहारविकाराणाञ्च क्रियोपयोगः। सम्यक् सर्वाति-योगसन्धारणमसन्धारणमुदीर्णानाञ्च गतिमतां साहसानां च वर्जनमारोग्यानुवृत्तौ उपलभामहे हेतुमुपदिशामः। सम्यक् पश्यामश्चेत्यतः परमग्निवेश उवाच।

एवं सति अनियतकालप्रमाणायुषां भगवन्! कथं काले मृत्युरकालमृत्युर्भवतीति। तमुवाच भगवानात्रेयः। श्रूयतामग्निवेश! यथा यानसमायुक्तोऽक्षः प्रकृत्यैवाक्षगुणै-रुपेतः सर्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्ष-यादेवावसानं गच्छेत् तथायुः शरीरोपगतं प्रकृत्या यथा-वदुपचर्य्यमाणं स्वप्रमाणक्षयादेव अवसानं गच्छति। स मृत्युः काले यथा च स एवाक्षोऽतिभाराधिष्ठितत्वा-द्विषमपथादपथादक्षचक्रभङ्गाद्वाह्यवाहकदोषादणि मोक्षा-त् पर्य्यसनादनुपाङ्गाच्चान्तरा व्यसनमापद्यते। तथायुरप्य-यथाबलमारम्भादयथाग्न्यभ्यवहरणाद्विषमाभ्यवहरणाद्विष-मशरीरन्यासादति मैथुनादसत् संश्रयादुदीर्णवेगविनि-ग्रहात्। विधार्य्यवेगाविधारणाद्भूतविषाग्न्युपतापादभिघा-तादाहारविवर्जनाच्चान्तरा व्यसनमापद्यते। स मृत्युर-काले। तथा ज्वरादीनप्यातङ्कान्मिथ्योपचरितानकाल-मृत्यून् पश्याम इति। अथाग्निवेशः पप्रच्छ किन्नु खलु भगवन्! ज्वरितेभ्यः पानीयमुष्णं भूयिष्ठं प्रयच्छन्ति भिषजो न तथा शीतं अस्ति च शीतसाध्यो धातुर्ज्वरकर

इति । तमुवाच भगवानात्रेयो ज्वरितस्य काये समुत्थान देशकालीनमभिसमीक्ष्य पानीयमुष्णं प्रयच्छन्ति भिषजः । ज्वरो ह्यामाशयसमुत्थः प्रायो भेषजानि चामाशयसमुत्थानां विकाराणां पाचनवमनापतर्पणानि समर्थानि भवन्ति पचनार्थञ्च पानीयमुष्णं तस्मादेतज्ज्वरितेभ्यः प्रयच्छन्ति भिषजो भूयिष्ठम् । तद्धेषां पीतं वातमनुलोमयति अग्निमुदर्य्यमुदीरयति । क्षिप्रं जरां गच्छति श्लेष्माणञ्च परिशोषयति स्वल्पमपि च पीतं तृष्णाप्रशमनायोपपद्यते तथा युक्तमपि चैतन्नात्यर्थोत्सन्नपित्ते ज्वरे सदाहभ्रमप्रलापाति सारे वा प्रदेयमुष्णेन हि दाहभ्रमप्रलापातिसारा भूयोऽभिवर्द्धन्ते शीतेनोपशाम्यन्तीति ।

भवति चात्र । शीतेनोष्णकृतान् रोगान् शमयन्ति भिषग्विदः ।
ये तु शीतकृता रोगास्तेषां चोष्णं भिषग्जितम् ॥

एवमितरेषामपि व्याधीनां निदानविपरीतमौषधं । कार्य्यं तथापतर्पणनिमित्तानामपि व्याधीनां निदानविपरीतमौषधं कार्यं तथापतर्पणनिमित्तानामपि व्याधीनां नान्तरेण पूरणमस्ति शान्तिस्तथा पूरणनिमित्तानां नान्तरेणा पतर्पणाम् । अपतर्पणमपि च त्रिविधं लङ्घनं लङ्घनपाचनं दोषावसेचनञ्चेति । तत्र लङ्घनमल्पदोषाणां लङ्घनेन ह्यग्नि मारुतवृद्ध्या वातातपपरीतमिवाल्पमुदकमल्पदोषं प्रशोषमापद्यते । लङ्घन पाचनाभ्यां मध्यबलः सूर्य्यसन्तापमारुताभ्यां पांशुभस्मावकिरणैरिव चानतिबह्दकालमव्यातुरस्य नैवं विधस्य कुर्यात् । अनपवादप्रतिकरस्याधनस्यापचारिकस्य वैद्यमानिनश्चण्डस्यासूयकस्य तीव्राधर्म्मरुचे-

रति क्षीणबलमांसशोणितस्य असाध्यरोगोपहतस्य मुमूर्षु-लिङ्गान्वितस्य चेति। एवं विधं ह्यातुरं उपचरन् भिषक् पापीयसा अयशसा योगं गच्छतीति।

तत्र श्लोकाः। अल्पोदकद्रुमो यस्तु प्रवातः प्रचुरातपः।
ज्ञेयः सजाङ्गलो देशः स्वल्परोगतमोऽपि च॥
प्रचुरोदकवृक्षो यो निवातो दुर्लभातपः।
अनूपो बहुदोषश्च समः साधारणो मतः॥
तदात्वे चानुबन्धे वा यस्य स्यादशुभं फलम्।
कर्म्मणस्तन्न कर्तव्यमेतद्बुद्धिमतां मतम्॥
पूर्वरूपाणि सामान्या हेतवः स्वस्वलक्षणाः।
देशोद्ध्वंसस्य भेषज्यं हेतूनां मूलमेव च॥
प्राग्विकारसमुत्पत्तिरायुषश्च क्षयक्रमः।
मरणं प्रति भूतानां कालाकालविनिश्चयः॥
यथाचाकालमरणं यथायुक्तञ्च भेषजम्।
सिद्धिं यात्यौषधं येषां न कुर्य्याद्येन हेतुना॥
तदग्निवेशायात्रेयो निखिलं सर्वमुक्तवान्।
देशोद्ध्वंसनिमित्तीये विमाने मुनिसत्तमः॥
इति जनपदोद्ध्वंसनीयं विमानं समाप्तम्।

---

## चतुर्थोऽध्यायः।

अथात स्त्रिविधरोगविशेषविज्ञानीयमध्यायं व्याख्यास्यामः॥

त्रिविधं खलु रोगविशेषज्ञानं भवति। तद्यथा। उपदेशः प्रत्यक्षमनुमानञ्चेति। तत्रोपदेशोनाम आप्त-वचनम्। आप्ता ह्यवितर्कस्मृतिविभाग विदो निष्प्रीत्युप-

तापदर्शिनः। तेषामेवं गुणयोगात् यद् वचनं तत् प्रमाणम्। अप्रमाणं पुनर्मत्तोन्मत्तमूर्खवक्तृदुष्टादुष्टवचनमिति। प्रत्यक्षन्तु खलु तत्। यत् स्वयमिन्द्रियैर्मनसा चोपलभ्यते। अनुमानं खलु तर्को युक्त्यपेक्षः। त्रिविधेन खल्वनेन ज्ञानसमुदयेन पूर्व्वं परीक्ष्य रोगं सर्व्वथा सर्वमेवोत्तर काल मध्यवसानमदोषं भवति। न हि ज्ञानावयवेन कृत्स्ने ज्ञेये ज्ञानमुपपद्यते। त्रिविधे त्वस्मिन् ज्ञान समुदाये पूर्व्वमाप्तोपदेशो ज्ञानं ततः प्रत्यक्षानुमानाभ्यां परीक्षोपपद्यते। किं ह्यनुपदिष्टं पूर्व्वं ततः प्रत्यक्षानुमानाभ्यां परीक्षमाणो विद्यात्। तस्मात् द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्च। त्रिविधा वा सहोपदेशेनेच्छन्ति बुद्धिमन्तः। रोगमेकैकमेवं प्रकोपनमेवं योनिमेवमात्मान मेवमधिष्ठान मेवं वेदनमेवं संस्थानमेवं शब्दस्पर्शरूपरसगन्धमेव मुपद्रवमेवं वृद्धिस्थानक्षय समन्वितमेव मुदर्कमेवं नामानमेवं योगं विद्यात्। तस्मिन्निदं प्रतीकारार्थं प्रवृत्तिरथवा निवृत्तिरित्युपदेशो ज्ञायते। प्रत्यक्षं खलु रोगतत्त्वं बुभुत्समानः सर्व्वैरिन्द्रियैः सर्व्वानिन्द्रियार्थानातुरशरीर गतान् परीक्षेतान्यत्र रस ज्ञानात्। तद्यथा। अन्त्रकूजनं सन्धिस्फोटनमङ्गुलीपर्व्वणाञ्च स्वर विशेषांश्च ये चान्येऽपि केचिच्छरीरोपगताः शब्दाःस्युस्तान् श्रोत्रेण परीक्षेत। वर्णसंस्थानप्रमाणच्छाया शरीरप्रकृतिविकारौ चक्षुर्वैषयिकाणि चान्यानि कानि च तानि चक्षुषा परीक्षेत। रसन्तु खल्वातुरशरीरगतमिन्द्रियवैषयिकमप्यनुमानादेव गच्छेत। न ह्यस्य प्रत्यक्षेण ग्रहणमुपपद्यते। तस्मादातुर परिप्रश्नेनैवा-

तुर मुखरसं विद्यात्। यूकापसर्पणेन तस्य शरीरवैरस्यं मक्षिकोपसर्पणेन शरीरमाधुर्य्यम्। लोहितपित्तसन्देहेतु किंधारिलोहितं लोहितपित्तं वेति। श्वकाकभक्षणात् धारि लोहितमभक्षणाल्लोहितमित्यनुमातव्यम्। एवमन्यानप्यातुर शरीरगतान् रसाननुमिमीत। गन्धांश्च खलु सर्वशरीरगतानातुरस्य प्रकृतिवैकारिकान् घ्राणेन परीक्षेत। स्पर्शञ्च पाणिना प्रकृतिविकृतियुक्तमिति प्रत्यक्षतोऽनुमानैकदेशतश्च परीक्षणमुक्तम्। इमे तु खल्वन्येऽप्येवमेव भूयोऽनुमान ज्ञेया भवन्ति भावा। तद्यथा:। अग्निः जरणशक्त्या बलं व्यायामशक्त्या श्रोत्रादीन् शब्दादिग्रहणेन मनोऽर्थाव्यभिचारेण विज्ञानं व्यवसायेन रजः सङ्गेन मोहमविज्ञानेन क्रोधमभिद्रोहेण शोकं दैन्येन हर्षमामोदेन प्रीतिं तोषेण भयं विषादेन धैर्य्यमविषादेन। वीर्य्यमुत्साहेन अवस्थानमविभ्रमेण श्रद्धामभिप्रायेण मेधां ग्रहणेन संज्ञां नामग्रहणेन स्मृतिं स्मरणेन ह्रियमपत्रपेण शीलमनुशीलनेन द्वेषं प्रतिषेधेन उपाधिमनुबन्धेन धृतिमलौल्येन वश्यतां विधेयतया वयो भक्तिसात्म्यव्याधिसमुत्थानानि कालदेशोपशय वेदना विशेषेण। गूढलिङ्गं व्याधिमुपशयानुपशयाभ्याम्। दोषप्रमाण विशेषमपचार विशेषेणायुषः क्षयमरिष्टै रुपस्थित श्रेयस्त्वं कल्याणाभिनिवेशेनानलं सत्त्वमविकारेणेति ग्रहण्यास्तु मृदुदारुणत्वं दुःस्वप्नदर्शनमभिप्रायं द्विष्टेषु सुखदुःखानि चातुर परिप्रश्नेनैव विद्यादिति।

भवतिचात्र। आप्ततश्चोपदेशेन प्रत्यक्षकरणेन च।
अनुमानेन च व्याधीन् सम्यग्विद्यादिचक्षणः॥

सर्वथा सर्वमालोच्य यथा सम्भवमर्थवित् ।
ज्ञान बुद्धिप्रदीपेन यो नाविशति तत्त्ववित् ॥
अथाध्यवस्येत्तत्त्वे च कार्य्ये च तदनन्तरम् ।
कार्य्यतत्त्वे विशेषज्ञः प्रतिपत्तौ न मुह्यति ॥
अमूढः फलमाप्नोति यदमोहनिमित्तजम् ।
ज्ञानबुद्धि प्रदीपेन यो नाविशति तत्त्ववित् ॥
आतुरस्यान्तरात्मानं न स रोगांश्चिकित्सति ।
सर्वरोग विशेषाणां त्रिविधं ज्ञानसंग्रहम् ॥
यथा चोपदिशन्त्याप्ताः प्रत्यक्षं गृह्यते यथा ।
ये यथा चानुमानेन ज्ञेयास्तांश्चाप्युदारधीः ॥
भावां स्त्रिरोग विज्ञाने विमाने मुनिरुक्तवान् ।
इति त्रिविधरोग विशेषविज्ञानीयं विमानं समाप्तम् ।

---

## पञ्चमोऽध्यायः

अथातः स्रोतोविमानं व्याख्यास्यामः ।

यावन्तः पुरुषे मूर्तिमन्तो भाववशेषा तावन्त एवास्मिन् स्रोतसां प्रकारविशेषाः सर्वभावा हि पुरुषे नान्तरेण स्रोतांस्यभिनिर्वर्तन्ते क्षयं वा न गच्छन्ति स्रोतसां खलु परिणाममापद्यमानानां धातुनामभिवोढ्रूणि भवन्ति । अथ नार्थे नापि चैकस्रोतसामेव समुदयं पुरुषमिच्छन्ति सर्वगतत्वात्सर्वसरत्वाच्च दोषप्रकोप प्रशमनानां तच्चेत् तदेवं यस्य स हि स्रोतांसि यच्चवहन्ति यच्चावहन्ति यत्र चावस्थितानि सर्वं तदन्यत्तेभ्योऽति बहुत्वात्तु खलु केचिदपरिसंख्येयानि

आचक्षते स्रोतांसि परिसंख्येययानि पुनरन्ये तेषां स्रोतसां यथास्थूलं कतिचित्प्रकारान्मूलतश्च प्रकोपविज्ञानतश्चानुव्याख्यास्यामः ये भविष्यन्त्यलमनुज्ञार्थं ज्ञानवते विज्ञानाय चाज्ञ:नाय तद्यथा प्राणोदकान्न रसरुधिरमांसमेदोऽस्थिमज्जा शुक्रमूत्रपुरीष स्वेदवहानि वातपित्तश्लेष्मणां पुनः सर्वशरीरचराणां सर्वस्रोतांसि अयनभूतानि तद्वतीन्द्रियाणां सत्त्वादीनां केवलं चेतनावत् शरीरमयनभूतमधिष्ठान भूतञ्च तदेतत्स्रोतसां प्रकृतभूतत्वान्नविकारै रुपसृज्यते शरीरं तत्र प्राणवहानां स्रोतसां हृदयं मूलं महास्रोतश्च प्रदुष्टानामिदं विशेषज्ञानं अति सृष्टस्य कुपित प्रतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशब्दशूलमुच्छ्वसन्तं दृष्ट्वा प्राणवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् उदकवाहानां स्रोतसां तालु मूलं क्लोम च प्रदुष्टानामिदं विज्ञानं जिह्वा ताल्वोष्ठकण्ठक्लोमशोषां पिपासां चातिप्रवृद्धां दृष्ट्वा उदकवाहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् रसवाहानां स्रोतसां हृदयं मूलं दश च धमन्यः शोणितवाहानां स्रोतसां यकृत्मूलं प्लीहा च मांसवाहानाञ्च स्रोतसां मेदो मूलं जघनञ्च मज्जावहानां स्रोतसामस्थीनि मूलं सक्थ्यश्च शुक्रवाहानां स्रोतसां वृषणौ मूलं शेषञ्च प्रदुष्टानान्तु रसादिस्रोतसां विज्ञानान्युक्तानि विविधाशीतियेऽध्याये यान्येव हि धातूनां प्रदोषविज्ञानानि तान्येव यथा स्वं धातुस्रोतसां मूत्रवहानां स्रोतसां वस्तिर्मूलं वंक्षणौ च प्रदुष्टानामिदं विज्ञानमति-

सृष्टप्रतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशूलं मूत्रं मूत्रवन्तं दृष्ट्वा मूत्रवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् पुरीषवहानां स्रोतसां पक्वाशयो मूलं स्थूलगुदश्च प्रदुष्टानामिदं विज्ञानं कृच्छ्रेणाल्पाल्पं सशूलम् अतिद्रवं कुपितं अतिबहु चोपविशन्तं दृष्ट्वा पुरीषवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् स्वेदवहानां स्रोतसां पक्वाशयो मूलं स्थूलगुदश्च प्रदुष्टानामिदं विज्ञानम् अस्वेदनमतिस्वेदनं पारुष्यं परिदाहं लोमहर्षञ्च दृष्ट्वा स्वेदवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात् स्रोतांसि सिरा धमन्यो रसवाहिन्यो नाड्यः पन्थानो मार्गाः शरीरच्छिद्राणि संवृता संवृतानि स्थानानि आशयाः चया निकेताश्चेति शरीरधात्ववकाशानां लक्ष्यालक्ष्याणां नामानि तेषां प्रकोपात् स्थानस्थाश्चैव मार्गगाश्चैव शरीरधातवः प्रकोपमापद्यन्ते इतरेषां वा प्रकोपादितराणि स्रोतांसि स्रोतांस्येव धातवश्च धातून् प्रदूषयन्ति प्रदुष्टास्त्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषस्वभावादिति भवति चात्र।

क्षयात् सन्धारणाद्रौक्ष्याद्व्यायामात् क्षुधितस्य च।
प्राणवाहानि दुष्यन्ति स्रोतांस्यन्यैश्च दारुणैः॥
औष्ण्यादामाद्भयात् पानादतिशुष्कान्नसेवनात्।
अम्बुवाहानि दुष्यन्ति तृष्णया चातिपीडनात्॥
अतिमात्रस्य चाकाले चाहितस्य च भोजनात्।
अन्नवाहानि दुष्यन्ति वैगुण्यात् पावकस्य च॥
गुरुशीतमतिस्निग्धमतिमात्रं निषेवणात्।
रसवाहानि दुष्यन्ति चिन्त्यानाञ्चातिचिन्तनात्॥

विदाहीन्यन्नपानानि स्निग्धोष्णानि द्रवाणि च।
रक्तवाहीनि दुष्यन्ति भजतां चातपानलौ॥
अभिष्यन्दीनि भोज्यानि स्थूलानि च गुरूणि च।
मांसवाहीनि दुष्यन्ति भुक्त्वा च स्वपतो दिवा॥
अव्यायामाद्दिवास्वप्नान् मेद्यानाञ्चातिभक्षणात्।
मेदोवाहीनि दुष्यन्ति वारुण्याश्चातिसेवनात्॥
व्यायामादतिसंक्षोभादस्थ्नामति च भक्षणात्।
अस्थिवाहीनि दुष्यन्ति वातलानाञ्च सेवनात्॥
उत्पेषादत्यभिष्यन्दादभिघातात् प्रपीडनात्।
मज्जवाहीनि दुष्यन्ति विरुद्धानाञ्च सेवनात्॥
अकालयोनिगमनान्निग्रहादतिमैथुनात्।
शुक्रवाहीनि दुष्यन्ति शस्त्रक्षाराग्निभिस्तथा॥
मूत्रितोदकभक्ष्यस्त्रीसेवनान् मूत्रनिग्रहात्।
मूत्रवाहीनि दुष्यन्ति क्षीणस्याथ क्षतस्य च॥
विधारणादत्यशनादहितात्यशनात्तथा।
वर्चोवहानि दुष्यन्ति दुर्बलाग्नेः कृशस्य च॥
व्यायामादतिसन्तापात् शीतोष्णात्क्रमसेवनात्।
स्वेदवाहीनि दुष्यन्ति क्रोधशोकभयैस्तथा॥
आहारश्च विहारश्च यः स्याद्दोषगुणैः समः।
धातुभिर्विगुणश्चापि स्रोतसां सप्रदूषकः॥
अतिप्रवृत्तिः सङ्गो वा शिराणां ग्रन्थयोऽपि वा।
विमार्गगमनं वापि स्रोतसां दुष्टलक्षणम्॥
स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च॥

प्राणोदकान्नवाहानां दुष्टानां श्वासिकी क्रिया ।
कार्या तृष्णोपशमनी तथैवामप्रदोषिकी ॥
विविधा शितपीतीये रसादीनां यदौषधम् ।
रसादि स्रोतसां कुर्यात्तद्यथा स्वमुपक्रमम् ॥
मूत्रविट् स्वेदवाहानां चिकित्सा मौत्रकृच्छ्रिकी ।
तथातिसारिकी कार्या तथा ज्वरचिकित्सका ॥ इति ।
तत्र श्लोकाः । चयोदशानां मूलानि स्रोतसां दुष्टलक्षणम् ।
सामान्यं नाम पर्यायाः कोपनानि परस्परम् ॥
दोषहेतुः पृथक् त्वे न भेषजोद्देश एव च ।
स्रोतो विमाने निर्दिष्टस्तथा चादौ विनिश्चयः ॥
केवलं विहितं यस्य शरीरं सर्वभावतः ।
शारीराः सर्वरोगाश्च सकर्मसु न मुह्यति ॥
इति स्रोतोविमानं समाप्तम् ।

---

## षष्ठोऽध्यायः

अथातो रोगानीकं विमानं व्याख्यास्यामः ।

द्वे रोगानीके भवतः प्रभवभेदेन साध्यं चासाध्यञ्च द्वे रोगानीके बलभेदेन मृदु च दारुणञ्च द्वे रोगानीके अधिष्ठानभेदेन मनोऽधिष्ठानं शरीराधिष्ठानञ्च रोगानीके द्वे निमित्तभेदेन स्वधातु वैषम्य निमित्तञ्चागन्तु निमित्तञ्च द्वे रोगानीके आशयभेदेन आमाशयसमुत्थञ्च पक्वाशयसमु-

स्यश्च एवमेतत्प्रभावबलाधिष्ठाननिमित्ताशयवैधं समुद्दे प्रकृत्यन्तरेण भिद्यमानमथवा सन्धीयमानं स्यादेकत्वं वा बहुत्वं वा एकत्वं तावदेक मेव रोगानीकं दुःखसामान्यात्। बहुत्वं तु दश रोगानीकानि प्रभावभेदादीनि बहुत्वमपि संख्येयं वा स्यात् संख्येयं संख्येयं यथोक्तं अष्टोदरीये असंख्येयं यथा महति रोगाध्याये रुग्वर्ण समुत्थानादीनाम संख्येयत्वात् न च संख्येयाग्रेषु भेदप्रकृत्यन्तरीयेष्वविगीतिरित्यतो दोषवती स्यादत्र काचित् प्रतिज्ञा नचाविगीतिरित्यतः स्याददोषवत् भेत्ता हि भेद्यमन्यथा भिनत्त्यन्यथा पुरस्ताद्भिन्नं भेदप्रकृत्यन्तरेण भिन्दन् भेद संख्याविशेषमापादयत्यनेकधा न च पूर्वं भेदाग्रमुपहन्ति। समानायामपि खलु भेदप्रकृतौ प्रकृतानुपयोगान्तरमपेक्ष्य सन्ति ह्यर्थान्तराणि समानशब्दाभिहितानि समानो हि रोगशब्दो दोषेषु व्याधिषु च दोषा अपि रोगशब्दमातङ्क शब्दं यक्ष्म शब्दं दोषप्रकृतिशब्दं विकारशब्दञ्च लभन्ते। तत्र दोषेषु चैवव्याधिषु च रोगशब्दः समानः शेषेषु तु विशेषवान्। तत्र व्याधयोऽपरिसंख्येया भवन्त्यति बहुत्वाद्दोषास्तु परिसंख्येया अनति बहुत्वात् तस्माद्यथा चित्रं विकारा उदाहरणार्थं अनवशेषेण च दोषा व्याख्यास्यन्ते रजस्तमश्चमानसौ दोषौ तयोर्विकाराः कामक्रोधलोभमोहेर्ष्यामानमदशोकचित्तोद्वेगभय हर्षादयो वातपित्तश्लेष्माणस्तु शारीरा दोषास्तेषामपि च विकारा ज्वरातीसार शोफशोषमेहकुष्ठादय इति दोषाश्च केवला व्याख्याताः विकारैकदेशश्च। तत्र तु खल्वेषां द्वयानामपि दोषाणां त्रिविधं प्रकोपनमसात्-

श्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति। प्रकुपितास्तु प्रकोपणविशेषात् द्रव्यविशेषाच्च विकारविशेषानभिनिर्वर्त्तयन्ति अपरिसंख्येयास्ते विकाराः परस्परमभिनिर्वर्त्तमानाः कदाचिदनुबध्नन्ति कामादयो ज्वरादयश्च। नियतस्त्वनुबन्धो रजस्तमसोः परस्परं न ह्यरजस्कन्तमः प्रायः शरीरदोषाणामेकाधिष्ठीयानां संसर्गो वा समानगुणत्वाद्दोषा हि दूषणैः समानाः तत्रानुबन्ध्यानुबन्धविशेषाः स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानप्रशमो भवत्यनुबन्ध्यस्तद्विपरीतलक्षणोऽनुबन्धः अनुबन्ध्यलक्षणसमन्वितास्तत्र यदि दोषा भवन्ति तन्त्रिकं सन्निपातमाचष्टे द्वयं वा संसर्गम्। अनुबन्ध्यानुबन्धविशेषकृतस्तु बहुविधो भेद एवं एष संज्ञाप्रकृतो भिषजां दोषेषु च व्याधिषु च नानाप्रकृतिविशेषाद्व्यूहः अग्निषु तु शारीरेषु चतुर्विधो विशेषो बलभेदेन। तद्यथा तीक्ष्णो मन्दः समो विषम इति। तत्र तीक्ष्णोऽग्निः सर्वापचार सहस्तद्विपरीतलक्षणो मन्दः। समस्तु खल्वपचारतः विकृतिमापद्यते नापचारतः प्रकृताववतिष्ठते समलक्षणविपरीतलक्षणस्तु विषम इत्येते चतुर्विधा अग्नयः। चतुर्विधानामेव पुरुषाणां तत्र समवातपित्तश्लेष्मणां प्रकृतिस्थानां समा भवन्त्यग्नयः वातलानान्तु वाताभिभूतेऽग्न्यधिष्ठाने विषमा भवन्त्यग्नयः। तत्र केचिदाहुर्न समवातपित्तश्लेष्माणो जन्तवः सन्ति विषमाहारोपयोगित्वान्मनुष्याणां तस्माच्च वातप्रकृतयः केचित्केचित्पित्तप्रकृतयः केचित्पुनः श्लेष्मप्रकृतयो भवन्तीति। तच्चानुपपन्नं तस्मात्कारणात्समवातपित्तश्लेष्मणां ह्यरोगमिच्छन्ति भिष-

नः। प्रकृतिश्चारोग्यमारोग्यार्था च भेषजप्रवृत्तिः साचेष्टा-रूपा तस्माद्भवन्ति समवातपित्तश्लेष्माणो न तु खलु सन्ति वातप्रकृतयः पित्तप्रकृतयः श्लेष्मप्रकृतयो वा तस्य तस्य दोषस्य हि अधिकभावात्सा सा दोषप्रकृतिरुच्यते मनुष्याणां। न च विकृतेषु दोषेषु प्रकृतिस्थत्वमुपपद्यते तस्मान्नैताः प्रकृतयः सन्ति। सन्ति तु खलु वातलाः पित्तलाः श्लेष्मलाश्च प्रकृतिस्थास्तु ते ज्ञेयाः। तेषां तु खलु चतुर्विधानां पुरुषाणां चत्वार्येव प्रणिधानानि श्रेयस्कराणि तत्र समसर्वधातूनां सर्वाकारसमधिकदोषाणान्तु त्रयाणां यथास्वं दोषाधिक्य-मभिसमीक्ष्य दोषप्रतिकूलयोगीनि त्रीण्यनुप्रणिधानानि श्रेयस्कराणि यावदग्नेः समीभावात्समे तु सममेव कार्य्य-मेवं चेष्टाभेषजप्रयोगाश्चापरे तद्विस्तरेणानु व्याख्यास्यन्ते त्रयस्तु पुरुषा भवन्त्यातुरा स्ते त्वनातुरास्तन्त्रातुरीयाणां भिषजां तद्यथा वातलः श्लेष्मलः पित्तल इति तेषां विशेषविज्ञानं वातलस्य वातनिमित्ताः पित्तलस्य पित्तनिमित्ताः श्लेष्मलस्य श्लेष्मनिमित्ता व्याधयः प्रायेण बलवन्तश्च भवन्ति तत्र वातलस्य प्रकोपनोक्तान्या सेवमानस्य क्षिप्रं वातः प्रकोपमापद्यते। न तथेतरौ स तस्य प्रकोपमापन्नो यथोक्तै र्विकारैः शरीरमुपतपति बलवर्णसुखायुषामुपतापाय तस्यावजयनं स्नेहस्वेदौ विधियुक्तौ मृदूनि च संशोधनानि स्नेहोष्णमधुराम्ललवणयुक्तानि तद्वदभ्यवहार्य्याण्युपनाहनो-पवेष्टनोन्मर्द्दनपरिषेकावगाहनसंवाहनावपीडनवित्रासन-विस्मापनविस्मारणानि सुरासवविधानं स्नेहश्चानेकयोनयो दीपनीयपाचनीया वातहरविरेचनीयोपहिताः शतपाकाः

स्नेहनपाक्याः सर्वशः प्रयोगार्था बस्तयो बस्ति नियमः सुख-शीलता चेति। पित्तलस्यापि पित्तप्रकोपणान्यां सेवमानस्य क्षिप्रं पित्तं प्रकोपमापद्यते तथा नेतरौ प्रकोपमापन्नं यथोक्तै विंकारैः शरीरमुपतपति बलवर्ण सुखायुषामुप घाताय तस्या शमयनं सर्पिष्पानं सर्पिषा च स्नेहनमधश्च दोषहरणं मधुरतिक्त कषायशीतानाञ्चौषधाभ्य वहार्याणां उपयोगो मृदुसुरभिशीतहृद्यानां गन्धानां चोप सेवा मुक्ता-मणिहारावलीनाञ्च परमशिशिरवारिसंस्थितानां धारण मुरसा क्षणे क्षणे चाग्र्यचन्दनप्रियङ्गुका मृणालशीतवारि-भिरुत्पल कुमुदकोकनदसौगन्धिक पद्मानुगतैरभि प्रोक्षणं श्रुति सुखमृदुमधुर मनोऽनुगानाञ्च गीतवादितानां श्रवणं चाभ्युदयानां सुहृद्भिश्च संयोगः संयोगश्चेष्टाभिः स्त्रीभिः शीतोपहितांशुकस्रग्धारिणीभिर्निशाकरांशुशीतप्रवाहहर्म्य-वासः शैलान्तर पुलिनशिशिरसदनवसनव्यजनपवनसेवार-म्याणाञ्चोपवनानां सुखशिशिरसुरभिमारुतोपवातानामुप सेवनं सेवनञ्च नलिनोत्पल पद्मकुमुदसौगन्धिक पुण्डरीक शतपत्रहस्तानां सौम्यानाञ्च सर्वभावानामिति। श्लेष्मलस्यापि श्लेष्मप्रकोपणोक्तान्या सेवमानस्य क्षिप्रं श्लेष्मा प्रकोपमाप-द्यते न तथेतरे स तस्य प्रकोपमापन्नो यथोक्तै विंकारैःशरीर-मुपतपति बलवर्णसुखायुषामुपघाताय तस्यावजयनं विधि-युक्तानि तीक्ष्णोष्णानि संशोधनानि रूक्षप्रायाणि चाभ्य वहार्याणि कटुकानि तिक्तकषायोपहितानि तथैव धावनलङ्घनप्लवनपरिसरण जागरणानि युद्धव्यवसाय व्यायामोन्मर्दन स्नानोत्सादनानि विशेषतस्तीक्ष्णानां

दीर्घकालस्थितानां मद्यानां उपयोगः संशोधोपवास तथोष्णवास सधूमपानः सुख प्रतिषेधश्च सुखार्थमेवेति।

भवतिचात्र। सर्वरोग विशेषज्ञः सर्वकार्य विशेषवित्।
सर्वभेषज तत्त्वज्ञो राज्ञः प्राणपतिर्भवेदिति॥

तत्रश्लोकाः। प्रकृत्यन्तरभेदेन रोगानीकविकल्पनम्।
परस्पराविरोधश्च सामान्यं रोगदोषयोः॥
दोषसंख्याविकाराणा मेकदोषप्रकोपनम्।
जरणं प्रतिचिन्ता च कायाग्नेर्धुक्षणानि च॥
नराणां वातलादीनां प्रकृतिस्थापनानि च।
रोगानीके विमानेऽस्मिन् व्याहृतानि महर्षिणा॥

इति रोगानीकविमानं समाप्तम्॥

---

## सप्तमोऽध्यायः।

अथातो व्याधितरूपीयं विमानं व्याख्यास्यामः।

द्वौ पुरुषौ व्याधितरूपौ भवतः तद्यथा गुरुव्याधित एकः सत्त्वबल शरीरसम्पदुपेतत्वाल्लघु व्याधित इव दृश्यते लघु व्याधितोऽपरःसत्त्वादीनामधमत्वात् गुरुव्याधित इव दृश्यते तयोर कुशलाः केवलं चक्षुषैव रूपं दृष्ट्वा व्यवस्यन्तो व्याधि-गुरुलाघवे विप्रतिपद्यन्ते। नहि ज्ञानावयवेन कृत्स्ने ज्ञेये

ज्ञानमुपपद्यते विप्रतिपन्नास्तु खलु रोगज्ञाने उपक्रम युक्ति ज्ञाने विप्रतिपद्यन्ते ते यदा गुरुव्याधितं लघुव्याधितरूपमासादयन्ति तमल्पदोषं मत्वा संशोधनकालेऽस्मै मृदुसंशोधनं प्रयच्छन्तो भूय एवास्य दोषमुदीरयन्ति । यदा तु लघुव्याधितं गुरुव्याधितरूपमासादयन्ति तं महादोषं मत्वा संशोधनकालेऽस्मै तीक्ष्णं संशोधनं प्रयच्छन्तो दोषा नतिनिर्हृत्य शरीरमस्य चिण्वन्त्येवं अवयवेन ज्ञानस्य कृत्स्ने ज्ञेये ज्ञानमितिमन्यमानाः स्खलन्ति विदितवेदितव्यास्तु भिषजः सर्वं सर्वथा यथासम्भवं परीक्ष्य परीक्ष्याध्यवस्यन्तो न क्वचन विप्रतिपद्यन्ते यथेष्टमर्थमभिनिर्वर्तयन्ति चेति ।

तत्रश्लोकाः । सत्त्वादीनां विकल्पेन व्याधितं रूप मातुरे ।

दृष्ट्वा विप्रति पद्यन्ते बाला व्याधिबलाबले ॥

ते भेषजमयोगेन कुर्वन्त्य ज्ञानमोहिताः ।

व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥

प्राज्ञास्तु सर्वमाज्ञाय परीक्ष्यमिह सर्वथा ।

न स्खलन्ति प्रयोगेषु भेषजानां कदाचन ॥

इति व्याधितरूपाधिकारे श्रुत्वा व्याधितरूपा संख्या असम्भवं व्याधितरूपहेतुं विप्रतिपत्तौ च कारणं सापवादं सम्प्रतिपत्ति कारणञ्चानपवादं भगवन्तमात्रेयमग्निवेशोऽतः परं सर्वक्रिमीणां पुरुषसंश्रयाणां समुत्थान स्थान संस्थानवर्णनामप्रभाव चिकित्सित विशेषान् पप्रच्छोपसंगृह्यपादाथास्मै प्रोवाच भगवानात्रेयः । इह खल्वग्निवेश ! विंशतिविधाः क्रिमयः पूर्वमुक्ता नानाविधेन प्रविभागेनान्यत्र

सहजेभ्यः ते पुनः प्रकृतिभिर्भिद्यमानाश्चतुर्विधा स्तद्यथा।
पुरीषजाः श्लेष्मजाः शोणितजा मलजाश्चेति। तत्र मलो
बाह्यश्चाभ्यन्तरश्च तत्र बाह्यमले जातान्मलजान् सञ्चक्ष्महे
तेषां समुत्थानं मृजावर्जनं स्थानं केश श्मश्रु लोमपक्ष्मवा-
सांसि संस्थानमणव स्तिलाकृतयो बहुपादाः वर्णः कृष्णः
शुक्लश्च नामानि यूकाः पिपीलिकाश्चेति प्रभवः कण्डूजननं
कोठपिडकाभिनिर्वर्तनञ्च चिकित्सितं त्वेषामपकर्षणं
मलोपघातो मलकराणाञ्च भावानामनुपसेवनमिति शोणि-
तजानान्तु कुष्ठैः समानं समुत्थानं स्थानं रक्तवाहिन्यो-
धमन्यः संस्थानमणवो वृत्ताश्चापादाश्च सूक्ष्मत्वाच्चैके भवन्त्य
दृश्याः वर्णस्ताम्रः नामानि केशादालोमादालोमद्वीपाः
सौरसा औदुम्बरा जन्तुमातर इति। प्रभवः केश श्मश्रु
नखलोमापध्वंसो व्रणगतानाञ्च हर्षकण्डूतोदसंसर्पणा-
न्यति वृद्धानाञ्च त्वक्शिरा स्नायु मांसतरुणास्थिभक्षणमिति
चिकित्सितमप्येषां कुष्ठैः समानं तदुत्तरकालमुपदेक्ष्यते।
श्लेष्मजाः क्षीरगुडतिलमत्स्यानूप मांसपिष्टान्नपरमान्नकुसुम्भ
स्नेहा जीर्ण प्रतिक्लिन्नसंकीर्ण विरुद्धासात्म्य भोजनसमु-
त्थाः तेषा मामाशयः स्थानं प्रवर्धमानास्तूर्ध्वमधोवा विस-
र्पन्त्यधोवो भयतो वा संस्थानवर्ण विशेषास्तु श्वेताः पृथु
वध्नसंस्थानाः केचित्केचिद्वृत्त परिणाहा गण्डूपदाकृतयश्च
श्वेताः ताम्रावभासाः केचिदणवो दीर्घतन्वा कृतयः श्वेता
स्तेषां त्रिविधानां श्लेष्मनिमित्तानां क्रिमीणां नामानि
अन्त्रादा उदरादा हृदयचराः गुरवो दर्भ पुष्पाः सौगन्धिका
महाकुष्ठा इति। प्रभावो हृल्लासास्य संस्रवण मरोचका-

विपाकौ ज्वरो मूर्च्छा जृम्भाचवथुरानाहोऽङ्गमर्दः छर्दिः कार्श्यं पारुष्यमिति पुरीषजाखल्वसमुत्थानाः श्लेष्मजैस्तेषां संस्थानं पक्वाशयः प्रवर्धमानास्त्वधो विसर्पन्ति यस्य पुनरामाशयाभिमुखाः स्युर्यदनन्तरं तदनन्तरं तस्योद्गारनिःश्वासाः पुरीषगन्धिनः स्युः संस्थानवर्णविशेषास्तु सूक्ष्मवृत्तपरीणाहाः श्वेता दीर्घोर्णांशुसङ्काशाः केचित् केचित् पुनः स्थूलवृत्तपरीणाहाः श्यावनीलहरितपीताः तेषां नामानि ककेरुकामकेरुकालेलिहाः शशूनकाः सौसुरादा इति प्रभावः पुरीषभेदः कार्श्यं पारुष्यं लोमहर्षाभिनिर्वर्त्तनञ्च तएवास्य गुदमुखं परितुदन्तः कण्डूं चोपजनयन्तो गुदमुखं पर्य्यासते स जातहर्षो गुदनिष्क्रमणमतिवेलं करोति इत्येष श्लेष्मजानां पुरीषजानाञ्च क्रिमीणां समुत्थानादिविशेषश्चिकित्सितं खल्वेषां समासेनोपदिश्य पश्चाद्विस्तरेणोपदेक्ष्यते तत्र सर्वक्रिमीणामपकर्षणमेवादितः कार्य्यं ततः प्रकृतिविघातोऽनन्तरं निदानोक्तानां भावानामनुपसेवनं तत्रापकर्षणं हस्तेनाभिगृह्योपकरणतापनयनमनुपकरणेन वा स्थानगतानान्तु भेषजेनापकर्षणं न्यायतस्तच्चतुर्विधं तद्यथा शिरोविरेचनं वमनं विरेचनमास्थापनमित्यपकर्षणविधिः प्रकृतिविघातस्त्वेषां कटुतिक्तकषायक्षारोष्णानां द्रव्याणामुपयोगो यच्चान्यदपि किञ्चित् श्लेष्मपुरीषप्रत्यनीकभूतं स्यादिति प्रकृतिविघातोऽनन्तरं निदानोक्तानां भावानामनुपसेवनमिति यदुक्तं निदानविधौ तस्य विसर्जनं तथा प्रायाणां चापरेषां द्रव्याणामिति लक्षणतः चिकित्सितमनुव्याख्यातमेतदेव पुनर्विस्त-

रेणोपदेच्यते। अथैनं क्रिमिकोष्ठमातुरमग्रे षड्रात्रं सप्तरात्रं वा स्नेहस्वेदाभ्यामुपपाद्य श्वो भूतएनं संशोधयिताऽस्मीति क्षीरदधिगुडतिलमत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेहसम्प्रयुक्तैर्भोज्यैः सायम्प्रातरुपपादयेत् समुदीरणार्थञ्च क्रिमीणाङ्कोष्ठाभिसरणार्थञ्च भिषगथ व्युष्टायां रात्र्यां सुखोषितं सुप्रजीर्णभक्तञ्चाज्ञाय आस्थापनवमनविरेचनैस्तदहरेवोपपादयेत्। उपपादनीयश्चेत्स्यात् सर्वान् परीक्ष्य विशेषान् परीक्ष्य सम्यगथा हरेति ब्रूयान्मूलसर्षपलशुनकरञ्जशिग्रुशिग्रुकमठशिग्रुकहपुषाभूस्तृणकसुमुखसुरसकुठेरककाण्डीरकालमालकपर्णासक्षवकफणिज्जकानि सर्वाण्यथवा यथालाभन्तान्याहृतान्यभिसमीक्ष्य खण्डशः छेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समवाप्य गोमूत्रेणार्धोदकेनाभ्यासिच्य साधयेत् सततमुपघट्टयन् दर्व्या तमुपयुक्तभूयिष्ठेऽम्भसि गतरसेष्वौषधेषु स्थालीमपहृत्य सुपरिपूतं कषायं सुखोष्णं मदनफलविडङ्गकल्कतैलोपहितं स्वर्जिकालवणितमभ्यासिच्य वस्तौ विधिवदास्थापयेदेनम्। तथाऽऽलर्ककाठकौ कुष्ठकैडर्य्यकषायेण तथा शिग्रुपीलु तुम्बुरु कटुकसर्षपकषायेण तथामलकशृङ्गवेरदारुहरिद्रापिचुमन्दकषायेण मदनफलादिसंयोगसंयोजितेन त्रिरास्थापयेत्। प्रत्यागते च पश्चिमे वस्तौ प्रत्याश्वस्तन्तदहरेवोभयतोहरं संशोधनं पाययेत युक्त्या तस्य विधिरुपदेक्ष्यते। मदनफलपिप्पलीकषायस्याञ्जलिमात्रेण त्रिवृत्कल्काक्षमात्रमालोड्य पातुमस्मै प्रयच्छेत्। तदस्य दोषमभयतो निर्हरति।

सांध्वेवमेवं कल्पोक्तानि वमनविरेचनानि संसृज्य पाययेतैवं बुद्ध्या सर्व्वविशेषानवेक्षमाणः अथैनं सम्यग्विरिक्तमाज्ञाया-पराह्णे शैखरिककषायेण सुखोष्णेन परिषेचयेत् तेनैव च कषायेण वाह्याभ्यन्तरान् सर्व्वोदकार्थान् कारयेत् शश्वत्तद-भावे वा कटुकतिक्तकषायाणामौषधानामुत्क्वाथैर्मूत्रक्षारैर्वा परिषिक्तञ्चैनं निवातमगारमनुप्रविश्य पिप्पली पिप्पलीमूल-चव्यचित्रकशृङ्गवेरसहसिद्धेन यवाग्वादिना क्रमेण उप-क्रामयेत् । विलेप्याक्रमागतञ्चैनमनुवासयेद्विडङ्गतैलेनैका-न्तरं द्विस्त्रिर्वा यदि पुनरस्यातिप्रवृद्धान् शीर्षादीन् क्रिमीन् मन्येत शिरस्येवा सर्पतः कांश्चित्ततः स्नेहस्वेदाभ्यामस्य शिर उपपाद्य विरेचयेदपामार्गतण्डुलादिना शिरोविरेचनेन यस्त्वभ्यावहार्य्यविधिः प्रकृतिविघातोक्तः क्रिमीणां सोऽनुव्या-ख्यास्यते । मूषिकपर्णीं समूलाग्रप्रतानामपहृत्य खण्डशः छेदयित्वा उलूखले चोदयित्वा पाणिभ्यां पीड़यित्वा रसं गृह्णीयात्तेन रसेन लोहितशालितण्डुलपिष्टं समालोड्य पूपलिकाः कृत्वा विधूमेष्वङ्गारेषूपकुड्यं विड़ङ्गतैललवणोप-हिताः क्रिमिकोष्ठाय भक्षयितुं प्रयच्छेदनन्तरञ्चाम्लकाञ्जिक-मुदश्विद्वा पिप्पल्यादिपञ्चवर्गसंसृष्टं सलवणमनुपाययेत अनेन कल्पेन मार्कवार्कसहचरनीपनिर्गुण्डी सुमुखसुरस-कुठेरकागण्डीरकालमालकपर्णासक्षवकफणिज्झकबकुलकुटज-सुवर्णक्षीरी स्वरसानामन्यतमस्मिन् कारयेत्तथा किणही किराततिक्तकसुवहामलकहरीतकी विभीतकस्वरसेषु कार-येत् पूपलिकाः स्वरसांश्चैताननेकशो द्वन्द्वशः सर्व्वशो वा मधुविलिखितान् प्रातरन्नाय प्रयच्छेत् अथाश्वशकृदाहृत्य

महति किंलिञ्जे प्रस्तीर्य्यातपे शोषयित्वोलूखले क्षोदयित्वा दृषदि सूक्ष्माणि चूर्णानि कारयित्वा विडङ्गकषायेण त्रिफलाकषायेण वा अष्टकृत्वो दशकृत्वो वा आतपे सुपरिभावितानि भावयित्वा दृषदि पुनः सूक्ष्माणि चूर्णानि कारयित्वा नवे कलशे समवाप्यानुगुप्तं निधापयेत्। तेषां चूर्णानां पाणितलं पूर्णं वा यावद्वा साधु मन्येत क्षौद्रेण संसृज्य क्रिमिकोष्ठाय लेढुम्प्रयच्छेत्। तथा भल्लातकास्थीन्याहार्य्य कलश प्रमाणेन सम्पोथ्य स्नेहभाविते दृढे कलशे सूक्ष्मानेकच्छिद्रबुध्ने मृदावलिप्ते समवाप्योलपेनापिधाय भूमावाकण्ठनिखातस्य स्नेहभावितस्यैव दृढस्योपरि कुम्भस्यारोप्य गोमयैरुपचित्य दाहयेत्। स यदा जानीयात् साधु दग्धानि गोमयानि विगतस्नेहानि भल्लातकानीति ततस्तं कुम्भमुद्धारयेत्। अथ तस्मात् द्वितीयात् कुम्भात् स्नेहमादाय विडङ्गतण्डुलैः स्नेहार्धमात्रैः प्रतिसंसृज्यातपे सर्वमहः स्थापयित्वा ततोऽस्मै मात्रां प्रयच्छेत् पानाय। तेन साधु विरिच्यते विरिक्तस्य चानुपूर्वी यथोक्ता एवमेव भद्रदारुसरलकाष्ठ स्नेहानुपकल्प्य पातुम्प्रयच्छेदनुवासयेच्चैनमत एवानुवासनकाले अथाहरेच्छारदान्नवांस्तिलान् सम्पदुपेतानाहृत्य सुनिष्पूतान्निष्पूय सुशुद्धान् शोधयित्वा विडङ्गकषायेण त्रिःसप्तकृत्वः सुपरिभावितान् भावयित्वातपे शोषयित्वोलूखले सङ्क्षुद्य दृषदि पुनः श्लक्ष्णपिष्टान् कारयित्वा द्रोण्यामभ्यवदाय विडङ्गकषायेण मुहुर्मुहुरव सिञ्चेत् पाणिमर्दं मर्दयेत्। तस्मिन् खलु प्रपीड्यमाने यत्तैलमुपदियात्तत्पाणिभ्यां पर्य्यादाय शुचौ दृढे कलशे समासिच्यानुगुप्तवि-

दापयेत् यथा हरीति ब्रूयात् बिल्वकोद्दालकयो बिल्वमात्रौ पिण्डौ श्लक्ष्णपिष्टौ विड़ङ्ग कषायेणातोऽर्धमात्रौ श्यामात्रिवृतयोरर्धमात्रौ चव्यचित्रकयोरित्येतं सम्भारं विडङ्गकषायस्यार्धाढकमात्रेण प्रतिसंसृज्य ततस्तैलप्रस्थमवाप्य सर्वमालोड्य महति पर्य्योगे समासिच्याग्नावधिश्रित्य महत्यासने सुखोपविष्टः सर्वतः स्नेहमवलोकयन्नजस्रं मृद्वग्निना साधयेद्दर्व्या सततमवघट्टयन् स यदा जानीयाद्विरमति शब्दः प्रतिचरति फेनः प्रसादमापद्यते स्नेहो यथा स्वगन्धवर्णरसोत्पत्तिः संवर्त्तते भेषजमङ्गुलिभ्यां मृद्यमानमनतिमृदुमनतिदारुणमनङ्गुलिग्राहि चेति सकालस्तस्यावतारणाय। ततस्तमवतीर्य्य शीतीभूतं महतेन वाससा परिपूय शुचौ दृढ़े कलशे समासिच्य पिधानेन पिधाय शुक्लेन वस्त्रपट्टेनावच्छाद्य सूत्रेण सुबद्धं सर्वगुप्तन्निधापयेत् ततोऽस्मै मात्रामयच्छेत् पानाय। तेन साधुविरिच्यते सम्यगपहृतदोषस्य चास्यानुपूर्व्वी यथोक्ता ततस्तेन भनुवासयेत् अनुवासनकाले एतेनैव पाचकविधिना सर्षपकरञ्ज कोशातकीस्नेहानुपकल्प्य पाययेत सर्वविशेषानपेक्षमाणः तेनागदो भवति। इत्येतत् हृद्यानां स्लेष्मपुरीषसम्भवानां क्रिमीणां समुत्थानस्थान संस्थानवर्णनामप्रभाव चिकित्सित विशेषाः व्याख्याताः सामान्यतः। विशेषतस्त्वल्पमात्रमास्थापनानुवासनलोमहरभूयिष्ठन्ताभ्यौषधीषु पुरीषजानां क्रिमीणां चिकित्सितं कार्य्यमिति एष क्रिमिघ्नो भेषज विधिरनुव्याख्यातः तमनुतिष्ठता यथा स्वहेतु वर्जने प्रयतितव्यं

यथोद्देश मेवमिदं क्रिमिकोष्ठ चिकित्सितं यथा वदनुव्याख्यातमिति॥ तत्र श्लोकाः।

अपकर्षणमेवादौ क्रिमीणां भेषजं स्मृतम्।
ततो विघातः प्रकृतेर्निदानस्य च वर्जनम्॥
एतावद्भिषजा कार्यं रोगे रोगे यथाविधि।
व्याधितौ पुरुषावज्ञे योभिषजौ सप्रयोजनौ॥
विंशतिः क्रिमयः तेषां हेत्वादिः सप्तको गणः।
उक्तो व्याधितरूपीये विमाने परमर्षिणा॥
शिष्यसंबोधनार्थञ्च व्याधिप्रशमनायच।

व्याधितरूपीयं विमानं समाप्तम्।

---

## अष्टमोऽध्यायः।

अथातो रोगभिषग्जितीयं विमानं व्याख्यास्यामः।

बुद्धिमानात्मनः कार्य्यगुरुलाघवे कर्म्मफलमनुबन्धदेश कालौच विदित्वा युक्तिदर्शनात् भिषग्बुभूषुः शास्त्रमेवादितः परीक्षेत विविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोके तत्र यन्मन्येत महद्यशस्विधीरपुरुषा सेवितमर्थ बहुल मासजनस्य पूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीतसूत्रभाष्यसंग्रहक्रमं स्वाधारमनवपतित शब्दमकष्टशब्दं पुष्कलाभिधानं क्रमागतार्थमर्थतत्त्वनिश्चय-

प्रधानं सङ्गतार्थमसंकुलप्रकरणमाशुप्रबोधकं लक्षणवच्चो-दाहरणवच्च तदभिप्रपद्येत शास्त्रं शास्त्रम्। ह्येवं विधममल-इवादित्यस्तमोविधूय प्रकाशयति सर्वं ततोऽनन्तरमाचार्यं परीक्षेत तद्यथा पर्यवदातश्रुतं परिदृष्टकर्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनुपस्कृतविद्यमनहङ्कृतमनसूयकमकोपनं क्लेशक्षमं शिष्य-वत्सलमध्यापकं ज्ञापनासमर्थं इत्येवं गुणोह्याचार्यः सुक्षेत्र-मार्तवोमेघइव सस्यगुणैः सुशिष्यमाशु वैद्यगुणैः सम्पाद-यति। तमुपसृत्यारिराधयिषुरुपचरेदग्निवच्च देववच्च राज-वच्च पितृवच्च भर्तृवच्चाप्रमत्तस्ततः तत्प्रसादात् कृत्स्नं शास्त्र मधिगम्य शास्त्रस्य दृढ़तायामभिधानस्य सौष्ठवस्यार्थस्य विज्ञाने वचनेऽस्य शक्तौच भूयः प्रयतेत सम्यक् तत्रोपाया व्याख्यास्यन्ते। अध्ययनमध्यापन तद्विद्यासम्भाषेत्युपायाः। तत्रायमध्ययनविधिः कल्यः। कृतक्षणः प्रातरुत्थायोपव्युषं वा कृत्वावश्यकमुपस्पृश्योदकं देवगोब्राह्मणगुरुवृद्धसिद्धा-चार्येभ्यो नमस्कृत्य समे शुचौ देशे सुखोपविष्टोमनः पुरः-सरीभिर्वाग्भिः सूत्रमनुक्रामन् पुनः पुनरावर्तयेत् बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं सदोषपरिहारप्रमाणार्थमेतापराह्णे रात्रौ च शश्वदपरिहापयन्नध्ययनमभ्यस्येदित्यध्ययनविधिः।

अथाध्यापनविधिः। अध्यापनकृतबुद्धिराचार्य्यः शिष्य-मादितः परीक्षेत तद्यथा प्रशान्तमार्यप्रकृतिकमक्षुद्रकर्माण-मृजुं चक्षुर्मुखनासा वंशं तनुविशदजिह्वमविकृतदन्तौष्ठं धृतिमन्तं मनहङ्कृतिं मेधाविनं वितर्कस्मृतिसम्पन्नमुदार-सत्त्वं तद्विद्यकुलजमथवा तद्विद्यावृत्तं तत्त्वाभिनिवेशिनम-

व्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतमव्यसनिनं शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नमध्ययनाभिकाममत्यर्थविज्ञानकर्म्मदर्शने चानन्यकार्य्यमलुब्धमनालसं सर्वभूतैषणमाचार्य्यसर्वानुशिष्टिप्रतिकरमनुरक्तमेवं गुण समुचितमध्याप्यमेवमाहुः । एवं चिरमध्ययनार्थमुपस्थितमारिराधयिषु मनुभाषेत उदगयने शुक्लपक्षे प्रशस्तेऽहनि पुष्यहस्तश्रवणाश्वयुजामन्यतमेन नक्षत्रेण योगमुपगते भगवति शशिनि कल्याणे मुहूर्त्ते स्नातः कृतोपवासो मुण्डः काषाय वस्त्रसंवीतः समिधोऽग्निमाज्यमुपलेपनमुदकुम्भांश्च सगन्धहस्तमाल्यदाम हिरण्यान् हैमरजतमणिमुक्ताविद्रुमक्षौमपरिधिकुशलाजसर्षपाक्षतांश्च शुक्लाश्च सुमनसो ग्रथिता ग्रथिताः मेध्यान् भक्ष्यान् गन्धांश्च पिष्टापिष्टानादायोपतिष्ठस्वेति स तथा कुर्य्यात् तमुपस्थितमाज्ञाय समे शुचौ देशे प्राक् प्रवणे उदक् प्रवणे वा चतुष्किष्कुमात्रं चतुरस्रं गोमयोदकेनोपलिप्तं कुशास्तीर्णं सुपरिधितं परिधिभिश्चतुर्दिशं यथोक्तं चन्दनोदकुम्भक्षौमहैमहिरण्यरजतमणिमुक्ताविद्रुमालङ्कृतं मेध्यभक्ष्यगन्धशुक्लपुष्पलाजसर्षपाक्षतोपशोभितं कृत्वा तत्र पालाशीभिरैङ्गुदीभिरौदुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय प्राङ्मुखः शुचिरध्ययनविधिमनुविधाय मधुसर्पिषा त्रिस्त्रिर्जुहुयादग्निं आशीः संप्रयुक्तैर्मन्त्रैर्ब्रह्माणमग्निं धन्वन्तरिं प्रजापतिमश्विनौ इन्द्रमृषींश्च सूत्रकारानभि मन्त्रयमाणः । पूर्वं स्वाहेति शिष्यश्च तथा लभेत हुत्वा च प्रदक्षिणमग्निमनुपरिक्रामेत् । ततोनु परिक्राम्य ब्राह्मणान् स्वस्ति वाचयेत् भिषजश्चाभि प्रपूजयेत् । अथैनमग्नि सकाशे ब्राह्मण-

सकाशे भिषक् सकाशे चानुशिष्यात्। न ते मद्वचनात् किञ्चि-
दकार्यं स्यादन्यत्र राजद्विष्टात् प्राणहराद्विपुलादधर्म्यादनर्थ-
संप्रयुक्ताद्वाप्यर्थात्। मदर्पणेन मत्प्रमाणेन मत्प्रियहिता-
नुवर्तिना च शश्वद्भवितव्यं पुत्रवद्दासवच्चोपचरितानवस्त-
व्यमनुत्सेकेनावहिते नानन्यमनसा विनीतेनावेक्ष्यावेक्ष्य-
कारिणा न चानभ्यनुज्ञातेन प्रविचरितव्यं अनुज्ञाते न
च प्रविचरता पूर्वं गुर्वर्थोपान्वाहरणे यथाशक्ति प्रयतितव्यं
कर्म सिद्धिमर्थं सिद्धिं यशोलाभञ्च प्रेत्य च स्वर्गमिच्छता।
भिषजा गोब्राह्मणमादौ कृत्वा सर्वप्राणभृतां शर्माशासि-
तव्यम्। अहरहरुत्तिष्ठता चोपविशता च सर्वात्मना चातु-
राणामारोग्ये प्रयतितव्यम्। जीवितहेतोरपि चातुरान-
द्रोग्धव्याः। मनसापि च परस्त्रियो नाभिधर्षयितव्याः। तथा
सर्वमेव परस्वं निभृतवेशपरिच्छदेन भवितव्यम्। अशौ-
ण्डेनापापसहायेन श्लक्ष्णशुक्लधर्म्यशर्म्यधन्यसत्यहितमित-
वचसा देशकालविचारिणा स्मृतिमता ज्ञानोत्थानोपकरण-
संपत्सु नित्यं यत्नवता न कदाचिद्राजद्विष्टानां महाजन-
द्विष्टानां वाप्यौषधमनुविधातव्यम्। एवं सर्वेषामत्यर्थं विकृ-
तदुष्टदुःखशीलाचारोपचाराणामनपवादप्रतिकाराणां मु-
मूर्षूणां च तथैवासन्निहितेश्वराणां स्त्रीणामनध्यक्षाणां
वा न च कदाचित् स्त्रीदत्तमामिषमादातव्यमननुज्ञातं
भर्त्रा थवाध्यक्षेणातुरकुलं चानुप्रविशता विदितेनानुमत-
प्रवेशिना सार्धं पुरुषेण सुसंवीतेनावाक्शिरसा स्मृतिमता
स्तिमितेनावेक्ष्यावेक्ष्य बुद्ध्या सम्यगनुप्रवेष्टव्यम्। अनु-
प्रविश्य च वाङ्मनो बुद्धीन्द्रियाणि न क्वचित् प्रणिधातव्यानि

अन्यत्रातुरोपकारार्थादातुरगतेष्वन्येषु वा भावेषु न चातुरकुलप्रवृत्तयो बहिर्निश्चारयितव्याः ह्रसितं चायुषः प्रमाणं न वर्णयितव्यम्। जानतापि तत्र यत्रोच्यमानमातुरस्यान्यस्य वाप्युपघाताय सम्पद्यते ज्ञानवतापि च नात्यर्थमात्मनो ज्ञाने कत्थितव्यम्। आप्तादपि कत्थमानादत्यर्थमुद्विजन्त्येके।

न चैव ह्यस्ति सुतरमायुर्वेदस्य पारं तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत् तदेवं कार्य्यमेवं भूयश्च वृत्तस्य सौष्ठवमनसूयतापनेभ्योऽप्यागमयितव्यम्। कृत्स्नो हि लोको बुद्धिमतामाचार्य्यः शत्रुश्चाबुद्धिमतामेव तच्चाभि समीक्ष्य बुद्धिमता मितस्यापि धन्यं यशस्यमायुष्यं लोक्यमित्युपदिशता वचः श्रोतव्य मनु विधातव्यं चेति अतःपरं इदं ब्रूयात्। देवताग्नि द्विजाति गुरु वृद्ध सिद्धाचार्य्येषु ते सम्यग्वर्त्तितव्यं। तेषु ते सम्यग्वर्तमानस्यायमग्निः सर्वगन्धरसरत्नबीजानि यथेरिताश्च देवताः शिवाय स्युरतोऽन्यथा वर्त्तमानस्याशिवायेति एवं ब्रुवति चाचार्य्ये शिष्यस्तथेति ब्रूयात्। यथोपदेशं च कुर्वन्नध्याप्योज्ञेयः अतोऽन्यथा त्वध्याप्यमध्यापयन् ह्याचार्य्यो यथोक्तांश्चाध्यापनफलैर्योगमाप्नोत्यन्यैश्चानुक्तैः श्रेयस्करैर्गुणैः शिष्यमात्मानं च युनक्ति इत्यध्यापनविधिरुक्तः। अध्ययनाध्यापनविधिवत् सम्भाषा विधिं अत ऊर्द्ध्वं व्याख्यास्यामः। भिषक् भिषजा सह संभाषते तद्विद्यसम्भाषा हि ज्ञानाभियोगसंहर्षकरी भवति। वैशारद्यमपि चाभि निर्वर्त्तयति वचनशक्तिमपि चाधत्ते यशश्चाभि दीपयति पूर्वश्रुते च सन्देहवतः पुनः श्रवणात् श्रुतसंशयमपकर्षति श्रुतेश्चा सन्देहवतो भूयोऽध्यवसायमभिनिर्व-

संशति अश्रुतमपि च कञ्चिदर्थं श्रोत्रविषयमापादयति। यदा चाचार्यः शिष्याय शुश्रूषवे प्रसन्नः क्रमेणोपदिशति गुह्याभिमतमर्थजातं तत्परस्परेण सह जल्पन् पिण्डेन विजिगीषुराह संघर्षात् तस्मात्तद्विद्यसम्भाषामभिप्रशंसन्ति कुशलाः द्विविधा तु खलु तद्विद्यसम्भाषा भवति सन्धाय सम्भाषा विगृह्य सम्भाषा च। तत्र ज्ञानविज्ञानवचनप्रतिवचनशक्तिसम्पन्नेना कोपनेनानुपस्कृतविद्येनानसूयकेनानुनयकोविदेन क्लेशक्षमेण प्रियसम्भाषेणच सह सन्धाय सम्भाषा विधीयते तद्विधेन सह कथयन् विस्रब्धः कथयेत् पृच्छेदपि च पृच्छते चास्मै विस्रब्धाय विशदमर्थं ब्रूयात् न च निग्रहभयादुद्विजेत निगृह्य च न हृष्येत् न च परेषु विकत्थेत न च मोहादेकान्त ग्राही स्यात् न चानुदितमर्थमनुवर्णयेत् सम्यक् चानुनयेनानुनयेत अनुनयेत च तत्र चावहितः स्यादित्यनुलोमसम्भाषा विधिः। अतः ऊर्ध्वमितरेण सह विगृह्य सम्भाषायां जल्पेत् श्रेयसां योगमात्मनः पश्यन् प्रागेव च जल्पाज्जल्पान्तरं परावरान्तरं पर्षद्विशेषांश्च सम्यक् परीक्षेत। सम्यक् परीक्षा हि बुद्धिमतां कार्यप्रवृत्तिनिवृत्तिकालौ शंसति तस्मात् परीक्षामभिप्रशंसन्ति कुशलाः परीक्षमाणस्तु खलुपरावरान्तरं जल्पका इमान् जल्पकगुणान् श्रेयस्करांश्च दोषवतश्च परीक्षेत सम्यक् तद्यथा श्रुतं विज्ञानं धारणं प्रतिभानं वचनशक्तिरित्येतान् गुणान् श्रेयस्करानाहुः इमान् पुनर्दोषवतः कोपनत्वमवैशारद्यं भीरुत्वमनवस्थितत्वमिति एतान् द्वयानपि गुणान् गुरुलाघवतः परस्य चैवात्मनश्च तोलयेत। तत्र तत्र त्रिविधः

परः सम्पद्यते प्रवरः प्रत्यवरः समो वा गुणविनिक्षेपतो मत्वेव कार्त्स्न्येन पर्षत्तु खलु द्विविधा ज्ञानवती मूढ़पर्षच्च। सैव द्विविधा सती त्रिविधा पुनरनेन कारणविभागेन सुहृत्पर्षदुदासीनपर्षत् प्रतिनिविष्ट पर्षच्चेति तत्र प्रतिनिविष्टायां पर्षदि ज्ञानविज्ञानप्रतिवचनसम्पन्नायामपि मूढ़ायां न कथञ्चित् केनचित्सह जल्पो विधीयते मूढ़ायान्तु सुहृत् पर्षदि उदासीनायां वा ज्ञानविज्ञानवत्तरेणाप्यादीप्त यशसा महाजनद्विष्टेन सह जल्पो विधीयते तद्विधेन च सह कथयता आविद्धदीर्घसंकुलैर्वाक्यदण्डकैः कथयितव्यं अतिहृष्टं मुहुर्मुहुरपहसता परं रूपवता च पर्षदमाकारैर्ब्रुवतश्चास्य वाक्यावकाशो न देयः कष्टशब्दं ब्रुवन् वक्तव्यो नोच्यते इति अथवा पुनर्हीना ते प्रतिज्ञेति पुनश्चाह्वमानः प्रतिवक्तव्यः परिसंवत्सरो भव शिक्षस्व तावत् पर्याप्तमेतावत्ते सकृदपि पारिक्षेपिकं निहितं निहतमाहुरिति नास्य योगः कर्तव्यः कथञ्चिदप्येवं श्रेयसा सह विगृह्य वक्तव्यमित्याहुरेके नत्त्वेव ज्यायसा सह विग्रहं प्रशंसन्ति कुशलाः। प्रत्यवरेण तु समाभिमतेन वा विगृह्य जल्पता सुहृत्पर्षदि कथयितव्यम्। अथवाप्युदासीन पर्षदि अवधारण श्रवणज्ञान विज्ञानोपधारणवचनशक्तिसम्पन्नायां कथयता चावहितेन परस्य साद्गुण्यदोषबलमपेक्षितव्यं समवेक्ष्य च यत्रैनं श्रेष्ठं मन्येत नास्य तत्र जल्पं योजयेत् अनाविष्कृतमयोगं कुर्वन् यत्र त्वेन मवरं मन्येत तत्र वैनमाशु निगृह्णीयात् तत्र तु खल्विमे प्रत्यवराणामाशु निग्रहे भवन्त्युपायाः। तद्यथा श्रुतहीनं महता सूत्रपाठे-

नाभिभवेत् विज्ञानहीनं पुनः कष्टशब्देन वाक्येन वाक्यधारणाहीनमाविद्धदीर्घसंकुलैर्वाक्यदण्डकैः प्रतिभाहीनं पुनर्वचनेनानेकविधेनानेकार्थवादिना वचनशक्तिहीन मर्धोक्तिनाक्षाक्षेपेण अविशारदमपङ्क्तिपणेन कोपनमायासनेन भीतं वित्रासनेन अनवहितं नियमनेनेति एवमेतैरुपायैः परमवरमभिभवेत् शीघ्रम् । एवं प्रवृत्ते तु वादे कुर्यात् प्रागेव तावदिदं कर्तुं यतेत सन्धाय पर्षदायतनभूतमात्मनः प्रकरणमादेशयितव्यं यद्वा परस्य भृशदुर्गं स्यात् पक्षमथवा परस्य भृशं विमुखमानयेत् परिषदि परिषदि चोपसंहितायामशक्यमस्माभिर्वक्तुमिति तूष्णीमासीत एषैव ते परिषद्यथेष्टं यथायोगं यथाभिप्रायं वादं वादमर्यादाञ्च स्थापयिष्यति इत्युक्त्वा तत्रेदं वादमर्यादालक्षणं इदं वाच्यमिदमवाच्यमेवं सति पराजितो भवतीति इमानि खलु पदानि वादमार्गज्ञानार्थमधिगम्यानि । वादो द्रव्यं गुणाः कर्मसामान्यं विशेषः समवायः प्रतिज्ञास्थापना प्रतिष्ठापनाहेतुः उपनयोनिगमनमुत्तरं दृष्टान्तः सिद्धान्तः शब्दः प्रत्यक्षमौपम्यमैतिह्यं अनुमानं संशयः प्रयोजनं सव्यभिचारं जिज्ञासाव्यवसायः अर्थप्राप्तिः सम्भवः अनुयोज्यमनुयोगः प्रत्यनुयोगो वाक्यदोषो वाक्यप्रशंसाच्छलं अहेतवः अतीतकालं उपालम्भः परिहारः प्रतिज्ञाहानिः अभ्यनुज्ञा हेत्वन्तरमर्थान्तरं निग्रहस्थानमिति । तत्र वादो नाम यत्परस्परेण सह शास्त्रपूर्वं विगृह्य कथयति सवादो द्विविधः संग्रहेण जल्पो वितण्डा च । तत्र पक्षाश्रितयोर्जल्पः । जल्पविपर्ययो वितण्डा । यथैकस्य पक्षः पुनर्भवोऽस्तीति नास्ती-

स्वपरस्य तौच स्वपक्षं स्वहेतुभिस्तत्परिपक्षमुद्भावयतः एष जल्पो जल्पविपर्य्ययो वितण्डा। वितण्डा नाम परपक्षे दोषवचनमात्रमेव द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः स्वलक्षणैः श्लोकस्थाने पूर्वमुक्ताः। प्रतिज्ञा नाम साध्यवचनं यथानित्यः पुरुष इति स्थापना। स्थापनानाम तस्या एव प्रतिज्ञाया हेतुभिर्दृष्टान्तोपनयनिगमैः स्थापना पूर्वं हि प्रतिज्ञा पश्चात् स्थापना किं ह्यप्रतिज्ञातं स्थापयिष्यति यथानित्यः पुरुष इति प्रतिज्ञा।हेतुरकृतकत्वादिति दृष्टान्तः। अकृतकमाकाशं तच्च नित्यं उपनयो यथा चाकृतकमाकाशन्तथा पुरुषः निगमनन्तस्मान्नित्य इति प्रतिष्ठापना नाम या परप्रतिज्ञायाः प्रतिविपरीतार्थाया: स्थापना यथा अनित्यः पुरुषः इति प्रतिज्ञाहेतुरैन्द्रियकत्वात्। दृष्टान्तो घटः ऐन्द्रियकः स चानित्यः। उपनयो यथा घटः तथा पुरुषस्तस्मादनित्य इति हेतुः हेतुर्नामोपलब्धिकारणं तत् प्रत्यक्षमनुमानमैतिह्यमौपम्यमित्येभिर्हेतुभिर्यदुपलभ्यते तत्त्वं उपनयो निगमनं चोक्तं। स्थापना प्रतिष्ठापनाव्याख्यायामुत्तरं। उत्तरं नाम साधर्म्योपदिष्टे वा हेतौ वैधर्म्यवचनं वैधर्म्योपदिष्टं वा साधर्म्यवचनं यथा हेतुसधर्म्माणो विकाराः शीतकस्य हि व्याधेर्हेतु साधर्म्यवचनं हिमशिशिरवातसंस्पर्शा इति ब्रुवतः परो ब्रूयात् हेतुविधर्म्माणो विकाराः यथा शरीरावयवानां दाहकोथप्रपतने हेतुर्वैधर्म्यं हिमशिशिरवातसंस्पर्शा इति। एतत् सविपर्य्ययमुत्तरं। दृष्टान्तो नाम यत्र मूर्खविदुषां बुद्धि-

साम्यं यो वर्णं वर्णयति यथाग्निरुष्णोद्रवमुदकं स्थिरा पृथिवी आदित्यः प्रकाशक इति यथा वादित्यः प्रकाशक-स्तथा सांख्यवचनं प्रकाशकमिति। सिद्धान्तो नाम यः परी-क्षकैर्बहुविधं परीक्ष्य हेतुभिः साधयित्वा स्थाप्यते निर्णयः स सिद्धान्तः स चोक्तः चतुर्विधः। सर्वतन्त्रसिद्धान्तः प्रतितन्त्र-सिद्धान्तोऽधिकरणसिद्धान्तः अभ्युपगमसिद्धान्त इति। तत्र सर्वतन्त्रसिद्धान्तो नाम सन्ति निदानानि सन्ति व्याधयः सन्ति सिद्ध्युपायाः साध्यानामिति। प्रतितन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिंस्तन्त्रे तत्तत्प्रसिद्धं यथान्यत्राष्टौ रसाः षड़न्यत्र पञ्चेन्द्रियाणि यथान्यत्रान्यत्र षड़िन्द्रियाणि वाताधिकृताः सर्वविकारा यथान्यत्र वातादिकृता भूतकृताश्च प्रसिद्धाः। अधिकरणसिद्धान्तो नाम यस्मिन् यस्मिन्नधिकरणे संस्तूय-माने सिद्धान्यन्यान्यपि अधिकरणानि भवन्ति। यथा न मुक्तः कर्मानुबन्धिकं कुरुते निस्पृहत्वादिति प्रस्तुते सिद्धाः कर्मफलमोक्षपुरुषप्रेत्यभावा भवन्ति। अभ्युपगमसिद्धान्ते-नायमर्थमसिद्धमपरीक्षितमनुपदिष्टहेतुकं वा वादकाले-ऽभ्युपगच्छन्ति भिषजः। तद्यथा द्रव्यं न प्रधानमिति कृत्वा वक्ष्यामः गुणाः प्रधाना इति कृत्वा वक्ष्यामः इत्येवमा-दिश्चतुर्विधः सिद्धान्तः। शब्दो नाम वर्णसमाम्नायः सदृष्टार्थ-श्चादृष्टार्थश्च सत्यश्चानृतश्चेति। तत्र दृष्टार्थस्त्रिभिर्हेतुभिर्दोषाः प्रकुप्यन्ति षड़्भिरुपक्रमैश्च प्रशाम्यन्ति श्रोत्रादिसद्भावे शब्दादिग्रहणमित्यदृष्टार्थः पुनरस्ति प्रेत्यभावोऽस्ति मोक्ष इति सत्यः। सत्यो नाम सत्यायुर्वेदोपदेशाः सन्त्युपायाः साध्यानां सन्त्यारम्भफलानीति सत्यविपर्य्ययाच्चानृतः

प्रत्यक्षम्। प्रत्यक्षं नाम तद्यदात्मना चेन्द्रियैश्च स्वयमुपलभ्यते तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः शब्दादयस्त्विन्द्रियप्रत्यक्षाः। औपम्यं नाम यदन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनं यथा दण्डेन दण्डकस्य धनुषा धानुष्कस्येष्वासेनारोग्यदस्येति। ऐतिह्यं नाम आप्तोपदेशो वेदादिः। अनुमानं नाम तर्को युक्त्यपेक्षो यथोक्तं अग्निं जरणशक्त्या बलं व्यायामशक्त्या श्रोत्रादीनि शब्दादिग्रहणेनेन्द्रियाणीत्येवमादिः। संशयो नाम सन्दिग्धेष्वर्थेषु अनिश्चयः किमकालमृत्युरस्ति नास्तीति। प्रयोजनं नाम यदर्थमारभ्यन्त आरम्भाः यथा यद्यकालमृत्युरस्ति ततोऽहमात्मानमायुष्यैरुपचरिष्याम्यनायुष्यैः परिहरिष्यामि कथं न मामकालमृत्युः प्रसहेतेति। सव्यभिचारं नाम यद्व्यभिचरणं यथा भवेदिदमौषधमस्मिन् व्याधौ यौगिकमथवा नेति। जिज्ञासा नाम परीक्षा यथा भेषजपरीक्षोत्तरकालमुपदेक्ष्यते। व्यवसायो नाम निश्चयः यथा वातिक एवायं व्याधिरिदमेवास्य भेषजमिति। अर्थप्राप्तिर्नाम यत्रैकेनार्थेनोक्तेनापरस्यार्थस्यानुक्तस्य सिद्धिः यथा नायं सन्तर्पणो व्याधिरित्युक्ते भवत्यर्थप्राप्तिः अतर्पणसाध्योऽयमिति नानेन दिवा भोक्तव्यम् इति उक्ते भवत्यर्थप्राप्तिः निशि भोक्तव्यमिति सम्भवः। सम्भवो नाम यो यतः सम्भवति स तस्य सम्भवः यथा षड्धातवो गर्भस्य व्याधेरहितं हितमारोग्यस्येति। अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तं तदनुयोज्यमुच्यते सामान्योदाहृतेष्वर्थेषु वा विशेषग्रहणार्थं तद्वाक्यमनुयोज्यं यथा संशोधनसाध्योऽयं व्याधिरित्युक्ते किं वमनसाध्यो विरेचन-

साध्य इत्यनुयुज्यते। अननुयोज्यं नामातो विपर्य्ययेण। अनुयोगो नाम यत्तद्विद्यानां तद्विद्यैरेव सार्द्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा ज्ञानविज्ञानवचनपरीक्षार्थमादिश्यते अथवा नित्यः पुरुष इति प्रतिज्ञाते यत्परः को हेतुरित्याह सोऽनुयोगः। प्रत्यनुयोगो नाम अनुयोगस्यानुयोगः यथा अनुयोगस्य पुनः को हेतुरिति वाक्यदोषः। वाक्यदोषो नाम यथा खल्वस्मिन्नर्थे न्यूनमधिकमनर्थकमपार्थकं विरुद्धञ्चेति। तत्र हेतूदाहरणोपनयनिगमनानामन्यतमेनापि न्यूनं न्यूनं भवति यद्वा बहूपदिष्टहेतुकमेकेन साध्यते हेतुना तच्च न्यूनम् एतानि ह्यन्तरेण प्रकृतोऽप्यर्थः प्रणश्येत्। अधिकं नाम यदायुर्वेदे भाष्यमाणे बार्हस्पत्यमौशनसमन्यद्वा प्रतिसम्बन्धार्थमुच्यते यद्वा पुनः प्रतिसम्बद्धमपि द्विरभिधीयते तत्पुनरुक्तदोषादधिकं तच्च पुनरुक्तं द्विविधं अर्थपुनरुक्तं शब्दपुनरुक्तञ्च। तत्रार्थपुनरुक्तं नाम यथा भेषजमौषधं साधनमिति शब्दपुनरुक्तं पुनर्भेषजं भेषजमिति। अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात् पञ्चवर्गवन्न चार्थतो गृह्यते। अपार्थकं नाम यदर्थवच्च परस्परेण चायुज्यमानार्थं यथा तक्रनक्रवंशवज्रनिशाकरा इति। विरुद्धं नाम यद्दृष्टान्त सिद्धान्तसमयैर्विरुद्धं तत्र दृष्टान्त सिद्धान्तावुक्तौ। समयः पुनर्यथायुर्वेदिकसमयो याज्ञियसमयो मोक्षशास्त्रिकसमय इति। तत्रायुर्वेदिकसमयः चतुष्पादसिद्धिः आलभ्या पशव इति याज्ञिसमयः सर्वभूतेष्वहिंसेति मोक्षशास्त्रिकसमयः तत्र स्वसमयविपरीतमुच्यमानं विरुद्धमिति वाक्यप्रशंसा। वाक्य-

प्रशंसा नाम यथा अन्यूनमनधिकमर्थवदनपार्थकमविरुद्ध-मधिगतपदार्थं च तद्वाक्यमननुयोज्यमिति प्रशस्यते। छलं नाम परिशठमर्थाभासमपार्थकं वाग्वस्तुमात्रमेव तद्द्विविधं वाक्छलं सामान्यछलं च। तत्र वाक्छलं नाम यथा कश्चिद्ब्रूयात् नवतन्त्रोऽयं भिषगिति भिषग् ब्रूयात् नाहं नवतन्त्र एकतन्त्रोऽहमिति परो ब्रूयात् नाहं ब्रवीमि नवतन्त्राणि तवेति अपितु नवाभ्यस्तं ते तन्त्रमिति भिषक् ब्रूयात् न मया नवाभ्यस्तं तन्त्रं अनेकशताभ्यस्तं मया तन्त्र मिति। एतद्वाक्छलम्। सामान्यछलं नाम यथा व्याधि प्रशमनायौषधमित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति भवानाह सद्रोगः सदौषधं यदि च सत्प्रशमनाय भवति सत्कासः सत्क्षयः सत्सामान्यात्कासस्ते क्षयप्रशमनाय भविष्यतीति एतत्सामान्यछलम्। अहेतुर्नाम प्रकरणसमः संशयसमो वर्ण्यसम इति। तत्र प्रकरणसमो नामाहेतुर्यथान्यः शरीरादात्मा नित्य इति पक्षे ब्रूयात् शरीरादन्य आत्मा तस्मान्नित्यः शरीरमनित्यमतो विधर्मिणानेन च भवितव्यं एष चाहेतुर्न हि य एव पक्षः स एव हेतुः। संशयसमो नामा हेतुर्य एव संशयहेतुः स एव संशयच्छेदहेतुर्यथा अयमायुर्वेदैकदेशमाह किन्त्वयं चिकित्सकः स्यान्न वेति संशये परो ब्रूयादस्मादयमायुर्वेदैकदेशमाह तस्माच्चिकित्सकोऽयमिति। न च संशयहेतुं विशेषयत्येष चाहेतुः न हि य एव संशयहेतुः स एव संशयच्छेदहेतुः। वर्ण्यसमो नामाहेतुः यो हेतुर्वर्ण्याविशिष्टः तथा ब्रूयादस्पर्शत्वाद्बुद्धिरनित्या शब्दवदिति तत्र वर्ण्यः शब्दो बुद्धिरपि वर्ण्या

तदुभयवर्णाविशिष्टत्वाद्वर्ण्यसमोऽप्यहेतुः । अतीतकालं नाम यत् पूर्व्वं वाच्यं तत् पश्चादुच्यते तत्कालातीतत्वाग्निग्राह्यवचनसमर्थं भवति । उपालम्भो नाम हेतोर्दोषो वचनं यथा पूर्वमहेतवो हेत्वाभासा व्याख्याताः । परिहारो नाम तस्यैव दोषवचनस्य परिहरणं यथा नित्यमात्मनि शरीरस्थे जीवलिङ्गान्युपलभ्यन्ते तस्य चापगमान्नोपलभ्यन्ते तस्मादन्यः शरीरादात्मा नित्यः शरीराच्चेति । प्रतिज्ञाहानिः । प्रतिज्ञाहानिर्नाम यः पूर्वप्रतिगृहीतां प्रतिज्ञां पर्य्यनुयुक्तः परित्यजति यथा प्राक् प्रतिज्ञां कृत्वानित्यः पुरुष इति पर्य्यनुयुक्तस्त्वाह नित्य इति । अभ्यनुज्ञा नाम य इष्टानिष्टाभ्युपगमः । हेत्वन्तरं नाम प्रकृतहेतौ वाच्ये विकारहेतुमाह । अर्थान्तरं नाम ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाह । निग्रहस्थानं नाम त्रिभक्तस्य वाक्यस्याज्ञानं परिषदि विजानत्यां अननुयोजस्यानुयोगोऽनुयोजस्य चाननुयोगः प्रतिज्ञाहानिरभ्यनुज्ञाकालातीतवचनमहेतवो न्यूनमतिरिक्तं व्यर्थमपार्थकं पुनरुक्तं विरुद्धं हेत्वन्तरमर्थान्तरनिग्रहस्थानमिति वादमार्गपदानि यथोद्देशमभिनिर्द्दिष्टानि । वादस्तु खलु भिषजां वर्तमानो वर्त्तेतायुर्वेद एव नान्यत्र । तत्र हि वाक्य प्रतिवाक्य विस्तराः केवलाश्चोपपत्तयः च सर्वाधिकरणेषु ताः सर्वाः समवेक्ष्यावेक्ष्यवाक्यं ब्रूयात् नाप्रकृतकमशास्त्रमपरीक्षितमसाधकमाकुलमव्यापकं वा सर्वं च हेतुमद्ब्रूयात् हेतुमन्तो ह्यकलुषाः सर्व एव विग्रहाः चिकित्सिते कारणभूताः प्रशस्तबुद्धिवर्धकत्वात् सर्वारम्भसिद्धिं ह्यावहत्यनुपहता बुद्धिः इमानि खलु तावदिह कानिचित् प्रकरणानि

भूमः ज्ञानपूर्वकं कर्म्मणां समारम्भं प्रशंसन्ति कुशलाः। ज्ञात्वा हि कारणकरणकार्यं कार्यफलानुबन्धदेशकाल-प्रवृत्त्युपायान् सम्यगभिनिर्वर्त्यमानः कार्याभिनिर्वृत्तौ इष्टफलानुबन्धकं कार्यमभिनिर्वर्त्तयति अनति महता प्रयत्नेन कर्त्ता। तत्र कारणं नाम तद्यत्करोति स एव हेतुः कर्त्ता स कारणं पुनः तद्यदुपकरणायोपकल्पते कर्त्तुः कार्याभिनिर्वृत्तौ प्रयतमानस्य कार्यं योनिस्तु सा-या विक्रियमाणा कार्यत्वमापद्यते कार्यन्तु तद्यस्याभि निर्वृत्तिरभि सन्धाय प्रवर्त्तते कर्त्ता कार्यफलं पुनस्तत्प्रयो-जना कार्याभि निर्वृत्तिरिष्यते। अनुबन्धस्तु कर्त्तारमवश्य-मनुबध्नाति कार्यादुत्तरकालं कार्यनिमित्तः शुभो वाप्यशुभो भावः देशस्त्वधिष्ठानं। कालः पुनः परिणामः प्रवृत्तिस्तु खलु चेष्टा कार्यार्था सैव क्रियाकर्म्मयत्नः कार्यसमारम्भश्च। उपायः पुनः कारणादीनां सौष्ठवं आभि विधानं च सम्यक् कार्य-कार्यफलानुबन्धवर्ज्यानां कार्याणामनिर्वर्त्तकः इत्यतोऽभ्यु-पायः कृतेनोपायार्थोऽस्ति न च विद्यते तदात्वे कृताच्चोत्तर-कालं फलं फलं चानुबन्ध इति जातं दशविधं अग्रे परीक्ष्यं ततोऽनन्तरं कार्यार्था प्रवृत्तिरिष्टा तस्माद्भिषक्कार्यं चिकीर्षुः प्राक्कार्यसमारम्भात्परीक्षायाः केवलं परीक्ष्यं परीक्ष्याथ कर्म-समारम्भेत कर्त्तुं तत्र चेद्भिषगभिषग्वाभिषजं पृच्छेद्वमन-विरेचनास्थापनानुवासनशिरो विरेचनानि प्रयोक्तु कामेन भिषजा कतिविधया परीक्षया कतिविधं परीक्ष्यं कश्चात्र-परीक्ष्यविशेषः कथञ्च परीक्षितव्यं किं प्रयोजना च परी-क्षा क्व च वमनादीनां प्रवृत्तिः क्व च निवृत्तिः प्रवृत्ति निवृत्ति-

लक्षणसंयोगी च किं नैष्ठिकं कानि च वमनादीनां भेषज-
द्रव्याणि उपयोगं गच्छन्तीति। स एवं पृष्टो यदि मोहयितु-
मिच्छेत् ब्रूयादेनं बहुविधा परीक्षा तथा परीक्ष्य विधि-
भेदः कतमेन विधि भेदप्रकृत्यन्तरेण परीक्ष्यस्याभिप्रेतार्थं
भवान् पृच्छत्याख्यायमानं नेदानीं भवतोऽन्येन विधि भेद-
प्रकृत्यन्तरेण भिन्नया परीक्षयान्येन वा विधि भेदप्रकृत्य-
न्तरेण परीक्ष्यस्य भिन्नस्याभिलषितमर्थं श्रोतुमहमन्ये न
परीक्षा विधिभेदेनान्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यं
भित्त्वार्थमाचक्षाण इच्छां पूरयेयमिति। स यद्युत्तरं ब्रूया-
त्तत्परीक्ष्योत्तरं वाच्यं स्याद्यथोक्तं प्रति वचनं प्रवेक्ष्य
सम्यक् यदि तु ब्रूयात् न चैनं मोहयितुमिच्छेत् प्राप्तन्तु
वचनकालं मन्येत काममस्मै ब्रूयात् आप्तमेव निखिलेन।
द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्च एतत्तु द्वयमुप-
देशश्च परीक्षात्रयं एवमेषा द्विविधा परीक्षा त्रिविधा वा
सहोपदेशेन दशविधं परीक्ष्यं कारणादि यदुक्तमग्रे तदिह
भिषगादिषु संसार्य सन्दर्शयिष्यामः इह कार्यप्राप्तेः कारणं
भिषक्करणं पुनर्भेषजं कार्यो निर्धातु वैषम्यं कार्यं धातु-
साम्यं कार्यफलं सुखावाप्तिः अनुबन्धः आयुः देशो भूमि-
रातुरश्च कालः संवत्सरश्चातुरावस्था च प्रवृत्तिः प्रति कर्म-
समारम्भः उपायो भिषगादीनां सौष्ठवं अभि विधानञ्च
सम्यक् इहाप्यस्योपायस्य विषयः पूर्वैर्षोपाय विशेषेण
व्याख्यात इति कारणादीनि दश दशसु भिषगादिषु संसार्य
सन्दर्शितानि तथैवानु पूर्व्या एतद्दशविधं परीक्ष्यमुक्तम्।
तस्य योयो विशेषो यथा यथाच परीक्षितव्यः स तथा तांश्च

व्याख्यास्यते। कारणं भिषगित्युक्तमग्रे तस्य परीक्षाभिषङ्नाम योभिषज्यति यः सूत्रार्थ प्रयोगकुशलः यस्य चायुः सर्वथा विदितं यथावत्सर्वधातु साम्यं चिकीर्षन्नात्मानमेवादितः परीक्षेत गुणेषु गुणतः कार्य्याभिनिर्वृ तिं पश्यन् कच्चिदहमस्य कार्य्यस्याभिनिर्वर्तने समर्थोनेति। तत्रेमे भिषग्गुणा यैरुपपन्नो भिषग्धातु साम्याभिनिर्वर्तने समर्थस्तद्यथा पर्य्यवदातश्रुतता परदृष्टकर्मता दाच्यं शौचज्जितहस्तता उपकरणवत्ता सर्वेन्द्रियोपपन्नता प्रकृतिज्ञता प्रतिपत्तिज्ञता चेति कारणं पुनर्भेषजम्। भेषजं नाम तद्यदुपकरणायोपकल्पते भिषजो धातु साम्याभिनिर्वृत्तौ प्रयतमानस्य विशेषतश्चोपायान्तेभ्यः तद्‌द्विविधं व्यपाश्रयभेदात् दैवव्यपाश्रयं युक्तिव्यपाश्रयञ्च। तत्र दैवव्यपाश्रयं मन्त्रौषधमणिमङ्गल वल्युपहारहोम नियमप्रायश्चित्तोपवास स्वस्त्ययनप्रणिपात गमनादियुक्तिव्यपाश्रयं संशोधनोपशमने चेष्टाश्च दृष्टफलाः एतच्चैव भेषजमङ्गभेदादपि द्विविधं द्रव्यभूतमद्रव्य भूतञ्च तदुपाययाभिप्लुतम्। उपायोनाम भयदर्शनविस्मापनक्षोभणहर्षण भर्त्सनवधवन्ध स्वप्नसंवाहनादिरमूर्तोभावः यथोक्ताः सिद्धुपायाः। यत्तुद्रव्य भूतं तद्वमनादिषु योगमुपैति तस्यापीयं परीक्षा इदमेवं प्रकृत्या एवं गुणमेवं प्रभावमस्मिन् देशे जातमस्मिन् ऋतौ एवं गृहीतमेवं निहितमेवमुपस्कृतमनया मात्रया युक्तमस्मिन् ऋतौ एवंविधस्य पुरुषस्य तावन्तन्दोषमपकर्षयति उपशमयति वा अन्यदपिचैवं वि ध भेषजमभूत्तच्चानेनानेन वा विशेषेण युक्तमिति का योनिर्धातुवैषम्यं तस्य लक्षणं विकारागमः परीक्षात्वस्य विकारप्रकृतेश्चैव नातिरिक्तलिङ्ग विशे-

षापेक्षणं विकारस्यच साध्यासाध्यमृदुदारुण लिङ्गविशे-
षापेक्षण मिति कार्य्यं धातु साम्यं तस्य लक्षणं विकारोप-
शमः परीक्षात्वस्य रुगपगमनं स्वरवर्णयोगः शरीरोपचयः
बलवृद्धिरभ्यवहार्य्याभिलाषो रुचिराहारकालेऽभ्यवहृतस्य चा
हृतस्य चाहारस्य सम्यग्जरणं निद्रालाभो यथा,कालं वैका-
रिकाणां स्वप्नानां दर्शनं सुखेनच प्रतिबोधनं वात मूत्रपु-
रीषरेतसां वृद्धिः सर्व्वाकारैर्मनोबुद्धीन्द्रियाणाञ्च व्यापत्ति-
रितिकार्य्यवल' सुखावाप्तिस्तस्य लक्षणं मनोबुद्धीन्द्रिय शरी
रतुष्टिः । अनुबन्धस्तु खल्वायुः तस्य लक्षणं प्राणैः संयोगः ।
देशस्तु भूमिरातुरश्च तत्र भूमिपरीक्षा आतुरस्य परिज्ञान-
हेतोर्व्वा स्यादौषध परिज्ञान हेतोर्व्वा स्यात् तत्र तावदियमातु-
रपरिज्ञान हेतोः । तद्यथा अयं कस्मिन् भूमिदेशे जातः सं-
वृद्धोव्याधितो वेति तस्मिंश्चभूमिदेशे मनुष्याणामिदमाहार
जातमिदं विहारजात' इदमाचारजात मेतद्बलमेवं विधं
सत्त्वमेवं विधं सात्म्यं एवं विधं दोषभक्तिरिय मिमे व्याधयो
हित मिदमहितमिदमिति प्रायोग्रहणेन औषधपरिज्ञान-
हेतोस्तुकल्पेषु भूमिपरीक्षा वक्ष्यते। आतुरस्तु खलु कार्य्यदेशस्तस्य
परीक्षा आयुषः प्रमाण ज्ञानहेतोर्व्वा स्यादवलदोषप्रमाण-
ज्ञानहेतोर्व्वा तत्र तावदियं बलदोषविशेषप्रमाणापेक्षा सह-
सा ह्यतिबलमौषध मपरीक्षकप्रयुक्तमल्पबलमातुरमभिपा-
तयेत् नह्यतिबलान्याग्नेयसौमग्रवायवीयान्यौषधान्यग्नि-
क्षारशस्त्रकर्म्माणि वा शक्यन्तेऽल्पबलैः सोढुमविषह्यातितो-
क्ष्णा वेगत्वाद्धि प्राणहराणिस्युः । एतच्चैव कारणमपेक्षमाणा
हीनबलमातुरमविषादकरैर्मृदुसुकुमारप्रायैरुत्तरोत्तरगुरुभि-

रविभ्रमैरनात्ययिके श्वोपचरन्त्योषधैः विशेषतश्च नारीस्ता ह्यनवस्थितमृदुविवृतविक्लवहृदयाः प्रायः सुकुमारा नार्यो ऽबलाः परसंस्तम्भाश्च । तथा बलवति बलवद्व्याधिपरिगते स्वल्पबलमौषधमपरीक्षकप्रयुक्तमसाधकं भवति तस्मादातुरं परीक्षेत प्रकृतितश्च विकृतितश्च संहननतश्च सात्म्यतश्च सत्त्वतश्चाहारशक्तितश्च व्यायामशक्तितश्च वयस्तश्चेति । बलप्रमाणग्रहणविशेषहेतोः तत्रामी प्रकृत्यादयोभावाः तद्यथा शुक्रशोणितप्रकृतिं कालगर्भाशयप्रकृतिं आतुराहारविहारप्रकृतिं महाभूतविकारप्रकृतिश्च गर्भशरीरमपेक्षते । एतानि हि येन येन दोषेणाधिकतमेनैकेनानेकेनवा समनुबध्यन्ते तेन तेन दोषेण गर्भोऽनुबध्यते । ततः सा सा दोषप्रकृतिरुच्यते मनुष्याणां गर्भादिप्रवृत्ता तस्माद्वातलाः प्रकृत्या केचित् पित्तलाः केचित् श्लेष्मलाः केचित्संसृष्टाः केचित्समधातवः प्रकृत्या केचित् भवन्ति । तेषां हि लक्षणानि व्याख्यास्यामः । श्लेष्मा हि स्निग्धश्लक्ष्णमृदुमधुरसारसान्द्रमन्दस्तिमितगुरुशीतभिज्जलाच्छस्तस्य स्नेहात् श्लेष्मलाः स्निग्धाङ्गाः श्लक्ष्णत्वात् श्लक्ष्णाः मृदुत्वात् दृष्टिसुख सुकुमारावदातशरीराः माधुर्यात् प्रभूतशुक्रव्यवायापत्याः सारत्वात् सारसंहतस्थिरशरीराः सान्द्रत्वादुपचितपरिपूर्णसर्वगात्राः मन्दत्वान्मन्दचेष्टाहारव्याहाराः स्तैमित्यादशीघ्रारम्भक्षोभविकाराः गुरुत्वात् साराधिष्ठितावस्थितगतयः शैत्यादल्पक्षुत्तृष्णासन्तापस्वेददोषाः विज्जलत्वात् सुश्लिष्टसारबन्धसन्धानाः तथाच्छत्वात् प्रसन्नदर्शनाननाः प्रसन्नवर्णस्वराश्च । तएवं गुणयोगात् श्लेष्मला बलवन्तो वसुमन्तो विद्यावन्त-

ओजस्विन आयुष्मन्तश्च पित्तमुष्णमौष्ण्यं विस्रमम्लं कटुकञ्च। तस्यौष्ण्याद्दुष्णसहा सुकुमारावदातगात्राः प्रभूतपिप्लुव्यङ्ग-पिटकाः क्षुत्पिपासावन्तः क्षिप्रवलीपलितखालित्यदोषाः प्रायो मृद्वल्पकपिलश्मश्रुलोमकेशाः तैक्ष्ण्यात्तीक्ष्णपराक्रमाः तीक्ष्णाग्नयः प्रभूताशनपानाः क्लेशासहिष्णव दन्दशूकाः द्रवत्वात् शिथिलमृदुसन्धिमांसाः प्रभूतसृष्टस्वेदमूत्रपुरीषाश्च विस्रत्वात्प्रतिवचः कक्षास्य शिरः शरीरगन्धाः कट्वम्लत्वादल्पशुक्रव्यवायापत्याः। तएवं गुणयोगात् पित्तला मध्यबला मध्यायुषो ज्ञानविज्ञानवित्तोपकरणवन्तश्च। वातस्तु रूक्ष-लघुचलबहुशीघ्रशीतपरुषविषदास्तस्य रौक्ष्याद्वातला रूक्षापचितालपशरीराः प्रततरूक्षक्षामभिन्नसक्तजर्जरस्वराः जागरूकाश्च लघुत्वाच्च लघुचलगतचेष्टाहारव्याहाराः चलत्वादनवस्थितसन्ध्यक्षिभ्रूहन्वोष्ठजिह्वाशिरःस्कन्धपाणिपादाः बहुत्वाद्बहुप्रलापकण्डुरा सिराप्रतानाः शीघ्रत्वात् शीघ्रसमारम्भक्षोभविकाराः शीघ्रोत्त्रासरागविरागाः श्रुतग्राहिणो स्मृतयश्च शैत्यात् शीतासहिष्णवः प्रततशीतकोद्वेपकस्तम्भाः पारुष्यात्परुषकेशश्मश्रु नखदशनवदनपाणिपादाङ्गावैषद्यात्स्फुटिताङ्गावयवाः सततसन्धिशब्दगामिनः तएवं गुणयोगात्प्रायेणाल्पबलाश्चाल्पायुषश्चाल्पसाधनाश्चाधन्याश्च संसर्गात्संसृष्टलक्षणाः सर्वगुणसमुदितास्तु समधातवः इत्येवं प्रकृतितः परीक्षेत विकृतितश्चेति। विकृतिरुच्यते विकारः तत्र विकारं हेतुदूष्यदोषप्रकृतिदेशकाल विशेषवल्लैर्लिङ्गतश्च परीक्षेत नह्यन्तरेण हेत्वादीनां बलविशेषं व्याधिबलविशेषोपलब्धिः यस्य हि व्याधेर्दूष्यदोषप्रकृतिदेशकालसामंत्र महच्च

हेतुबललिङ्गं स व्याधिर्बलवांस्तद्विपर्य्ययात् चाल्पबलः मध्यबलस्तु दूष्यादीनामन्यतमसामान्याद्धेतुलिङ्गमध्यबलत्वाच्चोपलभ्यते सारतश्चेति साराण्यष्टौ पुरुषाणामुपदिश्यन्ते। तद्यथा त्वग्रक्तमांसमेदोऽस्थिमज्जा शुक्रसत्त्वानि तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभेव च त्वक्साराणां सा सारता सुखसौभाग्यैश्वर्य्योपभोगबुद्धिविद्यारोगप्रहर्षणान्यायुष्याणि त्वरमाचष्टे। कर्णाक्षिमुखजिह्वानासौष्ठमणिपादतलनखललाटमेहनञ्च स्निग्धरक्तं श्रीमद्भ्राजिष्णु रक्तसाराणां सा सारता। सुखमुद्यतां मेधां मनस्वित्वं सौकुमार्य्यमनतिबलमक्लेशसहिष्णुत्वञ्चाचष्टे। शङ्खललाटकृकाटिकाक्षिगण्डहनुग्रीवास्कन्धोदरकक्षवक्षःपाणिपादसन्धिः स्थिरगुरुशुभमांसोपचितं मांससाराणां सा सारता। क्षमां धृतिमलौल्यं वित्तं विद्यां सुखमार्जवमारोग्यं बलमायुश्च दीर्घमाचष्टे। वर्णस्वरनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहो मेदः साराणां सा सारता। वित्तैश्वर्य्यं सुखोपभोगप्रदानान्यार्जवं सुकुमारोपचारताञ्चाचष्टे। पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिरः पर्वस्थूलाः स्थूलास्थिनखदन्ताश्चास्थि सारास्ते महोत्साहाः क्रियावन्तश्च क्लेशसहाः सारस्थिरशरीरा आयुष्मन्तश्च तन्वङ्गा बलवन्तः स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसन्धयश्च मज्जासारास्ते दीर्घायुषो बलवन्तः श्रुतविज्ञानवित्तापत्यसम्मानभाजश्च सौम्याः सौम्यप्रेक्षिणश्च क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंहतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वरा

भ्राजिष्णवो महास्फिजश्च शुक्रसाराः ते स्त्रीप्रियाः स्त्रीप्रियो-पभोगा बलवन्तः सुखैश्वर्यारोग्य वित्तसम्मानापत्य भाजः स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षाः धीराः समरविक्रान्तयोधिनः त्यक्तविषादास्सुव्यवस्थिता गम्भीरबुद्धिचेतसः कल्याणाभिनिवेशिनश्च सत्त्वसारास्तेषां स्वलक्षणैरेव गुणैर्व्याख्याताः। तत्र सर्वैः सारैरुपेताः पुरुषा भवन्त्यतिबलाः परं गौरवयुक्ताः क्लेशसहाः सर्वारम्भेष्वात्मनि जातप्रत्ययाः कल्याणाभिनिवेशिनः स्थिरसमाहितशरीराः सुसमाहितगतयः सानुनादस्निग्धगम्भीरमहास्वराः सुखै-श्वर्यवित्तोपभोगसम्मानभाजो मन्दजरसो मन्दविकाराः प्रायस्तुल्यगुणविस्तीर्णापत्याः चिरजीविनश्च। अतो विपरीता-स्त्वसाराः मध्यानां मध्यैः सारविशेषैर्गुणविशेषा इति साराण्यष्टौ पुरुषाणां बलमानविशेषज्ञानार्थानि कथं न शरीरमात्रदर्शनादेव भिषक् मुह्येदयमुपचितत्वाद्बलवा-नयं अल्पबलः कृशत्वादयं महाबलवानयं महाबलत्वा-दयमल्पशरीरत्वादल्पबल इति। दृश्यन्ते हि अल्पशरीराः कृशाश्चैके बलवन्तः तत्र पिपीलिकाभारहरणवत् सिद्धि-रतश्च सारतः परीक्ष्य इत्युक्तं संहननतश्चेति। संहननं सङ्घातः संयोजनमित्येकोऽर्थः। तत्र समसुविभक्तास्थिसुबद्ध-सन्धिषु निविष्टमांसशोणितं सुसंहतं शरीरमित्युच्यते। तत्र सुसंहतशरीराः पुरुषा बलवन्तो विपर्ययेणाल्पबलाः प्रवरा वरमध्यत्वात् संहननस्य मध्यबलाः प्रमाणतश्चेति। शरीरप्रमाणं पुनर्यथा स्वेनाङ्गुलिप्रमाणेनोपदेक्ष्यते। उत्सेध-विस्तारायामैर्यथाक्रमं तत्र पादौ चत्वारि षट्चतुर्दश चाङ्गु-

लानि जङ्घे त्वष्टादशाङ्गुले षोड़शाङ्गुलिपरिक्षेपे च नवति चतुरङ्गुले षोड़शाङ्गुलिपरिक्षेपे त्रिंशदङ्गुलपरिक्षेपावष्टादशाङ्गुलावूरू षड़ङ्गुलदीर्घौ वृषणौ अष्टाङ्गुलपरिणाहौ शेफः षड़ङ्गुलदीर्घं पञ्चाङ्गुलपरिणाहं षोड़षाङ्गुलविस्तारा कटी दशाङ्गुलं वस्तिशिरः द्वादशाङ्गुलमुदरं दशाङ्गुलविस्तीर्णौ द्वादशाङ्गुलायामे पार्श्वे द्वादशाङ्गुलं स्तनान्तरं द्व्यङ्गुलं स्तनपर्य्यन्तं चतुर्विंशत्यङ्गुलविशालं द्वादशाङ्गुलोत्सेधमुरः द्व्यङ्गुलं हृदयं अष्टाङ्गुलौ स्कन्धौ षड़ङ्गुलावंसौ षोड़शाङ्गुलौ प्रबाहू पञ्चदशाङ्गुलौ प्रपाणी हस्तौ दशाङ्गुलौ कक्षौ अष्टाङ्गुलौ त्रिकं द्वादशाङ्गुलोत्सेधं अष्टाङ्गुलोत्सेधं पृष्ठं चतुरङ्गुलोत्सेधः द्वाविंशत्यङ्गुलपरिणाहा शिरोधरा द्वादशाङ्गुलोत्सेधं चतुर्विंशत्यङ्गुलपरिणाहमाननं पञ्चाङ्गुलमास्यं चिवुकावष्टकर्णाक्षि मध्यनासिका ललाटं चतुरङ्गुलं षोड़शाङ्गुलोत्सेधं द्वात्रिंशदङ्गुलपरिणाहं शिर इति पृथक्त्वेनाङ्गावयवानां मानमुक्तं केवलं पुनः शरीरं अङ्गुलिपर्वाणि चतुरशीतिस्तदायामविस्तारसमं समुच्यते। तत्रायुर्बलमोजः सुखमैश्वर्यं वित्तमिष्टाश्चापरे भावा भवन्त्यायत्ताः प्रमाणवति शरीरे विपर्य्यये तु हीनेऽधिके वा सात्म्यतश्चेति। सात्म्यं नाम तद्यत्सातत्येनोपसेव्यमानमुपशेते। तत्र ये घृतक्षीरतैलमांसरससात्म्याः सर्वरससात्म्याश्च ते बलवन्तः क्लेशसहाः चिरजीविनो भवन्ति। रूक्षनित्याः पुनरेकरससात्म्याश्च ये ते प्रायेणाल्पबलाः क्लेशसहाः अल्पायुषोऽल्पसाधनाश्च। व्यामिश्रसात्म्यास्तु ये ते मध्यबलाः सात्म्य निमित्ततः सत्त्वतश्चेति सत्त्वमुच्यते। मन॰

स्तच्छरीरस्य तस्तु आमात्मसंयोगात्तत्त्रिविधं बलभेदेन प्रवरं मध्यममवरमिति। अतश्च प्रवरावरमध्यसत्त्वाः पुरुषाः। तत्र प्रवरसत्त्वाः सत्त्वसारास्ते सारेषूपदिष्टाः स्वल्पशरीरा ह्यपि ते निजागन्तुनिमित्तासु महतीष्वपि पीड़ास्वव्यथा दृश्यन्ते। सत्त्वगुणवैशेष्यात् मध्यसत्त्वास्त्वपरानात्मनि उपनिधाय संस्तम्भयन्त्यात्मनात्मानं परैश्चापि संस्तम्भ्यन्ते। हीनसत्त्वास्तु नात्मना न परैः सत्त्वबलं प्रति शक्यन्ते उपस्तम्भयितुं महाशरीरा अपि ते स्वल्पानामपि वेदनानामसहा दृश्यन्ते। सन्निहितभयशोकलोभमोहमाना रौद्रभैरवद्विष्टबीभत्सविकृतसङ्कथासु अपि च पशुपुरुषमांसशोणितानि चावेक्ष्य विषाद वैवर्ण्य मूर्च्छोन्मादभ्रमप्रपतनानामन्यतममाप्नुवन्त्यथवा मरणमिति आहारशक्तितश्चेति। आहारशक्तिरभ्यवहरणशक्त्या जरणशक्त्या परीक्ष्या बलायुषी ह्याहारायत्ते व्यायामशक्तितश्चेति। व्यायामशक्तिरपि कर्म्मशक्त्या परीक्ष्या कर्म्मशक्त्या ह्यनुमीयते। बलं त्रैविध्यं वयस्तश्चेति कालप्रमाणापेक्षिणी हि शरीरावस्थावयोऽभिधीयते। तद्वयो यथा स्थूलभेदेन त्रिविधं बलं मध्यं जीर्णमिति। तत्र बालमपक्वधातुजातव्यञ्जनं सुकुमारमक्लेशसहमसम्पूर्णबलं श्लेष्मधातुप्रायं आषोड़शवर्षं विवर्द्धमानधातुगुणं पुनः प्रायेणानवस्थितमा त्रिंशद्वर्षमुपदिष्टं मध्यं पुनः समत्वागतबलवीर्य पौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानं भ्रश्यमानगुणं वायु धातुप्रायं क्रमेण जीर्णमुच्यते। वर्षशतान्तमस्मिन् काले पुनरधिकेन वर्षशतजीविनो मनुष्याः तेषां विकृति वर्ज्यैः प्रकृ-

त्यादि बलविशेषैरायुषो लक्षणतश्च प्रमाणमुपलभ्य वयस स्त्रित्वं विभजेत् विकृतिवर्जानां प्रवरमध्यावरविभागेन बलविशेषं विभजेत् विकारबलत्रैविध्येन दोषबलं त्रिविधमनुमिमीते। ततो भैषज्यस्य तीक्ष्णमृदुमध्यविभागेन त्रित्वं विभज्य यथायोगं भैषज्यमवचारयेदिति। आयुषः प्रमाणज्ञानहेतोः पुनरिन्द्रियेषु जातिसूत्रीये च लक्षणान्युपदेक्ष्यन्ते। कालः संवत्सरश्चातुरावस्था च। तत्र संवत्सरो द्विधा त्रिधा षोढा द्वादशधा भूयश्चाप्यतः प्रविभज्यते तत्तत्कार्य्यमभिसमीक्ष्य तत्तु खलु तावत् षोढा प्रविभज्य कार्य्यमुपदेक्ष्यते। हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणाः त्रय ऋतवः प्रावृट् शरद्वसन्त इति। प्रावृडिति प्रथमः प्रवृष्टः कालस्तस्यानुबन्धो वर्षाः एवमेते संशोधनमधिकृत्य षट् विभज्यन्ते ऋतवः। तत्र साधारणलक्षणेष्वृतुषु वमनादीनां प्रवृत्तिर्विधीयते निवृत्तिरितरेषु। साधारणलक्षणा हि मन्दशीतोष्णवर्षत्वाद्दुःखतमाश्च भवन्ति विकल्पकाश्च शरीरौषधानां इतरे पुनरत्यर्थशीतोष्णवर्षत्वाद्दुःखतमाश्च भवन्ति विकल्पकाश्च शरीरौषधानां हेमन्ते ह्यतिमात्रशीतोपहतत्वात् शरीरसुखोपपन्नं भवति। शीतवाताविध्मातमतिदारुणीभूतमवबद्धदोषं भेषजं पुनः संशोधनार्थमुष्णस्वभावं शीतोपहतत्वान्मन्दवीर्य्यत्वमापद्यते। तस्मात्तयोः संयोगसंशोधनमयोगायोपपद्यते शरीरं वातोपद्रवाय। ग्रीष्मे पुनर्भृशोष्णोपहतत्वात् शरीरमसुखोपपन्नं भवति। उष्णोष्णवाताविध्मातमतिशिथिलमत्यन्तप्रविलीनदोषं भेषजं पुनः संशोधनार्थमुष्णस्वभावमुष्णानुगमना-

तीक्ष्णतरत्वमापद्यते। तस्मात्तयोः संयोगे संशोधनमति-
योगायोपपद्यते शरीरं पिपासोपद्रवाय। वर्षासु तु मेघ-
जलावतते गूढार्कचन्द्रतारे धाराकुले वियति भूमौ पङ्क-
जलपटलसंवृतायाम् अत्यर्थोपक्लिन्नशरीरेषु विहित-
स्वभावेषु केवलेष्वौषधग्रामेषु तोयानुगतमारुतसंसर्गात्
गुरुप्रवृत्तीनि वमनादीनि भवन्ति। गुरुसमुत्थानानि
शरीराणि तस्माद्वमनादीनां निवृत्तिर्विधीयते। वर्षाभागा-
न्तेभ्य ऋतुभ्यो न चेदात्ययिकं कर्म आत्ययिके कर्मणि
कामभृतुं विकल्प्य कृत्रिमगुणोपधानेन यथर्त्तुगुणविप-
रीतेन भैषज्यं संयोगप्रमाणविकल्पेनोपपाद्य प्राणवीर्यसमं
कृत्वा ततः प्रयोजयेदुत्तमेन यत्नेनावहितः आतुरावस्था-
स्वपि तु कार्य्याकार्य्यं प्रतिकालाकालसंज्ञा तद्यथा-
स्यामवस्थायामस्य भेषजस्याकालः कालः पुनरस्येति।
एतदपि भवत्यवस्थाविशेषेण तस्मादातुरावस्थास्वपि काला-
कालसंज्ञा तस्य परीक्षा मुहुर्मुहुरातुरस्य सर्वावस्थाविशेषा-
वेक्षणं यथावद्भेषजप्रयोगार्थं न ह्यति पतितकालमप्राप्त-
कालं वा भेषजमुपयुज्यमानं यौगिकं भवति। कालो हि
भैषज्यप्रयोगपर्य्याप्तिमभिनिर्वर्त्तयति। प्रवृत्तिस्तु प्रतिकर्म
समारम्भः तस्य लक्षणं भिषगातुरौषधपरिचारकाणां क्रिया
समायोगः। उपायः पुनर्भिषगादीनां सौष्ठवमभिधानञ्च
सम्यक् तस्य लक्षणं भिषगादीनां यथोक्तगुणसम्पद्देश-
कालप्रमाणसात्म्यक्रियादिभिश्च सिद्धिकारणैः सम्यगुपपा-
दितस्यौषधस्यावचारणमिति। एवमेते दश परीक्ष्यविशेषाः
पृथक् पृथक् परीक्षितव्याः परीक्षायास्तु खलु प्रयोजनं

प्रतिपत्तिज्ञानम् । यो यथा विकारः प्रतिपत्तव्यस्तस्य तथानुष्ठानज्ञानं यत्र तु खलु वमनादीनां प्रवृत्तिर्यत्र च निवृत्तिस्तद्व्यासतः सिद्धिषूत्तरमुपदेक्ष्यते प्रवृत्तिनिवृत्तिलक्षणसंयोगे तु गुरुलाघवं संप्रधार्य सम्यगध्यवस्येदन्यतरनिष्ठायाम् । सन्ति हि व्याधयः शास्त्र उत्सर्गापवादैरुपक्रमं प्रतिनिर्दिष्टाः तस्मात् सम्प्रधार्य सम्यगध्यवसेदित्युक्तम् । यानि तु खलु वमनादिषु भेषजद्रव्याण्युपयोगं गच्छन्ति तान्यनुव्याख्यास्यन्ते । फलजीमूतकेक्ष्वाकुकुटजकृतवेधनपत्रपुष्पाणि आरग्वधवृचकस्वादुकण्टकपाठा पाटलि शाङ्गेष्टामूर्वा सप्तपर्णनक्तमालपिचुमन्दपटोलसुषवी गुडूची सोमवल्कक-चित्रकद्वीपशतमूलकषायेश्च मधु मधुक कोविदारकर्बुदारनीपविदुलबिम्बीषणपुष्पी सदा पुष्पी प्रत्यक् पुष्पा कषायैश्च इक्षुकाण्डेक्षु इक्षुवालिका दर्भपोटगलकालङ्कृतकषायैश्च सुमनाः सौमनसायिनी हरिद्रा दारुहरिद्रा वृश्चीव पुनर्नवा महासहा क्षुद्रसहा कषायैश्च शल्मलि शल्मलुकभद्रपर्ण्यैरापर्ण्युपोदकोद्दालकधन्वनराजादनोपचित्रा गोपा शृङ्गाटिकापिच्छाभिश्च पिप्पली पिप्पलीमूलचव्यचित्रकशृङ्गवेरफाणितक्षीरक्षारलवणोदकैश्च यथोपलाभं यथेष्टं वाप्युपसंस्कृत्य वर्तिक्रियाचूर्णावलेहस्नेहकषायमांसरसयवागूयूषकाम्बलिकक्षीरोपधेयान्मोदकानन्यांश्च योगान् विविधाननुविधाय यथार्हं वमनार्हाय दद्यात् । विधिवद्वमनमिति कल्पसंग्रहो वमनद्रव्याणां कल्पस्त्वेषां विस्तरेणोत्तरकालमुपदेक्ष्यते । विरेचनद्रव्याणि तु श्यामात्रिवृत् चतुरङ्गुलतिल्वकमहावृक्षसप्तला शङ्खिनी दन्ती द्रवन्तीनां

क्षीरमूलत्वक् पत्रपुष्पफलानि यथायोगमेतेषां च क्षीर-मूलत्वक् पत्रपुष्पफलैर्विक्लिमा विक्लिमैः अजगन्धाजशृङ्गी क्षीरिणी नीलिनी क्लीतकषायैश्च प्रकीर्योदकीर्यामसूरविदला काम्पिल्यकविडङ्गगवाक्षी कषायैश्च पीलु पियालु मृद्वीका काश्मर्य परूषकबदरदाडिमामलकहरीतकी विभीतकवृश्चीर पुनर्नवा विदारगन्धादिकषायैश्च शीधुसुरासौवीरक तुषोदक मैरेय मेदकमदिरा मधुधान्याम्लकुवलबदरखर्जूरकर्कन्धुभिश्च दधिदधिमण्डोदश्विद्भिश्च गोव्यजादीनां च क्षीरमूत्रैः यथोपलाभं यथेष्टं चाप्युपसंस्कृत्य वर्त्तिक्रियाचूर्णासवलेहस्नेहकषायमांसरसयूषकाम्बलिकयवागुमोदकानन्यांश्च भक्ष्य विकारान् विविधांश्च योगानभिविधाय यथार्हं विरेचनार्हाय दद्याद्विरेचनमिति कल्पसंग्रहो विरेचनद्रव्याणां कल्पस्त्वेषां विस्तरेणोपदेक्ष्यते। उत्तरकालं आस्थापनेषु भूयिष्ठकल्पनानि द्रव्याणि नासतो विस्तरेणोपदिश्यमानानि अपरिसंख्येयानि स्युरतिबहुत्वात् इष्टश्चानतिसंक्षेपविस्तरोपदेशः इष्टश्च केवलं ज्ञानं तस्मादूसत एव तान्यनुव्याख्यास्यन्ते। रससंसर्गविकल्पविस्तारो ह्येषामपरिसङ्ख्येयः समवेतानां रसानां अंशांशबलविकल्पातिबहुत्वात् तस्माद्द्रव्याणां चैकदेशमुदाहरणार्थं रसेष्वनुविभज्य रसैकैकदेशेन च नाम लक्षणार्थं च षड़ास्थापन स्कन्धा रसतोऽनुविभज्य व्याख्यास्यन्ते। यतः षड्विधमास्थापनमाचक्षते भिषजस्तद्दुर्लभतमं संसृष्टरसभूयिष्ठत्वाद् द्रव्याणां तस्मान्मधुराणि च मधुरप्रायाणि च मधुरप्रभावानि च मधुरप्रभावप्रायाण्यपि च-

मधुरस्कन्ध मधुराख्येव सत्वोपदेक्ष्यन्ते। तथेतराणि तद्यथा जीवकर्षभ जीवन्ती वीरातामलकी काकोली क्षीरकाकोली मुद्गपर्णी माषपर्णी सालपर्णी पृश्निपर्ण्य सनपर्णी मेदा महामेदा कर्कटशृङ्गी शृङ्गाटिका छिन्नरुहा छत्रातिच्छत्रा श्रावणी महाश्रावणी सहदेवा विश्वदेवा यष्ट्या बलातिक्षुद्रसहा महासहा ऋद्धि ऋष्यगन्धाश्वगन्धा वृश्चीव पुनर्नवा बृहतीकण्टकारिका एरण्डमोरटश्वदंष्ट्रा संहर्षा शतावरी शतपुष्पा मधूकपुष्पी यष्टीमधु मधूलिका मृद्वीका खर्ज्जूरपरूषकात्मगुप्ता पुष्करबीज कशेरुका राजकशेरुका कालङ्कतकाश्मर्य्यशीतपाक्योदनपाकी तालखर्जूरी मस्तकेक्षिक्षुवालिका दर्भ कुशकाशशालिगुन्द्रोत्कटकशरमूलराजक्षवकर्ष्य प्रोक्ता द्वारदा भाजीवन त्रपुस्य भीरपत्री हंसपदी काकनासा कुलिङ्गा क्षीरवल्ली कपोतवल्ली गोपवल्ली मधुवल्लीति। एषामेवं विधानां मधुरवर्गपरिसंख्यातानां चौषधद्रव्याणां छेद्यानि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समवाप्य पयसा नोदकेनाभ्यासिच्य साधयेद्दर्व्या सततमुपघट्टयं स्तदुपयुक्तं भूयिष्ठेऽम्भसि गतरसेष्वौषधेषु पयसि चानुपदग्धे स्थालीमवतृत्य परिपूतं पयः सुखोष्णं घृततैलवसामज्जलवणफाणितोपहितं वस्तिं वातविकारिणे विधिज्ञो विधिवद्दद्यात्। शीतन्तु मधुसर्पिर्भ्यां उपसंसृज्य पित्तविकारिणे दद्यादिति मधुरस्कन्धः। आम्राम्रातकलिकुचकरमर्दवृक्षाम्लाम्लवेतसकुवलबदरदाडिममातुलुङ्गकण्डीरा मलकमालीतका शीतकदन्तशठैरावतककोशाम्र

धन्वनानां फलानि पत्राणि चाम्रातका श्मन्तकवाङ्करीय चतुर्वंशानां चाम्लिकानां द्वयोः कोलिकयोर्द्वयोश्च शुक्ताम्लिकयो र्ग्राम्यारण्ययोश्च सर्वद्रव्याणि सुरा सौवीर तुषोदकमैरेय मेदका मधु शीधु शुक्ति दधि दधिमण्डोदश्विद्धिरा-न्यम्लादीनि एषामेवं विधानां चाम्लवर्गं परिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा द्रवैः स्थिराण्यवसिच्य साधयित्वोपसंस्कृत्य यथावत् तैलवसामज्जलवणफाणितोपहितं सुखोष्णवस्तिं वातविकारिणे विधिवद्दद्यादिति अम्लस्कन्धः। सैन्धवसौवर्चलकालविडपाक्यानूपकूप्या वालकैलमूलकसामुद्ररौमकौद्भिदौषरपाटेयमपां सुजानीति एवं प्रकाराणि च लवणवर्गपरिसंख्यातानि एतान्यम्लोपहितान्युष्णोदकोपहितानि वा स्नेहवन्ति सुखोष्णं वातविकारिणे विधिज्ञो विधिवद्दद्यादिति लवणस्कन्धः। पिप्पली पिप्पलीमूलहस्तिपिप्पली चव्यचित्रकशृङ्गवेरमरिचाजमोदा विडङ्गतुम्बुरु पीलु तेजोवती एला कुष्ठभल्लातकास्थि हिङ्गु किलिममूलकसर्षपलशुनकरञ्जशिग्रुकमधुरशिग्रुकखरपुष्पाभूस्तृणकसुमुखसुरसकुठेरककाण्डीरकालमालपर्णास च्छवकफणिज्झकक्षारमूत्रपित्तानीति एषां एवं विधानाञ्च कटुकवर्गपरिसंख्याता नामौषद्रव्याणां छेद्यानि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा गोमूत्रेण सह साधयित्वोपस्कृत्य यथावन्मधु तैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद्दद्यादिति कटुकस्कन्धः। चन्दननलदकृतमालनक्तमालनिम्बतुम्बकुटजहरिद्रा दारु हरिद्रामुस्त-

मूर्वा किराततिक्तककटुकारोहिणी त्रायमाणा करीरके-
वुकक्रटिल्लकहृषमण्डूकपर्णी कर्कोटकवार्ताककर्कशकाकमाची
कारवल्ली काको दुम्बरिका सुषव्यति विषा पटोलकुलक-
पाठा गुडूची वेत्राग्रवेतसविकङ्कतवकुलसोमवल्कसप्तपर्ण
सुमनोर्का वल्गुजवचातगरा गुरु वालको शीरार्णोति एषा-
मेवं विधानाञ्च तिक्तवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्या-
नि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा पानी-
येनाभ्यासिच्य साधयित्वोपसंस्कृत्य यथावन्मधु तैललवणो-
पहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिव-
द्दद्यात्। शीतन्तु मधु सर्पिर्भ्यामुपसंस्कृत्य पित्तविका-
रिणे दद्यादिति तिक्तस्कन्धः। प्रियंग्वनन्ताम्रास्थि अम्बष्ठकी
कर्माङ्गरोध्रमोचरससमङ्गा धातकीपुष्पपद्मापद्मकेसरजम्बा-
म्रप्लक्षवटकपीतनोदुम्बराश्वत्थभल्लातकाश्मन्तकशिरीषशिंश-
पा सोमवल्कतिन्दुकपियालबदरकखदिरसप्तपर्णाश्वकर्णस्यन्दना-
र्जुनानि मेद एला वालुकपरिपेलवकदम्बसल्लकी जिङ्गिणी
काशकशेरुका कट्फलवंशपद्मकाशोकसालधवभूर्जाशणपुर-
शमीमाचीकतुङ्ग। जकर्णाश्वकर्ण स्फूर्जकविभीतककुम्भील-
पुष्करबीजाबिसमृणालतालखर्जूरतरुणानीति एषां एवं-
विधानाञ्च कषायवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्या-
नि खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा पानी-
येन सह साधयित्वोपसंस्कृत्य यथावन्मधु तैललवणोपहितं
सुखोष्णं वस्तिं श्लेष्मविकारिणे दद्यादिति शीतन्तु मधु
सर्पिर्भ्यामुपसंस्कृत्य पित्तविकारिणे दद्यादिति कषाय-
स्कन्धः इति।

षड्वर्गाः परिसंख्याता य एते रसभेदतः।
आस्थापनमभिप्रेत्य तान्विद्यात्सार्वरोगिकान् ॥
सर्वशो हि प्रणिहिताः सर्वरोगेषु जानता।
सर्वान् रोगान्नियच्छन्ति येभ्य आस्थपनं हितम् ॥
तेषां तेषां प्रशान्त्यर्थं ये ये न परिकीर्त्तिताः।
द्रव्यवर्गाविकाराणां तेषां ते परिकोपना इति ॥
षडास्थापनस्कन्धा रसतो सुविभज्य व्याख्याताः।

तेभ्यो भिषग्बुद्धिमान् परिसंख्यातमपि यद्द्रव्यमयौगिकं मन्येत तद्विदध्यात्। वर्गमपि वर्गेणोपसंसृजेदेकमेकेनानेकेन वा युक्तिं प्रमाणीकृत्य प्रचरणमिव भिक्षुकस्य वीजमिव कर्षकस्य सूत्रं बुद्धिमतामल्पमपि अनल्पज्ञानाय तस्मात् बुद्धिमतामूहापोह वितर्कः। मन्दबुद्धेस्तु यथोक्तानुगमनमेव श्रेयः। यथोक्तं हि मार्गमनुगच्छन् भिषक् संसाधयति वा कार्थ्यमनतिमहत्त्वा विनिपातयति अनति ह्रस्वत्वादुदाहरणस्येति। अतःपरमनुवासनद्रव्याणि अनुव्याख्यास्यन्ते। अनुवासनं तु स्नेह एव स्नेहस्तु द्विविधः। स्थावरो जङ्गमात्मकश्च तत्र स्थावरात्मकः स्नेहः तैलमतैलं कृत्वोपदिश्यते सर्वतस्तैलप्राधान्यात् जङ्गमात्मकस्तु वसामज्जासर्पिरिति तैलवसामज्ज सर्पिषान्तु यथा पूर्वं श्रेष्ठं वातश्लेष्मविकारेष्वनुवासनीयेषु यथोत्तरं पित्तविकारेषु सर्वे एव वा सर्वेषु योगमायान्ति संस्कारविधि विशेषादिति।

शिरोविरेचनद्रव्याणि पुनरपामार्गपिप्पलीमरिच विडङ्गशिग्रुशिरीषतुम्बुरुविल्वाजाज्य जमोदवार्त्ताकी पृथ्वीका एला हरेणुका फलानि च। सुमुख सुरस कुठेरक गण्डो-

र्कासमालकपर्णासकवकफणिज्जक शृङ्गवेरमूलकलशुनल-
क्षीरौ सर्षपपत्राणि च। अर्कालर्ककुष्ठनागदन्ती वचाभार्गी
श्वेताज्योतिष्मती गवाक्षी कक्षीरपुष्पी वृश्चिकालीवयस्था-
विविधामूलानि च हरिद्रा शृङ्गवेरमूलकलशुनकन्दाश्च लोध्र-
मदन सप्तपर्णनिम्बार्कपुष्पाणि च देवदार्वगुरुसरलसल्लकी-
जिङ्गिण्यसनहिङ्गुनिर्य्यासाश्च तेजोवतीवराङ्गेङ्गुदीशोभा-
ञ्जनबृहती कण्टकारिकात्वच इति शिरोविरेचनं सप्त-
विधम्। फलपत्रमूलकन्दपुष्पनिर्य्यासत्वगाश्रयभेदात् लव-
णकटुतिक्तानि चेन्द्रियोपशयानि तथापराण्यनुक्तान्यपि
द्रव्याणि यथा योगविहितानि शिरोविरेचनार्थमुपदिश्यन्ते
इति।

तत्र श्लोकाः। लक्षणा कार्य्यशिष्याणां परीक्षा कारणं च यत्।

अध्येयाध्यापनविधिः सम्भाषा विधिरेव च॥
षड्भिन्यूर्नानि पञ्चाशद्दशार्थपदानि च।
पदानि दशचान्यानि कारणादीनि तत्त्वतः॥
सम्प्रश्नश्च परीक्षादिर्नवको वमनादिषु।
भिषजितीये रोगाणां विमाने सम्प्रदर्शितः॥

बहुविधमिदमुक्तमर्थजातं बहुविधवाक्यविचित्रमर्थकान्तं
बहुविधशुभशब्दसन्धियुक्तं बहुविधवादनिसूदनं परेषाम्।
इमां मतिं बहुविधहेतुसंश्रयां विजज्ञिवान् परमतवादसूदनीं
नलीयते परवचनावमर्दनैर्न शक्यते परवचनैश्च मर्दितुम्॥

इति रोगभिषज्जितीयं विमानं समाप्तश्चेदं विमानस्थानकम्।

आदित्यस्य मणेर्यद्वत्तापिताद्रविरश्मिभिः ।
वह्निः सञ्जायते तस्या द्रवस्तत्र न कामिता ॥
मणेरपि न कामित्वं तद्वद्देवस्य चेष्टितम् ।
आदित्यवत् शिवो ज्ञेयः शक्तिर्मणिरिव स्थिता ॥

---

## प्रथमोऽध्यायः ।

अथातः कतिधा पुरुषीयं शारीरं व्याख्यास्यामः ।

इति हस्माहभगवानात्रेयः ।

अग्निवेश उवाच ।

कतिधा पुरुषो धीमन् ! धातुभेदेन भिद्यते ।
पुरुषः कारणं कस्मात् प्रभवः पुरुषस्य कः ॥
किमज्ञोऽज्ञः सनित्यः किं किमनित्यो निदर्शितः ।
प्रकृतिः का विकाराः के किं लिङ्गं पुरुषस्य च ॥
निष्क्रियञ्च स्वतन्त्रञ्च वशिनं सर्वगं विभुम् ।
वदन्त्यात्मानमात्मज्ञाः क्षेत्रज्ञं साक्षिणं तथा ॥
निष्क्रियस्य क्रियार्थस्य भगवन् ! विद्यते कथम् ।
स्वतन्त्रश्चेदनिष्टासु कथं योनिषु जायते ॥
वशी यद्यसुखैः कस्माद्भावैराक्रम्यते बलात् ।
सर्वः सर्वगतत्वाच्च वेदनाः किं न वेत्ति सः ॥
न पश्यति विभुः कस्मात् शैलकुड्यतिरस्कृतम् ।

क्षेत्रज्ञः क्षेत्रमथवा किं पूर्वमिति संशयः॥
ज्ञेयं क्षेत्रं विना पूर्वं क्षेत्रज्ञो हि न युज्यते।
क्षेत्रञ्च यदि पूर्वं स्यात् क्षेत्रज्ञः स्यादशाश्वतः॥
साक्षिभूतस्य कस्यायं कर्ता ह्यन्यो न विद्यते।
स्यात्कथञ्चाविकारस्य विशेषो वेदनाकृतः॥
अथ चार्तस्य भगवंस्तिसृणां काञ्चिकित्सति।
अतीतां वेदनां वैद्यो वर्तमानां भविष्यतीम्॥
भविष्यन्त्या असंप्राप्तिरतीताया अनागमः।
साम्प्रतिक्या अपि स्थानं नास्त्यार्तेः संशयो ह्यतः॥
कारणं वेदनानां किं किमधिष्ठानमुच्यते।
क्व चैता वेदनाः सर्वा निवृत्तिं यान्त्यशेषतः॥
सर्ववित् सर्वविन्यासी सर्वसंयोगनिःसृतः।
एकः प्रशान्तो भूतात्मा कैर्लिङ्गैरुपलभ्यते॥
इत्यग्निवेशस्य वचः श्रुत्वा मतिमतां वरः।
सर्वं यथावत् प्रोवाच प्रशान्तात्मा पुनर्वसुः॥
खादयः चेतना षष्ठा धातवः पुरुषः स्मृतः।
चेतना धातुरप्येकः स्मृतः पुरुषसंज्ञकः॥
पुनश्च धातुभेदेन चतुर्विंशतिकः स्मृतः।
मनोदशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी॥
लक्षणं मनसो ज्ञानस्याभावो भाव एव वा।
सति ह्यात्मेन्द्रियार्थानां सन्निकर्षेण वर्त्तते॥
वैवृत्त्यान्मनसो ज्ञानं सान्निध्यात्तच्च वर्त्तते।
अणुत्वमथचैकत्वं द्वौ गुणौ मनसः स्मृतौ॥
चिन्त्यं विचार्य्यमूह्यञ्च ध्येयं सङ्कल्प्यमेव च।

यत्किञ्चिन्मनसो ज्ञेयं तत्सर्वं ह्यर्थसंज्ञकम् ॥
इन्द्रियाभिग्रहः कर्म मनसः स्वस्य निग्रहः ।
ऊहो विचारश्च ततः परं बुद्धिः प्रवर्त्तते ॥
इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते ।
कल्प्यते मनसाप्यूर्द्धं गुणतो दोषतो यथा ॥
जायते विषये तत्र या बुद्धिर्निश्चयात्मिका ।
व्यवस्यति तया वक्तुं कर्त्तुं वा बुद्धिपूर्वकम् ॥
एकैकाधिकयुक्तानि खादीनामिन्द्रियाणि तु ।
पञ्चकर्मानुमेयानि येभ्यो बुद्धिः प्रवर्त्तते ॥
हस्तपादगुदोपस्थं जिह्वेन्द्रियमथापि वा ।
कर्मेन्द्रियाणि पञ्चैव पादौ गमनकर्मणि ॥
पायूपस्थौ विसर्गार्थौ हस्तौ ग्रहणधारणे ।
जिह्वा वागिन्द्रियं वाक् च सत्याज्योतिस्तमोऽनृता ॥
महाभूतानि खं वायुरग्निरापः क्षितिस्तथा ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः ॥
तेषामेको गुणः पूर्वो गुणवृद्धिः परे परे ।
पूर्वः पूर्वगुणश्चैव क्रमशो गुणिषु स्मृतः ॥
खरद्रवचलोष्णत्वं भूजलानिलतेजसाम् ।
आकाशस्य प्रतीघातो दृष्टं लिङ्गं यथाक्रमम् ॥
लक्षणं सर्वमेवैतत् स्पर्शनेन्द्रियगोचरः ।
स्पर्शनेन्द्रियविज्ञेयः स्पर्शो हि सविपर्य्ययः ॥
गुणाः शरीरे गुणिनां निर्दिष्टाः चिह्नमेव च ।
अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः ॥
यावदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्त्तते ।

याति सा तेन निर्देशं मनसा च मनोभवा ॥
भेदाः कार्य्येन्द्रियार्थानां बह्वो वै बुद्धयः स्मृताः।
आत्मेन्द्रियमनोर्थानामेकैका सन्निकर्षजा ॥
अङ्गुल्यङ्गुष्ठतलजास्तन्त्री वीणानखोद्भवः।
दृष्टः शब्दो यथा बुद्धिर्दृष्टा संयोगजा तथा ॥
बुद्धीन्द्रियमनोर्थानां विद्याद्योगं परस्परम्।
चतुर्विंशक इत्येष राशिः पुरुषसंज्ञकः ॥
रजस्तमोभ्यां युक्तस्य संयोगोऽयमनन्तवान्।
ताभ्यां निराकृताभ्यान्तु सत्त्ववृद्ध्या निवर्त्तते ॥
अत्र कर्मफलञ्चात्र ज्ञानं चात्र प्रतिष्ठितम्।
अत्र मोहः सुखं दुःखं जीवितं मरणं स्वतः ॥
एवं यो वेद तत्त्वेन स वेद प्रलयोदयौ।
पारम्पर्य्यं चिकित्सा च ज्ञातव्यं यच्च किञ्चन ॥
भास्तमः सत्यमनृतं वेदाः कर्म शुभाशुभम्।
न स्युः कर्त्ता वेदिता च पुरुषो न भवेद्यदि ॥
नाश्रयो नासुखं नार्त्तिर्न गतिर्नागतिर्न वाक्।
न विज्ञानं न शास्त्राणि न जन्ममरणं न च ॥
न बन्धो न च मोक्षः स्यात् पुरुषो न भवेद्यदि।
कारणं पुरुषस्तस्मात् कारणज्ञैरुदाहृतः ॥
न चेत् कारणमात्मा स्याद्भादयः स्युरहेतुकाः।
न चैषु सम्भवेत् ज्ञानं न च तैः स्यात् प्रयोजनम् ॥
मृद्दण्डचक्रप्रकृतं कुम्भकारादृते घटम्।
कृतं मृत्तृणकाष्ठैश्च गृहकाराद्विना गृहम् ॥
यो वदेत्स वदेद्देहं सम्भूयकरणैः कृतम्।

विनश्च कर्तारमप्रामाण्यात्यागम वहिष्कृत: ॥
कारणं पुरुष: सर्वैः प्रमाणैरुपलभ्यते ।
येभ्यः प्रमेयं सर्वेभ्यः आगमेभ्यः प्रमीयते ॥
न ते तत्सदृशास्त्वन्ये पारम्पर्य्यसमुत्थिताः ।
सारूप्याद्येन एवेति निर्दिश्यन्ते नवा नवा: ॥
भावास्तेषां समुदयो निरीशः सत्त्वसंज्ञकः ।
कर्ता भोक्ता न स पुमानिति केचिद्व्यवस्थिताः ॥
तेषामन्यैः कृतस्यान्ये भावाभावैर्नवाः फलम् ।
भुज्जते सदृशाः प्राप्तं यैरात्मा नोपदिश्यते ॥
करणान्यान्यतः दृष्टा कर्तुः कर्ता स एव तु ।
कर्ता हि करणैर्युक्तः कारणं सर्वकर्म्मणाम् ॥
निमेषकालाद्भावानां कालः शीघ्रतरोऽत्यये ।
भग्नानां च पुनर्भाव: कृतं नान्यमुपैति च ॥
मतं तत्त्वविदामेतद्यस्मात्तस्मात् स कारणम् ।
क्रियोपभोगी भूतानां नित्यः पुरुषसंज्ञकः ॥
अहङ्कार: फलं कर्म देहान्तरगति: स्मृतिः ।
विद्यते सति भूतानां कारणे देहमन्तरा ॥
प्रभवो न ह्यनादित्वाद्विद्यते परमात्मनः ।
पुरुषो राशि संज्ञस्तु मोहेच्छाद्वेष्यकर्म्मजः ॥
आत्मज्ञ: करणैर्योगात् ज्ञानं त्वस्य प्रवर्त्तते ।
करणानामवैमल्यादयोगाद्वा न वर्त्तते ॥
पश्यतोऽपि यथा दर्शे संक्लिष्टे नास्ति दर्शनम् ।
तत्त्वं जले वा कलुषे चेतस्युपहते तथा ॥
करणानि मनो बुद्धिर्बुद्धि कर्मेन्द्रियाणि च ।

कर्त्तुः संयोगजं कर्म्म वेदना बुद्धिरेव च ॥
नैकः प्रवर्त्तते कर्त्तुं भूतात्मा नाश्नुते फलम्।
संयोगाद्वर्त्तते सर्वं मकृतेनास्ति किञ्चन ॥
न ह्येको वर्त्तते भावो वर्त्तते नाप्यहेतुकः।
शीघ्रगत्वात् स्वभावत्वं भावो न व्यतिवर्त्तते ॥
अनादिः पुरुषो नित्यो विपरीतस्तु हेतुजः।
सदकारणवन्नित्यं दृष्टं हेतुजमन्यथा ॥
तदेव भावादग्राह्यं नित्यत्वान्न कुतश्चन।
भावात् ज्ञेयं तदव्यक्तमचिन्त्यं व्यक्तमन्यथा ॥
अव्यक्तमात्मा चेतज्ञः शाश्वतो विभुरव्ययः।
तस्माद्यदन्यत्तद्व्यक्तं वक्ष्यते चापरं द्वयम् ॥
व्यक्तं चेन्द्रियकञ्चैव गृह्यते तद्यदिन्द्रियैः।
अतोऽन्यत्पुनरव्यक्तं लिङ्गग्राह्यमतीन्द्रियम् ॥
खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः।
भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोडश ॥
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च।
समनस्काश्च पञ्चार्था विकारा इति संज्ञिताः ॥
इति चेत्रं समुद्दिष्टं सर्वमव्यक्त वर्जितम्।
अव्यक्तमस्य क्षेत्रस्य चेतज्ञ ऋषयो विदुः ॥
जायते बुद्धिरव्यक्ता बुद्ध्याहमिति मन्यते।
परञ्चादीन्यहङ्कार उपादत्ते यथा क्रमम् ॥
ततः सम्पूर्णं सर्वाङ्गो जातोऽभ्युदित उच्यते।
पुरुषः प्रलये चेष्टैः पुनर्भावैर्वियुज्यते ॥
अव्यक्ताद्व्यक्ततां याति व्यक्तादव्यक्ततां पुनः।

रजस्तमोभ्यामाविष्टः चक्रवत्परिवर्त्तते ॥
येषां द्वन्द्वे परा शक्तिरहङ्कारपराश्च ये ।
उदयप्रलयौ तेषां न तेषां ये त्वतोऽन्यथा ॥
प्राणापानौ निमेषाद्या जीवनं मनसो गतिः ।
इन्द्रियान्तर सञ्चारः प्रेरणं धारणञ्च यत् ॥
देशान्तर गतिः स्वप्ने पञ्चत्वग्रहणं तथा ।
दृष्टस्य दक्षिणे नाक्ष्णा सव्येनापगमस्तथा ॥
इच्छाद्वेषः सुखन्दुःखम्प्रयत्नश्चेतना धृतिः ।
बुद्धिः स्मृति रहङ्कारो लिङ्गानि परमात्मनः ॥
यस्मात्समुपलभ्यन्ते लिङ्गान्येतानि जीवतः ।
न मृतस्यात्म लिङ्गानि तस्मादाहुर्महर्षयः ॥
शरीरे हि गते तस्मिन् शून्यागार मचेतनम् ।
पञ्चभूतावशेषत्वात् पञ्चत्वं गत मुच्यते ॥
अचेतनं क्रियावच्च मनश्चेतयिता परः ।
युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ॥
चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते ।
अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ॥ ]
यथा स्वेनात्मनः सर्वं मनः सर्वासु योनिषु ।
प्राणैस्तन्त्रयते प्राणी नह्यन्योऽन्यस्य तन्त्रकः ॥
वशीतत्कुरुते कर्म यत्कृत्वा फलमश्नुते ।
वशीचेतः समाधत्ते वशी सर्वं निरस्यति ॥
देही सर्वगतोह्यात्मा स्वे स्वे संस्पर्शनेन्द्रिये ।
सर्वाः सर्वाश्रयस्थास्तु नात्माऽतो वेत्ति वेदनाः ॥
विभुत्वमत एवास्य यस्मात्सर्वगतो महान् ।

मनसश्च समाधानात् पश्यत्यात्मा तिरस्कृतम् ॥
नित्यानुबन्धं मनसा देह कर्मानुपातिना।
सर्वयोनि गतं विद्या देकयोनावपि स्थितम् ॥
आदिर्नास्त्यात्मनः चेत्रपारम्पर्यमनादिकम्।
अतस्तयोरनादित्वात्किं पूर्वमिति नोच्यते ॥
ज्ञः साचीत्युच्यते नाज्ञः साचीह्यात्मा यतः स्मृतः।
सर्वभावा हि सर्वेषां भूताना मात्मसाचिकाः ॥
नैकः कदाचिन्नूतात्मा लचणैरुप लभ्यते।
विशेषोऽनुपलभ्यस्य तस्य नैकस्य विद्यते ॥
संयोगः पुरुषस्येष्टो विशेषो वेदनाकृतः।
वेदना यत्र नियता विशेषस्तत्र तत्कृतः ॥
चिकित्सति भिषक् सर्वाः त्रिकाला वेदना इति।
यथा युक्त्या वदन्त्येके सा युक्तिरुपधार्यताम् ॥
पुनस्तच्छिरसः शूलं ज्वरः स पुनरागतः।
पुनः सकासो बलवांश्छर्दिस्सत्पुनरागमः ॥
एभिः प्रसन्नैर्वचनैरतीतागमनं मतम्।
कालश्चायमतीतानामर्त्तीनां पुनरागतः ॥
तमर्त्तिकाल मुद्दिश्य भेषजं यत्प्रयुज्यते।
अतीतानां प्रशमनं वेदनानां तदुच्यते ॥
आपस्ताः पुनरागुन्द्रा याभिः सस्यं पुराहतम्।
यथा प्रक्रियते सेतुः प्रतिकर्म तथाश्रयेत् ॥
पूर्वरूपं विकाराणां दृष्ट्वा प्रादुर्भविष्यताम्।
या क्रिया क्रियते सा च वेदना हन्त्यनागताम् ॥
पारम्पर्यानुबन्धस्तु दुःखानां विनिवर्त्तते।

सुखहेतूपहारेण सुखञ्चापि प्रवर्त्तते ॥
न समायान्ति वैषम्यं विषमाः समतां नच ।
हेतुभिः सदृशा नित्यं जायन्ते देहधातवः ॥
युक्ति मेतां पुरस्कृत्य त्रिकालं वेदनां भिषक् ।
हन्तीत्युक्ता चिकित्सा तु नैष्ठिकीया विनोपधाम् ॥
उपधा हि परो हेतुर्दुःखदुःखाश्रय प्रदः ।
त्यागः सर्वोपधानाञ्च सर्वदुःखव्यपोहकः ॥
कोषकारो यथा ह्यंशूनुपादत्ते वधप्रदान् ।
उपादत्ते तथार्थेभ्यः तृष्णामज्ञः सदातुरः ॥
यस्त्वग्नि कल्पानर्थान् ज्ञो ज्ञात्वा तेभ्यो निवर्त्तते ।
अनारम्भाद संयोगात्तं योगं नोपतिष्ठते ॥
धी धृति स्मृति विभ्रंशः सम्प्राप्तिः कालकर्म्मणाम् ।
असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतवः ॥
विषमाभिनिवेशो यो नित्यानित्ये हिताहिते ।
ज्ञेयः स बुद्धिविभ्रंशः समं बुद्धिर्हि पश्यति ॥
विषय प्रवणं सत्त्वं धृति भ्रंशान्न शक्यते ।
नियन्तु महिताद्‌र्थाद्धृतिर्हि नियमात्मिका ॥
तत्त्वज्ञाने स्मृतिर्यस्य रजो मोहावृतात्मनः ।
भ्रश्यते स स्मृति भ्रंशः स्मर्त्तव्यं हि स्मृतौ स्थितम् ॥
धी धृति स्मृति विभ्रष्टः कर्म्म यत्कुरुते शुभम् ।
प्रज्ञापराधं तद्विद्यात्सर्वदोष प्रकोपनम् ॥
उदीरणं गतिमता मुदीर्णानाञ्च निग्रहः ।
सेवनं साहसानाञ्च नारीणाञ्चाति सेवनम् ॥
कर्म्मकालातिपातश्च मिथ्यारम्भश्च कर्म्मणाम् ।

विनयाचारलोपश्च पूज्यानाञ्चाभिधर्षणम्॥
ज्ञातानां स्वयमर्थानामहितानान्निषेवणम्।
पाश्चिमोन्मादिकानाञ्च प्रत्ययानां निषेवणम्॥
अकालादेशसञ्चारौ मैत्रीसंक्लिष्टकर्मभिः।
इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्जनम्॥
ईर्ष्यामानभयक्रोधलोभमोहमदभ्रमाः।
तज्जं वा कर्मयत्क्लिष्टं यद्वा तद्देहकर्म च॥
यच्चान्यदीदृशं कर्म रजोमोहसमुत्थितम्।
प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम्॥
बुद्ध्या विषमविज्ञानं विषमञ्च प्रवर्तनम्।
प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत्॥
निर्दिष्टा कालसम्प्राप्तिर्व्याधीनां व्याधिसंग्रहे।
चयप्रकोपप्रशमाः पित्तादीनां यथा पुरा॥
मिथ्यातिहीनलिङ्गाश्च वर्षान्ता रोगहेतवः।
जीर्णभुक्तप्रजीर्णान्नकालस्थितिश्च या॥
पूर्वमध्यापराह्णाश्च रात्र्यायामास्त्रयश्च ये।
एषु कालेषु नियता ये रोगास्ते च कालजाः॥
अन्येद्युष्को तृतीयकाद्यो तृतीयक चतुर्थकौ।
स्वे स्वे काले प्रवर्तन्ते काले ह्येषां बलागमः॥
एते चान्ये च ये केचित्कालजा विविधागदाः।
अनागते चिकित्स्याः स्ते बलकाले विजानता॥
कालस्य परिणामेन जरामृत्युनिमित्तजाः।
रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः॥
निर्दिष्टं दैवशब्देन कर्म यत्पौर्वदैहिकम्।

हेतुस्तदपि काले हि रोगाणामुपलभ्यते ॥
न हि कर्म महत्किञ्चित्फलं यस्य न भुज्यते ।
क्रियाघ्नाः कर्मजारोगाः प्रशमं यान्ति तत्क्षयात् ॥
अत्युग्रशब्द श्रवणात् श्रवणात्सर्वशोन च ।
शब्दानाञ्चाभि हीनानां भवन्ति श्रवणाज्जनाः ॥
परुषोद्भीषणाशस्ता प्रियव्यसन सूचकैः ।
शब्दैः श्रवणसंयोगो मिथ्यासंयोग उच्यते ॥
असं स्पर्शोऽति संस्पर्शो मिथ्यायोगः स उच्यते ।
रूपाणां भास्वतां दृष्टिर्विनश्यति च दर्शनात् ॥
दर्शनाच्चाति सूक्ष्माणां सर्वशश्चाप्य दर्शनात् ।
द्विष्टभैरव वीभत्सदूराति श्लिष्टदर्शनात् ॥
तामसानाञ्च रूपाणां मिथ्यासंयोग उच्यते ।
अत्यादान मनादानमोक्त सात्म्यादिभिश्च यत् ॥
रसानां विषमादान मल्पादानञ्च दूषणम् ।
अति मृदति तीक्ष्णानां गन्धानामुप सेवनम् ॥
असेवनं सर्वशश्च घ्राणेन्द्रिय विनाशनम् ।
प्रतिभूत विषद्विष्ट गन्धाये चाप्यनार्तताः ॥
तैर्गन्धैर्घ्राणसंयोगो मिथ्यायोगः स उच्यते ।
इति सात्म्यार्थसंयोगस्त्रिविधो दोषकम्पनः ॥
असात्म्यमिति तद्विद्याद्यन्नायाति सहात्मताम् ।
मिथ्याभियोगहीनेभ्यो यो व्याधिरुपजायते ॥
शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियको बुधैः ।
वेदनानामसात्म्यानामित्येते हेतवः स्मृताः ॥
सुखहेतुर्मतस्त्वेकः समयोगः सुदुर्लभः ।

नेन्द्रियाणि नचैवार्थाः सुखदुःखस्य हेतवः ॥
हेतुस्तु सुखदुःखस्य योगो दृष्टश्चतुर्विधः।
सन्तीन्द्रियाणि सन्त्यर्था योगो नच नचास्ति रुक् ॥
न सुखं कारणं तस्माद्योग एव चतुर्विधः।
नात्मेन्द्रियं मनो बुद्धि गोचरं कर्म वा विना ॥
सुखदुःखं यथा यच्च बोद्धव्यं तत्तथोच्यते।
स्पर्शनेन्द्रिय संस्पर्शः स्पर्शो मानस एव च ॥
द्विविधः सुखदुःखानां वेदनानां प्रवर्त्तकः।
इच्छाद्वेषात्मिका तृष्णा सुखदुःखात् प्रवर्त्तते ॥
तृष्णा च सुखदुःखानां कारणं पुनरुच्यते।
उपादत्ते हि सा भावान् वेदनाश्रयसंज्ञकान् ॥
स्पृश्यते नानुपादाने न स्पृष्टो वेत्ति वेदनाः।
वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः ॥
केशलोमनखाग्रान्नमलद्रवगुणैर्विना।
योगो मोक्षे च सर्वासां वेदनानामवर्त्तनम् ॥
मोक्षे निवृत्तिर्निःशेषा योगो मोक्षप्रवर्तकः।
आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्तते ॥
सुखदुःखमनारम्भादात्मस्थे मनसि स्थिते।
निवर्त्तते तदुभयं वशित्वं चोपजायते ॥
सशरीरस्य योगज्ञास्तद्योगमृषयो विदुः।
आवेशश्चेतसो ज्ञानमर्थानां कर्मतः क्रिया ॥
दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्य दर्शनम्।
इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ॥

शुद्धसत्त्वसमाधानात्तत्सर्वमुपजायते ।
मोक्षो रजस्तमो भावाद्बलवत्कर्मसंक्षयात् ॥
वियोगः कर्मसंयोगैरपुनर्भाव उच्यते ।
सतामुपासनं सम्यगसतां परिवर्जनम् ॥
व्रतचर्य्योपवासश्च नियमाश्च पृथग्विधाः ।
धारणं धर्म्मशास्त्राणां विज्ञानं विजने रतिः ॥
विषयेष्वरतिर्मोक्षे व्यवसायः पराधृतिः ।
कर्म्मणामसमारम्भाः कृतानाञ्च परिक्षयः ॥
नैष्क्रम्यमनहङ्कारः संयोगे भयदर्शनम् ।
मनो बुद्धि समाधानमर्थं तत्त्वपरीक्षणम् ॥
तत्त्वस्मृतेरुपस्थानात् सर्व्वमेतत् प्रवर्त्तते ।
स्मृतिः सत्सेवनाद्यैश्च धृत्यन्तैरुपलभ्यते ॥
स्मृत्वा स्वभावं भावानां स्मरन्दुःखात् प्रमुच्यते ।
वक्ष्यन्ते कारणान्यष्टौ स्मृतिर्यैरुपजायते ॥
निमित्तरूपग्रहणात् सादृश्यात् सविपर्य्ययात् ।
सत्त्वानुबन्धादभ्यासात् ज्ञानरूपात् पुनः श्रुतात् ॥
दृष्टश्रुतानुभूतानां स्मरणात् स्मृतिरुच्यते ।
एतत्तदेकमयनमुक्तं मोक्षस्य दर्शितम् ॥
तत्त्वस्मृतिबलं येन गता न पुनरागताः ।
सर्वं कारणवद्दुःखमस्वञ्चानित्यमेव च ॥
न चात्मकृतकं तद्धि तत्र चोत्पद्यते स्वता ।
यावन्नोत्पद्यते सत्या बुद्धिर्नैतदहं यथा ॥
नैतत् मम च विज्ञाय ज्ञः सर्वमतिवर्त्तते ।
तस्मिंश्चरमसन्न्यासे समूलाः सर्ववेदनाः ॥

सुसंज्ञा ज्ञानविज्ञाना निवृत्तिं यान्त्यशेषतः।
अतःपरं ब्रह्मभूतो भूतात्मा नोपलभ्यते॥
निःसृतः सर्वभावेभ्यः चिह्नं यस्य न विद्यते।
गतिर्ब्रह्मविदां ब्रह्म तच्चाक्षरमलक्षणम्॥
ज्ञानं ब्रह्मविदाञ्चात्र नाज्ञस्तत् ज्ञातुमर्हति। इति।
तत्र श्लोकः। प्रश्नाः पुरुषमाश्रित्य त्रयोविंशतिरुत्तमाः।
कतिधा पुरुषीयेऽस्मिन्निर्णीतास्तत्त्वदर्शिना॥
इति कतिधा पुरुषीयं शारीरं समाप्तम्।

---

## द्वितीयोऽध्यायः।

अथातस्तुल्यगोत्रीयं शारीरं व्याख्यास्यामः।

अतुल्यगोत्रस्य रजः क्षयान्ते रहोविसृष्टं मिथुनीकृतस्य।
किं स्याच्चतुष्पात्प्रभवञ्च षड्भ्यो यत्स्त्रीषु गर्भत्वमुपैति पुंसः॥
शुक्रं तदस्य प्रवदन्ति धीरा यद्धीयते गर्भसमुद्भवाय।
वाय्वग्निभूम्यब्गुणपादवत्तत् षड्भ्यो रसेभ्यः प्रभवश्च तस्य॥
सम्पूर्णदेहः समये सुखञ्च गर्भः कथं केन च जायते स्त्री।
गर्भं चिराद्विन्दति सप्रजापि भूत्वाथवा नश्यति केन गर्भः॥
शुक्रासृगात्माशयकालसम्पद्यस्योपचारश्च हितैस्तथार्थैः।
गर्भश्च काले च सुखी सुखञ्च सञ्जायते सम्परिपूर्णदेहः॥
योनिप्रदोषान्मनसोऽभितापात् शुक्रासृगाहारविहारदोषात्।

अकालयोगाद्दलसङ्क्ष्याच्च गर्भश्चिराद्विन्दति सप्रजापि ॥
असृङ् निरुद्धं पवनेन नार्या गर्भं व्यवस्यन्त्यबुधाः कदाचित्
गर्भस्य रूपं हि करोति तस्यास्तदस्रमस्रावि विवर्द्धमानम् ॥
तदग्नि सूर्य्यश्रमशोकरोगैरुष्णान्नपानैरथवा प्रवृत्तम् ।
दृष्ट्वासृगेकेन च गर्भसंज्ञाः केचिन्नरा भूतहृतं वदन्ति ॥
ओजोशनानां रजनीचराणां आहारहेतोर्न शरीरमिष्टम् ।
गर्भं हरेयुर्यदि तेन मातुर्लब्धावकाशं न हरेयुरोजः ॥
कन्यां सुतं वा सहितौ पृथग्वासुतौ सुते वा तनयान् बहून् वा ।
कस्मात् प्रसूते सुचिरेण गर्भं एकोऽभिवृद्धिञ्चयमभ्युपैति ॥
रक्तेन कन्यामधिकेन पुत्रं शुक्रेण तेनैव द्विधागतेन ।
बीजेन कन्याञ्च सुतञ्च सूते यथास्व बीजान्यतराधिकेन ॥
शुक्राधिकं द्वैधमुपैति बीजं यस्याः सुतौ सा सहितौ प्रसूते ।
रक्ताधिकं वा यदि भेदमेति द्विधा सुते सा सहिते प्रसूते ॥
भिनत्ति यावद्बहुधा प्रपन्नः शुक्रार्तवं वायुरति प्रवृद्धः ।
तावन्त्यपत्यानि यथा विभागं कर्मात्मकान्यस्ववशात् प्रसूते ॥
आहारमाप्नोति यथा न गर्भः शोषं समाप्नोति परिस्रुतिं वा
तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपिस्यात् ॥
कर्मांशकत्वाद्विषमांशभेदात् शुक्रासृजो वृद्धिमुपैति कुक्षौ ।
एकोऽधिकान्न्यूनतरां द्वितीय एवं यमेऽप्यभ्यधिको विशेषः ॥
कस्माद्द्विरेताः पवनेन्द्रियो वा संस्कारवाही नरनाभि पिण्डौ
वक्री तथेर्ष्याभिरतिः कथं वा सञ्जायते वातकपिण्डको वा ॥
बीजात् समांशादुपतप्तबीजात् स्त्रीपुंसलिङ्गी भवति द्विरेताः
शुक्राशयं गर्भगतस्य हत्वा करोति वायुः पवनेन्द्रियत्वम् ॥
शुक्राशयद्वारविघट्टनेन संस्कारवाहं हि करोति वायुः ।

मन्दाल्पबीजावबलावहर्षौ क्लीबौ च हेतुर्विकृतिद्वयस्य॥
मातुर्व्यवाय प्रतिघेन वक्रीस्याद्बीजदौर्बल्यतया पितुश्च।
ईर्ष्याभिभूतावपि मन्दहर्षा वीर्यारतेरेव वदन्ति हेतुम्॥
वाय्वग्नि दोषाद्वृषणौ तु यस्य नाशं गतौ वातिकपण्डकः सः।
इत्येवमष्टौ विकृति प्रकाराः कर्मात्मकानामुपलक्षणीयः॥
गर्भस्य सद्योनुगतस्य कुक्षौ स्त्रीपुंनपुंसामुदरस्थितानाम्।
किं लक्षणं कारणमिष्यते किं सरूपतां येन च यात्यपत्यम्॥
निष्ठीविका गौरवमङ्गसादस्तन्द्रा प्रहर्षौ हृदयव्यथा च।
तृप्तिश्च बीजग्रहणाच्च योन्यागर्भस्य सद्योनुगतस्य लिङ्गम्॥
सव्याङ्गचेष्टा पुरुषार्थिनी स्त्री स्त्री स्वप्नपानाशनशीलचेष्टा।
सव्याङ्गगर्भा च नच वृत्तगर्भा सव्यप्रदुग्धास्त्रियमेव सूते॥
पुत्रन्त्वतो लिङ्गविपर्ययेण व्यामिश्र लिङ्गं प्रकृतिं तृतीया।
गर्भोपपत्तौ तु मनः स्त्रियायं जन्तुं व्रजेत्तत्सदृशं प्रसूते॥
गर्भस्य चत्वारि चतुर्विधानि भूतानि माता पितृकर्मजानाम्।
तानि व्यवस्येत् सदृशत्वलिङ्गम् सत्वं यथामूकमपि व्यवस्येत्॥
कस्मात्प्रजां स्त्रीविकृतं प्रसूते हीनाधिकाङ्गीं विकलेन्द्रियाञ्च।
देहात्कथं देहमुपैति चान्यमात्मा सदा कैरनुबध्यते च॥
बीजात्मकर्माशयकालदोषैर्मातुस्तथाहारविहारदोषैः।
कुर्वन्ति दोषा विविधा प्रदुष्टाः संस्थानवर्णेन्द्रियवैकृतानि॥
वर्षासु काष्ठाश्मघनाम्बुवेगास्तरोः सरित्स्रोतसि संस्थितस्य।
यथैव कुर्युर्विकृतिं तथैव गर्भस्य कुक्षौ नियतस्य दोषाः॥
भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात्।
कर्मात्मकत्वान्नतु तस्य दृश्यं दिव्यं विना दर्शनमस्ति रूपम्।
सः सर्वगः सर्वशरीरभृच्च स विश्वकर्मा स च विश्वरूपः॥

स चेतना धातुरतीन्द्रियश्च स नित्ययुक् सानुशयः स एव ।
रसाश्च माता पितृसम्भवानि रजश्च शुक्रञ्च वदन्ति गर्भं ॥
आप्यायते शुक्रमसृक् सुभूतैर्यैस्तानि भूतानि रसोद्भवानि ।
भूतानि चत्वारि तु कर्मजानि यान्यात्मनीनानि विशन्ति गर्भं
सबीजधर्म्मी ह्यपरापराणि देहान्तराण्यात्मनि याति यानि ।
रूपाद्धि रूपप्रभवः प्रसिद्धः कर्मात्मकानां मनसो मनस्तः ॥
भवन्ति ये त्वाकृतिबुद्धिभेदा रजस्तमस्तत्र च कर्म्महेतुः ।
अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तरूपः ।
न कर्म्मणा नैव मनो मतिभ्यां न चाप्यहङ्कारविकारदोषैः ।
रजस्तमोभ्यान्तु मनोऽनुबद्धं ज्ञानं विना तत्र हि सर्वदोषाः ॥
गतिप्रवृत्त्योस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म्म ।
रोगाः कुतः संशमनं किमेषां हर्षस्य शोकस्य च किं निमित्तं ॥
शरीरसत्त्वप्रभवा विकाराः कथं न शान्ताः पुनरापतेयुः ।
प्रज्ञापराधो विषमास्तथार्था हेतुस्तृतीयः परिणामकालः ॥
सर्वामयानां त्रिविधा च शान्तिर्ज्ञानार्थकाला समयोगयुक्ताः ।
धर्म्याः क्रिया हर्षनिमित्तमुक्तास्ततोऽन्यथा शोकवशं नयन्ति ॥
शरीरसत्त्वप्रभवास्तु दोषास्तयोरवृत्त्या न भवन्ति भूयः ।
रूपस्य सत्त्वस्य च सन्ततिर्या नोक्तस्तदादिर्नहि सोऽस्ति कश्चित् ॥
तयोरवृत्तिः क्रियते पराभ्यां धृतिस्मृतिभ्यां परया धिया च ।
सत्त्वाश्रये वा द्विविधे यथोक्ते पूर्वं गदेभ्यः प्रतिकर्म नित्यम् ॥
जितेन्द्रियं नानुपतन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवं ।
दैवं पुरा यत्कृतमुच्यते तु तत्पौरुषं यत्त्विह कर्म्म दृष्टम् ॥
प्रवृत्तिहेतुर्विषमः स दृष्टो निवृत्तिहेतुर्विषमः स एव ।
हैमन्तिकं दोषचयं वसन्ते प्रवाहयन् ग्रैष्मिकमभ्रकाले ॥

शमात्यये वार्षिकमत्र मात्रां प्राप्नोति रोगानृतुजान्न जातु।
नरो हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः॥
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः।
ज्ञानं तपस्तत्परता च योगो यस्यास्ति तं नानुपतन्ति रोगाः॥
मतिर्वचः कर्म सुखानुबन्धि सत्त्वं विधेयं विशदा च बुद्धिः।

इति तत्र श्लोकाः।

इत्याग्निवेशस्य महार्थयुक्तं षड्विंशकं प्रश्नगणं महर्षिः।
अतुल्यगोत्रे भगवान् यथावन्निर्णीतवान् ज्ञानविवर्द्धनार्थम्॥

अतुल्यगोत्रीयं शारीरं समाप्तम्।

---

## तृतीयोऽध्यायः।

अथातः खुड्डीकागर्भावक्रान्तिं शारीरं व्याख्यास्यामः।

पुरुषस्यानुपहतरेतसः स्त्रियश्च प्रदुष्टयोनिशोणितगर्भाशयाया यदा भवति संसर्गः। ऋतुकाले यानयोस्तथा युक्ते संसर्गे शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतजीवो वक्रामतिसम्प्रयोगात्तदा गर्भोऽभिनिर्वर्त्तते। सात्म्यरसोपयोगादरोगोऽभिवर्द्धते सम्यगुपचारैश्चोपचर्य्यमाणस्ततः प्राप्तकालः सर्वेन्द्रियोपपन्नः परिपूर्णशरीरो बलवर्णसत्त्वसंहननसम्पदुपेतः सुखेन जायते समुदया देषां भावानां मातृजश्चायं गर्भः। पितृजश्चात्मजश्च सात्म्यजश्च रसजश्चास्ति च सत्त्वमौपपादिकमिति होवाच भगवानात्रेयः नेति भरद्वाजः।

किं कारणं न हि माता न पिता नात्मा न सात्म्यं न पानाशनभक्ष्यलेह्योपयोगागर्भं जनयन्ति न च परलोकादेत्य गर्भं सत्त्वमवक्रामति यदि हि माता पितरौ जनयेतां भूयस्यः स्त्रियः पुमांसश्च भूयांसः पुत्रकामास्ते सर्वे पुत्रजन्माभिसन्धाय मैथुनधर्ममापद्यमानाः पुत्रानेव जनयेयुर्दुहितॄर्वा दुहितृकामा न च काश्चित् स्त्रियः केचिद्वा पुरुषा निरपत्यतामपत्यकामाः परिदेवेरन् न चात्मात्मानं जनयति। यदि ह्यात्मात्मानं जनयेज्जातो वा जनयेदात्मानमजातोऽतश्चोभयथाप्ययुक्तम्। न हि जातो जनयति सत्त्वान्न चाजातो जनयत्य सत्त्वात्तस्मादुभयथाप्यनुपपत्तिः तिष्ठतु तावदेतद्यद्ययमात्मानं शक्तो जनयितुं स्यात् नत्वेवमिष्टास्वेव योनिषु जनयेद्वशिनमप्रतिगतिं कामरूपिणं तेजो बलजववर्णसत्त्वसंहननसमुदितमजरमरुजममरमेवं विधं ह्यात्मात्मानमिच्छत्यतो वा भूयः अनात्मजश्चायं गर्भः। यदि हि सात्म्यजः स्यात् सात्म्यसेविनामेवैकान्तेन प्रजा स्यादसात्म्यसेविनश्च निखिलेनानपत्याः स्युस्तच्चोभयमुभयत्र दृश्यते अरजसश्चायं गर्भो यदि हि राजसः स्यान्न केचित् स्त्रीपुरुषेष्वनिरपत्याः स्युः न हि कश्चिदस्त्येषां योरसान्नोपयुङ्क्ते श्रेष्ठरसोपयोगिनाञ्चे द्गर्भा जायन्ते इत्यतोऽभिप्रेतमित्येवं सत्यो जोरभ्रमार्गमायूरगोक्षीरदधिघृतमधुतैलसैन्धवेक्षुरसमुद्गशालि भृतानामेवैकान्तेन प्रजा स्यात्। श्यामाकौ वरकोद्दालककोरदूषककन्दमूलभक्षाश्च निखिलेनानपत्याः स्युः तच्चोभयमुभयत्र दृश्यते न खल्वपि परलोका देत्य सत्त्वं गर्भमवक्रामति। यदि हि एनमवक्रामेत् नास्य किञ्चित् पौर्वदेहिकं

स्यादविदितं अदृष्टं वा स च किञ्चिदपि न स्मरति तस्मा-
देतद्ब्रूमहे इति। असात्मजश्चायं गर्भः पितृजश्चात्मज-
श्चसात्म्यजश्चरसजश्च। न चास्ति सत्त्वमौपपादिकमितिहो-
वाच भरद्वाजः नेति भगवानात्रेयः। सर्व्वेभ्य एवेभ्यो भावेभ्यः
समुदितेभ्यो गर्भोऽभिनिर्वर्त्तते। मातृजश्चायं गर्भो न हि
मातुर्विना गर्भोपपत्तिः स्यात् न जन्मजरायुजानां यानि
खल्वस्य गर्भस्य पितृजानि यानि चास्य पितृतः सम्भवन्ति
तान्यनु व्याख्यास्यामः। तद्यथा केशश्मश्रुनखलोमदन्ता-
स्थिशिरास्नायुधमन्यः शुक्रमिति पितृजानि। आत्मजश्चायं
गर्भो गर्भात्माह्यन्तरात्मायन्तं जीव इत्याचक्षते शाश्वतम-
रुजमजरममरमक्षयमभेद्यमच्छेद्यमलोड्यं विश्वरूपं विश्व-
कर्माणमव्यक्तमनादिमनिधनमक्षरं सगर्भाशयमनुप्रविश्य
शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वे जनयत्यात्मनात्मान-
मात्मसंज्ञा हि गर्भे तस्य पुनरात्मनो जन्मादिमत्त्वान्नोप-
पद्यते तस्मादजात एवाजातं गर्भं जनयत्य जातो ह्ययम्
अजातं गर्भं जनयति। स चैव गर्भः कालान्तरेण बाल-
युवस्थविरतां स यस्यां यस्यामवस्थायां वर्त्तते तस्यां तस्यां
जातो भवति। यात्वस्य पुरस्कृता तस्यां जनयिष्यमाणः
तस्मात् स एव जातश्चाजातश्च युगपद्भवति यस्मिंश्चैतदुभयं
सम्भवति जातत्वं जनिष्यमाणत्वञ्च स च जातो जन्यते
स चैवानागतेषु अवस्थान्तरेष्वजातो जनयत्यात्मनात्मानं
सतो ह्यवस्थानुगमनमात्रमेव जन्म चोच्यते तत्र तत्र वयसि
तस्यां तस्यामवस्थायां यथा स तामेव शुक्रशोणितजीवानां
प्राक्संयोगाद्गर्भत्वं न भवति तच्च संयोगाद्भवति सततैव

पुरुषस्य प्रागपत्यात्पितृत्वं न भवति तथापत्यात्भवति तथा सतस्तस्यैव गर्भस्य तस्यामवस्थायामात्मत्वं जातत्वञ्चोच्यते। न तु खलु गर्भस्य मातुर्नपितुर्नात्मनः सर्वभावेषु यथेष्टकारित्व मतोऽन्यथा विपर्ययः न च कारणदोषाद्कारणमात्माजनने सम्भवति दृष्टं चेत्पायोनिरैश्वर्यं मोक्षयात्मविन्निरात्मायत्तं नह्यन्यः सुखदुःखयोः कर्ता न चान्यतो जायते जायमानो नाङ्कुरोत्पत्तिरबीजात् यानि तु खल्वस्य गर्भस्यात्मजानि यान्यस्यात्मतः सम्भवतः सम्भवन्ति तान्यनु व्याख्यास्यामः। तद्यथा तासु तासु योनिषु उत्पत्तिरात्मजानां मन इन्द्रियाणि प्राणापानौ प्रेरणं धारणमाकृति स्वरवर्ण विशेषाः सुखदुःखे इच्छाद्वेषौ स्मृति रहङ्कारः प्रयत्नः चेत्यात्मजानि सात्म्यजश्चायं गर्भः न ह्यात्मसेवित्वमन्तरेण स्त्रीपुरुषयोर्वन्ध्यत्वमस्ति गर्भेषु वाप्यनिष्टो वा भावो यावत् खल्वसात्म्यसेविनां स्त्रीपुरुषाणां दोषाः प्रकुपिताः शरीरमुपसर्पन्तो न शुक्रशोणित गर्भाशयोपघातायोपपद्यन्ते तावत्समर्था गर्भजननाय भवन्ति। सात्म्यसेविनां पुनः स्त्रीपुरुषाणामनुपहत शुक्रशोणित गर्भाशयाना ऋतुकाले सन्निपततात्जीवस्यानवक्रमणाद्गर्भा न प्रादुर्भवन्ति न हि केवलं सात्म्यज एवायगर्भः समुदयोऽत्र कारणमुच्यते यानि तु खल्वस्य गर्भस्य सात्म्यजानि यानि चास्य सात्म्यतः सम्भवन्ति तान्यनु व्याख्यास्यामः। तद्यथा रोग्यमनालस्य मलो लुपत्वमिन्द्रिय प्रसादः स्वरवर्ण बीजसम्पत्प्रहर्ष भूयस्त्वञ्चेति सात्म्यजानि। रसजश्चायं गर्भः न हि रसादृते प्राणयाचापि प स्यात् किं पुनर्गर्भजन्म न चैवास्य सम्यगुपयुज्यमाना

रसा गर्भमभिनिर्वर्त्तयन्ति । न च केवलं सम्यगुपयोगादेव रसानां गर्भाभिनिर्वृत्तिः समुदयोऽप्यत्र कारणमुच्यते । यानि तु खल्वस्य गर्भस्य रसजानि यानि चास्य रसतः सम्भवतः सम्भवन्ति तान्यनु व्याख्यास्यामः । तद्यथा शरीराभिनिर्वृत्तिरभि वृद्धिः प्राणानुबन्धस्तृप्तिः पुष्टिरुत्साहश्चेति रसजानि । अस्ति खल्वपि सत्त्वमौपपादुकं यज्जीव स्पृक् शरीरेणाभि सम्बध्नाति यस्मिन्नपगमन पुरस्कृते शीलमस्य व्यावर्त्तते भक्तिर्विपर्य्यस्य ते सर्वेन्द्रियाण्युपतप्यन्ते बलं हीयते व्याधय आप्यायन्ते यस्माद्धीनः प्राणान् जहाति यत्तदिन्द्रियाणामभिग्राहकञ्च मन इत्यभिधीयते यत्तत्त्रिविधमाख्यायते शुद्धं राजसन्तामसं इति । येनास्य भूयिष्ठं न द्वितीयामाजाति द्वितीयसम्प्रयोगो भजति यदा तु तेनैव शुद्धेन संयुज्यते तदा जातेरतिक्रान्ताया अपिस्मरति स्मार्तं हि ज्ञानं आत्मनस्तस्यैव मनसोऽनुवन्धादनुवर्त्तते यस्यानुवृत्तिं पुरस्कृत्य पुरुषो जाति स्मर इत्युच्यते इति सत्त्वमुक्तं तस्य यानि सत्त्वजानि यान्यस्य सत्त्वतः सम्भवतः सम्भवन्ति तान्यनु व्याख्यास्यामः । भक्तिः शीलं शौचं द्वेषः स्मृति र्मोहस्त्यागोमात्सर्यं शौर्यं भयं क्रोधस्तन्द्रा उत्साहस्तैक्ष्ण्यं मार्दवं गाम्भीर्यमनवस्थितत्व मित्येव मादयश्चान्ये सत्त्वजानि नानाविधानि तु खलु सत्त्वानि तानि सर्वाण्येक पुरुषे भवन्ति न च भवन्त्येक कालं एकन्तु प्रायोनुवृत्त्याह । एवमयं नानाविधानामेषां गर्भकराणां भावानां समुदयादभिनिर्वर्त्तते गर्भो यथा कूटागारं नानाद्रव्य समुदयाद्यथा वा रथो नानाङ्ग समुदायात्त आदेतदवोचाम

मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्च। अस्ति सत्त्वमौपपादुकमिति होवाच भगवानात्रेयः भरद्वाज उवाच यद्ययमेषां नानाविधानां गर्भकराणां भावानां समुदयादभिनिर्वर्त्तते गर्भः कथमयं सन्धीयते यदि चापि सन्धीयते कस्मात्समुदयप्रभवः स गर्भो मनुष्यविग्रहेण जायते मनुष्यश्च मनुष्यप्रभव उच्यते। तत्र चेदिष्टमेतद्यस्मान्मनुष्योमनुष्यप्रभवः तस्मान्मानुष्यविग्रहेण जायते यथा गौर्गोप्रभवः यथा चाश्वोऽश्वप्रभव इत्येवं सति यदुक्तमग्रे समुदयात्मक इति। तदयुक्तं यदि च मनुष्योमनुष्यप्रभवः कस्माज्जडान्धकुब्जमूकवामनमिन्मिणव्यङ्गोन्मत्तकुष्ठकिलासिभिर्जाताः पितृसदृशरूपा न भवन्ति। अथात्रापि बुद्धिरेवं स्यात् स्वेनैवायमात्मा चक्षुषा रूपाणि वेत्ति श्रोत्रेण शब्दान् घ्राणेन गन्धान् रसनेन रसान् स्पर्शनेन स्पर्शान् बुद्ध्या बोद्धव्यमित्यनेन हेतुना जडादिभिर्जाताः पितृसदृशा भवन्ति इत्यत्रापि प्रतिज्ञा दोषः स्यात्। एवमुक्ते ह्यात्मा सत्स्विन्द्रियेषु ज्ञः स्यादसत्स्वज्ञो यत्र चैतदुभयं सम्भवति ज्ञत्वमज्ञत्वञ्च स विकारः प्रकृतिश्चात्मा निर्विकारो ह्यत्र यदि च दर्शनादिभिरात्मा विषयान् वेत्ति निरिन्द्रियो दर्शनादि विरहादज्ञः स्यादज्ञत्वाच्च कारणमकारणत्वाच्चानात्मेति वाग्वस्तु मात्रमेतद्वचनमनर्थकं स्यादितिहोवाच भरद्वाजः आत्रेयउवाच। पुरस्तादेतत्प्रतिज्ञातं सत्त्वं जीवं स्पृक्छरीरेणाभिसम्बध्नातीति यस्मात्तु समुदाय प्रभवः स गर्भो मनुष्यविग्रहेण जायते मनुष्यश्च मनुष्यप्रभव उच्यते तद्वक्ष्याम भूतानाञ्चतुर्विधा योनिर्जरायुजाण्डजस्वेदजोद्भिज्जास्तासाञ्चतसृणामपि योनीना-

मेकैका योनिरपरिसंख्येय भेदा भवन्ति भूतानामाकृति विशेषापरिसंख्येयत्वात् तत्र जरायुजानामण्डजानां प्राणिनामेते यां यांगर्भकरा भावा योनिमापद्यन्ते तस्यान्तस्यां योनौ तथा तथा रूपा भवन्ति कनकरजतताम्रत्रपुसीसानी वा सिच्यमानानि तेषु तेषु मधूच्छिष्टविग्रहेषु ते यदा मनुष्यविम्बमापद्यन्ते तदा मनुष्यविग्रहा जायन्ते तस्मात् समुदयात्मकः सन् गर्भो मनुष्यविग्रहेण जायते मनुष्यश्च मनुष्यप्रभव उच्यते तद्योनित्वात्। यच्चोक्तं यदि च मनुष्यो मनुष्य प्रभवः कस्मान्न जडादिभिर्जाताः पितृसदृशरूपा भवन्ति इत्यत उच्यते यस्य यस्य ह्यङ्गावयवस्य बीजेबीज भाव उपतप्तो भवति तस्य तस्याङ्गावयवस्य विकृतिरुपजायते नोप जायते चानुतापात्तस्मादुभयोपपत्तिरप्यत्र सर्वस्य चात्मजानीन्द्रियाणि तेषां भावाभाव हेतुर्दैवं तस्मान्नैकान्ततो जडादिभिर्जाताः पितृसदृशरूपा भवन्ति न चात्मा सत्स्विन्द्रियेषु सत्सु वा भवत्यज्ञो नह्यसत्त्वः कदाचिदात्मा सत्त्व विशेषाच्चोप लभ्यते ज्ञानविशेषः इति।

भवतिचात्र। न कर्तुरिन्द्रिया भावात्कार्यं ज्ञानं प्रवर्तते।
येः क्रिया वर्तते सा तु सा विना तैर्न वर्तते॥
जानन्नपि मृदो भावात्कुम्भकृत् न प्रवर्त्तते।
श्रूयतांश्चेद मध्यात्ममात्मज्ञान बलं महत्॥
देहेन्द्रियाणि संक्षिप्य मनः संहृत्य चञ्चलम्।
प्रविश्याध्यात्ममात्मज्ञः स्वे ज्ञाने पर्यवस्थितः॥
सर्वत्रावहतज्ञानः सर्वभावान्परीक्षते।

गृह्णीष्व चेदमपरं भरद्वाजविनिर्णयम् ॥
निवृत्तेन्द्रिय वाक्चेष्टः सुप्तः स्वप्नगतो यदा ।
विषयान् सुखदुःखे च वेत्ति नात्माऽप्यतः स्मृतः ॥
नात्मज्ञानादृते चैकं ज्ञानं किञ्चित् प्रवर्तते ।
न ह्येको वर्तते भावो वर्तते नापत्र हेतुकः ॥
तस्माज्ज्ञः प्रकृतिर्यात्मा द्रष्टा कारणमेव च ।
सर्वमेतद्भरद्वाजनिर्णीतं जहि संशयमिति ॥
तत्र श्लोकौ । हेतुर्गर्भस्य निर्वृत्तौ वृद्धौ जन्मनि चैव यः ।
पुनर्वसुमतिर्या च भरद्वाजमतिश्च या ॥
प्रतिज्ञा प्रतिषेधश्च विषद्य विनिर्णयः ।
गर्भावक्रान्तिमुद्दिश्य खुड्डीकं सम्प्रकाशितम् ॥
खुड्डीका गर्भावक्रान्तिः शारीरः समाप्तः ।

---

## चतुर्थोऽध्यायः ।

अथातो महतीं गर्भावक्रान्तिं शारीरं व्याख्यास्यामः ॥

यतश्च गर्भः सम्भवति यस्मिंश्च गर्भसंज्ञा यद्विकारश्च गर्भो यथा चानुपूर्व्याभिनिर्वर्तते कुक्षौ यश्चास्य वृद्धि हेतुर्यतश्चास्यावृद्धिर्भवति यतश्च जायमानः कुक्षौ विनाशं प्राप्नोति यतश्च कात्स्‍र्न्येनाविनश्यन्विकृतिमापद्यते तदनुव्याख्यास्यामः । मातृतः पितृत आत्मतः सात्म्यतोरसतः सत्त्वत

इत्येतेभ्यो भावेभ्यः समुदितेभ्यो गर्भः सम्भवति। यस्य ये येऽवयवा यतो यतः सम्भवतः सम्भवन्ति। तान् विभज्य मातृजादीनवयवान् पृथक् पृथगुक्तमग्रे शुक्रशोणितजीव-संयोगे तु खलु कुक्षिगते गर्भसंज्ञा। गर्भस्तु खल्वन्तरिक्ष-वाय्वग्नि तोय भूमि विकारश्चेतनाधिष्ठानभूतः स ह्यस्य षष्ठो धातुरुक्तः यथात्वानुपूर्व्याभि निर्वर्तते कुक्षौ तदनु-व्याख्यास्यामः। गते पुराणे रजसि नवे चावस्थिते शुद्ध-स्नातां स्त्रियमव्यापन्न योनि शोणितगर्भाशया ऋतुमतीमा-चक्षते तया सह तथाभूतया यदा पुमानव्यापन्नबीजो मिश्रीभावं गच्छति तस्य हर्षोदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात् सम्भवति। स तथा हर्षभूतेनात्मनो दी-रितश्च जीवधातुः पुरुषशरीरादभिनिष्पत्यो हितेन पथा गर्भाशयमनुप्रविश्यार्तवेनाभि संसर्गमेति। तत्र पूर्वं चेतना धातुः सत्त्वकरणो गुणग्रहणाय प्रवर्तते स हि हेतुः कारणं निमित्तमक्षरं कर्तामन्ता वेदिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्मा विश्वरूपः पुरुषः प्रभवो व्ययो नित्यः गुणीग्रहणं प्राधान्यमव्यक्तं जीवोऽज्ञः पुद्गलश्चेतनावान् विभुर्भूतात्मा चेन्द्रियात्मा चान्तरात्मा चेति सगुणोपादानकालेऽन्तरिक्षं पूर्वतरमन्येभ्यो गुणेभ्य उपादत्ते। यथा प्रलयात्यये सिसृ-क्षुर्भूतान्यक्षरभूतः सत्त्वोपादानः पूर्वतरमाकाशं सृजति। ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः सर्वमपि तु खल्वेतद्गुणोपादानमणुना कालेन भवति। स सर्वगुण-वान् गर्भत्वमापन्नः प्रथमे मासि संमूर्च्छितः सर्वधातुकलुषी-कृतः खेटभूतो भवति अव्यक्तविग्रहः स च सद्भूताङ्गावयवः

द्वितीये मासे घनः सम्पद्यते पेश्यर्बुदं वा तत्र घनः पुरुषः स्त्रीपेश्यर्बुदं नपुंसकं तृतीये मासि सर्वेन्द्रियाणि सर्वाङ्गावयवाश्च यौगपद्येनाभि निर्वर्त्तन्ते तत्रास्य केचिदङ्गावयवा मातृजादीनवयवान् विभज्य पूर्वमुक्ता यथावन्महाभूतविकारप्रविभागेन त्विदानीमस्य तांश्चैवाङ्गावयवान् पर्यायान्तरेण परांश्चानुव्याख्यास्यामः। मातृजाद्योऽप्यस्य महाभूतविकारा एव तत्रास्याकाशात्मकं शब्दः श्रोत्रं लाघवं सौक्ष्म्यं विवेकश्च वाय्वात्मकं स्पर्शः स्पर्शनञ्च रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च शारीर्यः अग्न्यात्मकं रूपं दर्शनं प्रकाशः पक्तिरौष्ण्यञ्च अबात्मकं रसो रसनं शैत्यं मार्दवं स्नेहः क्लेदश्च पृथिव्यात्मको गन्धः घ्राणं गौरवं स्थैर्यं मूर्तिश्च एवमयं लोकसम्मितः पुरुषो यावन्तो हि लोके भावविशेषाः तावन्तः पुरुषे यावन्तः पुरुषे तावन्तो लोके इति बुधास्त्वेवन्द्रष्टुमिच्छन्ति एव मस्येन्द्रियाणि अङ्गावयवाश्च यौगपद्येनाभिनिर्वर्त्तन्ते अन्यत्र तेभ्यो भावेभ्यो येऽस्य जातस्योत्तर कालञ्जायन्ते तद्यथा दन्ताव्यञ्जनानि व्यक्तीभावः तथा युक्तानि चापरण्येषा प्रकृतिः। विकृतिः पुनरतोऽन्यथा सन्ति खल्वस्मिन् गर्भे नित्या भावाः सन्ति चानित्याः तस्य य एवाङ्गावयवाः सन्तिष्ठते तएव स्त्रीलिङ्गं पुरुषलिङ्गं नपुंसकलिङ्गं वा बिभ्रति ततः स्त्रीपुरुषयो र्यैर्वैशेषिका भावाः प्रधानसंश्रयाश्च तेषां यतो भूयस्त्वन्ततोऽन्यतरभावस्तद्यथा क्लैव्यभीरुत्वमवैशारद्यम्मोहोऽवस्थानं अधो गुरुत्वमसंहनं शैथिल्यं मार्दवङ्गर्भाशयबीजभागस्तथा युक्तानि चापराणि स्त्रीकराणि अतो विपरी-

तानि पुरुषकराण्युभयभागभावानि नपुंसककराणि यस्य यत्कालमेवेन्द्रियाणि सन्तिष्ठन्ते तत्कालमेव चेतसि वेदनानि बन्धं प्राप्नोति तस्मात्तदा प्रभृति गर्भः स्पन्दते प्रार्थयते च किञ्चित्तद्द्वै हृदय्यमाचक्षते वृद्धाः मातृजं चास्य हृदयं मातृहृदयाभिसम्बद्धरसवाहिनीभिः संवाहिनीभिस्तस्मात्तयोस्ताभिर्भक्तिः संस्पन्दते तच्चैव कारणमपेक्षमाणा न द्वैहृदयं विमानितं गर्भमिच्छन्ति कर्त्तुं विमानने ह्यस्य दृश्यते विनाशो विकृतिर्वा समानयोगक्षेमा हि माता तदा गर्भेण केषुचिदर्थेषु तस्मात् प्रियहिताभ्यां गर्भिणीं विशेषेणोपचरन्ति कुशलाः। तस्या गर्भापत्तेर्द्वैहृदय्यस्य च विज्ञानार्थं लिङ्गानि समासेनोपदेक्ष्यामः। उपचारा संराधनं ह्रस्वाप्राने दोषो ग्लानश्च लिङ्गतस्तस्मादिष्टो लिङ्गोपदेशस्तद्यथार्त्तवादर्शनसाम्यमास्यसंस्रवणमनन्नाभिलाषः छर्दिररोचकोऽम्लकामता च विशेषेण श्रद्धाप्रणयनञ्चोच्चावचेषु भावेषु गुरुगात्रत्वं चक्षुषो ग्लानिः स्तनयोः स्तन्यमोष्ठयो स्तनमण्डलयोश्च कार्ष्ण्यमत्यर्थं श्वयथुः पादयोरीषल्लोमराज्या योन्याश्च जालत्वमिति गर्भे पर्य्यागते रूपाणि भवन्ति। सा यद्यदिच्छेत्तत्तदस्यै दद्यादन्यत्र गर्भोपघातकरेभ्यो भावेभ्यः। गर्भोपघातकरास्त्विमे भावा स्तद्यथा सर्वमतिगुरूष्णतीक्ष्णं दारुणाश्च चेष्टा इमांश्चान्यानुपदिशन्ति वृद्धाः देवतारक्षोऽनुचरपरिरक्षणार्थं न रक्तानि वासांसि बिभृया न मदकराणि चाद्यान्यभ्यवहरेन्न यान मधिरोहे न्नमांसमश्नीयात् सर्वेन्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्जयेत् यच्चान्यदपि किञ्चित् स्त्रियं

विशु स्त्रीप्रायान्तु खलु प्रार्थनायां काममहितमप्यस्यै हितेनोपसंहितं दद्यात् प्रार्थनाविनयनार्थं प्रार्थनासन्धारणाद्धि वायुः कुपितोऽन्तः शरीरमनुचरन् गर्भस्यापद्यमानस्य विनाशं वैरूप्यं वा कुर्य्यात्। चतुर्थे मासि स्थिरत्वमापद्यते गर्भ स्तस्मात् तदा गर्भिणी गुरु गात्रत्व मापद्यते विशेषेण पञ्चमे मासि गर्भस्य मांसशोणितोपचयो भवत्यधिकमन्येभ्यो मासेभ्यस्तस्मात्तदा गर्भिणी कार्श्यमापद्यते विशेषेण षष्ठे मासि गर्भस्य बलवर्णोपचयो भवत्यधिकमन्येभ्यो मासेभ्यस्तस्मात्तदा गर्भिणी बलवर्णहानिमापद्यते विशेषेण सप्तमे मासि गर्भः सर्वभावैराप्यायते सहसा तस्मात् गर्भिणी सर्वाकारैः क्लान्ततमा भवति अष्टमे मासि गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिः संवाहिनीभिर्मुहुर्मुहुरोजः परस्परत आददाते गर्भस्य सम्पूर्णत्वात् तस्मात्तदा गर्भिणी मुहुर्मुदा युक्ता भवति मुहुर्मुहुश्च ग्लाना तथा गर्भः तस्मात्तदा गर्भस्य जन्मव्यापद्भवत्योजसोऽनवस्थितत्वात् तच्चैवमभिसमीक्ष्याष्टमं मासमगर्भण्यमित्याचक्षते कुशलाः तस्मिन्नेकदिवसातिक्रान्तेऽपि नवमं माससुपादाय कालमित्याहुरादशमान्मासाद्‌एतावान्कालो वैकारिकामतः परं कुक्षौ स्थानं गर्भस्य एव मयमनयानुपूर्व्याभिनिर्वर्त्तते कुक्षौ मात्रादीनान्तु खलु गर्भकराणां भावानां सम्पदस्तथातिवृत्तसा सौष्ठवान्मातृतश्चैवोपस्नेहोपस्वेदाभ्यां कालपरिणामात् स्वभाव संसिद्धेश्च कुक्षौ वृद्धिं प्राप्नोति। मात्रादीनान्तु खलु गर्भकराणां भावानां व्यापत्तिनिमित्तमस्या जन्म भवति ये त्वस्य कुक्षौ वृद्धि-

हेतुसमाख्याता भावास्तेषां विपर्य्ययादुदरे विनाश-मापद्यन्तेऽथवा चिरजातः। यतस्तु कात्स्न्र्येनाविनश्यन् विकृतिमापद्यते तदा व्याख्यास्यामः। यदा दोष-प्रकोपणोक्तान्यासेवमानाया दोषाः प्रकुपिताः शरीर-मुपसर्पन्तः शोणितगर्भाशयौ दूषयन्ति तदा यं गर्भं लभते स्त्री तदा गर्भस्य तस्य मातृजानामवयवानामवयवो विकृति-मापद्यते। एकोऽथवा नैकोऽस्य यस्य यस्य ह्यवयवस्य वीजे वीजभागे वा दोषाः प्रकोपमापद्यन्ते तं तमवयवं विकृतिराविशति। यदा ह्यस्याः शोणितगर्भाशयवीजभागः प्रदोषमापद्यते तदा बन्ध्यां जनयति,यदा पुनरस्याः शो-णिते गर्भाशयवीजभागावयवः स्त्रीकराणाञ्च शरीरवीज-भागानामेकदेशः प्रदोषमापद्यते। तदा स्त्र्याकृत भूयि-ष्ठामस्त्रियं वार्त्तां नाम जनयति तां स्त्री व्यापदमा-चक्षते। एवमेव पुरुषस्य यदा वीजे वीजभागः प्रदोषमा-पद्यते तदा बन्ध्यां जनयति यदा पुनरस्य वीजे वीजभा-गावयवः प्रदोषमापद्यते तदा प्रतिप्रजं जनयति। यदा त्वस्य वीजे वीजभागावयवः पुरुषकराणाञ्च शरीरवीज-भागानामेकदेशः प्रदोषमापद्यते। तदा पुरुषाकृति भूयिष्ठ-मपुरुषं तृणपूलिं नाम जनयति तां पुरुषव्यापद्व्यापदमाच-क्षते। एतेन मातृजानां पितृजानाञ्चावयवानां विकृति व्याख्यानेन सात्म्यजानां रसजानां सत्वजानां चावयवानां विकृतिर्व्याख्याता। निर्विकारः परस्त्वात्मा सर्वभूतानां निर्वि-शेषः सत्त्वशरीरयोस्तु विशेषाद्विशेषोपलब्धिः तत्र ये श-रीरदोषा वातपित्तश्लेष्माणस्ते शरीरं दूषयन्ति द्वौ पुनः

सत्त्वदोषौ रजस्तमश्च तौ सत्त्वं दूषयतस्ताभ्याञ्च सत्त्वशरीराभ्यां विकृतिरुपजायते नोपजायते च प्रदुष्टाभ्याम्। तत्र शरीरं योनिविशेषाच्चतुर्विधमुक्तमग्रे त्रिविधं खलु सत्त्वं शुद्धं राजसन्तामसमिति तत्र शुद्धमदोषमाख्यातं कल्याणांशत्वात् राजसं सदोषमाख्यातं रोषांशत्वात् तामसमपि सदोषमाख्यातं मोहांशत्वात् तेषां तु त्रयाणामपि सत्त्वानां एकैकस्य भेदाग्रमपरिसङ्ख्येयन्तरतमयोगाच्छरीरयोनिविशेषेभ्यश्चान्योन्यानुविधानत्वाच्च शरीरमपि सत्त्वमनुविधीयते सत्त्वञ्च शरीरं तस्मात्कतिचित्सत्त्वभेदाननूदकाभिनिर्देशेन निदर्शनार्थमनुव्याख्यास्यामः। तद्यथा शुचिं सत्याभिसन्धं जितात्मानं संविभागिनं ज्ञानविज्ञानवचनप्रतिवचनसम्पन्नं स्मृतिमन्तं कामक्रोधलोभमानमोहेर्ष्याहर्षामर्षापेतं समं सर्व्वभूतेषु ब्राह्मं विद्यात्। इज्याध्ययनव्रतहोम ब्रह्मचर्य्यमतिथिव्रतमुपशान्तमदमानरागद्वेषमोहलोभरोषं प्रतिवचनविज्ञानोपधारणशक्तिसम्पन्नमार्षं विद्यात्। ऐश्वर्य्यवन्तमादेयवाक्यं यज्वानं शूरमोजस्विनं तेजसोपेतमक्लिष्टकर्म्माणं दीर्घदर्शिनं धर्म्मार्थकामाभिरतमैन्द्रं विद्यात्। लेखास्थवृत्तं प्राप्तकारिणमसंहार्य्यमुत्थानवन्तं स्मृतिमन्तमैश्वर्य्यालम्बिनं व्यपगतरागद्वेषमोहं याम्यं विद्यात्। शूरं धीरमशुचिद्वेषिणं यज्वानमम्भो विहाररतिमक्लिष्टकर्म्माणं स्थानकोपप्रसादं वारुणं विद्यात्। स्थानमानोपभोगपरिचारसम्पन्नं धर्मार्थकामनित्यं शुचिं सुखविहारं व्यक्तकोपप्रसादं कौवेरं विद्यात्। प्रियनृत्यगीतवादित्रोल्लापश्लोकाख्यायिकेतिहासपुराणगन्धमाल्याप-

शयनं वस्त्र स्त्रीविहारनित्यमनसूयकं गान्धर्व्वं विद्यात्। इ-त्येवं शुद्धस्य सप्तविधं भेदांशं विद्यात्। कल्याणांशत्वात् तत्-संयोगात्तु शाक्त्यमत्यन्त शक्तं व्यवस्येत् शूरश्चण्डमसूयकमैश्व-र्य्यवन्तमौपधिकं रौद्रमननुक्रोशकं आत्मपूजकमासुरं वि-द्यात्। अमर्षणमनुबन्धकोपच्छिद्रप्रहारिणं क्रूरमाहारातिमात्ररुचिमामिषप्रियतमं स्वप्नायासं बहुलमीर्ष्युं राक्षसं विद्यात्। महाशनं स्त्रैणं स्त्रीरहस्कामं अशुचिं शुचिद्वेषि-णम्भीरुभीषयितारं विकृतिविहाराहारशीलं पैशाचं वि-द्यात्। क्रुद्धं शूरं प्रकृच्छ्रभीरुन्तीक्ष्णमायास बहुलं अवस्तगोचरमाहारविहारपरं सार्पं विद्यात्। आहार-काममति दुःखशीलाचारोपचारमसूयकमसं विभागिन-मतिलोलुपम कर्मशीलम्प्रैतं विद्यात्। अनुषक्तकाम-मजस्रमाहारपरं अनवस्थितमर्षणमसञ्चयं शाकुनं वि-द्यात्। इत्येवं राजसस्य सत्त्वस्य षड्विधं भेदांशं विद्यात्। रोषांशत्वात् निराकरिष्णुममेधसमजुगुप्सि-तारं आहारमैथुनपरं स्वप्नशीलं पाशवं विद्यात्। भीरुमबु-धमाहारलुब्धमनवस्थितमनुषक्तकामक्रोधं सरणशील तोय कामं मात्स्यं विद्यात्। अलसं केवलमभिनिविष्टमाहारे सर्व्वबुद्ध्यहीनं वानस्पत्यं विद्यात्। इत्येवं तामसस्य सत्त्वस्य त्रिविधं भेदांशं विद्यात्। मोहांशत्वादित्यपरिसंख्येय भेदानां त्रयाणामपि सत्त्वानां भेदैकदेशो व्याख्यातः। शुद्धस्य सत्त्वस्य सप्तविधो ब्रह्मर्षि शक्रवरुणयमकुवेरगन्धर्व्व-सत्त्वानुकारेण राजसस्य षड्विधो दैत्यपिशाचराक्षसपिशाच सर्पप्रेतशकुनि सत्त्वानुकारेण तामसस्य त्रिविधः पशु मत्स्य

चनस्पति सत्त्वानुकारिणा कथञ्च यथा सत्त्वमुपचारः स्यात् इति केवलयायमुद्देशःयथोद्देशमभिनिर्दिष्टो भवति। गर्भावक्रान्ति संप्रयुक्तः तस्य विघ्नानि सामर्थ्यं गर्भकराणाञ्च भावानामनुसमाधिर्विघातस्य विघातकराणामिति।

तत्र श्लोकाः। निमित्तमात्मा प्रकृतिर्वृद्धिः कुक्षौ क्रमेण च।
वृद्धिहेतुश्च गर्भस्य पञ्चार्थाः शुभसंज्ञिताः॥
अजन्मनि च यो हेतुर्विनाशे विकृतावपि।
इमांस्तो न शुभान् भावानाहुर्गर्भं विघातकान्॥
शुभाशुभसमाख्याता नष्टौ भावानिमान् भिषक्।
सर्वथा वेदयन् सर्वान् स राज्ञः कर्तुमर्हति॥
अन्नाद्युपायान् गर्भस्य स एवं ज्ञातुमर्हति।
ये च गर्भविघातोक्ता भावास्तांश्चाप्युदारधी॥

महती गर्भावक्रान्ति शारीरं समाप्तम्।

---

## पञ्चमोऽध्यायः।

अथातः पुरुषविचयं शारीरं व्याख्यास्यामः।

पुरुषोऽयं लोकसम्मित इत्युवाच भगवान् पुनर्वसु रात्रेयो यावन्तो हि लोके भावविशेषाः तावन्तः पुरुषे यावन्तः पुरुषे तावन्तो लोके इत्येवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच। नैतावाता वाक्येनोक्तं वाक्यार्थमवगाहा-

महे भगवतो बुद्ध्या भूयस्तरोऽनुव्याख्यायमानं शुश्रूषामहे इति तमुवाच भगवानात्रेयः।

अपरिसंख्येया लोकावयवविशेषास्तेषां यथा स्थूलभावान् सामान्यमभिप्रेत्योदाहरिष्यामः। तानेकमना निबोध सम्यगुपवर्ण्यमानानग्निवेश! षड्धातवः समुदिता इति शब्दं लभन्ते। तद्यथा पृथिव्यापस्तेजो वायुराकाशं ब्रह्म चाव्यक्तमित्येत एव च षड्धातवः समुदिताः पुरुष इति शब्दं लभन्ते तस्य पुरुषस्य पृथिवीमूर्तिरापः क्लेदस्तेजोऽभिसन्तापो वायुः प्राणो वियच्छिद्राणि ब्रह्मान्तरात्मा यथा खलु ब्राह्मी विभूतिः लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिर्लोके प्रजापतिरन्तरात्मनो विभूतिः पुरुषे सत्त्वं यस्त्विन्द्रो लोके स पुरुषेऽहङ्कारः आदित्यस्त्वाधानं रुद्रो रोषः सोमः प्रसादो वसवः सुखमश्विनौ कान्तिर्मरुद उत्साहो विश्वे देवाः सर्वेन्द्रियाणि सर्वेन्द्रियार्थश्च तमो मोहो ज्योतिर्ज्ञानं यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानं यथा कृतयुगमेवं बाल्यं यथा त्रेता तथा यौवनं यथा द्वापरस्तथा स्थाविर्यं यथा कलिरेवमातुर्यं यथा युगान्तस्तथा मरणमित्येव मनु मानेनानुक्तानामपि लोक पुरुषयोरवयव विशेषाणामग्निवेश सामान्यं विद्यादित्येवं वादिनं भगवन्तमात्रेयं अग्निवेश उवाच। एवमेतत्सर्वमनपवादं यथोक्तं भगवता लोक पुरुषयोः सामान्यं किं त्वस्य सामान्योपदेशस्य प्रयोजनमिति भगवानुवाच कथमग्निवेश सर्वलोकमात्मन्यात्मानञ्च समनुपश्यतः सत्या बुद्धिः समनुपश्यते इति सर्वलोकं ह्यात्मनि पश्यतो भवत्यात्मैव सुखदुःखयोः

कर्ता नान्य इति कर्मात्मकत्वाच्च हेत्वादिभिरयुक्तः सर्वलो-कोऽहमितिविदित्वा ज्ञान पूर्वमुत्थास्यते पवर्गायेति तत्र संयोगा पेक्षी लोकशब्दः षड्धातु समुदायो हि सामान्यतः सर्वलोकः तस्य हेतुः उत्पत्तिर्वृद्धिरुपप्लवो वियोगश्च । तत्र हेतुरुत्पत्तिकारणं उत्पत्तिर्जन्मवृद्धिराप्यायनं उपप्लवो दुःखागमः षड्धातु विभागो वियोगः स जीवापगमः स प्राणे निरोधः सभङ्गः स लोकस्वभावः तस्य मूलं सर्वोपप्लवानाञ्च प्रवृत्तिनिवृत्तिरुपरमः प्रवृत्तिर्दुःखं निवृत्तिः सुखमिति यद्ज्ञानमुत्पद्यते तत्सत्यं तस्य हेतुः सर्वलोकसामान्यज्ञान-मेतत्प्रयोजनं सामान्योपदेशस्येति अथाग्निवेश उवाच। किं मूला भगवन्! प्रवृत्तिर्निवृत्तौ वा उपाय इति भगवानुवाच। मोहेच्छाद्वेष कर्म मूला प्रवृत्तिस्तज्जा ह्यहङ्कार सङ्गसन्देहाभिसंप्लवाभ्यवपातविप्रत्यया विशेषानुपायास्त-रुणमिव द्रुममति विपुलशाखास्तरवोऽभिभूय पुरुषमवतत्यो-त्तिष्ठन्ति। यैरभि भूतो न सत्तामति वर्त्तते तत्रैवं जातिरूप-वित्तवृत्तबुद्धिशीलविद्याभिजनवयोवीर्य्यप्रभावसम्पन्नोऽहमित्य-हङ्कारः यद्यत्मनो वाक्काय कर्म नापवर्गाय ससङ्गः कर्म फलमोक्षपुरुषप्रेत्यभावादयः सन्ति वा नेति संशयः सर्वा-वस्थमनन्योऽहमहं स्रष्टा स्वभावसंसिद्धोऽहमहं शरीरेन्द्रिय बुद्धिविशेषराशि रितिग्रहणमभिसंप्लवः मम मातृपितृभ्रातृ-दारापत्यबन्धुमित्रभृत्यगणोगणस्यचाहमित्यभ्यवपातः कार्या-कार्यं हिताहित शुभाशुभेषु विपरीताभिनिवेशोविप्रत्ययः ज्ञा-ज्ञयोः प्रकृतिविकारयोः प्रवृत्तिनिवृत्तयोश्च सामान्यदर्शनम-विशेषः प्रोक्षणानशनाग्निहोत्र त्रिषवणाभ्युक्षणावाहनाया-

वनसलिलहुताशनप्रवेशादयः समारम्भाः प्रोच्यन्तेऽनुपायाः॥ एवमयमधीस्मृतिरहङ्काराभिनिविष्टः सक्तः स संशयोऽभिसंप्लुतबुद्धिरभ्यवपतितोऽन्यथा दृष्टिरविशेषग्राही विमार्गगतिर्निवासवृक्षः सत्त्व शरीरदोष मूलानां सर्वदुःखानामेवमेव महङ्कारादिभिर्दोषैर्भ्राम्यमाणो नातिवर्तते प्रवृत्तिं सा च मूलमघस्य निवृत्तिरपवर्गः तत्परं प्रशान्तं तत्तदक्षरं ब्रह्म स मोक्षः तत्र मुमुक्षता मुदयनानि व्याख्यास्यामः। तत्र लोक दोषदर्शिनो मुमुक्षोरादित एवा चार्याभिगमनं तस्योपदेशानुष्ठानं अग्नेरेवोपचर्या धर्मशास्त्रान्त गमनं तदर्थावबोधस्तेनावष्टम्भः तत्र यथोक्ताः क्रियाः सतामुपासनमसद्भिर्दुर्जनेन सत्यं सर्वभूतहितमपरुषमनतिकाले परीक्ष्यवचनं सर्वप्राणिषु आत्मनीवापेक्षा सर्वासामस्मरणम सङ्कल्पनमप्रार्थनमभि भाषणञ्च स्त्रीणां सर्वं परिग्रह त्यागः कौपीनप्रच्छादनार्थं धातु रागन्निवसनं कन्थासीव न हेतोः सूची पिप्पलकं शौचादान हेतोः जलकुण्डिका दण्डधारणं भैक्षचर्यार्थं प्राणधारणार्थमेक कालमशाम्यो यथोपपन्नो व्यवहारः श्रमापनयनार्थं शीर्णशुष्कपर्णतृणास्तरणोपधानं ध्यान हेतोः कायनिबन्धनं वनेष्वनिकेत वासः तन्द्रानिद्रालस्यादि कर्म वर्जनं इन्द्रियार्थेष्वनुरागोपतापनिग्रहः सुप्तस्थित गत प्रेक्षिताहारविहारप्रत्यङ्गचेष्टादिकेष्वारम्भेषु स्मृति पूर्विकाः प्रवृत्तिः सत्कार स्तुति गर्हावमानक्षमत्वं क्षुत्पिपासायास श्रमशीतोष्ण मातवर्षा सुखसंस्पर्शसहत्वं शोकदैन्यमानोद्वेगमदमानलोभरागेर्ष्याभयक्रोधादिभिरसञ्च-

स्तनं अलङ्कारादिषूपसर्गं संज्ञा लोके पुरुषयोः सर्गादि सामान्यापेक्षणं कार्यकालार्थमुभयं योगारम्भे सतत मनिर्वेदः सत्त्वोत्साहापवर्गाय धीधृति स्मृति बलादानं नियमनमिन्द्रियाणां चेतसि चेतस आत्मन्यात्मनश्च धातुभेदेन शरीरावयवसंख्यानं अभीक्ष्णं सर्वं कारणवद्दुःखमस्वमनित्यमित्यवगमः सर्वे प्रवृत्तिष्वघ संज्ञा सर्वसंन्यासे सुखमित्यभिनिवेशः एष मार्गोऽपवर्गाय अतोऽन्यथा बध्यत इत्युदयनानि।

भवतिचात्र। एतैरविमलं सत्त्वं शुद्ध्युपायैर्विशुध्यति।
मृज्यमान इवादर्शस्तैल चैलकचादिभिः॥
ग्रहाम्बुद रजो धूमनीहारै रसमावृतम्।
यथार्कमण्डलम्भाति भाति सत्त्वं तथा मलम्॥
ज्वलत्यात्मनि संरुद्धन्तत्सत्त्वं संवृतायने।
शुद्धः स्थिरः प्रसन्नार्चिर्दीपोदीपाशये यथा॥
शुद्ध सत्त्वस्य या शुद्धासत्या बुद्धिः प्रवर्त्तते।
यया भिनत्त्यति बलं महामोह मयन्तमः॥
सर्वभाव स्वभावज्ञोयया भवति निःस्पृहः।
योगं यथा साधयते साङ्ख्यः सम्पद्यते यया॥
यया नोपैत्यहङ्कारन्नोपास्ते कारणं यया।
यया नालम्बते किञ्चित्सर्वं संन्यस्यते यया॥
याति ब्रह्म यया नित्यमजरः शान्तमव्ययम्।
विद्या सिद्धिर्मतिर्मेधा प्रज्ञा ज्ञानञ्च सा मता॥
लोके वितितमात्मानं लोकञ्चात्मनि पश्यतः।
परावर दृशः शान्तिर्ज्ञान मूला न नश्यति॥

पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा।
ब्रह्म भूतस्य संयोगो न शुद्धस्योपपद्यते॥
नात्मनः कारणाभावाल्लिङ्गमप्युपलभ्यते।
स सर्वकारणत्यागान्मुक्त इत्यभिधीयते॥
विपापं विरजः शान्तं परमक्षरमव्ययम्।
अमृतं ब्रह्मनिर्वाणं पर्य्यायैः शान्तिरुच्यते॥
एतत्तत्सौम्य दुर्ज्ञानं यज्ज्ञात्वा मुक्तसंशयाः।
मुनयः प्रशमं जग्मुर्वीतमोहरजःस्पृहा इति॥
तत्र श्लोकौ। सप्रयोजनमुद्दिष्टं लोकस्य पुरुषस्य च।
सामान्यं मूलमुत्पत्तौ निवृत्तौ मार्ग एव च॥
शुद्धसत्त्वसमाधानं सत्या बुद्धिश्च नैष्ठिकी।
विषये पुरुषस्योक्ता निष्ठा च परमर्षिणा॥

इति पुरुषविचयः शारीरः समाप्तः।

---

## षष्ठोऽध्यायः।

अथातः शरीरविचयं शारीरं व्याख्यास्यामः।

शरीरविचयः शरीरोपकारार्थमिष्यते ज्ञात्वा हि शरीरतत्त्वं शरीरोपकारकरेषु भावेषु ज्ञानमुत्पद्यते तस्मात् शरीरविचयं प्रशंसन्ति कुशलाः। तत्र शरीरं नाम चेतनाधिष्ठानभूतं पञ्चभूतविकारसमुदयात्मकं समयोगि वा हि

यदा ह्यस्मिन् शरीरे धातवो वैषम्यमापद्यन्ते तदा क्लेशं विनाशं वा प्राप्नोति वैषम्यगमनं वा पुनर्धातूनां वृद्धिह्रासगमनमकार्त्स्न्येन प्रकृत्या च यौगपद्येन तु विरोधिनां धातूनां वृद्धिह्रासौ भवतः। यद्धि यस्य धातोर्वृद्धिकरं तत्ततो विपरीतगुणस्य धातोः प्रत्यवायकरं सम्पद्यते। तदेव तस्मात् सम्यगवधार्य्यमाणं युगपन्न्यूनातिरिक्तानां धातूनां साम्यकरं भवत्यधिकमपकर्षति न्यूनमाप्याययति एतावद्-वक्ति भैषज्यप्रयोगे फलमिष्टं स्वस्थवृत्तानुष्ठानञ्च यावद्धातूनां साम्यं स्वस्था ह्यपि धातूनां साम्यानुग्रहार्थमेव कुशला रसगुणानाहारविकारांश्च पर्यायेणेच्छन्त्युपयोक्तुं साम्यरस-मभ्यस्तानेकप्रकारभूयिष्ठांश्चोपयुञ्जानास्तद्विपरीतकरसमभ्य-स्तया चेष्टया सममिच्छन्ति कर्तुं देशकालात्मगुणविपरी-तानां हि कर्म्मणां आहारविकाराणाञ्च क्रियोपयोगः सम्यक् सर्वातियोगसन्धारणमसन्धारणमुदीर्णानाञ्च गति-मतां साहसानाञ्च वर्जनं स्वस्थवृत्तमेतावद्धातूनां साम्यार्थ-मुपदिश्यते। धातवः पुनः शारीराः समानगुणैः समान-गुणभूयिष्ठैर्वाप्याहारविहारैरभ्यस्यमानैर्वृद्धिं प्राप्नुवन्ति ह्रासन्तु विपरीतगुणभूयिष्ठैः वाप्यभ्यस्यमानैः तत्रेमे शरी-रधातुगुणाः संख्या सामर्थ्यकरास्तद्यथा गुरुलघुशीतोष्ण-स्निग्धरूक्षमन्दतीक्ष्णस्थिरमृदुकठिनविशदपिच्छिलश्लक्ष्णखर-सूक्ष्मस्थूलसान्द्रद्रवाः तेषु ये गुरवः ते गुरुभिराहारगुणै-रभ्यस्यमानैराप्याय्यन्ते धातु लघवश्च ह्रसन्ति लघवस्तु लघु-भिराप्याय्यन्ते गुरवश्च ह्रसन्ति एवमेव सर्वधातुगुणानां सा मान्ययोगाद्वृद्धिविपर्ययाद्ध्रासः तस्मान्मांसमाप्याय्यते।

मांसेन भूयोऽन्येभ्यः शरीरधातुभ्यः तथा लोहितं लोहितेन मेदोमेदसा वसा वसया अस्थि तरुणास्थ्ना मज्जा मज्जया शुक्रं शुक्रेण गर्भः त्वामगर्भेण यत्र त्वेवं लक्षणेन सामान्येन सामान्यवतामाहारविकाराणामसान्निध्यं स्यात् सन्निहितानां वापरयुक्तं मानगुणाः स्युराहारविकारास्तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनामपराहारविकाराणामुपयोगः स्यात् तद्यथा शुक्रक्षये क्षीरसर्पिषो रुपयोगो मधुरस्निग्धसमा मत्रक्षये पुनरिक्षुरसवारुणी मुण्डद्रवमधुराम्ललवणोपक्लेदिनां पुरीषक्षये कुल्माषमाषकूष्माण्डमध्ययवशाकधान्याम्लानां वातक्षये कटुकतिक्तकषायरूक्षलघुशीतानां पित्तक्षयेऽम्ललवणकटुकक्षारोष्णतीक्ष्णानां श्लेष्मक्षये स्निग्धगुरुमधुरसान्द्रपिच्छिलानान्द्रव्याणां कर्मापि यद्यद्यस्य धातोर्वृद्धिकरं तत्तदा सेव्यं एवमन्येषामपि धातूनां समान्यविपर्ययाभ्यां वृद्धि ह्रासौ यथाकालं कार्याविति सर्वधातूनामेकैकशोऽतिदेशतश्च वृद्धिह्रासकराणि व्याख्यातानि। कृत्स्नशरीरपुष्टिकराः त्विमे भावाः तद्यथा बलवत् पुरुषदेशे जन्म बलवत्पुरुषे च काले सुखश्च कालयोगो बीजक्षेत्रगुणसम्पच्चाहारसम्पच्च शरीरसम्पच्च सात्म्यसम्पच्च सत्त्वसम्पच्च स्वभावसंसिद्धिश्च यौवनञ्च कर्महर्षश्चेति। आहारपरिणामकरास्त्विमे भावाः तद्यथा ऊष्मा वायुः क्लेदः स्नेहः कालः समायोगश्चेति तत्र तु खल्वेषामूष्मादीनामाहारपरिणामकराणां भावानामिमे कर्मविशेषाः ऊष्मा पचति वायुरपकर्षति क्लेदः शैथिल्यमापादयति स्नेहो मार्दवं जनयति कालः पर्य्याप्ति-

अभिनिर्वर्त्तयति समयोगस्त्वेषां परिणामधातुकरः सम्पद्यते परिणामतस्त्वाहारस्य गुणाः शरीरगुणभावमापद्यन्ते यथा स्वयमविरुद्धाः विरुद्धाश्च विहन्युर्विहताश्च विरोधिभिः शरीरं शरीरगुणास्त्वेवं विविधाः संग्रहेण मलभूताः प्रसादभूताश्च। तत्र मलभूतास्ते ये शरीरस्य बधकरास्तथा शरीरच्छिद्रेषु उपदेहाः पृथक् जन्मनो बहिर्मुखाः परिपक्वाश्च धातवः प्रकुपिताश्च वातपित्तश्लेष्माणो ये चान्येऽपि केचित् शरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते सर्वांस्तान्मले संप्रचक्ष्महे इतरांस्तु प्रसादे गुर्वादींश्च द्रवान्तान् गुणभेदेन रसादींश्च शुक्रान्तान् द्रव्यभेदेन तेषां सर्वेषामेव वातपित्तश्लेष्माणो दूषयितारो भवन्ति। वातादीनां पुनर्धात्वन्तरेण प्रदुष्टानां विविधाशितपीतीयेऽध्याये विज्ञानान्युक्तानि एतावत्येव दुष्टदोषगतिर्यावत् संस्पर्शनात् शरीरधातूनां प्रकृतिभूतानान्तु खलु वातादीनां फलमारोग्यं तस्मादेषां प्रकृति भावे प्रयतितव्यम् इति।

तत्र श्लोकः। सर्वदा सर्वथा सर्वं शरीरं वेद यो भिषक्।
आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम्॥ इति।

तमेवमुक्तवन्तं भगवन्तमात्रेयमग्निवेश उवाच। श्रुतमेतद्यदुक्तं भगवता शरीराधिकारे वचः किन्नु खलु गर्भस्याङ्गं पूर्वमभिनिर्वर्त्तते कुक्षौ कुतो मुखं कथं चान्तर्गतस्तिष्ठति किमाहारश्च वर्त्तयति कथं भूतश्च निष्क्रामति कैश्चायमाहारोपचारैर्जातः सद्यो हन्यते कैरव्याधिरभिवर्द्धते किञ्चास्य देवादिप्रकोपनिमित्ता विकाराः सम्भवन्ति। आहोस्विन्न किञ्चास्य कालाकालमृत्योर्भावाभावयोर्भगवा-

नध्यवस्यति किञ्चास्य परमाणुशो निर्मिमीतानीति तमेव मुक्त-
वन्तमग्निवेशं भगवान् पुनर्वसुरात्रेय उवाच। पूर्व्वमुक्तमेत-
द्गर्भावक्रान्तौ यथायमभिनिर्व्वर्त्तते। कुक्षाविति कुमारशिरा
भरद्वाजः पश्यति सर्व्वेन्द्रियाणां तदधिष्ठानमिति कृत्वा
हृदयमिति काङ्कायनो वाह्लीकश्चेतनाधिष्ठानत्वात् नाभि-
रिति भद्रकाप्यः आहारागम इति कृत्वा पक्वगुद इति
भद्रशौनको मारुताधिष्ठानत्वात् हस्तपादमिति वडिशस्त-
त्कारणत्वात् पुरुषस्य इन्द्रियाणीति जनको वैदेहस्तान्यस्य
बुद्ध्याधिष्ठानानीति कृत्वा परोक्षत्वादचिन्त्यमिति मारीचिः
कश्यपः सर्व्वाङ्गनिर्वृत्तिरिति धान्वन्तरिः तदुपपन्नं सर्व्वा-
ङ्गानां तुल्यकालाभिनिर्वृत्तत्वात् हृदयप्रभृतीनां सर्व्वाङ्गानां
ह्यस्य हृदयं मूलमधिष्ठानञ्च केषाञ्चिद्भावानां न च तस्मात्
पूर्व्वाभिनिर्वृत्तिरेषान्तस्माद्धृदय पूर्व्वाणां सर्व्वाङ्गानान्तुल्य-
कालाभिनिर्वृत्तिः सर्व्वभावा ह्यन्योन्यस्यान्योन्ये तस्माद्यथा
भूत दर्शनं साधु गर्भस्तु खलु मातुः पृष्ठाभिमुखः ऊर्द्ध-
शिराः सङ्कुच्याङ्गान्यास्तेऽन्तः कुक्षेः व्यपगतपिपासा बुभुक्षस्तु
खलु गर्भः परतन्त्रवृत्तिमातरमाश्रित्य वर्त्तयत्युपस्नेहः
कश्चिन्नाभिनाड्ययनैः नाभ्यां ह्यस्य नाडीप्रसक्ता नाड्या-
ञ्चावरावरा चास्य मातुः प्रसक्ता हृदये मातृहृदयं
ह्यस्य तामवरामभि संप्लवते सिराभिः संस्यन्दमानाभिः।
स तस्य रसः सर्व्वबलवानाहारः स्त्रिया ह्यापन्नगर्भाया
स्त्रिधा रसः प्रतिपद्यन्ते स्वशरीरपुष्टयेस्तन्याय गर्भ-
वृद्धये च स तेनाहारेणोपस्तब्धो वर्त्तयत्यन्तर्गतः स
चोपस्थितकाले जन्मनि प्रसूते मारुतयोगात् परिवृत्त्या-

र्वाक्छिरा निष्क्रामत्य पथ्यपथ्येन एषा प्रकृति-
र्विकृतिरतोऽन्यथा परन्त्वतः स्वतन्त्रवृत्तिस्तस्याहारोपचारौ
जातसूत्रीयोपदिष्टौ अविकारकरौ चाभिवृद्धिकरौ भवतः
ताभ्यामेव च विषमाभ्याञ्जातः सद्यो हन्येत तरुरिवादिरत्य-
थ रोपितो वातातपाभ्यामप्रतिष्ठितमूलः आप्तोपदेशादद्-
भुतरूपदर्शनात्समुत्थानलिङ्गचिकित्सितविशेषाच्चा दोषान्
प्रकोपानुरूपा देवादिप्रकोपनिमित्ता विकाराः समुपल-
भ्यन्ते कालाकालमृत्य्वोस्तु खलु भावाभावयोरिदमध्यवसित-
मीयः कश्चिन् म्रियते सत्त्वः स कालेन म्रियते न हि काल-
छिद्रमस्तीत्येके तच्चासम्यक् न ह्यच्छिद्रताच्छिता वा
कालस्योपपद्यते काललक्षणा स्वभावात्तथाहुरपरे। यो
यदा म्रियते स तस्य नियतो मृत्युकाल इति तस्य सर्वे
भावा यथास्वं नियतकाला भविष्यन्ति तच्च नोपपद्यते प्र-
प्रत्यक्षं ह्यकालाहारवचनकर्म्मणां फलमनिष्टं विपर्य्यये
चेष्टं प्रत्यक्षतश्चोपलभ्यते कालाकालव्यक्तिस्तासु तास्ववस्थासु
तं तमर्थमभि समीक्ष्य तद्यथा कालो यमस्य व्याधे-
राहारस्यौषधस्य प्रति कर्म्म विसर्गस्याकालो वेति लोके-
ऽप्येतद्भवति काले देवो वर्षत्यकाले देवो वर्षति काले शी-
तमकाले शीतं काले तपत्यकाले तपति काले पुष्पफल
काले पुष्पफलं इति तस्मादुभयमस्ति काले मृत्युरकाले
च नैकान्तिकमत्र यदि ह्यकाले मृत्युर्नस्यान्नियतकाल-
प्रमाणमायुः सर्वं स्यात् एवं गते हिताहितमकारणं
स्यात् प्रत्यक्षानुमानोपदेशाश्चाप्रमाणं स्युर्ये प्रमाणभूताः
सर्वं तन्त्रेषु येरायुष्याण्यनायुष्याणि चोपलभ्यन्ते प्राम्वसु-

मात्रमेतद्वादमृषयो मन्यन्ते यदुच्यते नाकालमृत्युरस्तीति वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले तस्य निमित्तं प्रकृतिगुणसम्पत्सात्म्योपसेवनं चेति।

तत्र श्लोकाः। शरीरं यद्यथा तच्च वर्त्तते क्लिष्टमामयैः।
यथाक्लेशं विनाशश्च याति ये चास्य धातवः॥
वृद्धि ह्रासौ यथा चैषां चीणानामौषधञ्च यत्।
देहवृद्धिकरा भावा बलवृद्धिकराश्च ये॥
परिणामकरा भावा या च तेषां पृथक् क्रिया।
मलाख्याः सम्प्रदानाख्या धातवः प्रश्न एव च॥
न वक्तोऽनिलयश्चास्य विधिवत् सम्प्रकाशितः।
तथ्यः शरीरविचये शारीरे परमर्षिणा॥

इति शरीरविचयः शारीरः।

---

## सप्तमोऽध्यायः।

अथातः शरीरसंख्यां शारीरं व्याख्यास्यामः।

शरीरसङ्ख्यामवयवशः शरीरं प्रविभज्य सर्वशरीरसङ्ख्यातः प्रमाणज्ञानहेतोर्भगवन्तमात्रेयमग्निवेशः पप्रच्छ तमुवाच भगवानात्रेयः। शृणु मत्तोऽग्निवेश! सर्वशरीरमभिचक्षाणस्य यथा प्रश्नमेकमना यथावत् शरीरे षट् त्वचः तद्यथोदक-धरी बाह्या द्वितीया त्वसृग्धरी तृतीया सिध्मकिलासस-

श्चवाधिष्ठाना चतुर्थी दद्रू कुष्ठसम्भवाधिष्ठाना पञ्चमी अलजीविद्रधी सम्भवाधिष्ठाना षष्ठी तु यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्यधिष्ठायारूंषि जायन्ते पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानीति षट् त्वचः षडङ्गं शरीरमवतत्य तिष्ठन्ति तयं शरीरस्याङ्गविभागः। तद्यथा द्वौ बाहू द्वे सक्थिनी शिरो ग्रीवमन्तराधिरिति षडङ्गं त्रीणि षष्ठानि शतान्यस्थ्नां सह दन्तनखेन तद्यथा द्वात्रिंशद्दन्ताः द्वात्रिंशद्दन्तोलूखलानि विंशतिः नखाः षष्टिः पाणिपादाङ्गुल्यस्थीनि विंशतिः पाणिपादशलाकाः चत्वारि पाणिपादशलाकाधिष्ठानानि द्वे पार्ष्ण्योरस्थिनी चत्वारः पादयोर्गुल्फाः द्वौ मणिकौ हस्तयोः चत्वार्यरत्न्योरस्थीनि चत्वारि जङ्घयोर्द्वे जानुनी द्वे जानुकपालिके द्वावूरुनलकौ द्वौ बाहुनलकौ द्वावंसौ द्वे अंसफलके द्वावक्षकौ एवं जत्रु द्वे तालुषके द्वे श्रोणिफलके एकं भगास्थि पञ्चचत्वारिंशत् पृष्ठगतान्यस्थीनि पञ्चदश ग्रीवायां चतुर्दशोरसि द्वयोः पार्श्वयोश्चतुर्विंशतिः पार्श्वकास्तावन्ति चैव स्थालकानि तावन्ति चैव स्थालकार्बुदानि एकं हन्वस्थि द्वे हनूमूलबन्धने एकास्थि नासिका गण्डकूटललाटं द्वौ शङ्खौ चत्वारि शिरःकपालानीति पञ्चेन्द्रियाधिष्ठानानि तद्यथा त्वग्जिह्वानासिकाक्षिणी कर्णौ च पञ्च बुद्धीन्द्रियाणि तद्यथा स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रमिति पञ्चकर्मेन्द्रियाणि तद्यथा हस्तौ पादौ पायूपस्थो जिह्वा चेति दशप्राणायतनानि तद्यथा मूर्द्धा कण्ठो हृदयं नाभिर्गुदवस्तिरोजः शुक्रं शोणितं मांसमिति तेषु षट्पूर्वाणि मर्मसंख्यातानि पञ्च-

दश कोष्ठाङ्गानि तद्यथा नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधारश्चामाशयश्चेति पक्वाशयश्चोत्तरगुदश्चाधरगुदश्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपावहनञ्चेति षट्पञ्चाशत् प्रत्यङ्गानि षट्स्वङ्गेषूक्तानि यान्यपरिसंख्यातानि पूर्वमन्येषु परिसंख्यायमानेषु तान्यन्यैः पर्य्यायैः प्रकाशानि भवन्ति। तद्यथा द्वे जङ्घापिण्डिके द्वे ऊरुपिण्डिके द्वौ स्फिजौ द्वौ वृषणौ एकं शेफः द्वे उखे द्वौ वङ्क्षणौ द्वौ कुकुन्दरौ एकं वस्तिशीर्षं एकमुदरं द्वौ स्तनौ द्वौ श्लेष्मभुवौ द्वे बाहुपिण्डिके चिबुकमेकं द्वावोष्ठौ द्वे सृक्किणी द्वौ दन्तवेष्टकौ एकं तालु एका गलशुण्डिका द्वे उपजिह्विके एका गोजिह्विका द्वौ गण्डौ द्वे कर्णशष्कुलिके द्वौ कर्णपुत्रकौ द्वे अक्षिकूटे चत्वारि अक्षिवर्त्मानि द्वे अक्षिकनीनिके द्वे भ्रुवौ एकमवटु चत्वारि पाणिपादहृदयानि नव महान्ति छिद्राणि सप्त शिरसि द्वे चाधः। एतावद्दृश्यमतः परं तर्क्यमेव तद्यथा नवस्नायुशतानि सप्तशिराशतानि द्वे धमनीशते चत्वारि पेशीशतानि सप्तोत्तरं मर्म्मशतं द्वे सन्धिसहस्रे एकान्नत्रिंशत् शतसहस्राणि नव च शतानि षट्पञ्चाशानि शिरा धमनीनामणुशः प्रविभज्यमानानां मुखाग्रपरिमाणं तावन्ति चैव केशश्मश्रु लोमानीत्यें तद्यथा वद्यसंख्यातं त्वक्प्रभृति दृश्यं उक्तमेव चैके तदुभयमपि विकल्पते प्रकृतिभावात् शरीरस्य यत्त्वञ्जलिसङ्ख्येयं तदुपदेक्ष्यामः तत्परं प्रमाणमभिज्ञेयं तच्च वृद्धिह्रासयोगि तर्क्यमेव तद्यथा दशोदकस्याञ्जलयः शरीरे स्वेनाञ्जलि प्रमाणेन यत्तत्प्रच्यवमानं

पुरीषमनुबध्नाति अतियोगेन तथा मूत्रं रुधिरमन्यांश्च शरीरधातून्यत्तत्सर्व्वंशरीरचरं वाह्या त्वग्बिभर्त्ति यत्तु त्वगन्तरे व्रणगतं लसीका शब्दं लभते यच्चोष्मणानुबद्धं लोमभ्यो निष्पतत् स्वेदशब्दमवाप्नोति तदुदकं दशाञ्जलिप्रमाणं नवाञ्जलयः पूर्व्वस्याहारपरिणामधातो यं तं रस इत्याचक्षते अष्टौ शोणितस्य सप्त पुरीषस्य षट् श्लेष्मणः पञ्च पित्तस्य चत्वारो मूत्रस्य त्रयो वसायाः द्वौ मेदसः एको मज्जायाः मस्तिष्कस्य अर्द्धाञ्जलिः शुक्रस्य तावदेवप्रमाणं तावदेव श्लेष्मणश्चौजसः इत्ये तच्छरीरतत्त्वमुक्तं तत्र यद्विशेषतः स्थूलं स्थिरं मूर्त्तिमद्गुरु खरकठिनमङ्गं नखास्थिदन्तमांसचर्मवर्च्चः केशश्मश्रुनखलोमकण्डरादि तत्पार्थिवं गन्धो घ्राणञ्च यद्द्रवसरमन्दस्निग्धगुरुपिच्छिलरसरुधिरवसा कफपित्तमूत्रस्वेदादि तदाप्यं रसो रसनञ्च यत् पित्तमूष्मा यो याचभाः शरीरे तत्सर्व्वमाग्नेयं रूपं दर्शनञ्च यदुच्छ्वासप्रश्वासोन्मेषनिमेषा कुञ्चनप्रसारणगमनप्रेरणधारणादि तद्वायवीयं स्पर्शः स्पर्शनञ्च यद्विविक्तं यदुच्यते महान्ति चाणूनि स्रोतांसि तदान्तरिक्षं शब्दः श्रोत्रञ्च यत् प्रयोक्तृ तत्प्रधानं बुद्धिर्मनश्चे'त शरीरावयवा यथा स्थूलभेदेनावयवानां निर्द्दिष्टा शरीरावयवास्तु परिमाणभेदेनापरिसंख्येया भवन्ति। अतिबहुत्वादति सौक्ष्म्या दतीन्द्रियत्वाच तेषां संयोगविभागे वायुः परिमाणूनाङ्कारणं कर्म स्वभावश्च तदेतत् शरीरसंख्या तमनेकावयवं दृष्टं एकत्वेन सङ्गः सङ्ग्रातं पृथक्त्वेनापवर्गः तत्र प्रधानमसक्तं सर्व्वतस्यातिवृत्तौ निवर्त्तते इति।

तत्र श्लोकौ। शरीरसङ्ख्यां यो वेद सर्वावयवशो भिषक्।
तदज्ञाननिमित्तेन स मोहेन न युज्यते॥
असमूढ़ो मोहमूलैश्च न दोषैरभिभूयते।
निर्दोषो निःस्पृहः शान्तः प्रशाम्यत्य पुनर्भवः॥
इति शरीरसङ्ख्यः शारीरः समाप्तः।

---

अष्टमोऽध्यायः।

अथातो जाति सूत्रीयं शारीरं व्याख्यास्यामः।

स्त्रीपुरुषयोरव्यापन्न शुक्रशोणितगर्भाशययोः श्रेयसीम्प्रजामिच्छतोस्तदर्थाभिनिर्वृत्तिकरं कर्मोपदेक्ष्यामः। अथाप्येतौ स्त्रीपुरुषौ स्नेहस्वेदाभ्यामुपपाद्य वमनविरेचनाभ्यां संशोध्य क्रमेण प्रकृतिमापादयेत् संशुद्धौ च स्थापनानुवासनाभ्यामुपचरेत्। उपचरेच्च मधुरौषधसंस्कृताभ्यां घृतक्षीराभ्यां पुरुषं स्त्रियन्तु तैलमांसाभ्यां ततः पुष्पात्प्रभृति त्रिरात्रमासीत ब्रह्मचारिण्यधः शायिनी पाणिभ्यामन्नमजर्जरात् पात्राद्भुञ्जाना च काञ्चिन्मृजामापद्येत। ततश्चतुर्थेऽहन्ये तामुच्छाद्य सशिरस्कं स्नापयित्वा शुक्लानि वासांस्याच्छादयेत् पुरुषञ्च ततः शुक्लवाससौ स्रग्विणौ सुमनसावन्योन्यमभिकामौ संवसतमिति ब्रूयात्। स्नानात् प्रभृति

युग्मेष्वहःसु संवसेतां अयुग्मेषु दुहितृकामौ न च न्युब्जां पार्श्वगतां वा संसेवेत न्युब्जया वातो बलवान् सयोनिं पीडयति। पार्श्वगताया दक्षिणे पार्श्वे श्लेष्मा सच्युतोऽपि दधाति गर्भाशयं वामे पित्तम्पार्श्वे तस्याः पीडितं विदहति रक्तशुक्रं तस्मादुत्ताना बीजं गृह्णीयात्। तस्याहि यथा स्थानमवतिष्ठन्ते दोषाः पर्याप्ते चैनां शीतोदकेन परिषिञ्चेत्। तत्रात्याशिता क्षुधिता पिपासिता भीता विमनाः शोकार्ता क्रुद्धान्यञ्च पुमांसमिच्छन्ती मैथुने चाभिकामा न गर्भन्धत्ते विगुणां वा प्रजां जनयति अतिबलामति वृद्धां दीर्घरोगिणी मन्येन वा विकारेणोपसृष्टां वर्जयेत् पुरुषेऽप्येत एव दोषाः। अतः सर्वदोषवर्जितौ स्त्रीपुरुषौ संसृजेयातां सञ्जातहर्षौ मैथुने चानुकूला विष्टगन्धं स्वास्तीर्णं सुखं शयनमुपकल्प्य मनोज्ञं हितमशनमशित्वा नात्याशितौ दक्षिणपादेन पुमान् स्त्री वामेनारोहेत् तत्र मन्त्रं प्रयुञ्जीत आहरसि विह्नरसि वायुरसि सर्वतः प्रतिष्ठासि धाता त्वाद्धातु विधाता त्वाद्धातु ब्रह्मवर्चसा भवेति ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाश्विनौ भगोऽथ मित्रावरुणौ पुत्रं वीरं दधातु मे इत्युक्त्वा संवसेतां। सा चेदेवमाशासीत बृहन्तमवदातं हर्य्यक्षमोजस्विनं शुचिं सत्त्वसम्पन्नं पुत्रमिच्छेयमिति शुद्धस्नानात् प्रभृत्यस्यै मन्थमवदातयवानां मधुसर्पिभ्यां संसृज्य श्वेताया गोः सरूपवत्साया: पयसा लोड्य राजते कांस्ये वा पात्रे कालेकाले सप्ताहं सततं प्रयच्छेत् पानाय प्रातश्च शालियवान्नविकारान् दधिमधुसर्पिभिः पयोभिर्वा संसृज्य भुञ्जीत। तथा सायमवदातशरणशयनासनयानवसनभूषणा च

स्यात्। सायम्प्रातश्च शश्वत् श्वेतं महान्तं ऋषभं आजानेयं हरिचन्दनाङ्कितं पश्येत्। सौम्याभिश्चैनां कथाभिर्मनोऽनुकूलाभिरुपासीत सौम्याकृति वचनोपचारचेष्टांश्च स्त्रीपुरुषानितरानपि चेन्द्रियार्थानवदातान् पश्येत् सहचर्यश्चैनाम्प्रिय हिताभ्यां सततमुपचरेयुः। तथा भर्ता नच मिश्रीभावमापद्येयातामित्यनेन विधिना सप्तरात्रं स्थित्वाष्टमेऽहन्याप्लुत्य सशिरस्का भर्त्रा सहाहतानि वस्त्राण्याच्छादयेत् अवदातानि अवदाताश्च स्रजो भूषणानि बिभृयात् ततः। ऋत्विक्प्रागुत्तरस्यान्दिशि अगारस्य प्राक्प्रवणमुदक् प्रवणं वा देशमभिसमीक्ष्य गोमयोदकाभ्यामुपलिप्य प्रोक्ष्य चोदकेन वेदिमस्मिन् स्थापयेत् ताम्पश्चिमेनाहत वस्त्रसञ्चये श्वेतर्षभेवाप्यजिन उपविशेत् ब्राह्मण प्रयुक्तो राजन्य प्रयुक्तास्तु वैयाघ्रे चर्मण्यानडुहे वा वैश्य प्रयुक्तास्तु रौरवे वास्ते वा तत्रोपविष्टः पालाशीभिरैङ्गुदीभि रौदुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय कुशैः परिस्तीर्य परिधिभिश्च परिधाय लाजैः शुक्लाभिश्च गन्धवतीभिः सुमनोभिरुपाकिरेत्तत्र प्रणीयोदपात्रं पवित्रपूतमुप संस्कृत्य सर्पिराज्यार्थं यथोक्तवर्णानाजानेयादीन्समन्ततः स्थापयेत्। ततः पुत्रकामा पश्चिमतोऽग्निं दक्षिणं ब्राह्मणमुपविश्यान्वालभेत सह भर्त्रा यथेष्टं पुत्रमाशसाना ततस्तस्या आशसनाया ऋत्विक्प्रजापतिमभिनिर्दिश्य योनौ तस्याः कामपरिपूरणार्थं काम्यामिष्टिं निर्वपेद्विष्णुर्योनिं कल्पयत्वित्यनयर्चा ततः चैवाज्येन स्थालीपाकमभिधार्य्य त्रिर्जुहुयात् यथाम्नायञ्चोपमन्त्रितमुदपात्रं तस्यै दद्यात् सर्वोदकार्थान् कुरुष्वेति ततः समाप्ते कर्मणि

पूर्वं दक्षिणपादमभिहरन्ती प्रदक्षिणमग्निमनुपरिक्रामेत् ततोनुपरिक्रम्य ब्राह्मणान् स्वस्तिवाचयित्वा सह भर्त्राज्यशेषं प्राश्नीयात्। ततस्तौ सह संवसेतामष्टरात्रं तथाविधपरिच्छदावेव तथेष्टपुत्रं जनयेतां। यातु स्त्री श्यामं लोहिताक्षं व्यूढोरस्कं महाबाहुं पुत्रमाशासीत या वा कृष्णं कृष्णमृदुकेशं शुक्लाक्षं शुक्लदन्तं तेजस्विनमात्मवन्तमेव एतानयोरपि होमविधिः किन्तु परिबर्हवर्णवर्ज्याः स्यात् पुत्रवर्णानुरूपस्तु यथाशीः परिवर्होऽन्यः कार्य्यः। शूद्रा तु नमस्कारमेव कुर्य्यात् देवगुरुतपस्विसिद्धेभ्यः या या च यथाविधं पुत्रमाशासीत तस्यास्तस्यास्तां तां पुत्राशिषमनुनिशम्य तांस्तान् जनपदान्मनसानुपरिक्रामेत् ततनुपरिक्रम्य या या येषां येषां जनपदानां मनुष्याणामनुरूपं पुत्रमाशासीत सा सा तेषां तेषां जनपदानामाहारविहारोपचारपरिच्छदा ननु विधीयस्वेति वाच्या स्यात् इत्येतत् सर्वं पुत्राशिषां समृद्धिकरं कर्म्म व्याख्यातं भवति। न तु खलु केवलमेतदेव कर्म्मवर्णवैशेष्यकरं तेजो धातुरप्युदकान्तरिक्षधातुप्रायोऽवदातवर्णकरं पृथिवी वायु धातुप्रायः श्याववर्णकरः सत्त्ववैशेष्यकराणि पुनस्तेषां तेषां प्राणिनां मातापितृसत्त्वान्यन्तर्वत्न्याः श्रुतयश्चाभीक्ष्णं स्वोचितञ्च कर्म्म सत्त्वविशेषाभ्यासश्चेति यथोक्तेनोपसंस्कृतशरीरयोः स्त्रीपुरुषयोः मिश्रीभावमापन्नयोः शुक्रं शोणितेन सह समेत्या व्यापन्नमव्यापन्नेन योनावनुपहतायामप्रदुष्टे गर्भाशये गर्भमभिनिर्वर्त्तयत्येकान्तेन। तद्यथा निर्म्मले वाससि सुपरिकल्पिते रजनं समुदितगुणं उपनिपातादेव रागमभिनिर्वर्त्तयति तद्वत्।

यथा वा चीरं दध्नाभियुतमभिषवणाद्विहाय स्वभावमापद्यते दधित्वाय तद्वदेवमभिनिर्वर्त्तमानस्य गर्भस्य स्त्रीपुरुषत्वे हेतुः पूर्वमुक्तोयथा हि वीजमनुपतप्तं सुप्तं स्वां स्वां प्रकृतिमनुविधीयते व्रीहिर्वा व्रीहित्वं यवो वा यवत्वं तथा स्त्रीपुरुषावपि यथोक्तं हेतुविभागम् अनुविधीयते तयोः कर्म्मणा वेदोक्तेन विवर्त्तमानमुपदिश्यते प्राग्व्यक्तीभावात् प्रयुक्तेन सम्यक् कर्म्मणां हि देशकालसम्पदुपेतानां नियतमिष्टफलत्वं तथेतरेषामितरत्वं तस्मादापन्नगर्भां स्त्रियमभिसमीच्य प्राक् व्यक्तीभावात् गर्भस्य पुंसवनमस्यै दद्यात्। गोष्ठे जातस्य न्यग्रोधस्य प्रागुत्तराभ्यां शाखाभ्यां शुङ्गे अनुपहते आदाय द्वाभ्यां धान्यमाषाभ्यां सम्पदुपेताभ्यां गौरसर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्ये पिवेत्। तथा यवान् जीवकर्षभकापामार्गं सह चरकल्कांश्च युगपदेकैकशो यथेष्टं वाप्युपसंस्कृत्य पयसा कुड्य कीटकं मत्स्यकञ्चोदकाञ्जलौ प्रक्षिप्य पुष्येण पिवेत् तथा कनकमयान् राजतानायसांश्च पुरुषकानग्निवर्णां ननु प्रमाणान् दध्नि पयसि उदकाञ्जलौ वा प्रक्षिप्य पिवेदनवशेषतः पुष्येण। पुष्येणैव च पिष्टस्य पच्यमानस्योष्माणमुपघ्राय तस्यैव च पिष्टस्योदकसंसृष्टस्य रसं देहलीमुपनिधाय दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुनेति पुंसवनानि यच्चान्यदपि ब्राह्मणा ब्रूयुराप्ता वा पुंसवनमिष्टं तच्चानुष्ठेयम्।

अत ऊर्द्ध्वं गर्भस्थापनानि व्याख्यास्यामः।

ऐन्द्री ब्राह्मी शतवीर्य्या सहस्रवीर्य्या अमोघा अव्यथा शिवा अरिष्टा वाद्यपुष्पी विश्वक्सेनकान्तेत्यन्यासाः

मोषधीनां शिरसा दक्षिणेन पाणिना धारणं एताभि-
श्चैव सिद्धस्य पयसः सर्पिषो वा पानं एताभिश्चैव पुष्ये
पुष्ये स्नानं सदाच ताः समालभेत तथा सर्वासाञ्जी-
वनीयोक्तानामोषधीनां सदोपयोगः तैस्तैरुपयोगविधि-
भिरिति गर्भस्थापनानि। गर्भोपघातकरास्त्विमे भावाः
तद्यथा उत्कटुकविषमकठिनासनसेविन्या वातमूत्र
पुरीषवेगानुपरुन्धत्या दारुणानुचितव्यायामसेविन्यास्ती-
क्ष्णोष्णातिमात्रसेविन्याः प्रमिताशनसेविन्या गर्भो म्रिय-
तेऽन्तः कुक्षेर्वा अकाले स्रंसते शोषी भवति वा तथाभि-
घातप्रपीड़नैः श्वभ्रकूपप्रपातोद्देशावलोकनैर्वाभीक्ष्णं मातुः
प्रपतत्यकाले तथाभिभिर्यानयानैरप्रियातिमात्रश्रवणैर्वा
प्रपततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाड़ीकण्ठ-
मनुवेष्टयति। विवृतशायिनी नक्तञ्चारिणी चोन्मत्तं जन-
यत्यपस्मारिणं पुनः कलिकलहशीला व्यवायशीला दुर्व-
पुषमह्रीकं स्त्रैणं वा शोकनित्या भीतमपचितमल्पायुषं वा
अभिध्यात्री परोतापिनमीर्षुं स्त्रैणं वास्तेनान्वायासबहु-
लमतिद्रोहिणमकर्मशीलं वा अमर्षणा चण्डमौपधिकम-
सूयकं वा स्वप्ननित्या तन्द्रालुमबुधं अल्पाग्निं वा मद्य
नित्या पिपासालुमनवस्थितं वा गोधामांसप्राया शार्करिण-
मश्मरिणं शनैर्मेहिनं वा वराहमांसप्राया रक्ताक्षङ्कथन-
मतिपरुषरोमाणं वा मत्स्यमांस नित्या चिरनिमिषं स्त-
ब्धाक्षं वा मधुरनित्या प्रमेहिनं मूकमतिस्थूलं वा अम्ल
नित्या रक्तपित्तिनं त्वगक्षिरोगिणं वा लवण नित्या शी-
घ्रवलीपलितं खालित्य रोगिणं वा कटुक नित्या दुर्बल-

मल्पशुक्रमनपत्यं वा तिक्तनित्या शोषिणमबलमपचितं
वा कषाय नित्या श्यावमाना हितमुदावर्त्तिनं वा यद्यच्च
यस्य यस्य व्याधेर्निदानमुक्तं तत्तदा सेवमानान्तर्वत्नी तद्वि-
कारबहुलमपत्यं जनयति। पितृजास्तु शुक्रदोषा मातृजैर-
पचारैर्व्याख्याता इति गर्भोपघातकरा भावा व्याख्याताः। त-
स्मादहितानाहारविहारान् प्रजासम्पदमिच्छन्ती स्त्री विशे-
षेण वर्ज्जयेत्। साध्वाचारा चात्मानमुपचरेद्धिताभ्यामाहार-
विहाराभ्यां व्याधींश्चास्या मृदुमधुरशिशिरसुखसुकुमारप्रायै-
रौषधाहारोपचारैरुपचरेत् न चास्या वमनविरेचनशिरो
विरेचनानि विरेचयेत् न रक्तमवसेचयेत् सर्वकालं चाना-
स्थापनमनुवासनं वा कुर्य्यात् अन्यत्राष्टमं मासमुपादाय-
वमनादिसाध्येषु पुनर्विकारेष्वात्ययिकेषु मृदुभिर्वमनादि-
भिस्तदर्थकारिभिर्वोपचारः स्यात् पूर्णमिव तैलपात्रमसं-
क्षोभयतान्तर्वत्नी भवत्युपचर्य्या सा चेदुपघाताद्द्वयोस्त्रिषु
वा मासेषु पुष्पं पश्येन्नास्या गर्भः स्थास्यतीति विद्यात्। अ-
जातसारा हि तस्मिन् काले गर्भाः सा चेच्चतुष्प्रभृतिषु मासेषु
क्रोधशोकेर्षा भयत्रासव्यवायव्यायामसंक्षोभसंधारणविषमा-
सनशयनस्थानक्षुत्पिपासातियोगात् कदाहाराद्वा पुष्पं
पश्येत् तस्या गर्भस्थापनविधिमुपदेक्ष्यामः। पुष्पदर्शनादेवैनां
ब्रूयात् शयनं तावन्मृदुसुखशिशिरास्तरणसंस्तीर्णमीषदव-
नतशिरस्कं प्रतिपद्यस्वेति यष्टीमधुकसर्पिर्भ्यां परमशिशि-
रवारिसंस्थिताभ्यां पिचुमापाद्योपस्थ समीपे स्थापयेत्तस्याः
तथा शतधौतसहस्रधौताभ्यां सर्पिर्भ्यां अधोनाभेः सर्वतः
प्रदिह्यात् गव्येन चैनां पयसा सुशीतेन मधुकाम्बुना वा

न्यग्रोधादिकषायेण वा परिषेचयेत् अश्नीनाभेः उदकं वा सुशीतमवगाहयेत् क्षीरिणाञ्च कषायद्रुमाणां स्वरसपरिपीतानि शुक्लानि धारयेत् न्यग्रोधशुङ्गादिसिद्धयोर्वा क्षीरसर्पिषोः पिचुं धारयेत् अतश्चैवाक्षमात्रं प्राशयेत् प्राशयेद्वा न केवलं एव सर्पिः पद्मोत्पलकुमुदकिञ्जल्कांश्चास्यै समधुशर्करं लेहार्थं दद्यात् शृङ्गाटकपुष्करबीजभक्षणार्थं गन्धप्रियङ्गु-सितोत्पलशालूकोदुम्बरशलाटु न्यग्रोधशुङ्गानि वा पाययेतैनां आजेन पयसा चैनां बलातिबलाशालि षष्टिकेक्षु-मूलिकाकोली शृतेन समधु शर्करं रक्तशालीना मोदनं भोजयेत् लावकपिञ्जलकुरङ्गशम्बरशशहरिणैणकालपुच्छ-करसेन वा घृतसलिलसिद्धेन सुखशिशिरोपवातदेशस्थां भोजयेत् क्रोधशोकाया सव्यवायव्यायामै तच्चाभिरचेत् सौम्याभिर्यैनां कथाभिर्मनोऽनुकूलाभिरुपासीत तथास्या गर्भस्तिष्ठति यस्याः पुनरामान्वयात् पुष्पदर्शनं स्यात्। प्रायस्तत्तस्या गर्भबाधकं भवति विरुद्धोपक्रमत्वाद्यस्याः पुनरुष्णतीक्ष्णोपयोगाद्गर्भिण्या महति गर्भे जातसारे पुष्पदर्शनं स्यादन्यो वा योनि प्रशस्तावत्तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुतत्वात् सकालमवतिष्ठतेऽतिमात्रन्तमुपविष्टकमित्याचक्षते केचित्। उपवासव्रतकर्मपरायाः पुनः कदाहारायाः स्नेहद्वेषिण्या वातप्रकोपनोक्तान्या सेव्यमानाया गर्भो न वृद्धिं प्राप्नोति परिशुष्कत्वात् सचापि कालमवतिष्ठतेऽतिमात्रं अतिमात्रस्पन्दनश्च भवति तन्नागोदनमित्याचक्षेनायोस्तयोरुभयोरपि चिकित्सितविशेषमुपदेक्ष्यामः। भौतिकजीवनीय वृंहणीय मधुरवातहरसिद्धानां सर्पिषामुप-

योगः पयसामामगर्भाणाञ्च गर्भ वृद्धिकरस्तथा सम्भोजनैरेतैरेव च घृतादिभिः सुभिक्षाया अभीक्ष्णं यानवाहनावमार्जनजृम्भणैरुपपादनमिति यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते तां श्येन मत्स्यगव्यशिखितास्रतित्तिरीणामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वा प्रभूत सर्पिषा मूलकयूषेण वा रक्तशालीनामोदनम्भोजयेत्। तैलाभ्यङ्गेन चास्याः पुनरुदावर्त्तविबन्धः स्यादष्टमे मासे नचानुवासनम साधुमन्येत ततस्तस्यास्तद्विकार प्रशमनमुपकल्पयेन्निरूहं उदावर्त्तो ह्युपेचितः सहसा स गर्भाङ्गर्भिणीङ्गर्भमथवाति पातयेत्। तत्र वीरणशालि कुशकाशिका वेतसपरिव्याधि मूलानां भूतीकानन्ताकाश्मर्यपरूषक मधुकमृद्वीकानाञ्च पयसार्द्धोदकेनोद्गमध्यरसं पियालविभीतकमज्जतिलकल्कसम्प्रयुक्तमीषल्लवणमनत्युष्णन्निरूहन्दद्यात्। व्यपगत विबन्धां चैनां सुखसलिल परिषिक्ताङ्गीं स्थैर्यकमविदाहिनमाहारम्भूक्तवन्ती सायं मधुरक सिद्धेन तैलेनानुवासयेत् न्युब्जत्वेन मास्थापनानुवासनाभ्यामुपचरेत्। यस्याः पुनरति मात्रदोषोपचयाद्वा तीक्ष्णोष्णाति मात्रसेवनाद्वातमूत्रपुरीषवेगधारणैर्वा विषमाशन शयनस्थान संपीडनातिघातैर्वा क्रोधशोकेर्ष्याभयत्रासादिभिर्वा साहसैर्वा परैः कर्मभिरन्तः कुक्षेर्गर्भोम्रियते तस्याः स्तिमितंस्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव भवत्य स्पन्दनो गर्भः शूलमधिकमुप जायते नचाव्यः प्रादुर्भवन्ति योनिर्न प्रस्रवत्यक्षिणी चास्याः स्रस्ते भवतः ताम्यति व्यथते भ्रमते श्वसत्यरति बहुला च भवति न चास्यावेगः प्रादुर्भावो यथावदुपलभ्यते इत्येवं लक्षणां

स्वयं मृतगर्भेयमिति विद्यात्। तस्य गर्भशल्यस्य जरायुप्रपतनं कर्मसमानमित्येके मन्त्रादिकर्माथर्ववेदविहितमित्येके परिदृष्टकर्मणा शल्यहर्त्रा हरणमित्येके व्यपगत गर्भशल्यान्तु स्त्रियमामगर्भां सुरासीध्वरिष्टमधुमदिरासवानामन्यतममग्रे सामर्थ्यतः पाययेत गर्भकोष्ठशुद्ध्यर्थमर्त्ति विस्मरणार्थम्प्रहर्षणार्थञ्चातः परं सम्शोधनैर्बलानुरक्षिभिर स्नेह सम्प्रयुक्तैर्यवाग्वादिभिर्विलेपन्यादिभिर्वा तत्काल योगिभिराहारैरुपचरेत् दोष धातुक्लेदन शोषणमात्रकालमतः परं स्नेह पानैर्वस्तिभिराहारविधिभिश्च दीपनीय जीवनीय बृंहणीय मधुरवातहरसमाख्यातैरुपचारः परिपक्कगर्भशल्यायाः पुनर्विमुक्त शल्यायास्तदहरेव स्नेहोपचारः स्यात् परमतो निर्विकारमाप्यायमानस्य गर्भस्य मासे मासे कर्मोपदेक्ष्यामः।

प्रथमे मासे शङ्कितगर्भमापन्नं क्षीरमनुपस्कृतं मात्रावच्छीतं काले काले पिबेदन्तर्वत्नी सात्म्यमेव च पुनर्भोजनञ्च सायं प्रातर्भुञ्जीत। द्वितीये मासे क्षीरमेव च मधुरौषधवत् सिद्धं। तृतीये मासे क्षीरं मधु सर्पिर्भ्यामुपसंसृज्य। चतुर्थे मासे क्षीरनवनीतमक्षमात्रमश्नीयात् पञ्चमे मासे क्षीरसर्पिः। षष्ठे मासे क्षीरसर्पिः मधुरौषधसिद्धं तदेव। सप्तमे मासि गर्भस्य केशा जायमाना मातुर्विदाहं जनयन्तीति स्त्रियो भाषन्ते तन्नेति भगवानात्रेयः। किन्तु गर्भोत्पीडनाद्वातपित्तश्लेष्माणः उरः प्राप्य विदहन्ति ततः कण्डूरुपजायते कण्डूमूला किक्किसावाप्तिः तत्र कोलोदकेन

नवनीतस्य मधुरौषधसिद्धस्य पाणितलमात्रं काले ऽस्यै दद्यात्। चन्दनमृणालकल्केनास्याः स्तनोदरं विमृद्नीयात् शिरीषधातकीसर्षपमधूकचूर्णैः कुटजार्जकबीजमुस्तहरिद्रा कल्कैर्वा निम्बकोलकसुरसमञ्जिष्ठा कल्कैर्वा पृषतहरिणशशरुधिरयुतया त्रिफलया वा करवीरपत्रसिद्धेनाम्भसा-जातकण्डूश्च कण्डूयने वर्जयेत्। त्वग्भेदवैरूप्यपरिहारार्थ-मसह्यायान्तु कण्डूां उन्मर्दनोद्धर्षणाभ्यां परिहारः स्यात्। माधूरमाहारजातं वातहरमल्पमस्नेहलवणमल्पोद-कान्नपानं भुञ्जीत। अष्टमे तु मासि क्षीरयवागूं सर्पिष्मतीं पिबेत् नेति भद्रकाप्यः पैङ्गल्यावाधो हि अस्या गर्भमाग-च्छेदिति। अस्त्वत्र पैङ्गल्यावाध इत्याह भगवान् पुनर्वसु रात्रेयो नत्वेवै तत्र कार्य्यं एवं कुर्वीत हि अरोगमरोगा बलवर्णस्वरसंहननसम्पदुपेतं ज्ञातीनां श्रेष्ठमपत्यं जनयति। नवमे तु खल्वेनां मासि मधुरौषधसिद्धेन तैलेनानुवासयेत्। अतः चास्यास्तैलमिश्रं योनौ प्रणमेत् गर्भस्थानमार्गस्नेह-नार्थं यदिदं कर्म्म प्रथमं समुपादायोपदिष्टमामं आनवमा-न्मासात्तेन गर्भिण्या गर्भसमये गर्भधारणे कुक्षिकटी पार्श्वं पृष्ठं मृदु भवति वातश्चानुलोमः सम्पद्यते मलपुरीषे च प्रकृतिभूते सुखेन मार्गाणापद्यते चर्म्मनखानि च मार्दवमुप-यान्ति बलवर्णौ चोपचीयते पुत्रं चेष्टं सम्पदुपेतं सुखिनं कालेन प्रजायते इति प्राक् चैवास्या नवमान्मासात् सूतिका-गारं कारयेत्। अपहृतास्थि शर्करा काले देशं प्रशस्तरूपरस-गन्धायां भूमौ प्राग्द्वारमुदग्द्वारं वा वैल्वानां काष्ठानां तिन्दुकेङ्गुदकानां भल्लातकानां वारणानां वा यानि चान्या-

न्यपि ब्राह्मणाः शंसेयुरथर्ववेदविदः। तद्वसना लेपनाच्छादनापिधानसम्पदुपेतं वास्तु हृदययोगाग्निसलिलोलूखलवर्चःस्थानस्नानभूमि महानसमृतुसुखं तत्र सर्पिस्तैलमधुरकसैन्धवसौवर्चलकालगुडकुष्ठकिलिमनागरपिप्पलीमूलहस्तिपिप्पली मण्डूकपिप्पली एलालाङ्गलीवचा चित्रकचिरिविल्वहिङ्गु सर्षपलशुनकनकनीपानसी बल्वजभूर्जा कुलत्थमैरेय सुरासवाः सन्निहिताः स्युः तथाश्मानौ द्वौ द्वे च एरण्डमूले सोलूखले खरवृषभश्च द्वौ च तीक्ष्णौ पिप्पलकौ सौवर्णराजतौ द्वे शस्त्राणि च तीक्ष्णायसानि द्वौ च विल्वमयौ पर्यङ्कौ तैन्दुकेङ्गुदानि च काष्ठान्यग्नि सन्धुक्षणानि स्त्रियश्च बह्व्यो बहुशः प्रजाता सौहार्दयुक्ताः सततमनुरक्ताः प्रदक्षिणाचाराः प्रतिपत्ति कुशलाः प्रकृतवत्सलास्त्यक्तविषादाः क्लेशसहिन्योऽभिमताः ब्राह्मणश्चाथर्ववेदविद्यच्चान्यदपि तत्र समर्थं मन्येत यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धाः तत्कार्यं ततः प्रवृत्ते नवमे मासि पुण्येऽहनि नक्षत्रयोगमुपगते प्रशस्ते भगवति शशिनि कल्याणे करणे मैत्रे मुहूर्ते शान्तिं हुत्वा गोब्राह्मणमग्निमुदकञ्चादौ प्रवेश्य गोभ्यः तृणोदकं मधु लाजांश्च प्रदाय ब्राह्मणेभ्योऽक्षताः सुमनसो नान्दीमुखानि च फलानीष्टानि दत्त्वा उदकपूर्वमासनस्थेभ्योऽभिवाद्य पुनराचम्य स्वस्तिवाचयेत्ततः पुण्याहशब्देन गोब्राह्मणमन्वावर्तमाना प्रदक्षिणं प्रविशेत् सूतिकागारं। तत्रस्था च प्रसवकालं प्रतीक्षेत तस्यास्तु खल्विमानि लिङ्गानि पूजनकालमभितो भवन्ति तद्यथा क्लमो गात्राणां ग्लानिराननस्याक्ष्णोर्विमुक्तबन्धनत्वमिव कुक्षेरवस्रंसनमधो गुरुत्वं वंक्षण

वस्ति कटी पार्श्वं पृष्ठनिस्तोदो योनेः प्रस्रवणमनन्नाभिलाष-
श्चेति ततोऽनन्तरमावीनां प्रादुर्भावः प्रसेकश्च गर्भोदकस्यावी-
प्रादुर्भावे तु भूमौ शयनं विदध्यात् मृद्वास्तरणोपपन्नं तद-
ध्यासीत सा ताः समन्ततः परिवार्य्य यथोक्तगुणाः स्त्रियः
पर्य्युपासीरन्नाश्वासयन्त्यो वा वाग्भिर्ग्राहिणीभिः सान्त्वनी-
याभिः। सा चेदावीभिः संक्लिश्यमाना न प्रजायेताथैनां ब्रूयात्
उत्तिष्ठ मुसलमन्यतरत् गृहीत्वानेन तदुलूखलं धान्यपूर्णं
मुहुर्मुहुरभिजहि मुहुर्मुहुरवजृम्भस्व चंक्रमस्व चान्तरा-
न्तरा इत्येवमुपदिशन्त्येके तन्नेत्याह भगवानात्रेयः। दारु-
णव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते विशेषतश्च
प्रजननकाले प्रचलितसर्वधातु दोषायाः सुकुमार्य्या नार्य्या
मुसलव्यायामसमीरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्या-
द्दुष्प्रतीकारतमा च तस्मिन् काले विशेषेण भवति
गर्भिणी। तस्मात् मुसलग्रहणं परिहार्य्यं ऋषयो मन्यन्ते
जृम्भणचङ्क्रमणं पुनरनुष्ठेयं इत्यथास्यै दद्यात् कुष्ठै-
लालाङ्गलिकीवचा चित्रकचिरि बिल्वचूर्णमुपघ्रातुं सा तं
मुहुर्मुहुरुपजिघ्रेत् तथा भूर्जपत्र धूमं तस्याश्चान्तरान्तरा
कटीपार्श्वपृष्ठसक्थिदेशादीषदुष्णेन तैलेनाभ्यज्यानुसुख-
मवमृद्नीयादित्यनेन कर्म्मणा गर्भोऽवाक्प्रतिपद्यते स यदा
जानीयाद्विमुच्य हृदयमुदरमस्याविशति वस्तिशिरोऽवगृ-
ह्णाति त्वरयन्त्येनामाव्यः परिवर्त्ततेऽधो गर्भ इत्यस्यामव-
स्थायां पर्य्यङ्कमेनामारोप्य प्रवाहितमुपक्रमयेत् कर्णे चा-
स्या मन्त्रमिममनुकूला स्त्री जपेत्।

क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पान्तु वैशल्यं च दिशन्तु ते ॥
प्रसुष्वत्वमविक्लिष्टमविक्लिष्टा शुभानने ।
कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितमिति ॥

तारयेनां यथोक्तगुणाः स्त्रियोऽनुशिष्युरनागतं मा प्रवाहिष्टाः या ह्यनागतं प्रवाहयतोऽव्यर्थमस्यास्तत्कर्म्म भवति प्रजाश्चास्या अविक्रता विक्रतिमापन्ना श्वासकासशोष-प्रसक्ता वा भवति । यथा हि क्षवथूद्गारवातमूत्रपुरीषवेगान् प्रयतमानोऽप्यप्राप्तकालान्न लभते कृच्छ्रेण वाप्य वाप्नोति तथा नागतकालं गर्भमपि प्रवाहमाना यथा चैषामेव क्षवथ्वादीनां सन्धारणमुपघातायोपपद्यते तथाप्राप्तकालस्य गर्भस्य प्रवहणं सा यथा निर्देशं कुरुष्वेति वक्तव्या तथा च कुर्वती शनैः पूर्वं प्रवहते ततोऽनन्तरं बलवत्तरं तस्याः प्रवाहमानायाः स्त्रियः शब्दं कुर्य्युः प्रजाता प्रजाता धन्यं धन्यं पुत्रमिति तथास्या हर्षेणाप्यायन्ते प्राणाः यदा च प्रजाता स्यात्तदेवैनामवेक्षेत कच्चिदस्याः अवरा आपन्ना नेति तस्याः चेदवरानप्रपन्ना स्यादथैनामन्यतमा स्त्री दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवत् निपीड्य सव्येन पृष्ठतः उपसंगृह्य सुनिर्धूतां निधुनुयात् अथास्याः पादपार्ष्ण्या श्रोणीमाकोटयेदस्याः स्फिजावुपसंगृह्य सुपीडितं पीडयेत् । अथास्या वालवेण्या कण्ठतालूपरि सृशेत् भूर्ज्जपत्रकाचमणि सर्पनिर्मोकधूमैश्चास्या योनिं धूपयेत् कुष्ठतालीसकल्कं बल्वज यूषमैरेय सुरामण्डे तीक्ष्णे कौलत्थे वा मण्डूकपिप्पली सम्पाके वा संप्लाव्य

पाययेतेनां। तथा सूक्ष्मैलां पिप्पली कालगुरुचव्यचित्रकोप-कुञ्चिका कल्कं खरवृषभस्य वाजीवती दक्षिणं कर्णमुद्धृत्य हृषदि जर्जरीकृत्य बल्वजयूषादीनामाप्लावनानामन्यत-मस्मिन् प्रक्षिप्य मुहूर्त्तस्थितमुद्धृत्य तदाप्लावनं पाययेतेनां शतपुष्पा कुष्ठमदनहिङ्गु सिद्धस्य चैनां तिलस्य पिचुं ग्राह-येत्। अतश्च वानुवासयेदेतैरेव चाप्लावनैः फलजीमूतेक्ष्वा-कुधामार्गवकुटजकृतवेधनहस्ति पिप्पल्युपहितैरास्थापयेत् तदास्थापनमस्याः सह वातमूत्रपुरीषमन्यानि वा बहिर्भा-गानि सज्जन्ति तस्यास्तु खल्ववरायाः प्रपतनार्थं कर्म्माणि क्रियमाणे जातमात्रेऽस्यैव कुमारकार्य्याणि तद्यथाश्मनोः सङ्घट्टनं कर्णयोर्मूले शीतोदकेनोष्णोदकेन वा मुखपरि-षेकः तथा संक्लेशविहतान् प्राणान् पुनर्लभेत कृष्णकपा-लिका शूर्पेण चैनमभि निष्पुनीयाद्यद्यचेष्टः स्यात् यावत् प्राणानां प्रत्यागमनात्ततः प्रत्यागतप्राणं प्रकृतिभूतमभि समीक्ष्य स्नानोदकग्रहणाभ्यामुपपादयेत्। अथास्य ताल्वोष्ठ-कण्ठजिह्वा प्रमार्जनमारभेत अङ्गुल्यामुपरि लिखितनखया सुप्रक्षालितोपनया कर्पासपिचुमत्या प्रथमं प्रमार्जितस्यास्य च शिरस्तालु कर्पास पिचुना स्नेहगर्भेण प्रतिच्छादयेत्। ततोऽस्यानन्तरं सैन्धवोपहितेन सर्पिषा प्रच्छर्दनं नाड्या-स्तस्याः कल्पनविधिमुपदेक्ष्यामः। नाभिबन्धनात् प्रभृत्यष्टा-ङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैः गृहीत्वा तीक्ष्णेन रौप्यराजतायसानां छेदनानामन्यतमे-नोर्द्धधारेण छेदयेत्तामग्रे सूत्रेणोपनिबध्य कण्ठे स्याव-सजेत् तस्य चेन्नाभिः पच्येत लोध्रमधुकप्रियङ्गुदारुहरिद्रा-

कल्कसिद्धेन तैलेनाभ्यङ्गः। एषामेव तैलौषधानां चूर्णेनावचूर्णयेत् नाडीं कल्पनविधिः सम्यक् असम्यक् कल्पने हि नाड्या आयमशण्ठी पिपीलिका विनामिका विजृम्भिका बाधेभ्यो भियं तत्राविदाहिभिर्वातपित्तप्रशमनैरभ्यङ्गाच्छादनपरिषेकैः सर्पिर्भिश्चोपक्रमो गुरुलाघवमभिसमीक्ष्य ततोऽनन्तरं जातकर्म्मकार्यं तद्यथा मधु सर्पिषी मन्त्रोपमन्त्रिते यथाम्नायं प्राशितुं दद्यात् स्तनमत ऊर्द्ध्वमेतेनैव विधिना दक्षिणं पातुं पुरस्तात् प्रयच्छेत्। अथातः शीर्षतः स्थापयेदुदकुम्भं मन्त्रोपमन्त्रितं अथास्य रक्षां विदध्यात् आरी खदिरकर्कन्धु पीलु परूषकशाखाभिरस्या गृहं समन्ततः परिवारयेत् सर्वतश्च सूतकागारस्य सर्षपातसी कणकणीकाः प्रकिरेयुः तथा तण्डुलबलि होमः सततमुभयतः कालं क्रियेतानामकर्मणोद्वारे च मुसलदेहलीमनुतिरश्चीनं न्यस्तं स्याद्वचा कुष्ठक्षेमकहिङ्गुसर्षपातसी कणकणीकानां रक्षोघ्नसमाख्यातानां चौषधीनां पोट्टलकं बद्धा सूतिकागारस्योत्तरदेहल्यामासजेत्। तथा सूतिकायाः कण्ठे सपुत्रायाः स्थाल्युदककुम्भपर्य्यङ्केष्वपि तथैव च द्वयोर्द्वयं पक्षयोः कणकाष्ठेन्धनवानग्निस्तिन्दुककाष्ठेन्धनश्चाग्निः सूतिकागारस्याभ्यन्तरतो नित्यं स्यात् स्त्रियश्चैनां यथोक्तगुणाः सुहृदश्चानुजागृयुः दशाहं द्वादशाहं वानुपरतप्रदानमङ्गलाशीः स्तुति गीतवादित्रमन्नपानविषदमनुरक्तप्रहृष्टजनसम्पूर्णं तद्वेश्मकार्यं ब्राह्मणश्चाथर्ववेदवित् सततमुभयतः कालं शान्तिं जुहुयात् स्वस्त्ययनार्थं कुमारस्य तथा सूतिकायाः इत्येतद्रक्षा विधानमुक्तं। सूतिकान्तु खलु बुभुक्षितां

विदित्वा स्नेहं पाययेत परया मात्रया सर्पिस्तैलं वसां मज्जानं वा सात्मीभावमभि समीक्ष्य पिप्पली पिप्पलीमूलचव्यचित्रक शृङ्गवेरचूर्णसहितं पीतवत्याश्च सर्पिस्तैलाभ्यामभ्यज्य वेष्टयेदुदरं महता वाससा तथा न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात् जीर्णे तु स्नेहे पिप्पल्यादिभिरेव सिद्धां यवागूं सुस्निग्धां द्रवां मात्रशः पाययेतोभयतः कालं चोष्णोदकेन परिषेचयेत् प्राक् स्नेहयवागूपानाभ्यां एवं पञ्चरात्रं सप्तरात्रं वानुपाल्य ततः क्रमेणाप्याययेत् स्वस्थवृत्तमेतत् सूतिकायाः। तस्यास्तु व्याधिरुत्पद्यते स कृच्छ्रसाध्यो भवति असाध्यो वा गर्भवृद्धिक्षपितशिथिलसर्वशरीरधातुत्वात् प्रवाहणवेदना क्लेदनरक्तनिःस्रुतिविशेषशून्यशरीरत्वाच्च तस्मात्तां यथोक्तेन विधिनोपचरेत् भौतिकजीवनीय बृंहणीय मधुरवातहरसिद्धैरभ्यङ्गोच्छादनपरिषेकावगाहानुपानविधिभिर्विशेषतश्चोपचरेद्विशेषतो हि शून्यशरीराः स्त्रियः प्रजाता भवन्ति दशमे त्वहनि सपुत्रा स्त्री सर्वगन्धौषधैर्गौरसर्षपैश्च स्नाता लघ्वहतवस्त्रपरिहिता पवित्रेष्टलघुविचित्रभूषणवती संस्पृश्य मङ्गलान्युचितामर्चयित्वा देवतां शिखिनः शुक्लवाससो व्यङ्गान् ब्राह्मणान् स्वस्ति वाचयित्वा कुमारमहतानाञ्च वाससां च प्राक्शिरसमुदक्शिरसं वा संवेश्य देवता पूर्वं द्विजातिभ्यः प्रणमतीत्युक्त्वा कुमारस्य पिता द्वे नामनी कुर्यात् नाक्षत्रिकं नामाभिप्रायिकञ्च। तत्राभिप्रायिकं घोषवदाद्यन्तस्थान्तमूष्मान्तञ्च वृद्धं त्रिपुरुषानूकमनरि प्रतिष्ठितं नाक्षत्रिकन्तु नक्षत्रदेवता समानाख्यम्। कृते च नाम कर्मणि कुमारं परीक्षितुमुपक्रमेदायुषः

प्रमाणज्ञानहेतोः तत्रेमानि आयुष्मतां कुमाराणां लक्षणानि । एकजा मृदवोऽल्पाः स्निग्धाः सुबद्धमूलाः कृष्णाः केशाः प्रशस्यन्ते स्थिरा बहला त्वक् प्रकृत्या प्रकृतिसम्पन्नमीषत् प्रमाणातिवृत्तमनुरूपमातपत्रोपमं शिरो व्यूढं दृढसमं सुश्लिष्टशङ्खसन्ध्यूर्ध्व व्यञ्जनमुपचितं वलिनमर्द्धचन्द्राकृति ललाटं बहलौ विपुलसमपीठौ नीचौ बद्धौ पृष्ठतोऽवनतौ सुश्लिष्टकर्णपुटकौ महाच्छिद्रौ कर्णावीषत् प्रलम्बिन्या वामगते समे संहतमहत्यौ भ्रुवौ समे समाहितदर्शने व्यक्तभावविभागे बलवती तेजसोपपन्ने स्वाङ्गापाङ्गे चक्षुषी ऋज्वी महोच्छ्वासा वंशसम्पन्नेषदवनताग्रा नासिका महदृजु सुनिविष्टमास्यं आयामविस्तरोपपन्ना श्लक्ष्णा तन्वी प्रकृति युक्ता जिह्वा श्लक्ष्णं युक्तोपचय मूष्मोपपन्नं रक्तं तालु महानदीनः स्निग्धोऽनुनादी गम्भीरसमुत्थो धीरः स्वरः नाति स्थूलौ नाति कृशावस्य प्रच्छादनौ रक्तावोष्ठौ महत्यौ हनू वृत्तौ नाति महती ग्रीवा व्यूढमुपचितमुरो गूढं जत्रु पृष्ठवंशश्च विकृष्टान्तरौ स्तना वंशपातिनौ स्थिरे पार्श्वे वृत्तपरिपूर्णायतौ बाहू सक्थिनी अङ्गुलयश्च महदुपचितं पाणिपादं स्थिरा वृत्ताः स्निग्धास्ताम्रास्तुङ्गाः कूर्माकाराः करजाः प्रदक्षिणावर्त्ता सोत्सङ्गा नाभी नाभ्युरस्त्रिभागहीना समा समुपचितमांसा कटी वृत्तौ स्थिरोपचितमांसौ नात्युन्नतौ नात्यवनतौ स्फिचावनुपूर्ववृत्तौ उपचययुक्तावूरू नात्युपचितेनात्यपचिते एणीपदे प्रगूढसिरास्थि सन्धी जङ्घे नात्युपचितौ गुल्फौ पूर्वोपदिष्टगुणौ पादौ कूर्माकारौ प्रकृति युक्तानि वातमूत्रपुरीषगुह्यानि तथा स्वप्नजागरणायासस्मितरुदित-

स्तनग्रहणानि यच्च किञ्चिदन्यदपि अनुक्तमस्ति तदपि सर्वं प्रकृति सम्पन्नमिष्टं विपरीतं पुनरनिष्टमिति दीर्घायुर्लक्षणानि।

अतो धात्रीपरीक्षामुपदेक्ष्यामः।

अथ ब्रूयात् धात्रीमानयेति समानवर्णां यौवनस्थां निभृतामनातुरामव्यङ्गामव्यसनामविरूपामजुगुप्सामजुगुप्सितदेशजातीयामक्षुद्रां अक्षुद्रकर्मिणीं कुले जातां वत्सलां जीववत्सां पुंवत्सां दोग्ध्रीमप्रमत्तामशायिनीं कुशलोपचारां शुचिमशुचिद्वेषिणीं स्तनस्तन्य सम्पदुपेतां इति। तत्रेयं स्तनसम्पत् नात्यूर्द्ध्वौ नातिलम्बौ अनति कृशावनति पीनौ युक्त पिप्पलकौ सुखपपानौ चेति स्तनसम्पत्। स्तन्यसम्पत् प्रकृतवर्णगन्धरसस्पर्शमुदपात्रे वदुह्यमानमुदकं व्येति प्रकृतिभूतत्वात्तत् पुष्टिकरमारोग्यकरं चेति स्तन्यसम्पत् अतोऽन्यथा व्यापन्नं ज्ञेयम्। तस्य विशेषाः श्यावारुणवर्णं कषायानुरसं विषदमनतिलक्ष्यगन्धं रूक्षं द्रवं फेनिलं लघ्वतृप्तिकरं कर्षणं वातविकाराणां कर्तृ वातोपसृष्टं क्षीरमभिज्ञेयं कृष्णनीलपीतताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धि भृशोष्णं पित्तविकारिणं कर्तृ पित्तोपसृष्टं क्षीरमभिज्ञेयं अत्यर्थं शुक्लमति माधुर्योपपन्नं लवणानुरसं घृततैलवसामज्जा गन्धि पिच्छिलं तन्तु मदपात्रेऽवसीदच्छ्लेष्मविकारिणां कर्तृ श्लेष्मोपसृष्टं क्षीरमभिज्ञेय। तेषां त्रयाणामपि क्षीरदोषाणां प्रकृति विशेषमभि समीक्ष्य यथास्वं यथास्वं यथा दोषञ्च वमनविरेचनस्थापनानुवासनानि विभजन् कृतानि प्रशमनाय। पानाशनाय विधिस्तु दुष्टक्षीरा यव-

गोधूमशालिषष्टिकमुद्गहरेणु कुलत्थसु सौवीरक तुषोदक-मैरेयमेदकलशुनकरञ्जप्रायः क्षीरदोषविशेषांश्चावेक्ष्यावेक्ष्य तत्तद्विधानं कार्य्यं स्यात्। पाठा महौषधसुरदारुमुस्तमूर्वा गुडूचीवत्सकफलकिराततिक्तकटुकरोहिणीशारिवाकषायाणाञ्च पानं प्रशस्यते। तथान्येषां तिक्तकषायकटुकमधुराणां द्रव्याणां प्रयोगः क्षीरविकारविशेषानभिसमीक्ष्य मात्राकालञ्चेति क्षीरविशोधनानि। क्षीरजननानि तु मद्यानि वर्ज्यानि ग्राम्यानूपौदकानि शाकधान्यमांसानि द्रवमधुराम्ललवणभूयिष्ठाश्चाहाराः क्षीरिण्यश्चौषधयः क्षीरपानञ्चानायासश्चेति वीरणा षष्टिशालिकेक्षुवालिकादर्भकुशकाशगुन्द्रोत्कटमूलकषायाणाञ्च पानमिति क्षीरजननानि। धात्री तु यदा स्वादुबहुशुद्धदुग्धा स्यात्तदा स्नातामनुलिप्तां शुक्लवाससमवस्रान्तां बालां गृहीत्वा ... नामरिष्टां वाटरपुष्पीं विश्वक्सेनकान्तामिति त्रिभल्लौषधीः कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेदिति धात्रीकर्म।

अतोऽनन्तरं कुमारागारविधिमनुव्याख्यास्यामः।

वास्तुविद्याकुशलप्रशस्तं रम्यमतमस्कं निवातं प्रवातैकदेशं दृढमपगतपशुदंष्ट्रिमूषिकापतङ्गं सुसंविभक्तसलिलोलूखलवर्च्चःस्थानस्नानभूमिं महानसमृतुसुखं यथर्त्तुशयनासनास्तरणसम्पन्नं सुविहितरक्षाविधानबलिमङ्गलहोमप्रायश्चित्तं शुचिवृद्धवैद्यानुरक्तजनसम्पूर्णमिति कुमारागारविधिः।

शयनास्तरणप्रावरणानि कुमारस्य मृदुलघुशुचिसुगन्धीनि स्युः स्वेदमलजन्तुमन्तिमूत्रपुरीषोपसृष्टानि च वर्ज्यानि स्युः

असति सम्भवेऽन्येषां तान्येव च सुप्रक्षालितो पवनोपधूपितानि सुशुद्धशुष्काण्युपयोगं गच्छेयुः। धूपनानि पुनर्वाससां शयनास्तरणप्रावरणानाञ्च यवसर्षपातसी हिङ्गु गुग्गुलु वचा चोरकवयःस्था गोलोमी जटिला पलङ्कषा शोकरोहिणी सर्पनिर्मोचकानि घृतसम्प्रयुक्तानि स्युः। मणयश्च धारणीयाः कुमारस्य खड्गरुरुगजगवय वृषभाणां जीवतां दक्षिणेभ्यो विषाणेभ्योऽग्राणि गृहीतानि स्युः। ऐन्द्राद्यश्चौषधयो जीवकर्षभकौ च यान्यप्यन्यानि ब्राह्मणाः प्रशंसेयुः क्रीडनकानि खल्वस्य तु विचित्राणि घोषवन्त्यभिरामाणि अगुरूण्यतीक्ष्णाग्राणि अनास्य प्रवेशीनि अप्राणहराणि वित्रासनानि स्युः न ह्यस्य वित्रासनं साधु तस्मात्तस्मिन् रुदत्य भुञ्जाने वान्यत्र वा विधेयतामगच्छति राक्षसपिशाचपूतनाद्यानां नामान्याह्वयता कुमारस्य वित्रासनार्थं नाम ग्रहणं कार्यं स्यात्। यदि त्वातुर्यं किञ्चित्कुमारमागच्छेत्तत्प्रकृति निमित्तपूर्वं रूपलिङ्गोपशयविशेषैस्तत्त्वतोऽनुबुध्य सर्वविशेषानातुरौषधदेशकालाश्रयानवेक्षमाणश्चिकित्सितुमारभेतैनम्। मधुरमृदुलघु सुरभि शीतसङ्करं कर्म्म प्रवर्त्तयेन्नेवं सात्म्या हि कुमारास्तथा स शर्म लभते चिराय अरोगत्वे रोगवृत्तमातिष्ठेत् देशकालात्मगुणविपर्ययेण वर्तमानः क्रमेण सात्म्यानि परिवर्ज्योपयुञ्जानः सर्वाण्यहितानि वर्जयेत्तथाबलवर्णशरीरायुषां सम्पदमवाप्नोतीति एवमेनं कुमार मायौवनप्राप्तेर्धर्मार्थौ कुशला शमनाद्यानुपालयेदिति पुत्राशिषां समृद्धिकरं कर्म्म व्याख्यातम्।

तदाचरन् यथोक्तैर्विधिभिः प्रजां यथेष्टां लभते न सूकय इति।

तत्र श्लोकौ ।

प्रशास्तिषां कर्म्म समृद्धिकारकं यदुक्तमेतन्महदर्थ संहितम् ।
तदाचरन् ज्ञो विधिभिर्यथा तथा पूजां यथेष्टां लभते न सूयकः
शारीरं चिन्त्यते सर्वं दैवमानुषसम्पदा ।
सर्वभावैर्यतस्तस्मात् शारीरं स्थानमुच्यते ॥
इति जातिसूत्रीयः शारीरः समाप्तः ।

इति चरकमुनिविरचितायां संहितायां शारीरस्थानकं चतुर्थम्

---

अथ इन्द्रियस्थानम् ।

प्रथमोऽध्यायः ।

अथातो वर्णस्वरीयमिन्द्रियं व्याख्यास्यामः ।

इह खलु वर्णश्च स्वरश्च गन्धश्च रसश्च स्पर्शश्च चक्षुश्च श्रोत्रञ्च घ्राणञ्च रसनञ्च सत्त्वञ्च भक्तिश्च शौचञ्चाचारश्च स्मृतिश्चाकृतिश्च बलञ्च ग्लानिश्च तन्द्राचारम्भश्च गौरवञ्च लाघवञ्च आहारश्चाहारपरिणामश्चोपायश्चापायश्च व्याधिश्च व्याधि पूर्वरूपञ्च वेदनाश्चोपद्रवाश्च छायाश्च प्रतिच्छायाश्च स्वप्नदर्शनञ्च दूताधिकारश्च पथि चौत्पातिका स्वातुरकुले भावावस्था भेषजसंवृत्तिश्च भेषजविकारयुक्तिश्चेति । परीक्षाणि प्रत्यक्षानुमानोपदेशैरायुषः प्रमाणविशेषं जिज्ञासमानेन

भिषजा तत्र तु खल्वेषां परीक्ष्याणां कानिचित् पुरुषमनाश्रितानि कानिचित् पुरुषसंश्रयाणि तत्र यानि पुरुषमनाश्रितानि तान्युपदेशतश्च परीक्षेत पुरुषसंश्रयाणि पुनः प्रकृतितश्च विकृतितश्च तत्र प्रकृतिर्जाति प्रसक्ता च कुलप्रसक्ता च देशानुपातिनी च कालानुपातिनी च वयोऽनुपातिनी च प्रत्यात्मनियता च जाति कुलदेशकालवयः प्रत्यात्मनियता हिता तेषां तेषां पुरुषाणां ते ते भावविशेषा भवन्ति । विकृतिः पुनर्लक्षणनिमित्ता च लक्ष्यनिमित्ता च । तत्र लक्षणनिमित्ता सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि विकृतानि हि कानिचित् शरीरोपनिबद्धानि यानि तस्मिंस्तस्मिन् काले विकृतिमुत्पादयन्ति । लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तं निदानेषु निमित्तानुरूपा तु निमित्तार्थकारिणी या तामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषजो भूयश्चायुषः क्षयनिमित्तां प्रेतलिङ्गानुरूपां यामायुषोन्तर्गतस्य ज्ञानार्थमुपदिशन्ति धीराः। यामधिकृत्य पुरुषसंश्रयाणि मुमुर्षतां लक्षणानि उपदेक्ष्यामः इत्युद्देशः तद्विस्तरेणानुव्याख्यास्यामः । तत्रादित एव वर्णाधिकारः कृष्णः कृष्णश्यामः श्यामावदातोऽवदातश्च इति प्रकृति वर्णाः शरीरस्य । तत्र प्रकृतिवर्णमर्द्धशरीरे विकृतिवर्णमर्द्धशरीरे द्वावपि वर्णौ मर्यादा विभक्तौ दृष्ट्वा यदेवं सव्यदक्षिणविभागेन यद्येवं पूर्वपश्चिमविभागेन यद्युत्तराधरविभागेन यद्यन्तर्बहिर्विभागेनातुरस्यारिष्टमिति विद्यात् । एवमेव वर्णभेदो मुखेऽप्यन्यतो वर्त्तमानो मरणाय वर्णभेदेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः । तत्रापि मु-

व्यङ्गतिलकपिड़कानामानने जन्मातुरस्यैव मेवाप्रशस्तं विद्यात्। नखनयनवदनमूत्रपुरीषहस्तपादौष्ठादिष्वपि च वैकारिकोत्थानां वर्णानामन्यतमस्य प्रादुर्भावो हीनबलवर्णे लक्षणमायुषः चयस्य यच्चान्यदपि किञ्चिद्दर्णवैकृतमभूतपूर्वं सहसोत्पद्येतानिमित्तमेव हीयमानस्यातुरस्य शश्वत्तथा-रिष्टमिति वर्णाधिकारः।

स्वराधिकारस्तु हंसक्रौञ्चनेमिदुन्दुभिकलविङ्ककाकक-पोतकर्झरीकाः प्रकृतिस्वराः। यांश्चापराननपेक्षमाणोऽपि विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः एड़क-ग्रस्ताव्यक्तगद्गदक्षामदीनानुकीर्णास्त्वातुराणां स्वरा वैका-रिकाः। यांश्चापराननपेक्षमाणोऽपि विद्यात् प्राग्विकृतान-भूत्वोत्पन्नानिति प्रकृति विकृतिस्वरा व्याख्याताः। तत्र प्रकृतिवैकारिकाणां स्वराणामाशुभि निर्वृत्तिः स्वरानेकत्व-मेकस्य चानेकत्वमप्रशस्तमिति स्वराधिकारः। इति वर्ण-स्वराधिकारौ यथावदुक्तौ मुमूर्षतां ज्ञानार्थमिति।

तत्र श्लोकाः। यस्य वैकारिको वर्णः शरीर उपपद्यते।
अर्धे वा यदि वा कृत्स्ने निमित्तं नच नास्ति सः॥
नीलं वा यदि वा श्यावं ताम्रं वा यदि वारुणम्।
मुखार्धमन्यथा वर्णं मुखार्धेऽरिष्टमुच्यते।
स्नेहो मुखार्धे सुव्यक्तो रौक्ष्यमर्धमुखे भृशम्॥
ग्लानिरेव तथा हृष्टिर्मुखार्धे प्रेतलक्षणम्।
तिलकाः पिप्लवो व्यङ्गाराजयश्च पृथग्विधाः॥
आतुरस्याशु जायन्ते मुखे प्राणान् मुमुक्षतः।
पुष्पाणि नखदन्ते वा पङ्को वा दन्तसंश्रितः॥

चूर्णको वापि वेदान्ते लक्षणं मरणस्य तत्।
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः ॥
नखेष्वपि च वैवर्ण्यमेतत् क्षीणबलेऽन्तकृत्।
यस्य नीला वुभावोष्ठौ पक्वजाम्बवसन्निभौ ॥
मुमूर्षुरिति तं विद्यान्नरो धीरो गतायुषम्।
एको वा यदि वा नैको यस्य वैकारिकः स्वरः ॥
सहसोत्पद्यते जन्तोर्हीयमानस्य नास्ति सः।
यच्चान्यदपि किञ्चित्स्याद्वैकृतं स्वरवर्णयोः ॥
बलं मांसविहीनस्य तत्सर्वं मरणोदयम्।
इति वर्णस्वरावुक्तौ लक्षणार्थं मुमूर्षताम् ॥
यस्तौ सम्यग्विजानाति नायुर्ज्ञाने स मुह्यति ॥

इतिवर्णस्वरीयमिन्द्रियम्।

---

द्वितीयोऽध्यायः।

अथातः पुष्पितकमिन्द्रियं व्याख्यास्यामः।

पुष्पं यथापूर्वरूपं फलस्येह भविष्यतः।
तथा लिङ्गमरिष्टाख्यं पूर्वरूपं मरिष्यतः ॥
अप्येव तु भवेत् पुष्पं फलेनाननुबन्धि यत्।
फलञ्चापि भवेत् किञ्चिद्यस्य पुष्पं न पूर्वजम् ॥
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते।

मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम् ॥
मिथ्यादृष्टमरिष्टाभमनरिष्टमजानता ।
अरिष्टञ्चाप्यसम्बुद्धमेतत् प्रज्ञापराधजम् ॥
ज्ञानसम्बोधनार्थन्तु लिङ्गैर्मरणपूर्वकैः ।
पुष्पितानुपदेक्ष्यामो नरान् बहुविधान् बहून् ॥
नानापुष्पोपमो गन्धो यस्य वाति दिवानिशम् ।
पुष्पितस्य वनस्येव नानाद्रुमलतावतः ॥
तमाहुः पुष्पितं धीरा नरं मरणलक्षणैः ।
स वै संवत्सरादेहं जहातीति विनिश्चयः ॥
एवमेकैकशः पुष्पैर्यस्य गन्धः समो भवेत् ।
इष्टैर्वा यदि वानिष्टैः स च पुष्पित उच्यते ॥
तद्यथा चन्दनं कुष्ठं तगरा गुरुणी मधु ।
माल्यं मूत्रपुरीषे वा मृतानि कुणपानि वा ॥
ये चान्ये विविधात्मानो गन्धा विविधयोनयः ।
तेऽप्यनेनानुमानेन विज्ञेया विकृतिं गते ॥
इदञ्चाप्यतिदेशार्थं लक्षणं गन्धसंश्रयम् ।
वक्ष्यामो यदभिज्ञाय भिषक् मरणमादिशेत् ॥
वियोनिर्निर्व्विलरो यस्य गन्धो गात्रेषु दृश्यते ।
इष्टो वा यदिवानिष्टो न स जीवति तां समाम् ॥
एतावत् गन्धविज्ञानं रसज्ञानमतःपरम् ।
आतुराणां शरीरेषु वक्ष्यामो विधिपूर्वकम् ॥
यो रसः प्रकृतिस्थानां नराणां देहसम्भवः ।
स एषां चरमे काले विकारान् भजते द्वयान् ॥
कश्चिदेवास्य वैरस्य मत्यर्थमुपपाद्यते ।

स्वादुत्वमपरस्यापि विपुलं भजते रसः ॥
तमनेनानुमानेन विद्यात् विकृतिमागतम् ।
मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात् ॥
मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह ।
विरसादपसर्पन्ति जन्तोः कायान् मुमूर्षतः ॥
अत्यर्थरसिकं कायं कालपक्वस्य मक्षिकाः ।
अपि स्नातानुलिप्तस्य भृशमायान्ति सर्वशः ॥ इति ।

तत्र श्लोकः । यान्येतानि मयोक्तानि लिङ्गानि रसगन्धयोः ।
पुष्पितस्य नरस्यैतैः फलं मरणमादिशेत् ॥

इति पुष्पितकमिन्द्रियं समाप्तम् ।

---

तृतीयोऽध्यायः ।

अथातः परिमर्शनीयमिन्द्रियं व्याख्यास्यामः ।

वर्णे स्वरे च गन्धे च रसे चोक्तं पृथक् पृथक् ।
लिङ्गं मुमूर्षतां सम्यक् स्पर्शेष्वपि निबोधत ॥

स्पर्शं प्राधान्येनातुरस्यायुषः प्रमाणविशेषं जिज्ञासुः प्रकृतिस्थेन पाणिना केवलमस्य शरीरं स्पृशेत् परिमर्शयेद्वान्येन परिमृशता तु खल्वातुरमिमे भावाः तत्र तत्राव-बोद्धव्याः । तद्यथा सततस्पन्दनानां शरीरोद्देशानां स्तम्भः नित्योष्णणां शीती भावः मृदूनां दारुणत्वं श्लक्ष्णानां खरत्वं

सतामसम्भावः सन्धीनां स्रंसभ्रंशच्यवनानि मांसशोणितयोर्वीतोभावः दारुणत्वं स्वेदानुबन्धो वा यच्चान्यदपि भृशविकृतमनिमित्तं स्यादिति लक्षणं स्पृश्यानां भावानां तद्ग्रासतोऽनुव्याख्यास्यामः। तस्य चेत्परिदृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिगुदरपार्श्वपृष्ठपीकापाणि ग्रीवातात्वोष्ठललाटं स्विन्नं शीतं शीघ्रस्तं दारुणं वीतमांसशोणितं वा स्यात् परासुः अयं पुरुषो न चिरात् कालं करिष्यतीति विद्यात्। तस्य चेत्परिमृश्यमानानि पृथक्त्वेन गुल्फजानुवंक्षणगुदवृषणमेढ्रनाभ्यं सस्तनमणिकहनुनासिका कर्णाक्षि भ्रूशङ्खादीनि स्रस्तानि व्यस्तानि च्युतानि स्थानास्थानेभ्यः स्युरपरासुः अयं पुरुषो न चिरात् कालं करिष्यतीति विद्यात्। तथास्योच्छ्वासमन्या दन्तपक्ष्मचक्षुः केशलोमोदरनखाङ्गुलीरालक्षयेत् तस्य चेदुच्छ्वासोऽतिदीर्घः अति ह्रस्वो वा स्यात् परासुरिति विद्यात्। तस्य चेत् पक्ष्माणि जटिलावनद्धानि स्युः परासुरिति विद्यात्। तस्य चेच्चक्षुषी प्रकृति हीने विकृति युक्ते अत्युत्पिण्डिते अतिप्रविष्टेऽति जिह्मे अतिविषमे अतिप्रस्रुते अतिविमुक्तबन्धने सततोन्मिषिते सततनिमिषिते निमेषोन्मेषातिप्रवृत्ते विभ्रान्तदृष्टिके हीनदृष्टिके व्यस्तदृष्टिके नकुलान्धे पीतान्धे अलातवर्णे कृष्णनीलपीतश्यावताम्रहरितहारिद्रशुक्लवैकारिकाणां वर्णानामन्यतमेनाभिसंप्लुते वा स्यातां परासुरिति विद्यात्। अथास्य केशलोमान्यायच्छेत् तस्य चेत् केशलोमान्यायस्यमानानि प्रलुच्येरन् न चेद्वेदयत् परासुरिति विद्यात्। तस्य चेदुदरे शिराः प्रदृश्येरन् श्यावताम्रहारिद्रशुक्लाः

वा स्युः परासुरिति विद्यात्। तस्य चेन्नखा वीतमांसशोणिताः पक्कजाम्बववर्णाः स्युः परासुरिति विद्यात्। अथास्याङ्गुलीरायच्छेत्तस्य चेदङ्गुलय आयस्यमाना न चेत् स्फुटेयुः परासुरिति विद्यात्। भवति चात्र

एतान् सूक्ष्मान् बहून् भावान् यः सम्यगवबुध्यते।
आतुरो न स सम्मोहमायुर्ज्ञाने स गच्छति॥ इति।

इति परिमर्शनीयमिन्द्रियं समाप्तम्।

---

चतुर्थोऽध्यायः।

अथात इन्द्रियानीकमिन्द्रियं व्याख्यास्यामः।

इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषवित्।
ज्ञातुमिच्छन् भिषङ्मानमायुषस्तन्निबोधत॥
अनुमानात् परीक्षेत दर्शनादीनि तत्त्वतः।
अद्रा विरचितं ज्ञानमिन्द्रियाणामतीन्द्रियम्॥
स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसंश्रयम्।
आलक्ष्येतानिमित्तेन लक्षणं मरणस्य तत्॥
इत्युक्तं लक्षणं सम्यगिन्द्रियेष्वशुभोदयम्।
तदेव तु पुनर्भूयो विस्तरेण निबोधत॥
घनीभूतमिवाकाशमाकाशमिव मेदिनीम्।
विगीतं ह्युभयं ह्येतत् पश्यन् मरणमृच्छति॥

यस्य दर्शनमायाति मारुतोऽम्बरगोचरः।
अग्निर्नायाति चादीप्तः तस्यायुः क्षयमादिशेत्॥
जले सुविमले जालमजालावतते तथा।
स्थिते गच्छति वा दृष्ट्वा जीवितात् परिमुच्यते॥
जाग्रन् पश्यति यः प्रेतान् रक्षांसि विविधानि वा।
अन्यद्वाप्यद्भुतं किञ्चिन्न स जीवितुमर्हति॥
योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम्।
कृष्णं वा यदि वा शुक्लं सोऽग्नौ वसति सप्तमीम्॥
मरीचीनसतो मेघान् मेघान् वाप्यसतोऽम्बरे।
विद्युतो वा विना मेघैः पश्यन् मरणमृच्छति॥
मृण्मयीमिव यः पात्रीं कृष्णाम्बरसमावृताम्।
आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति॥
अपर्वणि यदा पश्येत् सूर्य्याचन्द्रमसोर्ग्रहम्।
अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम्॥
नक्तं सूर्य्यमहश्चन्द्रमनग्नौ धूममुत्थितम्।
अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति॥
प्रभावतः प्रभाहीनान्निष्प्रभावान् प्रभावतः।
नरान् विलिङ्गान् पश्यन्ति भावान् भावजिघांसवः॥
व्याकृतानि विवर्णानि विसंख्योपगतानि च।
विनिमित्तानि पश्यन्ति रूपाण्यायुःक्षये नराः॥
यश्च पश्यत्यदृश्यान् वै दृश्यान् यश्च न पश्यति।
तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम्॥
अशब्दस्य च यः श्रोता शब्दान् यश्च न बुध्यते।
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता॥

संवृत्याङ्गुलिभिः कार्यौ ज्वाला शब्दं य आतुरः ।
न शृणोति गतासुन्तं बुद्धिमान् परिवर्जयेत् ॥
विपर्ययेण यो विद्याद्गन्धानां साध्वसाधुताम् ।
न वातान् सर्वशो विद्यात्तं विद्याद्विगतायुषम् ॥
यो रसान्न विजानाति न वा जानाति तत्त्वतः ।
मुखपाकादृते पक्कं तमाहुः कुशला नरम् ॥
उष्णान् शीतान् खरान् श्लक्ष्णान् मृदूनपि च दारुणान् ।
स्पर्श्यान् स्पृष्ट्वा ततोऽन्यत्वं मुमूर्षुस्तेषु मन्यते ॥
अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ।
इन्द्रियैरधिकं पश्यन् पञ्चत्वमधिगच्छति ॥
इन्द्रियाणामृते दृष्टेरिन्द्रियार्थानदोषजान् ।
नरः पश्यति यः कश्चिदिन्द्रियैर्न स जीवति ॥
स्वस्था प्रज्ञा विपर्यासैरिन्द्रियार्थेषु वैकृतम् ।
पश्यन्ति ये राद्बहुशः तेषां मरणमादिशेत् ॥
तत्र श्लोकः । एतदिन्द्रिय विज्ञानं यः पश्यति यथा तथा ।
मरणं जीवितं चैतत् स भिषक् ज्ञातुमर्हति ॥

इति इन्द्रियानीकमिन्द्रियं समाप्तम् ।

---

## पञ्चमोऽध्यायः ।

अथातः पूर्वरूपीयमिन्द्रियं व्याख्यास्यामः ।

पूर्वरूपाण्यसाध्यानां विकाराणां पृथक् पृथक् ।

भिन्ना भिन्नानि वच्यामो भिषजां ज्ञानवृद्धये ॥
पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया ।
यं विशन्ति विशन्त्येनं मृत्युर्ज्वरपुरःसरः ॥
अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् ।
विशन्त्ये तेन कल्पेन तस्यापि मरणं ध्रुवम् ॥
पूर्वरूपैकदेशांस्तु वच्यामोऽन्यान् सुदारुणान् ।
ये रोगाननुबध्नन्ति मृत्युर्यैरनुबध्यते ॥
बलं च हीयते यस्य प्रतिश्यायश्च वर्द्धते ।
तस्य नारी प्रसक्तस्य शोषोऽन्तायोपजायते ॥
श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम् ।
स्वप्ने यक्ष्मा तमाविश्य न जीवन्तमवसृजति ॥
लाचा रक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
स रक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥
रक्तस्रगक्तसर्वाङ्गो रक्तवासा मुहुर्हसन् ।
यः स्वप्ने ह्रियते नार्या स रक्तं प्राप्य सीदति ॥
शूलाटोपान्त्रकूटाश्च दौर्बल्यं चातिमात्रया ।
नखादिषु च वैवर्ण्यं गुल्मेनान्तकरो नरः ॥
लता कण्टकिनी यस्य दारुणा हृदि जायते ।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम् ॥
कायेऽल्पं अपि संसृष्टं सुभृशं यस्य दीर्यते ।
क्षतानि च नरो हन्ति कुष्ठैर्मृत्यु र्हिनस्ति तम् ॥
नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्चिषम् ।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः ॥
स्नातानुलिप्तगात्रेऽपि यस्मिन् गृध्यन्ति मक्षिकाः ।

स प्रमेहेण संसर्गं प्राप्य तेनैव हन्यते ॥
स्नेहं बहुविधं स्वप्ने चण्डालैः सह यः पिबन् ।
बध्यते स प्रमेहेण स्पृश्यतेऽन्ताय माधवः ॥
ध्यानायामौ तथोद्वेगौ चोहयास्थान सम्भवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्वकः ॥
आहारद्वेषिणं पश्यन् लुप्तचित्तमुदर्दितम् ।
विद्याद्धीनो मुमूर्षुं न्तं उन्मादेनाति पातिना ॥
क्रोधनं त्रासबहुलं सकृत्प्रहसिताननम् ।
मूर्च्छापिपासा बहुलं हन्त्युन्मादः शरीरिणम् ॥
नृत्यन् रक्षोगणैः साकं यः स्वप्नेऽम्भसि सीदति ।
स प्राप्यभृशमुन्मादं याति लोकमतः परम् ॥
असत्तमः पश्यति यः शृणोत्यपरसतः स्वरान् ।
बहून् बहुविधान् जाग्रन् सोऽपस्मारेण बध्यते ॥
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यो नरम् ।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥
स्तम्भेते प्रतिबुद्धस्य हनूमन्ये तथाक्षिणी ।
यस्य तं बहिरायामो गृहीत्वा हन्त्य संशयम् ॥
शष्कुलीरपूपान्वै स्वप्नेखादति यो नरः ।
सचेत्ताद्दक् छर्दयति प्रतिबुद्धो न जीवति ॥
एतानि पूर्वरूपाणि यः सम्यगवबुध्यते ।
स एषा मनुबन्धञ्च फलञ्च ज्ञातुमर्हति ॥
य इमांश्चापरान् स्वप्नान् दारुणानुपलक्षयेत् ।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥
यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः ।

वयांसि च विलीयन्ते स्वप्ने मौण्ड्यमियाच्च यः ॥
गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्यते ।
रक्षः प्रेतपिशाचस्त्री चण्डालद्रमडान्ध्रकैः ॥
वंशवेत्रलतापाशतृणकण्टकसङ्कटे ।
प्रमुह्यति हि यः स्वप्ने लगति प्रपतत्यपि
भूमौ पांशूपधानायां वल्मीके वाथ भस्मनि ।
श्मशानायतनश्वभ्रे स्वप्ने यः प्रपतत्यपि ॥
कलुषेऽम्भसि पङ्के वा कूपे वा तमसावृते ।
स्वप्ने मज्जति शीघ्रेण स्रोतसा ह्रियते च यः ॥
स्नेहपानन्तथाभ्यङ्गः प्रच्छर्दनविरेचने ।
हिरण्यलाभः कलहः स्वप्ने बन्धपराजयौ ॥
उपानद्युगनाशश्च प्रपातः पांसुचर्म्मणोः ।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चावभर्त्सनम् ॥
दन्तचन्द्रार्कनक्षत्रदेवता दीपचक्षुषाम् ।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा ॥
रक्तपुष्पं वनं भूमिं पापकर्म्मालयाचिताम् ।
गुहान्धकारसंबाधं स्वप्ने यः प्रविशत्यपि ॥
रक्तमाली हसन् चैर्दिग्वासा दक्षिणां दिशम् ।
दारुणामटवीं स्वप्ने कपि युक्तेन याति वा ॥
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम् ॥
कृष्णा पापा निराचारा दीर्घकेशनखस्तनी ।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥
इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।

अरोगः संशयं गत्वा कश्चिदेव विमुच्यते॥
मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः।
स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणान्॥
नातिप्रसुप्तः पुरुषः सफला नफलानपि।
इन्द्रियेशेन मनसा स्वप्नान् पश्यत्यनेकधा॥
दृष्टं श्रुतानुभूतञ्च प्रार्थितं कल्पितं तथा।
भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः॥
तत्र पञ्चविधं पूर्वमफलं भिषगादिशेत्।
दिवा स्वप्नमति ह्रस्वमति दीर्घञ्च बुद्धिमान्॥
दृष्टः प्रथमरात्रे यः स्वप्नः सोऽल्पफलो भवेत्।
न स्वप्याद्यो पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः॥
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः।
पश्येत् सौम्यं शुभाकारं तस्य विद्यात् शुभं फलम्॥
तत्र श्लोकाः। पूर्वरूपाण्यथ स्वप्नान् य इमान् वेत्ति दारुणान्।
न स मोहादसाध्येषु कर्माण्यारभते भिषक्॥

इति पूर्वरूपीयमिन्द्रियं समाप्तम्।

---

षष्ठोऽध्यायः।

अथातः कतमानि शरीरीयमिन्द्रियं व्याख्यास्यामः।
कतमानि शरीराणि व्याधिमन्ति महामुने!।

यानि वैद्यः परिहरेद्येषु कर्म्म न सिद्ध्यति ॥
इत्यात्रेयोऽग्निवेशेन प्रश्नं पृष्टः सुदुर्वचम् ।
आचचक्षे यथा तस्मै भगवंस्तन्निबोधत ॥
यस्य वैभाषमाणस्य रुजत्यूर्द्धं मुरो भृशम् ।
अन्नञ्च च्यवते भुक्तं स्थितं चापि न जीर्य्यति ॥
बलञ्च हीयते यस्य तृष्णा चाभि प्रवर्द्धते ।
जायते हृदि शूलञ्च तं भिषक् परिवर्जयेत् ॥
हिक्का गम्भीरजा यस्य शोणितञ्चाति सार्य्यते ।
न तस्मै भेषजं दद्यात् स्मरन्नात्रेय शासनम् ।
आनाहश्चातिसारश्च यमेतौ दुर्बलं नरम् ॥
व्याधितं विशतो रोगौ दुर्लभं तस्य जीवितम् ।
आनाहश्चैव तृष्णा च यमेतौ दुर्बलं नरम् ॥
विशतो विजहत्येनं प्राणा नातिचिरान्नरम् ।
ज्वरः पौर्व्वाह्णिको यस्य शुष्कः कासश्च दारुणः ॥
बलमांसविहीनस्य यथा प्रेतस्तथैव सः ।
यस्य मूत्रं पुरीषञ्च ग्रथितं सम्प्रवर्त्तते ॥
निरूष्मिणो जठरिणः श्वसनो न स जीवति ।
श्वयथुर्यस्य कुक्षिस्थो हस्तपादं विसर्पति ॥
ज्ञातिसङ्घं स संक्लेश्य तेन रोगेण हन्यते ।
श्वयथुर्यस्य पादस्थस्तथा स्रस्ते च पिण्डिके ॥
सीदतश्चाप्युभे शंखे तं भिषक् परिवर्जयेत् ।
शूनहस्तं शूनपादं शूनगुह्योदरं नरम् ॥
हीनवर्णबलाहारमौषधैर्नोपपादयेत् ।
उरोमुक्तो बहुश्लेष्मा नीलः पीतः स लोहितः ॥

सततं च्यवते यस्य दूरात्तं परिवर्जयेत्।
हृष्टरोमा सान्द्रमूत्रः शूनः कासज्वरार्दितः॥
क्षीणमांसो नरो दूरात् वर्ज्यो वैद्येन जानता।
त्रयः प्रकुपिता यस्य दोषाः कोष्ठाभिलक्षिताः॥
कृशस्य बलहीनस्य नास्ति तस्य चिकित्सितम्।
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये॥
दुर्बलस्य विशेषेण नरस्यान्ताय कल्पते।
पाण्डूदरः कृशोऽत्यर्थं तृष्णयाभिपरिप्लुतः॥
ज्वरी कुपितोच्छ्वासः प्रत्याख्येयो विजानता।
हनुमन्याग्रहस्तृष्णा बलदोषेगतिमात्रया॥
प्राणाश्चोरसि वर्त्तन्ते यस्य तं परिवर्जयेत्।
ताम्यत्यायच्छते शर्म न किञ्चिदपि विन्दति॥
क्षीणमांसबलाहारो मुमूर्षुरचिरान्नरः।
विरुद्धयोनयो यस्य विरुद्धोपक्रमा भृशम्॥
वर्द्धन्ते दारुणा रोगाः शीघ्रं शीघ्रं स हन्यते।
बलं विज्ञानमारोग्यं ग्रहणी मांसशोणितम्॥
एतानि यस्य क्षीयन्ते क्षिप्रं क्षिप्रं स हन्यते।
विकारा यस्य वर्द्धन्ते प्रकृतिः परिहीयते॥
सहसा सहसा तस्य मृत्युर्हरति जीवितम्।
तत्र श्लोकाः। इत्येतानि शरीराणि व्याधिमन्ति विवर्जयेत्।
न ह्येषु धीराः पश्यन्ति विधिं काञ्चिदुपक्रमादिति॥
कतमानि शरीरीयमिन्द्रियं समाप्तम्।

## सप्तमोऽध्यायः ।

अथातः पूर्वरूपीयमिन्द्रियं व्याख्यास्यामः ।

दृष्ट्वा यस्य विजानीयात पूर्वरूपां कुमारिकाम् ।
प्रतिच्छायामयीमक्ष्णोर्नैनमिच्छेच्चिकित्सितुम् ॥
ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि ।
अङ्गेषु विकृता यस्य छायाप्रेतस्तथैव सः ॥
छिन्नाभिन्नाकुला च्छाया हीना वाप्यधिकापि वा ।
नष्टा तन्वी द्विधाच्छिन्ना विशिरा विस्तृता च या ॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः ।
सर्वा मुमूर्षतां ज्ञेया न चेल्लक्ष्य निमित्तजाः ॥
संस्थानेन प्रमाणेन वर्णेन प्रभया तथा ।
छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव सः ॥
संस्थानमाकृतिर्ज्ञेया सुषमं विषमञ्च या ।
मध्यमल्पं महच्चोक्तं प्रमाणं त्रिविधं नृणाम् ॥
प्रति प्रमाणसंस्थाना जलादर्शातपादिषु ।
छाया या सा प्रतिच्छाया छाया वर्णा प्रभाश्रया ॥
खादीनां पञ्चपञ्चानां छाया विविधलक्षणाः ।
नाभसी निर्मला नीला सस्नेहा सप्रभेव च ॥
रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥
शुद्धवैदूर्य विमला सुस्निग्धा चाम्भसी मता ।
स्थिरा स्निग्धा घना श्लक्ष्णा श्यामा श्वेता च पार्थिवी ।
वायवी गर्हिता त्वासां चतस्रः स्युः सुखोदयाः ॥

वायवी तु विनाशाय क्लेशाय महतेऽपि वा ।
स्यात्तैजसी प्रभा सर्वा सा तु सप्तविधा स्मृता ॥
रक्ता पीता सिता श्यावा हरिता पाण्डुरा सिता ।
तासां याः स्युर्विकासिन्यः स्निग्धाश्च विपुलाश्च याः ॥
ताः शुभा रूक्षमलिनाः संक्षिप्ताश्चाशुभोदयाः ।
वर्णमाक्रमति छाया भास्तु वर्णप्रकाशिनी ॥
आसन्ना लक्ष्यते छाया भाः प्रकृष्टा प्रकाशते ।
नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ॥
नृणां शुभाशुभोत्पत्तिं काले छायाः प्रभाश्रिताः ।
कामलाक्ष्णोर्मुखं पूर्णं गण्डयोर्मुक्तमांसता ।
सन्त्रासश्चोष्णगात्रत्वं यस्य तं परिवर्जयेत् ॥
उत्थाप्यमानः शयनात् प्रमोहं याति यो नरः ।
मुहुर्मुहुर्न सप्ताहं स जीवति विकत्थनः ॥
संसृष्टा व्याधयो यस्य प्रतिलोमानुलोमगाः ।
व्यापन्नग्रहणो प्रायः सोऽर्द्धमासं न जीवति ॥
उपरुद्धस्य रोगेण कर्षितस्याल्पमश्नतः ।
बहुमूत्रपुरीषं स्याद्यस्य तं परिवर्जयेत् ॥
दुर्बलो बहुभुङ्क्ते यः प्रागभुक्तान्नमाश्रितः ।
अल्पमूत्रपुरीषश्च यथा प्रेतस्तथैव सः ॥
प्रकूजति प्रश्वसिति शिथिलं चातिसार्यते ।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति ॥
ऊर्ध्वश्च यः प्रश्वसिति व्याविद्धं स्पन्दते च यः ।
मृतमेव तमात्रेयो व्याचचक्षे पुनर्वसुः ॥
ऊर्ध्वञ्च यः प्रश्वसिति श्लेष्मणा चाभिभूयते ।

हीनवर्णबलाहारो यो नरो न स जीवति॥
अहीये नयने यस्य मन्ये चानतकम्पने।
बलहीन: पिपासार्त: शुष्कास्यो न स जीवति॥
यस्य गण्डावुपचितौ ज्वरकासौ च दारुणौ।
शूलो प्रद्वेष्टि चाप्यन्नं तस्मिन् कर्म्म न सिध्यति॥
व्यावृत्तमूर्द्धजिह्वाक्षो भ्रुवौ यस्य च विच्युते।
कण्टकैश्चाचिता जिह्वा यथा प्रेतस्तथैव स:॥
शेषश्चात्यर्थमुच्छ्रितं नि:सृतौ वृषणौ भृशम्।
एतस्यैव विपर्यास: प्रकृत्या प्रेतलक्षणम्॥
निचितं यस्य मांसं स्यात्त्वगस्थ्यन्येव दृश्यते।
क्षीणस्यानश्नतस्तस्य मासमायु: परं भवेत्॥
पूर्व्वरूपीयमिन्द्रियं समाप्तम्।

---

अष्टमोऽध्याय:।

अथातोऽवाक्शिरसीयमिन्द्रियं व्याख्यास्याम:।

अवाक्शिरा वा जिह्मा वा यस्य वा विशिरा भवेत्॥
जन्तो रूपप्रतिच्छाया नैनमिच्छेच्चिकित्सितुम्।
जटीभूतानि पक्ष्माणि दृष्टिश्चापि निगृह्यते॥
यस्य जन्तोर्न तं धीरो भेषजेनोपपादयेत्।

यस्य शुनानि वर्त्मानि न समायान्ति शुष्यतः॥
चक्षुषी चोपदिह्येते यथा प्रेतस्तथैव सः।
भ्रुवोर्वा यदि वा मूर्ध्नि सीमन्ता वर्तकान् बहून्॥
अपूर्वानक्षतान् व्यक्तान् दृष्ट्वा मरणमादिशेत्।
त्र्यहमेतेन जीवन्ति लक्षणेनातुरा नराः॥
अरोगाणां पनस्त्वेतत् षड्रात्रं परमुच्यते।
आयस्योत्पाटितान् केशान् यो नरो नावबुध्यते॥
अनातुरो वा रोगी वा षड्रात्रं नातिवर्तते।
यस्य केशा निरभ्यङ्गा दृश्यन्तेऽभ्यक्तसन्निभाः॥
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत्।
ग्लायतो नासिका वंशः पृथुत्वं यस्य गच्छति॥
अशूनः शूनसङ्काशः प्रत्याख्येयः स जानता।
अत्यर्थं विवृता यस्य यस्य चात्यर्थं संवृता॥
जिह्मा वा परिशुष्का वा नासिका न स जीवति।
मुखं शष्कुलवाबोष्ठौ शुक्लश्यावा तिलोहितौ॥
विकृत्या यस्य वा नीलौ न स रोगाद्विमुच्यते।
अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः॥
विकृत्या न स रोगं तं विहायारोग्यमश्नुते।
स्तब्धा निश्चेतना गुर्वी कण्टकोपचिता भृशम्॥
श्यावा शुष्काथवा शूना प्रेतजिह्वा विसर्पिणी।
दीर्घमुच्छ्वस्य यो ह्रस्वं नरो निःश्वस्य ताम्यति॥
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत्।
हस्तौ पादौ च मन्ये च तालु चैवातिशीतलम्।
भवत्यायुःक्षये क्रूरमथवाति भवेन्मृदु॥

घट्टयन् जानुना जानु पादावुद्यम्य पातयन् ।
योपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥
यैर्विन्दति पुरा भावैः समेतैः परमां गतिम् ।
तैरेवा रममाणस्य ग्लास्नोर्मरणमादिशेत् ॥
न बिभर्त्ति शिरोग्रीवा न पृष्ठं भारमात्मनः ।
न हनू पिण्डमास्यस्थमातुरस्य मुमूर्षतः ॥
सहसा ज्वरसन्तापः तृष्णा मूर्च्छा बलक्षयः ।
विश्लेषणञ्च सन्धीनां मुमूर्षो रुपजायते ॥
गो सर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम ।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम ॥
नोपैति कण्ठमाहारो जिह्वा कण्ठमुपैति च ।
आयुष्यन्तर्गते जन्तोर्बलञ्च परिहीयते ॥
शिरो विक्षिपते कृच्छ्रादञ्चयित्वा प्रपाणिकौ ।
ललाटप्रच्युतस्वेदो मुमूर्षुश्च्युतबन्धनः ॥ इति ।

तत्र श्लोकः ।

इमानि लिङ्गानि नरेषु बुद्धिमान्
निशामयेतावहितो मुमूर्षुषु ।
क्षणेन भूत्वा ह्युपयान्ति कानिचित्
न चाफलं लिङ्गमिहास्ति किञ्चनेति ।

अवाक्शिरसीयमिन्द्रियं समाप्तम् ।

## नवमोऽध्यायः।

अथातो यस्य श्यावनिमित्तीयमिन्द्रियं व्याख्यास्यामः।

यस्य श्यावे परिध्वस्ते हरिते चापि दर्शने।
आपन्नो व्याधिरन्ताय ज्ञेयस्तस्य विजानता॥
निःसंज्ञः परिशुष्कास्यः संविन्नो व्याधिभिश्च यः।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्जयेत्॥
हरिताश्च सिरा यस्य लोमकूपाश्च संवृताः।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते॥
शरीरान्ताश्च शोभन्ते शरीरञ्चोपशुष्यति।
बलञ्च हीयते यस्य राजयक्ष्मा हिनस्ति तम्॥
अंसाभितापो हिक्का च छर्दनं शोणितस्य च।
आनाहः पार्श्वशूलञ्च भवत्यन्ताय शोषिणः॥
वातव्याधिरपस्मारी कुष्ठी शोफी तथोदरी।
गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः॥
अचिकित्स्या भवन्त्येते बलमांसक्षये सति।
अन्येष्वपि विकारेषु तान् भिषक् परिवर्जयेत्॥
विरेचनहृता नाहो यस्तृष्णानुगतो नरः।
विरिक्तः पुनराध्माति यथा प्रेतस्तथैव सः॥
पेयं पातुं न शक्नोति कण्ठस्य च मुखस्य च।
उरसश्च विशुष्कत्वाद्यो नरो न स जीवति॥
स्वरस्य दुर्बलीभावं हानिञ्च बलवर्णयोः।
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत्॥
ऊर्द्धश्वासङ्गतोष्माणं शूलोपहतवंक्षणम्।

शमं चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ॥
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ।
श्रोतारश्चास्य शब्दस्य दूरतः परिवर्जयेत् ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति ।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥
अथ चेत् ज्ञातयस्तस्य याचेरन् प्राणपातवत् ।
रसेनाद्यादिति ब्रूयान्नास्य कुर्य्याद्विशोधनम् ॥
मासेन चेत्र दृश्येत विशेषस्तस्य शोभनः ।
रसैश्चान्यैर्बहुविधैर्दुर्लभस्तस्य जीवितम् ॥
निष्ठ्यूतञ्च पुरीषञ्च रेतश्चाम्भसि मज्जति ।
यस्य तस्यायुषः प्राप्तमन्तमाहुर्मनीषिणः ॥
निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक् ।
तच्च सीदत्यपः प्राप्य न स जीवितुमर्हति ॥
पित्तमूष्मानुगं यस्य शङ्खौ प्राप्य विमूर्च्छति ।
स रोगः शङ्खको नाम्ना त्रिरात्राद्धन्ति जीवितम् ।
सफेनं रुधिरं यस्य मुहुरास्यात् प्रमुच्यते ।
शूलैश्च तुद्यते कुक्षिः प्रत्याख्येयः स तादृशः ॥
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ।
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान् स जीवति ॥
तत्र श्लोकौ । विज्ञानानि मनुष्याणां मरणे प्रत्युपस्थिते ।
भवन्त्येतानि सम्पश्येदन्यान्येवं विधानि च ॥
तानि सर्वाणि लक्ष्यन्ते न तु सर्वाणि मानवम् ।
विशन्ति विनिशिष्यन्तं तस्माद्बोध्यानि सर्वत इति ॥
यस्य श्यावनिमित्तीयमिन्द्रियं समाप्तम् ।

## दशमोऽध्यायः।

अथातः सद्यो मरणीयमिन्द्रियं व्याख्यास्यामः।

सद्यस्तिनिपतः प्राणांश्चलणानि पृथक् पृथक्।
अग्निवेश! प्रवक्ष्यामि संस्पृष्टो येन जीवति॥
वाताष्ठीला सुसंवृत्ता तिष्ठन्ती दारुणा हृदि।
तृष्णयाभि परीतस्य सद्यो मुष्णाति जीवितम्॥
पिण्डिके शिथिलीकृत्य जिह्मीकृत्य च नासिकाम्।
वायुः शरीरे विचरन् सद्यो मुष्णाति जीवितम्॥
भ्रुवौ यस्य च्युते स्थानादन्तर्दाहश्च दारुणः।
तस्य हिक्काकरो रोगः सद्यो मुष्णाति जीवितम्॥
क्षीणशोणितमांसस्य वायुरूर्द्धगतिश्चरन्।
उभे मन्ये समा यस्य सद्यो मुष्णाति जीवितम्॥
अन्तरेण गुदङ्गच्छन्नाभिञ्च सहसानिलः।
कृशस्य वंक्षणौ गृह्णन् सद्यो मुष्णाति जीवितम्॥
हृदयञ्च गुदञ्चोभे गृहीत्वा मारुतो बली।
दुर्बलस्य विशेषेण सद्योमुष्णाति जीवितम्॥
वंक्षणौ च गुदञ्चोभे गृहीत्वा मारुतोबली।
श्वासं सञ्जनयन् जन्तोः सद्यो मुष्णाति जीवितम्॥
नाभिं वस्तिं शिरो मूत्रं पुरीषञ्चापि मारुतः।
विबध्यजनयन् शूलं सद्यो मुष्णाति जीवितम्॥
भिद्येते वंक्षणौ यस्य वातशूलैः समन्ततः।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः॥
आप्लुतं मारुतं नेह शरीरं यस्य केवलम्।

भिन्नं पुरीषं तृष्णाश्च सद्यो जह्यात् स जीवितम्॥
शरीरं शोफिनं यस्य वातशोफेन देहिनः।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात सजीवितम्॥
आमाशयसमुत्थाना यस्य स्यात् परिकर्तिका।
तृष्णा गुदग्रहश्चोग्रः सद्यो जह्यात् स जीवितम्॥
पक्काशयमधिष्ठाय हत्वा संज्ञाञ्च मारुतः।
कण्ठं घुर्घुरकं कृत्वा सद्यो हरति जीवितम्॥
दन्ताः कर्दमचूर्णाभाः मुखं चूर्णकसन्निभम्।
सिद्यन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः॥
तृष्णा श्वासशिरोरोगमोहदौर्बल्य कूजनैः।
स्पृष्टः प्राणान् जहात्याशु शकृद्भेदेन चातुर इति॥
तत्र श्लोकः। एतानि खलु लिङ्गानि यः सम्यगवबुध्यते।
स जीवितञ्च मर्त्यानां मरणञ्चावबुध्यते॥

इति सद्यो मरणीयमिन्द्रियं समाप्तम्।

---

## एकादशोऽध्यायः।

अथातोऽणुज्योतीयमिन्द्रियं व्याख्यास्यामः।

अणुज्योतिरनेकाग्रोदुच्छायो दुर्मनाः सदा।
रतिं न लभते याति परलोकं समान्तरे॥

बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ।
लोकान्तरगतः पिण्डं भुंक्ते संवत्सरेण सः ॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।
संवत्सरान्ते जन्तुः स सम्पश्यति महत्तमः ॥
विकृत्या विनिमित्तं यः शोभामुपचयं धनम् ।
प्राप्नोत्यतो वा विभ्रंशं समान्तं न स जीवति ॥
भक्तिः शीलं स्मृतिः त्यागो बुद्धिर्बलमहेतुकम् ।
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ॥
धमनो नाम पूर्वाणां जलमत्यर्थं शोभनम् ।
ललाटे दृश्यते यस्य षण्मासान्न स जीवति ॥
लेखाभिश्चन्द्रवक्राभिर्ललाटमुपचीयते ।
यस्य तस्यायुषः षड्भिर्मासैरन्तं समादिशेत् ॥
शरीरकम्पः संमोहो गतिर्वचनमेव च ।
मत्तस्येवोपलभ्यन्ते यस्य मासं न जीवति ॥
रेतो मूत्रपुरीषाणि यस्य मज्जन्ति चाम्भसि ।
स मासात् स्वजनद्वेष्टा मृत्यु तारिणि मज्जति ॥
हस्तपादं मुखं चोभौ विशेषाद् यस्य शुष्यतः ।
शूयते वा विना दाहात् स च मासं न जीवति ॥
ललाटे मूर्ध्नि वस्तौ वा नीला यस्य प्रकाशते ।
राजीबालेन्दुकुटिला न स जीवितुमर्हति ॥
प्रवालगुटिकाभासा यस्य गात्रे मसूरिकाः ।
उत्पाद्याशु विनश्यन्ति न चिरात् स विनश्यति ॥
ग्रीवावमर्दो बलवान् जिह्वा श्वयथुरेव च ।
बध्नास्य गलपाकश्च यस्य पक्षान्तमादिशेत् ॥

संभ्रमोऽति प्रलापोऽति भेदोऽस्थ्नामति दारुणः ।
कालपाशपरीतस्य त्रयमेतत् प्रवर्त्तते ॥
प्रमुञ्चन् सञ्चयन् केशान् प्रतिग्लान्यतीव च ।
नरः स्वस्थवदाहारमबलः कालचोदितः ॥
समीपे चक्षुषोः कृत्वा मृगयेताङ्गुलीयकम् ।
अयतेऽपि च कालान्ध ऊर्द्ध्वाशानिमिषेक्षणः ॥
शयनादासनादङ्गात् काष्ठात् कुड्यादथापि वा ।
असन् मृगयते किञ्चित्समुञ्चन् कालचोदितः ॥
अहासश्च हसनो मुञ्चन् प्रलेढ़ि दशनच्छदौ ।
शीतपादकरोच्छ्वासो यो नरो न स जीवति ॥
आह्वयन्तं समीपस्थं स्वजनं जनमेव वा ।
महामोहावृतमनाः पश्यन्नपि न पश्यति ॥
अयोगमतियोगं वा शरीरे मतिमान् भिषक् ।
खादीनां युगपद्दृष्ट्वा भेषजं नावचारयेत् ॥
अतिप्रवृद्धया रोगाणां मनसश्च बलक्षयात् ।
वायुमुत्सृजति क्षिप्रं शरीरे देहसंज्ञकम् ॥
वर्णस्वरावग्नि बलं वागिन्द्रियमनो बलम् ।
क्षीयते मुहुर्ये निद्रानित्या भवति वा नवा ॥
भिषग् भेषजपानाद्यगुरुमित्रद्विषश्च ये ।
वशगाः सर्व एवैते बोद्धव्याः समवर्त्तिनः ॥
एतेषु रोगः क्रमते भेषजं प्रति हन्यते ।
नैषामन्नानि भुञ्जीत जलोदकमपि स्पृशेत् ॥
पादाः समेताश्चत्वारः सम्पन्नाः साधकैर्गुणैः ।
व्यर्था गतायुषो द्रव्याद् विना नास्ति गुणोदय इति ॥

तत्र श्लोकः । क्रियापथमतिक्रान्ताः केवलं देहमाप्लुताः ।
चिह्नं कुर्वन्ति तद्दोषा यदरिष्टं निरुच्यते ॥
इत्यणुज्योतीयमिन्द्रियं समाप्तम् ।

---

द्वादशोऽध्यायः ।

अथातो गोमयचूर्णीयमिन्द्रियं व्याख्यास्यामः ।

यस्य गोमयचूर्णाभं चूर्णं मूर्द्धनि जायते ।
सस्नेहं भ्रश्यते चैव मासान्तं तस्य जीवितम् ॥
निकषन्निव यः पादौ च्युतांसः परिधावति ।
विनत्या न स लोकेऽस्मिं चिरं वसति मानवः ॥
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत् युरो भ्रशम् ।
आर्द्रेषु सर्वगात्रेषु सोऽर्द्धमासं न जीवति ॥
यमुद्दिश्यातुरं वैद्यः संवर्त्तयितुमौषधम् ।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् ।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ॥
आहारमुपयुञ्जानो भिषजा सूपकल्पितम् ।
यः फलं तस्य नाप्नोति दुर्लभं तस्य जीवितम् ॥



३६

दूताधिकारे वक्ष्यामो लक्षणानि मुमूर्षताम्।
यानि दृष्ट्वा भिषक् प्राज्ञः प्रत्याख्येयादसंशयम् ॥
मुक्तकेशोऽथवा नग्ने तद्‌पत्र प्रयतेऽथवा ।
भिषज्यभ्यागतं दृष्ट्वा दूतं मरणमादिशेत् ॥
सुप्ते भिषजि ये दूताः छिन्दन्त्यपि च भिन्दति ।
आगच्छन्ति भिषक्तेषां न भर्त्तारमनुव्रजेत् ॥
जुह्वत्यग्निं तथा पिण्डं पितृभ्यो निर्वपत्यपि ।
वैद्ये दूताय आयान्ति ते घ्नन्ति प्रजिघांसवः ॥
कथयन्त्य प्रशस्तानि चिन्तयन्त्यथवा पुनः ।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥
विकारसामान्यगुणे देशकालेऽथवा भिषक् ।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥
दीनभीतद्रुतत्रस्तां मलिनामसतीं स्त्रियम् ।
त्रीन् व्यालतांश्च षण्डांश्च दूतान् विद्यान् मुमूर्षताम् ॥
अङ्गव्यसनिनं दूतं लिङ्गिनं व्याधितं तथा ।
संप्रेक्ष्य चोग्रकर्माणं न वैद्यो गन्तुमर्हति ॥
आतुरार्थमनुप्राप्तं खरोष्ट्रमथ वाहनम् ।
दूतं दृष्ट्वा भिषग्विद्यादातुरस्य पराभवम् ॥
पला लबुससीसास्थि केशलोमनख द्विजान् ।
मार्जनीं मुसलं शूर्पमुपानच्चर्मविच्युतम् ॥
तृणकाष्ठतुषाङ्गारं स्पृशन्तो लोष्टभस्म च ।
तत्पूर्वदर्शने दूता व्याहरन्ति मुमूर्षताम् ॥
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।
पश्येन्निमित्तमशुभं तञ्च नानुव्रजेद्भिषक् ॥

यथा व्यसनिनं प्रेतं प्रेतालङ्कारमेव वा।
भिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान्।
स्पर्शो वा विपुलः क्रूरो यद्वान्यदशुभं भवेत्॥
तत्पूर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः।
दूतानां व्याहृतं श्रुत्वा धीरो मरणमादिशेत्॥
इति दूताधिकारोऽयमुक्तः कृत्स्नो मुमूर्षताम्।
पथ्यान्तरतुलां यत्तु वक्ष्यामौत्पातिकं पुनः॥
अवक्रुष्टमथोत्क्रुष्टं स्खलनं पतनं तथा।
आक्रोशः संप्रहारो वा प्रतिषेधो विगर्हणम्॥
वस्त्रोष्णीषो तुरासङ्गच्छत्रोपानद्युगाश्रयम्।
व्यसनं दर्शनञ्चापि मृतव्यसनिनं तथा॥
चैत्यध्वजपताकानां पूर्णानां पतनानि च।
हतानिष्टप्रवादाश्च दर्शनं भस्मपांसुभिः॥
पथि छेदो विड़ालेन शुना सर्पेण वा पुनः।
मृगद्विजानां क्रूराणां गिरां दीप्तां दिशं प्रति॥
शयनासनयानानामुत्तानानां प्रदर्शनम्।
इत्येतान्यप्रशस्तानि सर्वाण्याहुर्मनीषिणः॥
एतानि पथि वैद्येन पश्यतातुरवेश्मनि।
शृण्वता च न गन्तव्यं तदागारं विपश्चिता॥
इत्यौत्पातिकमाख्यातं पथि वैद्यविगर्हितम्।
इमामपि च बुध्येत व्हावस्थां मुमूर्षताम्॥
प्रवेशे पूर्णकुम्भाग्निमृद्वीजफलसर्पिषाम्।
वृषब्राह्मणरत्नाच दैवतानां विनिर्गतिम्॥

अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ।
भिषङ्मुमूर्षतां वेश्म प्रविशन्नेव पश्यति ॥
छिन्नभिन्नावदग्धानि भग्नानि मृदितानि च ।
दुर्बलानि च सेवन्ते मुमूर्षोवश्मिका जनाः ॥
शयनं वसनं यानमन्यं वापि परिच्छदम् ।
प्रेतवच्चास्य कुर्वन्ति सुहृदः प्रेत एव सः ॥
अन्नं व्यापद्यतेऽत्यर्थं ज्योतिश्चैवोपशाम्यति ।
निवाते सेन्धनं यस्य तस्य नास्ति चिकित्सितम् ॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अतिमात्रममत्रं वा दुर्लभं तस्य जीवितं इति ॥
भवति चात्र । यद्द्वादशभिरध्यायैर्व्यासतः परिकीर्तितम् ।
मुमूर्षतां मनुष्याणां लक्षणं जीवितान्तकृत् ॥
तत्समासेन वक्ष्यामः पर्यायान्तर माश्रितम् ।
पर्याय वचनं ह्यर्थं विज्ञानायोपपद्यते ॥
इत्यर्थं पुनरेवेयं विवक्षा नो विधीयते ।
तस्मिन्नेवाधिकारे यत्पूर्वमेवाति शब्दितम् ॥
वसताचरमं कालं शरीरेषु शरीरिणाम् ।
प्रभ्यणाणां विनाशाय देहेभ्य प्रविविक्षताम् ॥
देहं स्थितिचलताम्प्राणान् कान्ता त्वासाच्छिद्रासताम् ।
तन्त्र यन्त्रेषु भिन्नेषु तमोऽन्त्यम्प्रविविक्षताम् ॥
विनाशायोप रूपाणि यान्यवस्थान्तराणि च ।
भवन्ति तानि वक्ष्यामि यथोद्देशं यथागमम् ॥
प्राणाः समुपतप्यन्ते विज्ञानमुपरुध्यते ।
वमन्ति बलमङ्गानि चेष्टा व्युपरमन्ति च ॥

इन्द्रियाणि विनश्यन्ति खिलीभूतेव चेतना।
औत्सुक्यं भजते सत्त्वं चेतोभीराविशत्यपि॥
स्मृति स्त्यजति मेधा च श्रीह्रियौ चापसर्पतः।
उपप्लवन्ते पाप्मानश्चौजस्तेजश्च नश्यति॥
शीलं व्यावर्त्ततेऽत्यर्थं भक्तिश्च परिसर्पते।
विक्रियन्ते प्रतिच्छाया छायाश्च प्रकृतिस्मृति॥
शुक्रं प्रच्यवते स्थानादुन्मार्गं भजतेऽनिलः।
क्षयं मांसानि गच्छन्ति गच्छत्यसृगुपक्षयम्॥
ऊष्माणः प्रलयं याति विश्लेषं यान्ति सन्धयः।
गन्धा विकृततां यान्ति भेदं वर्णस्वरौ तथा॥
वैरस्यं भजते कायः कायच्छिद्रं विशुष्यति।
धूमः सञ्जायते मूर्ध्नि दारुणाख्यश्च चूर्णकः॥
सततस्पन्दनादेशाः शरीरे येऽभिलक्षिताः।
ते स्तम्भानुगताः सर्वे न चलन्ति कथञ्चन॥
गुणाः शरीरदेशानां शीतोष्णा मृदु दारुणाः।
विपर्यासेन वर्त्तन्ते स्थानेष्वन्येषु तद्विधाः॥
नखेषु जायते पुष्पं पङ्को दन्तेषु जायते।
जटाः पक्ष्मसु जायन्ते सीमन्ताश्चापि मूर्धनि॥
भेषजानि न संहर्षं प्राप्नुवन्ति तथारुचिम्।
यानि चाप्युपपद्यन्ते तेषां वीर्यं न सिध्यति॥
नानाप्रकृतयः क्रूरा विकारा विविधौषधाः।
क्षिप्रं समभिवर्त्तन्ते प्रति हन्य बलौजसी॥
शब्दः स्पर्शं रसं रूपं गन्धश्चेष्टा विचिन्तितम्।
उत्पद्यन्ते शुभान्येव प्रति कर्म्म प्रवृत्तिषु॥

छिद्यन्ते दारुणाः स्वप्ना दौरात्म्यमुपजायते ।
प्रेष्याः प्रतीपतां यान्ति प्रेतांशानिवद्दीयते ॥
प्रकृतिर्हीयतेऽत्यर्थं विकृतिश्चाभिवर्द्धते ।
यत्नमौत्पातिकं घोरमनिष्टमुपलक्ष्यते ॥
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम् ।
लक्षणानि यथोद्देशं यान्युक्तानि यथागमम् ॥
मरणायेह रूपाणि पश्यतापि भिषग्विदा ।
अपृष्टेन न वक्तव्यं मरणं प्रत्युपस्थितम् ॥
पृष्टेनापि न वक्तव्यं तत्र यत्रोपघातकम् ।
आतुरस्य भवेद्दुःखमथवान्यस्य कस्यचित् ॥
अभुवं मरणं तस्य नैवमिच्छेच्चिकित्सितुम् ।
यस्य पश्येद्विनाशाय लिङ्गानि कुशलो भिषक् ॥
लिङ्गेभ्यो मरणाख्येभ्यो विपरीतानि पश्यता ।
लिङ्गान्यारोग्यमागन्तु वक्तव्यं भिषजा ध्रुवम् ॥
दूतैरौत्पातिकैर्भावैः पथ्यातुरकुलाश्रयैः ।
आतुराचारशीलेष्टद्रव्यसम्पत्ति लक्षणैः ॥
स्वाचारं हृष्टमव्यङ्गं यशस्यं शुक्लवाससम् ।
अमुण्डमजटं दूतं जातिवेशक्रियासमम् ॥
अनुष्ट्रखरयानस्थमसन्ध्या स्वग्रहेषु च ।
अदारुणेषु नक्षत्रेष्वनुग्रेषु ध्रुवेषु च ॥
विना चतुर्थीं नवमीं विना रिक्तां चतुर्दशीम् ।
मध्याह्नं चार्धरात्रञ्च भूकम्पं राहुदर्शनम् ॥
विना देशमशस्तञ्च शस्तौत्पातिकलक्षणम् ।
दूतं प्रशस्तमव्यग्रं निर्दिशेदागतं भिषक् ॥

दध्यक्षतद्विजातीनां वृषभार्यां नृपस्य च ।
रत्नानां पूर्णकुम्भानां सितस्य तुरगस्य च ॥
सुरध्वजपताकानां फलानां याचकस्य च ।
कन्या पुंवर्द्धमानानां बद्धस्यैकपशोस्तथा ॥
पृथिव्या उद्धृतायाश्च वह्नेः प्रज्वलितस्य च ।
मोदकानां सुमनसां शुक्लानां चन्दनस्य च ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्सायाः वडवायाः स्त्रियास्तथा ॥
जीवजीवकसिद्धार्थं सारसप्रियवादिनाम् ।
हंसानां शतपत्राणां चाषाणां शिखिनां तथा ॥
मत्स्याजद्विजशङ्खानां प्रियङ्गूनां घृतस्य च ।
रोचिष्का दर्श सिद्धानां रोचनायाश्च दर्शनम् ॥
गन्धः सुरभिवर्णश्च सुशुक्लो मधुरो रसः ।
मृगपक्षिमनुष्याणां प्रशस्ताश्च गिरः शुभा ॥
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ।
भेरी मृदङ्गशङ्खानां शब्दाः पुण्याहनस्वनाः ॥
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।
पथि वेश्मप्रवेशे तु विद्यादारोग्यलक्षणम् ॥
मङ्गलाचारसम्पन्नः सातुरो वैश्मिको जनः ।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥
धनैश्वर्यं सुखावाप्तिरिष्टलब्धः सुखेन च ।
द्रव्याणां तत्र योग्यानां योजना सिद्धिरेव च ॥
गृहप्रासादशैलानां नागानामृषभस्य च ।
हयानां पुरुषाणाञ्च स्वप्ने समधिरोहणम् ॥

सोमार्काग्नि द्विजातीनां गवां नृणां यशस्विनाम् ।
शुभ्रांशुनां प्रतरणं द्विषः सम्बाधनिःसृतिः ॥
स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम् ।
दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च ॥
मांसमत्स्यविषामेध्यछत्रादर्शपरिग्रहः ।
स्वप्ने सुमनसां चैव शुक्लानां दर्शनं शुभम् ॥
अश्वगोरथयानञ्च यानं पूर्वोत्तरेण च ।
रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ॥
सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ।
साध्यत्वं न च निर्वेदः तदारोग्यस्य लक्षणम् ॥
आरोग्याद्बलमायुश्च सुखञ्च लभते महत् ।
इष्टांश्चाप्यपरान् भावान् पुरुषः शुभलक्षणात् ॥
उक्तं गोमयचूर्णीये मरणारोग्यलक्षणम् ।
दूतस्वप्नान्तरोत्पातयुक्ति सिद्ध्यपाश्रयम् ॥ इति
भवति चात्र ।
इतीदमुक्तं प्रकृतं यथा तथा तदन्ववेक्ष्यं सततं भिषग्विदा ।
तथा हि सिद्धिञ्च यशश्च शाश्वतं ससिद्धकर्मा लभते धनानि च ॥
इति गोमयचूर्णीयमिन्द्रियं समाप्तम् ।
इत्याचार्य्यचरकमुनिविरचितायां संहितायां इन्द्रिय-
स्थानकं पञ्चमं समाप्तम् ।



## प्रथमोऽध्यायः।

अथातोऽभयामलकीयं [१] रसायनपादं व्याख्यास्यामः।

चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम्।
प्रायश्चित्तप्रशमनं प्रकृति स्थापनं हितम्॥
विद्याद्भेषजनामानि भेषजं द्विविधञ्च तत्।
स्वस्थस्योर्जस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत्।
अभेषजञ्च द्विविधं बाधनं सानुबाधनम्॥
स्वस्थस्योर्जस्करं यत्तु तद्‌वृष्यन्तद्रसायनम्॥
प्रायः प्रायेण रोगाणां द्वितीयं प्रशमे मतम्।
प्रायः शब्दो विशेषार्थो ह्युभयं ह्युभयार्थकृत्॥
दीर्घमायुः स्मृतिं मेधां आरोग्यं तरुणं वयः।
प्रभावर्णं स्वरौदार्यं देहेन्द्रियबलं परम्॥
वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात्।
लोकोपायो हि शस्तानां रसादीनां रसायनम्॥
अपत्यसन्तानकरं यत्सद्यः संप्रहर्षणम्।
वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः॥
भवत्यति प्रियः स्त्रीणां येन येनोपचीयते।
जीर्य्यतोऽप्यक्षयं शुक्रं फलवद्येन दृश्यते॥
प्रभूतशाखः शाखी व येन चैत्यो यथा महान्।
भवत्यर्च्चो बहुमतः प्रजानां सुबहुप्रजः॥
सन्तानमूलं येनेह प्रेत्य चानन्त्यमश्नुते।
यशः श्रियं बलं पुष्टिं वाजीकरणमेव तत्॥
स्वस्थस्योर्जस्करन्त्वेतद्‌द्विविधं प्रोक्तमौषधम्।

यद्व्याधि निर्घातकरं वक्ष्यते तच्चिकित्सितम् ॥
चिकित्सितार्थं एतावान्विकाराणां यदौषधम् ।
रसायनविधिश्चाग्रे वाजीकरणमेव च ॥
अभेषजमिति ज्ञेयं विपरीतं यदौषधात् ।
तदसेव्यं निषेव्यन्तु प्रवक्ष्यामि यदौषधम् ॥
रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटी प्रावेशिकं चैव वाता तापकमेव च ॥
कुटी प्रावेशिकस्यादौ विधिः समुपदेक्ष्यते ।
नृपवैद्यद्विजातीनां साधूनां पुण्यकर्म्मणाम् ॥
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे ।
दिशि पूर्वोत्तरस्यान्तु सुभूमौ कारयेत् कुटीम् ॥
विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम् ।
घनभित्तिं मृतु सुखां सुस्पष्टां मनसः प्रियाम् ॥
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम् ।
दृष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम् ॥
अथोदगयने शुक्ले तिथि नक्षत्रपुजिते ।
मुहूर्तकरणोपेते प्रशस्ते कृतयापनः ॥
धृति स्मृति बलं कृत्वा श्रद्दधानः समाहितः ।
विधूय मानसान् दोषान् मैत्री भूतेषु चिन्तयन् ॥
देवताः पूजयित्वाग्रे द्विजातींश्च प्रदक्षिणम् ।
देवगोब्राह्मणान् कृत्वा ततस्तां प्रविशेत् कुटीम् ॥
तस्यां संशोधनैः शुद्धः सुखी जातबलः पुनः ।
रसायनं प्रयुञ्जीत तत्प्रवक्ष्यामि शोधनम् ॥
हरीतकीनां चूर्णानि सैन्धवामलके गुडम् ।

वचां विडङ्गं रजनीं पिप्पलीं विश्वभेषजम्॥
पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः।
तेन शुद्धशरीराय कृतसंमार्जनाय च॥
त्रिरात्रं यावकं दद्यात् पञ्चाहं वापि सर्पिषा।
सप्ताहं वा पुराणस्य यावच्छुद्धेस्तु वर्चसः॥
शुद्धकोष्ठन्तु तं ज्ञात्वा रसायनमुपाचरेत्।
वयः प्रकृति सात्म्यज्ञो यौगिकं तस्य यद्भवेत्॥
हरीतकीं पञ्चरसामुष्णामलवणां शिवाम्।
दोषानुलोमिनीं लघ्वीं विद्याद्दीपनपाचनीम्॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं पराम्।
सर्व्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम्॥
कुष्ठं गुल्ममुदावर्त्तं शोषं पाण्ड्वामयं मदम्।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम्॥
हृद्रोगं सशिरो रोगमतीसारमरोचकम्।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम्॥
कफप्रसेकं वैस्वर्य्यं वैवर्ण्यं कामलान् क्रिमीन्।
श्वयथुन्तमकं छर्दिं क्लैव्यमङ्गावसादकम्॥
स्रोतो विबन्धान् विविधान् प्रलेपं हृदयोरसोः।
स्मृति बुद्धि प्रमोहञ्च जयेत् शीघ्रं हरीतकी॥
तान् गुणांस्तानि कर्म्माणि विद्यादामलकीष्वपि।
यान्युक्तानि हरीतक्या वीर्य्यस्य तु विपर्य्ययः॥
अतः चामृतकल्पानि विद्यात् कर्म्मभिरीदृशैः।
हरीतकीनां शस्यानि भिषगामलकानि च॥
ओषधीनां परा भूमिर्हिमवान् शैलसत्तमः।

तस्मात् फलानि तज्जानि ग्राहयेत् कालजानि तु ॥
आपूर्णं रसवीर्य्याणि काले काले यथाविधि।
आदित्य पवनच्छाया सलिलप्रीणि तानि च ॥
यान्य जग्धान्य पूतीनि निर्व्रणान्य गदानि तु।
तेषां प्रयोगं वक्ष्यामि फलानां कर्म्म चोत्तमम् ॥
पञ्चानां पञ्चमूलानां भागान् दशपलोन्मितान्।
हरीतकी सहस्रञ्च त्रिगुणामलकं नवम् ॥
विदारगन्धां वृहतीं पृश्निपर्णीं निदिग्धिकाम्।
विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रा पञ्चमङ्गणम् ॥
बिल्वाग्निमन्थश्योनाकं काश्मर्य्यमथ पाटलीम्।
पुनर्नवासूर्पपर्ण्यौ बलामेरण्डमेव च ॥
जीवकर्षभकौ वीरां जीवन्तीं स शतावरीम्।
शरेक्षुदर्भकासानां शालीनां मूलमेव च ॥
इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत्।
भागान् यथोक्तां स्तत्सर्वं साध्यं दशगुणेऽम्भसि ॥
दशभागावशेषन्तु पूतन्तद्ग्राहयेद्रसम्।
हरीतकीश्च ताः सर्वाः सर्वाण्यामलकानि च ॥
तानि सर्वाण्यनस्थीनि फलान्यापोथ्य कूर्च्चनैः।
विनीय तस्मिन्निर्यूहे चूर्णानीमानि दापयेत् ॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च।
मुस्तानां स विडङ्गानां चन्दनागुरुणोस्तथा ॥
मधुकस्य हरिद्राया वचायाः कनकस्य च।
भागांश्चतुष्पलान् कृत्वा सूक्ष्मैलायास्त्वचस्तथा ॥
सितोपला सहस्रन्तु चूर्णितन्तु तयाधिकम्।

तैलस्याढकमाढकं तत्र दद्यात्त्रीणि च सर्पिषः ॥
साध्यमौदुम्बरे पात्रे तत्सर्वं मृदुनाग्निना।
ज्ञात्वा लेह्यमदग्धञ्च शीतं चौद्रेण संसृजेत्।
चौद्रप्रमाणं स्नेहार्ड्वं तत् सर्वं चौद्रभाजने ॥
तिष्ठेत् संमूर्च्छितं तस्य मात्रां काले प्रयोजयेत्।
या नोपरुन्ध्यादाहारमेवं मात्रा जरां प्रति ॥
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते।
वैखानसा वालखिल्यास्तथा चान्ये तपोधनाः ॥
रसायनमिदं प्राश्य बभूवुरमितायुषः।
मुक्ता जीर्णं वयस्याग्र्यमवापुस्तरुणं वयः ॥
वीततन्द्रा क्लमाश्वासन्निरातङ्काः समाहिताः।
मेधा स्मृतिबलोपेताश्चिररात्रं तपोधनाः ॥
ब्राह्मं तपो ब्रह्मचर्य्यं चेरुश्चात्यन्तनिष्ठयाः।
रसायनमिदं ब्राह्ममायुष्कामः प्रयोजयेत् ॥
दीर्घमायुर्वयश्चाग्र्यं कामांश्चेष्टान् समश्नुते इति।

यथोक्तगुणानामामलकानां सहस्रं पिष्ट्वा स्वेदनविधिना पयस ऊष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत्। तदामलकसहस्रं स्वरसपरिपीतं स्थिरा पुनर्नवा जीवन्ती नागबला ब्रह्मसुवर्चला मण्डूकपर्णी शतावरी शङ्खपुष्पी पिप्पली वचा विडङ्ग स्वयं गुप्ताऽमृता चन्दनागुरुमधुकमधूकपुष्पोत्पलपद्ममालतीसुरभि यूथिका चूर्णाष्टभागसंयुक्तं पुनर्नागबला सहस्र स्व रसपरिपीतमनातपशुष्कं द्विगुणितसर्पिषा चौद्रसर्पिषा वा क्षुद्रगुडाकृतिं कृत्वा शुचौ

दृढ़े घृतभाविते कुम्भे भस्मराशेरधः स्थापयेत् अन्तर्भूमेः पक्षं क्षतरक्षाविधानं अथर्ववेदविदा पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवालकालायसचूर्णाष्टभागसंयुक्तमर्द्धकर्षवृद्ध्या यथोक्तेन विधिना प्रातः प्रातः प्रयुञ्जानोऽग्निबलमभिसमीक्ष्य जीर्णे च षष्टिकं पयसा ससर्पिष्कमुपसेवमानो यथोक्तान् गुणान् समश्नुत इति।

भवति चात्र। इदं रसायनं ब्राह्मं महर्षिगणसेवितम्।
भवत्यरोगो दीर्घायुः प्रयुञ्जानो महाबलः॥
कान्तः प्रजानां सिद्धार्थश्चन्द्रादित्यसमद्युतिः।
श्रुतं धारयते सत्त्वमार्षं चास्य प्रवर्त्तते॥
धरणीधरसारश्च वायुना समविक्रमः।
स भवत्यविषं चास्य गात्रे सम्पद्यते विषम्॥
बिल्वाग्निमन्थौ श्योनाकः काश्मर्यं पाटलिर्बला।
पर्ण्यः चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहती द्वयम्॥
शृङ्गीतामलकीद्राक्षा जीवन्ती पुष्करागुरुः।
अभया चामृता ऋद्धिर्जीवकर्षभकौ षधी।
मुस्तं पुनर्नवा मेदा एला चन्दनमुत्पलम्॥
विदारी वृषमूलानि काकोली काकनासिका।
एषां पलोन्मितान् भागान् शतान्यामलकस्य च॥
पञ्च दद्यात्तदैकध्यं जलद्रोणे विपाचयेत्।
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्॥
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः।
पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धपलां भिषक्॥
मत्स्यण्डिकायाः पूताया लेहवत्साधु साधयेत्।

षट्पलं मधुनश्चात्र सिद्धशीते समापयेत्॥
चतुष्पलन्तु गाक्षीर्याः पिप्पली द्विपलं तथा।
पलमेकं निदध्याच्च त्वगेला पत्रकेशरात्॥
इत्ययं च्यवनः प्राशः परमुक्तं रसायनम्।
कासश्वासहरश्चैव विशेषेणोपदिश्यते॥
क्षीणक्षतानां वृद्धानां बालानां चाङ्गवर्द्धनः।
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्॥
पिपासां मूत्रशुक्रस्थां दोषांश्चाप्यपकर्षति।
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्नभोजनम्॥
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत्पुनर्युवा।
मेधां स्मृतिं कान्तिमनीं च शोभां वर्णप्रसादं पवनानुलोम्यम्॥
रसायनस्यास्य नरः प्रसादाल्लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं रूपमपास्य सर्वं बिभर्ति रूपं नवयौवनस्येति॥

अथामलकहरीतकी नामामलकविभीतकानां हरीतकी-विभीतकानामामलकहरीतकी विभीतकानां वा पलाश-त्वगवनद्धानां मृदावलिप्तानां कुकूले स्विन्नानामकुलकानां पलसहस्रमुदूखले संपोथ्य दधिघृतमधुपललतैलशर्करा संप्रयुक्तं भक्षयेदनन्नभुग् यथोक्तेन विधिना तस्यान्ते यवा-ग्वादिभिः प्रत्यवस्थापनमभ्यङ्गोच्छादनं सर्पिषा यवचूर्णेन यवांश्च रसायनप्रयोगप्रकर्षो द्विस्तावदग्निबलमभिसमीक्ष्य प्रति भोजनं यूषेण पयसा वा षष्टिकः ससर्पिष्कोऽतः परं यथा सुखविहारः कामभक्ष्यः स्यादनेन प्रयोगेन ऋषयः पुनर्युवत्वमवापुः। बभूवुश्चानेकवर्षशतजीविनो निर्विकाराः परं शरीरबुद्धीन्द्रियबलसमुदिताः चेरुः चात्यन्तनिष्ठन्तप

इति। हरीतक्यामलकविभीतकपञ्चपञ्चमूलनिर्यूहेण पिप्पली मधुमधूककाकोली क्षीरकाकोली आत्मगुप्ता जीवकर्षभकक्षीरशुक्ला कल्कसंप्रयुक्तेन विदारी स्वरसेन क्षीराष्टगुणसंप्रयुक्तेन च सर्पिष्कुम्भं साधयित्वा प्रयुञ्जानोऽग्निबलसमां मात्राञ्च जीर्णे च क्षीरसर्पिर्भ्यो षष्टिकमुद्गोदकाम्पानमश्नन् जरा व्याधि पापाभिचारव्यपगतभयः शरीरेन्द्रियबलमतुलमुपलभ्या प्रतिहत सर्वारम्भः परमायुरवाप्नुयादिति। हरीतक्यामलकविभीतक हरिद्रास्थिरावचाविडङ्गामृतवल्लीविश्वभेषज मधुकपिप्पली सोमवल्कसिद्धेन क्षीर सर्पिषा मधुशर्कराभ्यामपि च समोयामलकस्वरसशतपरिपीतमामलक चूर्णमयः चूर्णचतुर्भागसम्प्रयुक्तं पाणितलमात्रम्प्रातः प्रातः प्राश्य यथोक्तेन विधिना सायं यूषेण पयसा वा सर्पिष्कं शालिषष्टिकमश्नीयात्। त्रिवर्षप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति श्रुतमवतिष्ठते सर्वामयाः प्रशाम्यन्ति विषमविषी भवति गात्रे गात्रमश्मवत्स्थिरो भवति अदृश्यो भूतानां भवतीति।

भवतिचात्र। यथा मराणाममृतं यथा भोगवतां सुधा।
तथा भवन्महर्षीणां रसायन विधिः पुरा॥
न जरां न च दौर्बल्यमातुर्यन्निधनं नच।
जग्मुर्वर्षसहस्राणि रसायन पराः पुरा॥
न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विधिवन्निषेवते।
गतिं सदेवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथेति चाव्ययमिति॥

तत्रश्लोकः। अभयामलकीयेऽस्मिन् षड्योगाः परिकीर्तिताः।
रसायनानां सिद्धानामायुर्यैरनुवर्तते इति॥

चिकित्सितेऽभयामलकीयो रसायनपादः प्रथमः।

---

अथातः प्राणकामीयं (२) रसायनपादं व्याख्यास्यामः।

प्राणकामाः शुश्रूषध्वमिदमुच्यमानममृतमिव परमदितिसुतहितकरमचिन्त्याद्भुतप्रभावमायुष्यमारोग्यकरं वयसः स्थापनं निद्रा तन्द्राश्रमक्लमालस्य दौर्बल्यापहमनिलकफपित्तशाम्यकरं स्थैर्यकरमबद्धमांसहरं अन्तरग्निसन्धुक्षणं प्रभावर्णोत्तमस्वरोत्तमकरं रसायनविधानमनेन च्यवनादयो महर्षयः पुनर्युवत्वमापुः। नारीणां चेष्टतमा बभूवुः स्थिरसमसुविभक्तमांसाः सुसंहतस्थिरशरीराः सुप्रसन्नवर्णेन्द्रियाः सर्वत्राप्रतिहतपराक्रमाः क्लेशसहाश्च सर्वे शरीरदोषा भवन्ति ग्राम्याहारात् अम्ललवणकटुकक्षारशुष्कशाकमांसतिलपललपिष्टान्नभोजिनां विरूढनवशूकशमीधान्यविरुद्धसात्म्यरूक्षाभिष्यन्दिभोजिनां क्लिन्नगुरुपूतिपर्युषितभोजिनां असमाध्यशनप्रायाणां दिवास्वप्नस्त्रीमद्यनित्यानां विषमातिमात्रव्यायामसंक्षोभितशरीराणां भयक्रोधशोकलोभायासबहुलानां अतोनिमित्तं हि शिथिलीभवन्ति

मांसानि विमुच्यन्ते सन्धयो विद्रूयते रक्तं निष्यन्दते चानल्पं मेदो न सन्धीयतेऽस्थिषु मज्जा शुक्रं न प्रवर्त्तते क्षयमुपैत्योजः स एवंभूतो ग्लायति सीदति निद्रा तन्द्रा-लस्य समन्वितो निरुत्साहः श्वसिति। असमर्थः चेष्टानां शारीरमानसीनां नष्ट स्मृति बुद्धिच्छायो रोगाणामधिष्ठान-भूतो न सर्वमायुरवाप्नोति। तस्मादेतान् दोषानवेक्षमाणाः सर्वान्यथोक्तान् हितानपास्याहारविहारान् रसायनानि प्रयोक्तुमर्हति इत्युक्ता भगवान् पुनर्वसुरात्रेय उवाच।

आमलकानां सुभूमिजानां कालजानामनुपहतगन्धवर्ण-रसायनानामा पूर्णरसप्रमाणवीर्य्याणां स्वरसेन पुनर्नवा कल्कसंयुक्तेन सर्पिषः साधयेदाढकम् अतःपरं विदारी स्वर-सेन जीवन्ती कल्कसंप्रयुक्तेन अतःपरं चतुर्गुणेन पयसा वा बलातिबला कषायेण शतावरी कल्क संयुक्तेन अनेन क्रमेणैकैकं शतपाकं सहस्रपाकं वा शर्करा चौद्र-चतुर्भागसंप्रयुक्तं सौवर्णे राजते मार्तिके वा शुचौ दृढे घृतभाविते कुम्भे स्थापयेत्। तद्यथोक्तेन विधिना यथाग्नि प्रातः प्रातः प्रयोजयेत् जीर्णे च चीरसर्पिर्भ्यां शालि षष्टिकमश्नीयात्। अस्य त्रिवर्षं प्रयोगाद्वर्षशतं वयोऽजरं तिष्ठति श्रुतमवतिष्ठते सर्वामयाः प्रशाम्यन्ति अप्रति-हतगतिः स्त्रीष्वपत्यवान् भवतीति।

भवति चात्र।

बृहच्छरीरं गिरिसारसारं स्थिरेन्द्रियं चातिबलेन्द्रियञ्च।
अधृष्यमन्यैरतिकान्तरूपं प्रशस्ति पूजा सुखवित्तभाक् च॥
बलं महद्वर्णं विशुद्धिरग्र्या स्वरो घनौघस्तनितानुकारी।

भवत्यपत्यं विपुलं स्थिरञ्च समश्नतो योगमिमं नरस्येति ॥

आमलकघृतम्। १ आमलकसहस्रं पिप्पली सहस्रसंप्रयुक्तं पलाशतरुणक्षारोदकोत्तरं तिष्ठेत्तदनुगतक्षारमनातपशुष्कमनस्थि चूर्णीकृतञ्चतुर्गुणाभ्यां मधु सर्पिर्भ्यां संनीय शर्करा चूर्णचतुर्भागसम्प्रयुक्तं घृतभाजनस्थं षण्मासान् स्थापयेदन्तर्भूमेस्तस्योत्तरकालमग्निबलसमा मात्रा पौर्वाह्णिकः प्रयोगः सात्म्यापेक्षः चाहारविधिना पराह्णिकस्तस्य प्रयोगाद्वर्षशतमजरं वयस्तिष्ठतीति समानं पूर्वेण।

॥ आमलकावलेहः ॥

२ आमलकचूर्णाढकमेकविंशतिरात्रमामलकसहस्रं स्वरसपरिपीतं मधु घृताढकाभ्यां द्वाभ्यामेकीकृतमष्टभाग पिप्पली शर्कराचूर्णं चतुर्भाग सम्प्रयुक्तं घृतभाजनस्थं प्रावृषि भस्मराशौनि दध्यात्तद्वर्षान्ते सात्म्यापेक्षि प्रयोजयेदस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्वेण।

विडङ्गावलेहः। ३ विडङ्गतण्डलचूर्णानामाढकमाढकं पिप्पली तण्डुलानामध्यर्द्धाढकं सितोपलायाः सर्पिस्तैलमध्वाढकैः षड्भिरेकीकृतं प्रावृषि भस्मराशाविति समानं पूर्वेण यावदाशीः ॥

अपरालकावलेहः ॥ ४ यथोक्तगुणानामामलकानां सहस्रमार्द्रपलाशद्रोण्यां सपिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत्। तानि सुस्विन्नशीतानि उद्धृतकुलकान्यापोथ्य पिप्पली चूर्णानामाढकेन च विडङ्गतण्डुलचूर्णानामध्यर्धेन चाढकेन शर्करा चूर्णानां द्वाभ्यां द्वाभ्यां आढकाभ्यां तैलस्य मधुनः सर्पिषश्च संयोज्य शुचौ दृढे घृतभाविते

कुम्भे स्थापयेदेकविंशतिरात्रमतऊर्द्धं प्रयोगः तस्य प्रयोगाद्वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्व्वेण ॥

आमलकावलेहः ॥ ५ धन्विनि कुशास्तीर्णे स्निग्धकृष्णमधुरमृत्तिके सुवर्णवर्णमृत्तिके वा व्यपगतविषश्वापदपवनसलिलाग्नि दोषे कर्षणवल्मीकश्मशानचैत्योषरावसथवर्ज्जिते यथर्त्तु सुखपवनसलिलादित्य सेविते जातामनिन्नेऽनुपहतामसनाध्यारूढामबालामजीर्णां अधिगतवीर्य्यां शीर्णपुराणपर्णामसञ्जातान्यपर्णान्तपसि तपस्ये वा मासे शुचिः प्रयतः कृतदेवार्च्चनः स्वस्तिवाचयित्वा द्विजातीन् बनेषु सुमुहूर्त्ते नागवलां मूलत उद्धरेत्। तेषां सुप्रक्षालितानान्त्वक् पिण्डं। मात्रं अक्षमात्रं वा श्लक्ष्णपिष्टमालोड्य पयसा प्रातः प्रयोजयेत् चूर्णीकृतानि वा पिवेत् पयसा मधुसर्पिर्भ्यां वा संयोज्य भक्षयेत् जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमश्नीयात् संवत्सरप्रयोगादस्य वर्षशतमजरमायुस्तिष्ठतीति समानं पूर्व्वेण ॥

नागवला रसायनम् ॥

६ वलातिबला चन्दना गुरुधवखदिरशिंशपासनस्वरसाः पुनर्णवान्ताश्चौषधयो दश नागबलया व्याख्याताः। स्वरसानामलाभे त्वयं स्वरसविधिः चूर्णानामाढकमुदकस्याढ़े रात्रस्थितं मृदित पूर्व्वं स्वरसवत्प्रयोज्यम्। भल्लातकान्यनुपहतान्यनामयान्या पूर्णरसप्रमाण वीर्याणि पक्कजाम्बव प्रकाशानि शुचौ शुक्रे वा मासे संगृह्य यवपल्ले माषपल्ले वा निधापयेत्। तानि चतुर्मासस्थितानि सहे सहस्ये वा मासे प्रयोक्तुमारभेत शीतस्निग्धमधुरोपस्कृत शरीरः पूर्व्वन्दशभल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधयेत्। तेषां रसमष्टभागा-

वशिष्टं पूतं सपयस्कम्पिवेत् सर्पिषाल्समुखमभ्यज्य तान्येकैक-
भल्लातकोत्कर्षापकर्षेण दश भल्लातकान्या त्रिंशतः प्रयो-
जरानि नातः परमुत्कर्षः प्रयोगविधानेन सहस्रपरो भल्ला-
तक प्रयोगः । सर्पिषा पयसा शालिषष्टिकाशन मुपचारः
प्रयोगान्ते च द्विस्तावात् पयसैवोपचारः तत्प्रयोगाद्दर्षं शत-
मजरं वयस्तिष्ठतीति समानं पूर्वेण ॥

भल्लातकक्षीरम् ॥ ७ भल्लातकानाञ्जर्जरीकृतानां पिष्टस्वे-
दनं पूरयित्वा भूमावा कण्ठन्निखातस्य स्नेह भावितस्य
दृढस्योपरि कुम्भस्यारोप्योडुपेनापिधाय कृष्णमृत्तिकावलिप्त-
क्ष्गोमयाग्निभिरुपस्वेदयेत्तेषां यः स्वरसः कुम्भं प्रपद्येत तम-
ष्टभाग मधु सम्प्रयुक्तं द्विगुणघृतमद्यात् । तत्प्रयोगाद्दर्षंश-
तमजरं वयस्तिष्ठतीति समानं पूर्वेण ॥

भल्लातक सर्पिर्भल्लातक क्षीरं भल्लातक क्षौद्रं गुड
भल्लातकं भल्लातक यूषो भल्लातक तैलं भल्लातकपललं भल्ला-
तकसक्तवो भल्लातकलवणम्भल्लातक तर्पणमिति भल्लातक
विधानमुक्तं भवतीति ।

भवतिचात्र । भल्लातकानि तीक्ष्णानि पाकीन्यग्नि समानि च ।
भवन्त्य मृतकल्पानि प्रयुक्तानि यथा विधि ॥
त्रयोदश विधस्त्वेषां प्रयोगः परिकीर्तितः ।
रोगप्रकृति सात्म्यज्ञस्तान् प्रयोगान् प्रयोजयेत् ॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ।
यत्र भल्लातकं हन्यात् शीघ्रं मेधाग्निवर्धनम् ॥
प्राणकामाः पुराजीर्णाः च्यवनाद्या महर्षयः ।
रसायनैः शिवैरेतैर्बभूवुरमितायुषः ॥

ब्राह्मन्तपो ब्रह्मचर्यमध्यात्मध्यान मेवच ।
दीर्घायुषो यथा कामं संभृत्य त्रिदिवं गताः ॥
तस्मादायुः प्रकर्षार्थं प्राणकामैः सुखार्थिभिः ।
रसायनविधिः सेव्यो विधिवत् सुसमाहितैरिति ॥
तत्र श्लोकाः । रसायनानां संयोगाः सिद्धा भूतहितैषिणा ।
निर्दिष्टाः प्राणकामीये सप्तत्रिंशन्महर्षिणेति ॥
चिकित्सितीये प्राणकामीयो रसायनपादः द्वितीयः ।

---

अथातः करप्रचितीयं [३] रसायनपादं व्याख्यास्यामः ।

करप्रचितानां यथोक्तगुणानामामलकानामुद्धृतास्थ्नां शुष्कचूर्णितानां पुनः माघे फाल्गुने वा मासे त्रिःसप्तकृत्वः स्वरसपरिपीतानां पुनः शुष्कचूर्णीकृतानामाढकमेकं ग्राहयेत् । अथ जीवनीयानां बृंहणीयानां स्तन्यजनना शुक्रवर्द्धनानां वयः स्थापनानां षड्विरेचनशताश्रितीयोक्तानामौषधानां चन्दना गुरुधवश्राकतिनिशखदिरशिंशपासनसाराणाञ्चाणुशः छिन्नानामभया विभीतक पिप्पली वचा चव्यचित्रक विडङ्गानाञ्च समस्तानामाढकमेकं दशगुणेनाम्भसा साधयेत् । यावदुपनयाद्रसस्य तमनुप दग्धमुपहृत्याय सौधु पात्रे व्यास्तीर्य शोषयेत् । सुशुष्कं कृष्णाजिनस्योपरि-

इषदि श्लक्ष्ण पिष्टमयः स्थाल्यांविधापयेत् तच यामयः चूर्णाष्टभागसम्प्रयुक्तं मधुसर्पिर्भ्यां अग्निबलमभिसमीक्ष्य प्रयोजयेदिति ।

तत्रश्लोकाः । एतद्रसायनं पूर्वं वसिष्टः कश्यपोऽङ्गिराः ।

जमदग्निर्भरद्वाजो भृगुरन्ये च तद्विधाः ॥

प्रयुज्य प्रयता मुक्ताः श्रमव्याधि जरामयात् ।

यावदिच्छुन्तपस्ते पुः तत्प्रभावान्महाबलाः ॥

तपसा ब्रह्मचर्येण ध्यानेन प्रशमेन च ।

रसायन विधानेन कालयुक्तेन चायुषा ॥

स्थिता महर्षयः पूर्वं नहि किञ्चिद्रसायनम् ।

ग्राम्यानामन्य कार्याणां सिध्यत्य प्रयतात्मनाम् ॥१

इदं रसायनञ्चक्रे ब्रह्मा वर्ष सहस्रिकम् ।

जरा व्याधि प्रशमनं बुद्धीन्द्रिय बलप्रदम्॥अमलायसं ब्रह्मरसाय नं

संवत्सरं पयोवृत्तिर्गवां मध्ये वसेत्सदा ।

सावित्रीं मनसा ध्यायन् ब्रह्मचारी जितेन्द्रियः ॥

संवत्सरान्ते पौषीं वा माघीं वा फाल्गुणीं तथा ।

त्र्यहोपवासो शुक्ल प्रविश्यामलकीवनम ॥

बृहत्फलाढ्य मारुह्य द्रुमं शाखा गतं फलम् ।

गृहीत्वा पाणिना तिष्ठेज्जपन् ब्रह्मामृतं क्षणम् ॥

तदाह्यवश्यममृतं वसत्यामलकी क्षणम् ।

शर्करा मधुकल्पानि स्नेहवन्ति मृदुनि च ॥

भवन्त्य मृतसंयोगात्तानि यावन्ति भक्षयेत ।

जीवेदर्ष सहस्राणि तावन्त्या गत यौवनः ॥

सौहित्यमेषां गत्वा तु भवत्यमर सन्निभः ।

स्वयं चास्योपतिष्ठन्ति श्रीर्वेदावाक्यरूपिणी ॥२

केवलामलक रसायनम् ॥

त्रिफलाया रसे मूत्रे गवाङ्क्षारे च लावणे।
क्रमेण चेङ्गुदीक्षारे किंशुकक्षारएव च ॥
तीक्ष्णायसस्य पत्राणि वह्निवर्णानि साधयेत्।
चतुरङ्गुल दीर्घाणि नीलोत्सेधतनूनि च ॥
ज्ञात्वा तान्यञ्जनाभानि सूक्ष्मचूर्णानि कारयेत्।
तानि चूर्णानि मधुना रसेना मलकस्य च ॥
युक्तानि लेहवत् कुम्भे स्थितानि घृतभाविते।
संवत्सरनिधेयानि यवपल्ले तदेव च ॥
दद्या दालोडनं मासे सर्वत्रालोडयन् बुधः।
संवत्सरात्यये तस्य प्रयोगो मधुसर्पिषा ॥
प्रातः प्रातर्बलापेक्षी सात्म्यञ्जीर्णे च भोजनम्।
एष एवच लोहानां हेम्नश्च रजतस्य च ॥
आयुः प्रकर्षं कृत्सिद्धः प्रयोगः सर्वरोगनुत्।
नाभिघातैर्नचातङ्कैर्जरया न च मृत्युना ॥
अधृष्यः स्याद्गजप्राणः सदा चातिबलेन्द्रियः।
धीमान् यशस्वी वाक्सिद्धः श्रुतधारो महाबलः ॥
भवेत्समां प्रयुञ्जानो नरो लौह रसायनम्। ३लौहरसायनम्॥
ऐन्द्रीमत्स्याक्षको ब्राह्मीवचा ब्रह्मसुवर्चला ॥
पिप्पलं लवणं हेम शंख पुष्पीविषद्रुतम्।
एषान्त्रियवकान् भागान्हेमसर्पिर्विषैर्विना ॥
द्वौयवौ तत्र हेम्नस्तु तिलन्दद्याद्विषस्य च।
सर्पिषश्च पलन्दद्यात्तदेकध्यं प्रयोजयेत् ॥

घृत प्रभूतं सक्षौद्रक्षीरैर्वा चान्नं प्रशस्यते ।
जरा व्याधिप्रशमनं स्मृति मेधाकरम्परम् ॥
आयुष्यं पौष्टिकं धन्यं स्वरवर्णं प्रसादनम् ।
परमोजस्करं चैतत् सिद्धमेतत् रसायनम् ॥
नैनं प्रसहते कृत्या नालक्ष्मीर्न विषन्वरक् ।
श्वित्रं सकुष्ठं जठराणि गुल्माः प्लीहा पुराणो विषमज्वरश्च ॥
मेधा स्मृति ज्ञानहराश्च रोगाः शाम्यन्त्य नेनाति बलाश्च वाताः।

ऐन्द्रीरसायनम् ॥

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः क्षीरेण यष्टीमधुकस्य चूर्णम् ॥
रसो गुडूच्यास्तु स मूलपुष्प्याः कल्कः प्रयोज्यः खलु शंखपुष्प्याः
आयुः प्रदान्यामय नाशनानि बलाग्निवर्णस्वरनाशनानि ॥
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी ।

मेधारसयनानि ॥

पञ्चाष्टौ सप्तदश वा पिप्पलीर्मधु सर्पिषा ॥

पिप्पलीरसायनम् ॥

रसायनगुणान्वेषी समामेकां प्रयोजयेत् ।
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ॥
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ।
प्रयोज्या मधु संमिश्रा रसायनगुणैषिणा ॥
जेतु कासक्षयं शोषं श्वासं हिक्कागलामयान् ।
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ॥
वैस्वर्यं पीनसं शोफं गुल्मं वातबलासकम् ।
क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम् ॥

वर्द्धयेत् पयसा सार्द्धं तथा चापनयेत् पुनः।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं चीरसर्पिषा॥
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम्।
पिष्टास्ता बलिभिः सेव्याः शृता मध्यबलैर्नरैः॥
प्रयोगोऽयं स्त्वपर्यन्तः स कनीयान् सचाबलैः।
बृंहणं स्वर्यमायुष्यं प्लीहोदरविनाशनम्॥
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम्।
पिप्पली वर्द्धमानं रसायनम्॥
जरणान्तेऽभयामेकां प्राग्भुक्ते द्वे विभीतके॥
भुक्ता तु मधु सर्पिर्भ्यां चत्वार्यामलकानि च।
प्रयोजयेत् समामेकां त्रिफलाया रसायनम्॥
जीवेद्वर्षशतं पूर्णमजरो व्याधिरेव च। त्रिफलानां रसायनम्॥
त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम्॥
तमहोरात्रिकं लेपं पिबेत् चौद्रोदकाप्लुतम्।
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते॥
अजरोऽरुक् समाभ्यासाज्जीवेत्तस्य समाशतम्।
त्रिफलारसायनम्॥
मधुकेन तु गाचीर्या पिप्पल्या चौद्रसर्पिषा॥
त्रिफला सितया चापि युक्ता सिद्धं रसायनम्।
त्रिफलारसायनम्॥
सर्वलौहैः सुवर्णेन वचया मधु सर्पिषा॥
विडङ्गपिप्पलीभ्यां च त्रिफला लवणेन च।
संवत्सरप्रयोगेण मेधा स्मृति बलप्रदा॥
भवत्यायुष्प्रदा धन्या जरारोगनिवर्हणी। त्रिफलारसायनम्॥

अनम्लञ्च कषायञ्च कटुपाकि: शिलाजतु ॥
नात्युष्णशीतं धातुभ्य: चतुर्भ्यस्तस्य सम्भव: ।
हेम्न: सरजतात्ताम्राद्वरां कृष्णायसादपि ॥
रसायनं तद्विधिभिस्तद्वृष्यन्तञ्च रोगनुत् ।
वातपित्तकफघ्नैश्च निर्यूहैस्तत् सुभावितम् ॥
वीर्य्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ।
प्रक्षिप्तोद्धृतमाधानं पुनस्तत् प्रक्षिपेद्रसे ॥
कोष्णं सप्ताहमेतेन विधिना तस्य भावना ।
पूर्व्वोक्तेन विधानेन लोहै: चूर्णीकृतै: सह ॥
तत्पीतं पयसा दद्याद्दीर्घमायु: सुखान्वितम् ।
जरा व्याधि प्रशमनं देहदार्ढ्यकरं परम् ॥
मेधा स्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत् ।
प्रयोग: सप्तसप्ताहास्त्रयश्चैकश्च सप्तक: ॥
निर्दिष्ट: त्रिविधस्तस्य परो मध्यो वरस्तथा ।
परमर्द्धपलं कर्षो मात्रा तस्य त्रिधा मता ॥
जातेर्विशेषं सविधिं तस्य वक्ष्याम्यत: परम् ।
हेमाद्या: सूर्य्यसन्तप्ता: स्रवन्ति गिरिधातव: ।
जत्वाभं मृदुमृत्स्नाभं यन्मलन्तच्छिलाजतु ॥
मधुरश्च सतिक्तश्च जवापुष्पनिभश्च य: ।
विपाके कटु शीतश्च स सुवर्णस्य निस्रव: ॥
रूप्यस्य कटुक: श्वेत: शीत: स्वादु विपच्यते ।
ताम्रस्य वर्हिकण्ठाभस्तिक्तोष्ण: पच्यते कटु: ॥
यत्तु गुग्गुलुकाभासस्तिक्तको लवणान्वित: ।
कटुर्विपाके शीतश्च सर्वश्रेष्ठ: सचायस: ॥

गोमूत्रगन्धयः सर्व्वे सर्व्वकर्म्मसु यौगिकाः ।
रसायन प्रयोगेषु पश्चिमस्तु विशिष्यते ॥
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ।
विशेषतः प्रशस्यन्ते मला हेमादि धातुजाः ॥
शिलाजतु प्रयोगेषु विदाहीनि गुरूणि च ।
वर्जयेत् सर्व्वकालन्तु कुलत्थान् परिवर्जयेत् ॥
ते ह्यत्यन्त विरुद्धत्वा दश्मनो भेदनाः परम् ।
लोके दृष्टास्ततस्तेषां प्रयोगः प्रतिसिध्यते ॥
पयांसि तक्राणि रसाः स यूषाः तोयं स मूत्रम् विविधाः कषायाः
आलोडनार्थं गिरि जस्य शस्तास्ते ते समीक्ष्याः प्रसमीक्ष्य कार्य्यम्॥
न सोऽस्ति रोगो भुविसाध्यरूपः शिलाह्वयं यन्नजयेत प्रसह्य
तत्कालयोगैर्विधिभिः प्रयुक्तं स्वस्थस्य चोर्जां विपुलां ददाति॥
अत्र श्लोकः। करप्रचितिके पादे दशषड्चमहर्षिणा।
रसायनानां सिद्धानां संयोगाः समुदाहृताः ॥
इति चिकित्सितके कर प्रचितिको रसायनपादः तृतीयः।

---

अथात आयुर्वेदसमुत्थानीयं[४]रसायनपादं व्याख्यास्यामः।

ऋषयः खलु कदाचित् शालीनां यायावराश्च ग्राम्यौषध्याहाराः सन्तः साम्पन्निका मन्दचेष्टाश्च नातिकल्पाः प्रायेण बभूवुः ते। सर्व्वासामिति कर्तव्यतानामसमर्थाः

सन्तो ग्रामवासकृतमात्म दोषं मत्वा पूर्वनिवासमपगत-
ग्रामदोषं शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गा-
प्रभवममर गन्धर्वकिन्नरानुचरितमनेकरत्ननिचयमचिन्त्या-
द्भुत प्रभावं ब्रह्मर्षि सिद्धचारणानुचरितं दिव्यतीर्थौषधि-
प्रभवमतिशरण्यं हिमवन्तममराधिपाभिगुप्तं जग्मुः भृग्व-
ङ्गिरोऽत्रि वसिष्ठकश्यपागस्त्यपुलस्त्यवामदेवासितगौतम-
प्रभृतयो महर्षयः। तानिन्द्रः सहस्रदृगमर गुरुवरोऽब्रवीत्।
स्वागतं ब्रह्मविदां ज्ञान तपोधनानां ब्रह्मर्षीणामस्ति।
भूयो ग्लानिरप्रभावैश्वर्यं वैवर्ण्यञ्च ग्रामवासकृतमसुखम-
सुखानुबन्धं च ग्राम्यो हि वासो मूलमशस्तानान्तत्कृतः
पुण्यकृद्भिरनुग्रहः प्रजानां स्वशरीरमवेक्षितुङ्कालः काल-
श्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणामात्मनः प्रजानाञ्चानुग्रहार्थं
यमायुर्वेदमश्विनौ मह्यं प्रयच्छतां। प्रजापतिरश्विभ्यां प्रजा
पतये ब्रह्मा प्रजानामल्पमायुर्जरा व्याधि बहुलमसुखं असु-
खानुबन्धं अल्पत्वाद्लुप्तपतपोदमनियमदानाध्ययन सञ्चयं
मत्वा पुण्यतममायुः प्रकर्षकरं जरा व्याधिप्रशमनं ऊर्जस्क-
रममृतं शिवं शरण्यमुदात्तं मत्तः श्रोतुमर्हथोपधारयितुं
प्रकाशयितुञ्च प्रजानुग्रहार्थमार्षं ब्रह्मचर्य्यं प्रतिमैत्रीकारु-
ण्यमात्मनश्चानुत्तमं पुण्यमुदारं ब्राह्ममक्षयं कर्मेति। तत्
श्रुत्वा विबुधपतिवचनमृषयः सर्व एवामरवरमृग्भिस्तुष्टुवुः
प्रहृष्टास्तद्वचनमभिननन्दु श्चेति। अथेन्द्रः तदायुर्वेदामृत-
मृषिभ्यः संश्राव्योवाचैतत्सर्वमनुष्ठेयमयञ्च कालो रसाय-
नानां दिव्याश्चौषधयो हिमवत्प्रभवाः प्राप्तवीर्याः।

तद्यथा ऐन्द्री ब्राह्मी पयस्या क्षीरपुष्पी श्रावणी महा-

श्रावणी शतावरी विदारी जीवन्ती पुनर्नवा स्थिरा वचा छत्रातिच्छत्रा मेदा महामेदा जीवनीयाश्चान्याः पयसा प्रयुक्ताः। षण्मासात् परमायुर्वयस्तरुणमनामयत्वं स्वर-वर्णं सम्पदमुपचयमेधा स्मृतिमुत्तमबलमिष्टांश्चापरान् भावाना वहन्ति सिद्धाः। इन्द्रोक्तं रसायनम्।

ब्रह्मसुवर्चलानामौषधिर्याहिरण्यक्षीरा पुष्करसदृशपत्रा आदित्य पर्णीनामौषधिर्या सूर्यकान्ता विज्ञायते सुवर्णक्षीरा सूर्यमण्डलाकारपुष्पी। नारीनामौषधिरश्व बलेति विज्ञायते या वल्वज सदृशपत्रा। काष्ठगोधानामौषधिर्गोधाकारा। सर्पानामौषधिः सर्पाकारा। सोमनामौषधिराजः पञ्चदशपर्वा स सोमइव क्षीयते वर्धते च। पद्मानामौषधिः पद्माकारा पद्मरक्ता पद्मगन्धा। अजा नामौषधिरजशृङ्गीति विज्ञायते नीला नीलक्षीरपुष्पी लताप्रतान बहुला इत्यासामोषधीनां यां यामेवोपलभेत तस्या स्तस्याः स्वरसस्य सौहित्यङ्गत्वा क्षौम भावितायामार्द्रपलाश द्रोण्यां शयीत तत्र प्रलीयेत षण्मासेन पुनः पुनः सम्भवति। तस्याजमयः प्रत्यवस्था-पनं षण्मासेन देवतानुकारी भवति। वयोवर्णस्वराकृति बलप्रभाभिः स्वयं चास्य सर्ववाचो गतानि प्रादुर्भवन्ति। दिव्यं चास्य चक्षुः श्रोत्रं भवति गतिर्योजन सहस्रं दशवर्षसहस्राण्यायुरनुपद्रवं चेति।

भवतिचात्र। दिव्यानामोषधीनां यः प्रभावः स भवद्विधैः।
शक्यः सोढुमशक्यस्तु न सोढुमकृतात्मभिः॥
ओषधीनां प्रभावेण तिष्ठतां स्वेच वर्त्मनि।
भवतान्निखिलं श्रेयः सर्वमेवोप पत्स्यते॥

स्नानप्रस्थं गृहस्थैश्च प्रयतैर्नियतात्मभिः।
शक्या औषधयो ह्येताः सेवितुं विषयाभिजाः ॥
तासु चैवगुणे स्तेषां मध्यमेन च कर्मणा।
मृदु वीर्यतरास्तासां विधिर्य्यश्च स एव तु ॥
पर्य्येष्टुन्ताः प्रयोक्तुं वा ये समर्थाः सुखार्थिनः।
रसायनविधिस्तेषामयमग्र्यः प्रशस्यते ॥
बल्यानाञ्जीवनीयानां बृंहणीयाश्च या दश।
वयसः स्थापनानाञ्च खदिरस्याशनस्य च ॥
खर्जूराणां मधूकानां मुस्तानामुत्पलस्य च।
मृद्वीकानां विडङ्गानां वचायाः चित्रकस्य च ॥
शतावर्य्याः पतस्यायाः पिप्पल्या जोङ्गकस्य च।
ऋद्ध्या नागबलायाश्च द्वारदायाश्ववस्य च ॥
त्रिफला काश्मर्य्योश्च विदार्य्याश्चन्दनस्य तु।
इक्षूणां शरमूलानां श्रीपर्ण्यास्तिनिशस्य च ॥
रसाः पृथक्पृथक् ग्राह्याः पलाशक्षार एव च।
एषां पात्रोन्मितान् भागान् पयो गव्यं चतुर्गुणम् ॥
द्वे पात्रे तिलतैलस्य द्वे च गव्यस्य सर्पिषः।
तत्साध्यं सर्वमेकत्र सुसिद्धं स्नेहमुद्धरेत् ॥
तत्रामलकचूर्णानामाढकं शतभावितम्।
स्वरसे नैव दातव्यं क्षौद्रस्याभिनवस्य च ॥
शर्करा चूर्णपात्रञ्च प्रस्थमेकं प्रदापयेत्।
तुगाक्षीर्य्याः स पिप्पल्याः स्थाप्यं संमूर्च्छितं च तत् ॥
शुचौ चैमार्त्तिके कुम्भे मासार्धं घृत भाविते।
मात्रामग्निसमां तस्य तत ऊर्ध्वम्प्रयोजयेत् ॥

हेम ताम्रप्रवालानां अयसः स्फटिकस्य च ।
मुक्तावैदूर्य्यशङ्खानां चूर्णानां रजतस्य च ॥
प्रक्षिप्य षोड़शीं मात्रां विरहायासमैथुनः ।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥
सर्वरोग प्रशमनं सर्ववाचो गत प्रदम् ।
सिद्धार्थतामभिनवं वयश्च प्रजा प्रियत्वञ्च यशश्च लोके ॥
प्रयोज्य मिच्छद्भिरिदं यथा वद्रसायनं ब्राह्ममुदारवीर्य्यम् ।

इन्द्रोक्तरसायनम् ।

समर्थानामरोगाणान्धीमताञ्जियतात्मनाम् ॥
कुटीप्रवेशः क्षमिनां परिच्छदवतां हितः ।
अतोऽन्यथा तु ये तेषां सौर्य्यमारुतको विधिः ॥
ताभ्यां श्रेष्ठतरः पूर्वोविधिः सतु सुदुष्करः ।
रसायनविधि भ्रंशाज्जायेरन् व्याधयो यदि ॥
यथा स्वमौषधन्तेषां कार्य्यं मुक्त्वा रसायनम् ।
सत्यवादिन मक्रोधं निवृत्तं मद्यमैथुनात् ॥
अहिंसक मनायाशमप्रशान्तं प्रियवादिनम् ।
शाज्य शौच परं धीरं दान नित्यं तपस्विनम् ॥
देव गोब्राह्मणाचार्य्य गुरु वृद्धार्चने रतम् ।
आनृशंस्य परन्नित्यं नित्यं करुणवेदिनम् ॥
सम जागरणं स्वप्ननित्यं क्षीर घृताशिनम् ।
देश कालप्रमाणज्ञं युक्तिज्ञमनहङ्कृतम् ॥
शस्ताचारमसंकीर्णं मध्यात्म प्रवणेन्द्रियम् ।
उपासितारं वृद्धानामास्तिकानां जितात्मनाम् ।
धर्म्मशास्त्रपरं विद्यात्तरं नित्य रसायनम् ॥

गुणैरेतैः समुदितः प्रयुङ्क्ते यो रसायनम्।
रसायनगुणान् सर्वान्यथोक्तान् समश्नुते॥
यथा स्थूलमनिर्वाह्य दोषान् शारीरमानसान्।
रसायनगुणैर्जन्तुर्युज्यते न कदाचन॥
योगाह्यायुः प्रकर्षार्था जरा रोगनिवर्हणाः।
मनः शरीरशुद्धानां सिध्यन्ति प्रयतात्मनाम्॥
तदेतन्न भवेद्वाच्यं सर्वमेव हतात्मने।
अरजोभ्यो द्विजातिभ्यः शुश्रूषा येषु नास्ति च॥
ये रसायनसंयोगा वृष्या योगाश्च ये मताः।
यच्चौषधं विकाराणां सर्वन्तद्वैद्यसंश्रयम्॥
प्राणाचार्यम्बुधस्तस्माद्धीमन्तं वेदपारगम्।
अश्विनौ देव भिषजौ यज्ञवाहाविति स्मृतौ॥
दक्षस्य हि शिरश्छिन्नं पुनस्ताभ्यां समाहितम्।
प्रशीर्णा दशनाः पूष्णो नेत्रे नष्टौ भगस्य च॥
वज्रिणश्च भुजस्तम्भः ताभ्यामेव चिकित्सितः।
चिकित्सितः शशी ताभ्यां गृहीतो राजयक्ष्मणा॥
सोमाच्चिपतितश्चन्द्रः कृतस्ताभ्यां पुनः सुखी।
भार्गवः च्यवनः कामी वृद्धः सन् विकृतिं गतः॥
वीतवर्णस्वरोपेतः कृतस्ताभ्यां पुनर्युवा।
एतैश्चान्यैश्च बहुभिः कर्म्मभिर्भिषगुत्तमौ॥
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम्।
ग्रहास्तोत्राणि मन्त्राणि तथा नानाहवींषि च॥
धूम्राश्च पशवः ताभ्यां प्रकल्प्यन्ते द्विजातिभिः।
प्रातश्च स वने होमं शक्रोऽश्विभ्यां सहाश्नुते॥

सौत्रामण्याञ्च भगवानश्विभ्यां सह मोदते ।
इन्द्राग्नी चाश्विनौ चैव स्तूयन्ते प्रायशो द्विजैः ॥
स्तूयन्ते वेदवाक्येषु न तथान्या हि देवताः ।
अजरैरमरैस्तावद्विबुधैः साधिपैर्ध्रुवैः ॥
पूज्यते प्रयतैरेवमश्विनौ भिषजाविति ।
मृत्यु व्याधि जरावश्यैः दुःखप्रायैः सुखार्थिभिः ॥
किम्पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नाति शक्तितः ।
शीलवान्मतिमान्युक्तो द्विजातिः शास्त्रपारगः ॥
प्राणिभिर्गुरुवत् पूज्यः प्राणाचार्य्यः स हि स्मृतः ।
विद्या समाप्तौ भिषजो द्वितीया जातिरुच्यते ॥
अश्नुते वैद्यशब्दं हि न वैद्यः पूर्वजन्मना ।
विद्या समाप्तौ ब्राह्मं वा सत्त्वमार्षं अथापि वा ॥
ध्रुवमाविशति ज्ञानात्तस्माद्वैद्यो द्विजः स्मृतः ।
नाभिध्यायेन्नचाक्रोशे दहितेन समाचरेत् ॥
प्राणाचार्य्यम्बुधः कश्चिदिच्छन्नायुरनित्वरम् ।
चिकित्सितस्तु संश्रुत्य यो वा संश्रुत्य मानवः ॥
नोपाकरोति वैद्याय नास्ति तस्येह निष्कृतिः ।
भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान् ॥
आबाधेभ्यो हि संरक्षेदिच्छन् धर्म्ममनुत्तमम् ।
धर्मार्थं नार्थकामार्थं आयुर्वेदो महर्षिभिः ॥
प्रकाशितो धर्म्मपरैरिच्छद्भिः स्थानमक्षरम् ।
नार्थार्थं नापि कामार्थं अथ भूतदयां प्रति ॥
वर्त्तते यः चिकित्सायां स सर्वमतिवर्त्तते ।
कुर्वते ये तु वृत्त्यर्थं चिकित्सा पण्यविक्रयम् ॥

ते हित्वा काञ्चनं राशिं पांशुराशिमुपासते।
दारुणैः कृष्यमाणानां गदैर्वैवस्वतक्षयम्॥
छित्त्वा वैवस्वतान् पाशान् जीवितस्य प्रयच्छति।
धर्मार्थसदृशस्तस्य दाता नेहोपलभ्यते॥
न हि जीवितदानाद्धि दानमन्यद्विशिष्यते।
परोभूतदयामर्म इति मत्वा चिकित्सया॥
वर्त्तते यः स सिद्धार्थः सुखमत्यन्तमश्नुते इति।
तत्र श्लोकौ आयुर्वेदसमुत्थानं दिव्यौषधि विधिः शुभः॥
अमृतात्मान्तरगुणं सिद्धं रत्नरसायनम्।
सिद्धेभ्यो ब्रह्मचारिभ्यो यदुवाचामरेश्वरः॥
आयुर्वेदसमुत्थाने तत्सर्वं सम्प्रकाशितम्।
इति चिकित्सिते आयुर्वेदसमुत्थानीयो रसायनपादः चतुर्थः
समाप्तश्च रसायनोऽध्यायः।

---

द्वितीयोऽध्यायः।

अथातः संप्रयोगशरमूलीयं[१]वाजीकरणपादं व्याख्यास्यामः।

वाजीकरणमन्विच्छेत् पुरुषो नित्यमात्मवान्।
तदायत्तौ हि धर्मार्थौ प्रीतिश्च यशः एव च॥
पुत्रस्यायतनं ह्येतद्गुणाश्चैते सुताश्रयाः।
वाजीकरणमग्र्यञ्च क्षेत्रं स्त्री या प्रहर्षिणी॥

दृष्टा ह्येकैकशोऽप्यर्थाः परं प्रीतिकराः स्मृताः ।
किं पुनः स्त्रीशरीरे ये सङ्घातेन व्यवस्थिताः ॥
सङ्घातो हीन्द्रियार्थानां स्त्रीषु नान्यत्र विद्यते ।
स्त्र्याश्रयो हीन्द्रियार्थो यः स प्रीति जननोऽधिकम् ॥
स्त्रीषु प्रीतिविशेषेण स्त्रीष्वपत्यं प्रतिष्ठितम् ।
धर्मार्थौ स्त्रीषु लक्ष्मीश्च स्त्रीषु लोकाः प्रतिष्ठिताः ॥
सुरूपा यौवनस्था या लक्षणैर्या विभूषिता ।
या वश्या शिक्षिता या च सा स्त्री वृष्यतमा मता ॥
नाना भक्त्या तु लोकस्य दैवयोगाच्च योषिताम् ।
तं तं प्राप्य विवर्द्धन्ते नरं रूपादयो गुणाः ॥
वयो रूपमृजाहावैर्या यस्य परमाङ्गना ।
प्रविशत्याशु हृदयं दैवाद्वा कर्म्मणोऽपि वा ॥
हृदयोत्सव रूपाया या समान मनोरमा ।
समान सत्त्वा या वश्या या यस्य प्रीयते प्रियैः ॥
या पाशभूता सर्वेषामिन्द्रियाणां परैर्गुणैः ।
यया विमुक्तो निस्त्रीकमरतिर्मन्यते जगत् ॥
यस्या ऋते शरीरं ना धत्ते शून्यमिवेन्द्रियैः ।
शोकोद्वेगारति भयैर्यां दृष्ट्वा नाभिभूयते ॥
याति यां प्राप्य विस्रम्भं दृष्ट्वा हृष्यत्यतीव यां ।
अपूर्वामिव यां याति नित्यं हर्षातिवेगतः ॥
गत्वा गत्वापि बहुशो यां तृप्तिं नैव गच्छति ।
सा स्त्री वृष्यतमा तस्य नानाभावा हि मानवाः ॥
अतुल्यगोत्रां वृष्याञ्च प्रहृष्टां निरुपद्रवाम् ।
शुद्धस्नातां व्रजेन्नारीं अपत्यार्थी निरामयः ॥

अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः ।
अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः ॥
चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः ।
निष्प्रजस्तृणपूलीभिर्ज्ञातव्यः पुरुषाकृतिः ॥
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना ।
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते ॥
बहुमूर्तिर्बहुमुखो बहुव्यूहो बहुक्रियः ।
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः ॥
मङ्गल्योऽयं प्रशस्योऽयं धन्योऽयं वीर्यवानयम् ।
बहुशाखोऽयमिति च स्तूयते ना बहुप्रजः ॥
प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विपुलं कुलम् ।
यशो लोकाः सुखोदर्कास्तुष्टिश्चापत्य संश्रिता ॥
तस्मादपत्यमन्विच्छन् गुणांश्चापत्य संश्रितान् ।
वाजीकरणनित्यः स्यादिच्छेत् कामसुखानि च ॥
उपभोगसुखान् सिद्धान् वीर्यापत्य विवर्धनान् ।
वाजीकरणसंयोगान् प्रवक्ष्याम्यत उत्तरम् ॥
शरमूलेक्षुमूलानि काण्डेक्षुं सेक्षुवालिकम् ।
शतावरीं पयस्याञ्च विदारीं कण्टकारिकाम् ॥
जीवन्तीं जीवकं मेदां वीरमृषभकं बलाम् ।
ऋद्धिं गोक्षुरकं रास्नामात्मगुप्तां पुनर्नवाम् ॥
पृथक् त्रिपलिकान् कृत्वा माषाणामाढकं नवम् ।
विपाचयेज्जलद्रोणे चतुर्भागञ्च शोषयेत् ॥
तत्र पेष्याणि मधुकं द्राक्षां फल्गुणि पिप्पलीम् ।

आत्मगुप्तां मधूकानि खर्जूराणि शतावरीम् ॥
विदार्यामलकेचूणां रसस्य च पृथक् पृथक् ।
सर्पिषश्चाढकं दद्यात् क्षीरद्रोणञ्च तद्भिषक् ॥
पालिकैर्गुलिकास्थानात्स्ना यथाग्नि प्रयोजयेत् ।
एष वृष्यः परो योगो वृंहणो बलवर्द्धनः ॥
अनेनाश्व इवोदीर्णो लिङ्गमर्पयते स्त्रियाः ।
माषाणामात्मगुप्ताया बीजानामाढकं नवम् ॥
जीवकर्षभको वीरं मेदामृद्धिं शतावरीम् ।
मधुकं चाश्वगन्धाञ्च साधयेत् कुडवोन्मिताम् ॥
रसे तस्मिन् घृतप्रस्थं गव्यं दशगुणं पयः ।
विदारीणां रसप्रस्थं प्रस्थमिक्षुरसस्य च ॥
दत्त्वा मृद्वग्निना साध्यं सिद्धं सर्पिर्निधापयेत् ।
शर्करायास्तु गाक्षीर्याः क्षौद्रस्य च पृथक् पृथक् ॥
भागांश्चतुष्पलांस्तत्र पिप्पल्याश्चावपेत् पलम् ।
पलं मूर्च्छितो लीढ्वा ततोऽन्नमुपयोजयेत् ॥
य इच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम् ।
शर्करा माषविदलास्तु गाक्षीरीपयो घृतम् ॥
गोधूमचूर्णं षष्ठीनि सर्पिष्युत्कारिकां पचेत् ।
तां नाति पक्वां मृदितां कौक्कुटे मधुरे रसे ॥
सुगन्धि प्रक्षिपेदुष्णे यथा सान्द्रीभवेद्रसः ।
एष पिण्डरसो वृष्यः पौष्टिको बलवर्द्धनः ॥
अनेनाश्व इवोदीर्णोबली लिङ्गं समर्पयेत् ।
शिखि तित्तिरि हंसानामेवं पिण्डरसो मतः ॥
घृत माषान् समस्तान् तान् साधयेन्माहिषे रसे ।

भर्जयेत्तं रसं पूतं फलाम्लं नवसर्पिषि ॥
ईषत् सलवणं युक्तं धान्यजीरकनागरैः ।
एष वृष्यश्च बल्यश्च बृंहणश्च रसोत्तमः ॥
चटकांस्तित्तिरिरसे तित्तिरीन् कौक्कुटे रसे ।
कुक्कुटान् बार्हिणरसे हांसे बार्हिणमेव च ॥
नवसर्पिषि सन्तप्तान् फलाम्लान् कारयेद्रसान् ।
मधुरान् वा यथा सात्म्यं गन्धाढ्यान् बलवर्द्धनान् ॥
तप्तिश्चटकमांसानां गत्वा योऽनुपिवेत् पयः ।
न तस्य बलवैयिल्यं स्यान्न शुक्रक्षयो निशि ।
माषयूषेण यो भुक्त्वा घृताढ्यं षष्टिकौदनम् ॥
पयः पिबति रात्रिं स कृत्स्नां जागर्त्ति वेगवान् ।
न ना स्वपिति रात्रीषु नित्यं स्तब्धेन शेफसा ॥
तप्तः कुक्कुटमांसानां भृष्टानां नक्ररेतसि ।
निःस्राव्य मत्स्याण्डरसं भृष्टं सर्पिषि भक्षयेत् ॥
हंसबर्हिणदक्षाणामेव मण्डानि भक्षयेत् ।
वाजीकरणसामर्थ्यं चैवं स्त्री यस्य चैव या ॥
ये दोषा निरपत्यानां गुणाः पुत्रवताञ्च ये ।
उक्तास्ते शरमूलीये पादे पुष्टि बलप्रदाः ॥
दशपञ्च च संयोगा वीर्य्यापत्य विवर्द्धनाः इति ।

तत्र श्लोकौ ।

स्रोतःसु शुद्धेष्वमले शरीरे वृष्यं यदा नामितमत्ति काले
वृषायते तेन परं मनुष्यस्तद्बृंहणञ्चैव बलप्रदञ्च ।
तस्मात् पुरा शोधनमेव कार्य्यं बलानुरूपं नहि वृष्ययोगाः ।

सिध्यन्ति देहे मलिने प्रयुक्ताः क्लिष्टे यथा वाससि रागयोगाः इति।

चिकित्सिते प्रथमे द्वितीयो वाजीकरणपादः।

---

अथात आसिक्तक्षीरीयं [२]वाजीकरणपादं व्याख्यास्यामः।

आसिक्तक्षीरमापूर्णमशुष्कं शुद्धषष्टिकम्।
उलूखले समापोथ्य पीड़येत् क्षीरमर्दितम्॥
गृहीत्वा तं रसं पूतं गव्येन पयसा सह।
बीजानामात्मगुप्ताया धान्यमाषरसेन च॥
बलायाः सूर्पपर्ण्योश्च जीवन्त्या जीवकस्य च।
ऋषभक काकोली श्वदंष्ट्रा मधुकस्य च॥
शतावर्य्या विदार्य्याश्च द्राक्षाखर्जूरयोरपि।
संयुक्तं मात्रया वैद्यः साधयेत्तत्र चावपेत्॥
तुगाक्षीर्य्याः समाषाणां शालीनां षष्टिकस्य च।
गोधूमानाञ्च चूर्णानि यैः स सान्द्रीभवेद्रसः॥
सान्द्रीभूतञ्च तं कुर्य्यात् प्रभूतमधुशर्करम्।
गुलिका बदरैस्तुल्यास्ताश्च सर्पिषि साधयेत्॥
ता यथाग्निप्रयुञ्जानः क्षीरमांसरसायनः।
पश्यत्यपत्यं विपुलं वृद्धोऽप्यात्मजमक्षयम्॥
चटकानां सहंसानां दक्षाणां शिखिनां तथा।
शिशुमारस्य नक्रस्य भिषक् शुक्राणि संहरेत्।
गव्यं सर्पिर्वराहस्य कुलिङ्गस्य वसामपि।

षष्टिकानाञ्च चूर्णानि चूर्णं गोधूममेव च॥
एभिः पूपलिकाः कार्य्याः षष्कुल्यो वर्त्तिकास्तथा॥
पूपाधानाश्च विविधा भक्ष्याश्चान्ये पृथग्विधाः।
एषां प्रयोगाद्भक्ष्याणां तथैवानापूर्णरेतसा॥
शेफसा वाजिवद्याति यावदिच्छं स्त्रियो नरः।
आत्मगुप्ता फलं माषः खर्जूराणि शतावरीम्॥
शृङ्गाटकानि मृद्वीकां साधयेत् प्रसृतोन्मितान्।
क्षीरप्रस्थं जलप्रस्थं एतत् प्रस्थावशेषितम्।
शुद्धेन वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः।
शर्करायास्तु गाक्षीर्य्याः सर्पिषोऽभिनवस्य च॥
तत् पाययेत सक्षौद्रं षष्टिकान्नञ्च भोजयेत्।
जरापरीतोऽप्यबलो योगेनानेन विन्दति॥
नरोऽपत्यं सुविपुलं युवेव च स हृष्यति।
खर्जूरीमस्तकं माषान् पयस्यां सशतावरीम्॥
खर्जूराणि मधूकानि मृद्वीकामजडाफलम्।
पलोन्मितानि मतिमान् साधयेत् सलिलाढके॥
तेन पादावशेषेण क्षीरप्रस्थं विपाचयेत्।
क्षीरशेषेण तेनाद्यात् घृताढ्यं षष्टिकौदनम्॥
सशर्करेण संयोग एष हृष्यः परं स्मृतः।
जीवकर्षभकौ मेदां जीवन्तीं श्रावणीद्वयम्॥
खर्जूरं मधुकं द्राक्षां पिप्पलीं विश्वभेषजम्।
शृङ्गाटकीं विदारीञ्च नवं सर्पिः पयो जलम्॥
सिद्धं घृतावशेषं तत् शर्करा क्षौद्रपादिकम्।
षष्टिकान्नेन संयुक्तम् उपयोज्यं यथाबलम्॥

वृष्यं बल्यञ्च वर्ण्यञ्च कण्ठ्यं बृंहणमुत्तमम् ।
दध्नः शरं शरच्चन्द्रसन्निभं दोषवर्जितम् ॥
शर्करा चौद्रमरिचैस्तुगाक्षीर्य्याश्च बुद्धिमान् ।
युक्त्या युक्तं सुसूक्ष्मैलं नवे कुम्भे शुचौ पटे ॥
मार्जितं प्रक्षिपेच्छीते घृताढ्ये षष्टिकौदने ।
पिबेन्मात्रां रसालायास्तं भुक्त्वा षष्टिकौदनम् ॥
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते ।
चन्द्रांशुकल्पं पयसा घृताढ्यं षष्टिकौदनम् ॥
शर्करा मधुसंयुक्तं प्रयुञ्जानो वृषायते ।
तप्ते सर्पिषि नक्राण्डं ताम्रचूड़ाण्डमिश्रितम् ॥
युक्तं षष्टिकचूर्णेन सर्पिषाभिनवेन च ।
पक्वा पूपलिकाः खादेद्वारुणीमण्डपो नरः ॥
य इच्छेद्दश्च वहन्तुं प्रसेक्तुं गजवच्च यः । इति ।
भवति चात्र । आसिक्तक्षीरिके पादे ये योगाः परिकीर्त्तिताः ।
अष्टावपत्यकामैस्ते प्रयोज्याः पौरुषार्थिभिः ॥
एतैः प्रयोगैर्विविधैर्वपुष्मान् स्नेहोपपन्नो बलवर्णयुक्तः ।
हर्षान्वितो वाजिवदष्टवर्षो भवेत् समर्थश्च वराङ्गनासु ।
यद्यच्च किञ्चिन्मनसः प्रियं स्याद्रम्या वनान्ताः पुलिनानि शैलाः ।
इष्टाः स्त्रियो भूषणगन्धमाल्यं प्रियावयस्याश्च तदत्र योग्यम् ॥
चिकित्सिते आसिक्तक्षीरिको वाजीकरणपादो द्वितीयः ।

---

अथातो माषपर्णभृतीय(२)वाजीकरणपादं व्याख्यास्यामः।

माषपर्णभृतां धेनुं गृष्टिं पुष्टां चतुःस्तनीम्।
समानवर्णवत्साञ्च जीववत्साञ्च बुद्धिमान्॥
रोहिणीमथवा कृष्णामूर्द्ध्वशृङ्गीं महारणाम्।
इक्ष्वादामर्जुनीर्वा वा सान्द्रक्षीराञ्च धारयेत्॥
केवलन्तु पयस्तस्याः शृतं वाशृतमेव वा।
शर्करा मधुसर्पिर्भिर्युक्तं तद्वृष्यमुत्तमम्॥
शुक्लैर्जीवनीयैश्च वृंहणैर्बलवर्द्धनैः।
क्षीरसञ्जननैश्चैव पयः सिद्धं पृथक् पृथक्॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम्।
पर्य्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयम्॥
मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम्।
माषान् श्वदंष्ट्रां क्षीरीकां गोधूमान् शालिषष्टिकान्॥
पयस्यर्द्धोदके पक्त्वा कार्षिका नाढ़कोन्मिते।
विवर्जयेत् पयः शेषं तत् पूतं क्षौद्रसर्पिषा॥
युक्तं स शर्करं पीत्वा वृद्धः साशीतिकोऽपि वा।
विपुलं लभतेऽपत्यं युवेवच स हृष्यति॥
मण्डलैर्जातरूपस्य तस्या एव पयः शृतम्।
अपत्यजननं सिद्धं सघृतक्षौद्रशर्करम्॥
त्रिंशत्सु पिष्टाः पिप्पल्यः प्रकुञ्चे तैलसर्पिषोः।
भृष्टाः सशर्करा क्षौद्राः क्षीरधारावदोहिताः॥
पीत्वा यथा बलञ्चोर्द्धं षष्टिकं क्षीरसर्पिषा।
भुक्त्वा न रात्रिमस्तब्धं लिङ्गं पश्यति नापरम्॥
श्वदंष्ट्राया विदार्य्याश्च रसे क्षीरचतुर्गुणे।

घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः ॥
फलानां जीवनीयानां स्निग्धानां रुचिकारिणाम् ।
कुडवः चूर्णितानां स्यात् स्वयंगुप्ता फलस्य च ॥
कुडवश्चैव माषाणां द्वौ द्वौ च तिलमुद्गयोः ।
गोधूमशालिचूर्णानां कुडवः कुडवो भवेत् ॥
सर्पिषः कुडवञ्चैकस्तत् सर्वं क्षीरसंयुतम् ।
पक्वा पूपलिकाः खादेद्बह्वाः स्युर्यदि योषितः ॥
घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत् ।
शर्करा पिप्पली क्षौद्रयुक्तं तद्वृष्यमुत्तमम् ॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमांशिकम् ।
प्रयुङ्क्ते यः पयश्चानु नित्यवेगः स ना भवेत् ॥
घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा ।
सङ्कल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते ॥
कृतैकक्कृत्याः सिद्धार्था येचान्योऽन्यानुवर्त्तिनः ।
कलासु बाह्या ये तुल्याः सत्त्वेन वयसा च ये ॥
कुलमाहात्म्यदाक्षिण्यशीलशौच समन्विताः ।
ये कामनित्या ये हृष्टा ये विशोका गतव्यथाः ॥
ये तुल्यशीला ये भक्ता ये प्रिया ये प्रियम्वदाः ।
तैर्नरः सह विस्रब्धः सुवयस्यो वृषायते ॥
अभ्यङ्गोत्सादनस्नानगन्धमाल्यविभूषणैः ।
गृहशय्यासनसुखैर्वासोभिरहतैः प्रियैः ॥
विहङ्गानां रुतैरिष्टैः स्त्रीणाञ्चाभरणस्वनैः ।
संवाहनैर्वरस्त्रीणामिष्टानाञ्च वृषायते ॥
मत्तद्विरेफाचरिताः सपद्माः सलिलाशयाः ।

जात्युत्पलसुगन्धीनि शीतगर्भगृहाणि च॥
नद्यः फेनोत्तरीयाश्च गिरयो नीलसानवः।
उन्नतिर्नीलमेघानां रम्यचन्द्रोदया निशाः॥
वायवः सुखसंस्पर्शाः कुमुदाकारगन्धिनः।
रतिभोगक्षमा रात्रयः सङ्कोचा गुरुवल्लभाः॥
सुखाः सहायाः परपुष्टयुष्टाः फुल्ला वनान्ता विशदान्नपानाः
गान्धर्वशब्दाश्च सुगन्धमाल्याः सत्त्वं विशालं निरुपद्रवञ्च।
सिद्धार्थता चाभिनवश्च कामः स्त्रीचायुधं सर्वमिहात्मजस्य।
वयो नवं जातमदश्च कालो हर्षस्य योनिः परमा नराणाम्॥

इति।

भवति चात्र। प्रहर्षयोनयो योगा व्याख्याता दश पञ्च च।
माषपर्णभृतीये च पादे शुक्रबलप्रदाः॥

चिकित्सिते माषपर्णभृतीयो वाजीकरणपादस्तृतीयः।

---

अथातः पुमान् जातबलादिकं(४)वाजीकरणपादं व्याख्यास्यामः

पुमान् यथा जातबलो यावदिच्छं स्त्रियो व्रजेत्।
यथा चापत्यवान् सद्यो भवेत् तदुपदेक्ष्यते॥
न हि जातबलाः सर्वे नराश्चापत्यभागिनः।
बृहच्छरीरा बलिनः सन्ति नारीषु दुर्बलाः॥

सन्ति चाल्पायुषः स्त्रीषु बलवन्तो बहुप्रजाः ।
प्रकृत्या चाबलाः सन्ति सन्ति चामयदुर्बलाः ।
नराश्चटकवत् केचित् व्रजन्ति बहुशः स्त्रियम् ॥
गजवच्च प्रसिञ्चन्ति केचिन्न बहुगामिनः ।
कालयोगबलाः केचित् केचिदभ्यसनध्रुवाः ॥
केचित् प्रयत्नैर्वाह्यन्ते वृषाः केचित् स्वभावतः ।
तस्मात् प्रयोगान् वक्ष्यामो दुर्बलानां बलप्रदान् ॥
सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान् ।
घृततैलरसक्षीरशर्करा मधुसंयुताः ॥
वयस्तः संविधातव्याः क्षीरमांसरसाशिनाम् ।
पिष्ट्वा वराहमांसानि दत्त्वा मरिचसैन्धवे ॥
कोलवद्गुलिकाः कृत्वा तप्ते सर्पिषि वर्तयेत् ।
वर्तनस्तम्भितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे ॥
घृताढ्ये गन्धपिशुने दधि दाडिमसाधिते ।
यथा न भिन्द्याद्गुलिकास्तथा तं साधयेद्रसम् ॥
तं पिबन् भक्षयंस्ताश्च लभते शुक्रमक्षयम् ।
मांसानामेवमन्येषां मेध्यानां कारयेद्भिषक् ॥
गुलिकाः सरसास्तासां प्रयोगः शुक्रवर्द्धनः ।
माषानङ्कुरितान् शुद्धान् निस्तुषान् साजडाफलान् ।
घृताढ्ये माहिषरसे दधि दाडिमसाधिते ।
प्रक्षिपेन्मात्रया युक्तान् धान्यजीरकनागरैः ॥
पीतो भुक्तश्च सरसः कुरुते शुक्रमक्षयम् ।
आर्द्राणि मत्स्यमांसानि भृष्टाश्च शफरीश्च ना ॥
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम्

घृतभृष्टान् रसे च्छागे रोहितान् फलसाधिते॥
अनुपीतरसान् स्निग्धानपत्यार्थी प्रयोजयेत्।
क्षुद्रकं मत्स्यमांसानां हिङ्गु सैन्धवधान्यकैः॥
युक्तं गोधूमचूर्णेन घृते पूपलिकाः पचेत्।
माहिषे च रसे मत्स्यान् स्निग्धाम्ललवणान् पचेत्॥
रसे चानुगते मांसं पेषयेत्तत्र चावपेत्।
मरिचं जीरकं धान्यमल्पं हिङ्गु नवं घृतम्॥
माषपूपलिकानां तद्गर्भार्थमुपकल्पयेत्।
एतौ पूपलिका योगौ वृंहणौ बलवर्द्धनौ॥
वृष्यौ सौभाग्यजननौ परं शुक्राभिवर्द्धनौ।
माषात्मगुप्ता गोधूमशालि षष्टिकपैष्टिकम्॥
शर्कराया विदार्याश्च चूर्णमिक्षुरसस्य च।
संयोज्यः सघृते क्षीरे घृते पूपलिकाः पचेत्॥
पयोनुपानाः ताः शीघ्रं कुर्वन्ति वृषतां परम्।
शर्करायास्तुलैका स्यादेका गव्यस्य सर्पिषः॥
प्रस्थो विदार्याः चूर्णस्य पिप्पल्याः प्रस्थ एव च।
अर्द्धाढकन्तु गाक्षीर्याः क्षौद्रस्याभिनवस्य च॥
तत्सर्वं मूर्च्छितं तिष्ठेन्मार्त्तिके घृतभाजने।
मात्रामग्निसमां तस्य प्रातः प्रातः प्रयोजयेत्॥
एष वृष्यः परं योगः कण्ठ्यो वृंहण एव च।
शतावर्य्या विदार्याश्च तथा माषात्मगुप्तयोः॥
श्वदंष्ट्रायाश्च निष्क्वाथानक्षलेषु पृथक् पृथक्।
साधयित्वा घृतप्रस्थं पयस्यष्टगुणे पुनः॥
शर्करा मधुसंयुक्तमपत्यार्थी प्रयोजयेत्।

घृतपात्रं शतगुणे विदारी स्वरसे पचेत् ॥
सिद्धं पुनः शतगुणे गव्ये पयसि साधयेत् ।
शर्करायास्तु गाम्भीर्या क्षौद्रस्ये क्षुरकस्य च ॥
पिप्पल्याः स जडायाश्च भागैः पादांशिकैर्युतम् ।
गुलिकाः कारयेद्वैद्यो यथा स्थूलमुदुम्बरम् ॥
तासां प्रयोगात् पुरुषः कुलिङ्ग इव हृष्यति ।
क्षौद्रपादेन संयुक्तं साधयेज्जल पादिकम् ॥
माण्डूकीधूम चूर्णानां पादास्तीर्णे शिलातले ।
शुचौ श्लक्ष्णे समुत्कीर्य मर्दनेनोप पादयेत् ॥
शुद्धा उत्कारिकाः कार्याः चन्द्रमण्डल सन्निभाः ।
तासां प्रयोगाद्गजवन्नारीः सन्तर्पयेत् नरः ॥
यत्किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनस यैव सर्वन्तद्वृष्य मुच्यते ॥
द्रव्यैरेवं विधैस्तस्माद्भावितः प्रमदां व्रजेत् ।
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥
गत्वा स्नात्वा पयः पीत्वा रसंचानुशयीत ना ।
तथा साप्यायते भूयः शुक्रञ्च बलमेव च ॥
तत्तिवै षोड़षाद्वर्षात्सप्तत्याः परतो नच ।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुं मर्हति ॥
अतिबालोह्य सम्पूर्णसर्वधातुः स्त्रियो व्रजन् ।
उपतप्येत सहसा तड़ागमिव काजलम् ॥
शुष्करुक्षं यथा काष्ठं जन्तु दग्धं विजर्जरम् ।
स्पृष्टमाशु विशीर्येत तथा वृद्धस्त्रियो व्रजन् ॥
जरया चिन्तया शुक्रं व्याधिभिः कर्म कर्षणात् ।

क्षयं गच्छत्यनशनात् क्षीणाश्वाति निषेवणात्॥
हृष्टस्यापि स्त्रियोगन्तुं न शक्तिरुपजायते।
देह सत्त्ववलापेक्षी हर्षः शक्तिश्च हर्षजा॥
रस इक्षौ यथा दध्नि सर्पिस्तैलन्तिले यथा।
सर्वत्रानुगतं देहे शुक्रं संस्पर्शने तथा॥
तत्स्त्रीपुरुष संयोगे चेष्टा संकल्प पीड़नात्।
शुक्रं प्रच्यवते स्थानाज्जलमार्द्रात् पटादिव॥
हर्षात्तर्षात्सरत्वाच्च पैच्छिल्याद् गौरवादपि।
अनुप्रवण भावाच्च द्रुतत्वान्मारुतस्य च॥
अष्टाभ्य एभ्य हेतुभ्यः शुक्रं देहात् प्रसिच्यते।
चरतो विश्वरूपस्य रूपद्रव्यं यदुच्यते॥
बहुलं मधुरं स्निग्धं अविस्रं गुरुपिच्छिलम्।
शुक्रं बहु च यच्छुक्रं बलवत्तद संशयम्॥
येन नारीषु सामर्थ्यं वाजीवल्लभते नरः।
व्रजेच्चाभ्यधिकं येन वाजीकरणमेव तत् इति॥
तत्रश्लोकौ। हेतु र्योगोपदेशस्य योगाद्दादश चोत्तमाः।
यत्पूर्वं मैथुनात् सेव्यं यच्चि तन्मैथुनादनु॥
यदाम सेव्याः प्रमदाः क्षतस्त्र: शुक्रविधि श्च यः।
निरुक्तञ्चेहनिर्दिष्टं पुमान् जातबलादिकम्॥

इति पुमान् जातबलादिको वाजीकरणपादः समाप्तः।

———

40

तृतीयोऽध्यायः ।

अथातो ज्वरचिकित्सितं व्याख्यास्यामः ।

विज्वरं ज्वरसन्देहं पर्य्यपृच्छत्पुनर्वसुम् ।
विविक्ते शान्त मासीन मग्निवेशः कृताञ्जलिः ॥
देहेन्द्रिय मनस्तापी सर्वरोगाग्रजो बली ।
ज्वरः प्रधानं रोगाणामुक्तो भगवता पुरा ॥
तस्य प्राणि सपत्नस्य ध्रुवस्य प्रलयोदये ।
प्रकृतिञ्च प्रवृत्तिञ्च प्रभावं कारणानि च ॥
पूर्वरूप मधिष्ठानं बल कालात्मलक्षणम् ।
व्यासतो विधि भेदञ्च पृथग्भिन्नस्य चाकृतिम् ॥
लिङ्गमामस्य जीर्णस्य सनिषेधं क्रियाक्रमम् ।
विमुञ्चतः प्रशान्तस्य चिह्नं यच्च पृथक्पृथक् ॥
ज्वरावशिष्टो रक्ष्यश्च यावत्कालं यतोयतः ।
प्रशान्त कारणैर्यैश्च पुनरावर्तते ज्वरः ॥
याश्चापि पुनरावृत्तिं क्रियाः प्रशमयन्ति तम् ।
जगद्धितार्थं तत्सर्वं भगवन् ! वक्तु मर्हसि ॥
तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
ज्वराधिकारे यद्वाच्यन्तत्सौम्य ! निखिलं शृणु ॥
ज्वरो विकारो रोगश्च व्याधिरातङ्क एवच ।
एकार्थनामपर्यायैर्विविधैर भिधीयते ॥
तस्य प्रकृतिरुद्दिष्टा दोषाः शारीरमानसाः ।

ईप्सितं न हि निर्दोषं ज्वरः समुपसेवते ॥
क्षयस्तमो ज्वरः पाप्मा मृत्युश्चोक्तोऽय मात्मजः ।
पञ्चत्व प्रत्ययान्नृणां मज्जानां स्वेन कर्मणा ॥
इत्यस्य प्रकृतिः प्रोक्ता प्रवृत्तिस्तु परिग्रहः ।
निदाने पूर्वमुद्दिष्टा रुद्रकोपाच्च दारुणात् ॥
द्वितीये हि युगे शर्वमक्रोध व्रतमास्थितम् ।
दिव्यं सहस्रं वर्षाणां असुरा अभिदुद्रुवुः ॥
तपो विघ्नाशनाः कर्तुन्तपो विघ्नं महात्मनाम् ।
पश्यन् समर्थश्चोपेक्षाचक्रे दक्षः प्रजापतिः ॥
यज्ञे न कल्पयामास प्रोच्यमानः सुरैरपि ।
ऋचः पशुपतेर्याश्च शैव्य आहुतयश्च याः ॥
यज्ञसिद्धि प्रदास्ताभिर्हीनञ्चैव स इष्टवान् ।
अथोत्तीर्णं व्रतोदेवो बुद्धा दक्ष व्यतिक्रमम् ॥
रुद्रो रौद्रं पुरस्कृत्य भावमात्मविदात्मनः ।
सृष्टा ललाटे चक्षुर्वै दग्ध्वा तान सुरान् प्रभुः ॥
बालाक्रोधाग्नि सन्तप्तमसृजत् सवनाशनम् ।
ततो यज्ञः स विध्वस्तो व्यथिताश्च दिवौकसः ॥
दाह व्यथापरीताश्च भ्रान्ता भूतगणा दिशः ।
अथेश्वरं देवगणः सह सप्तर्षिभिर्विभुम् ॥
तमृग्भिरस्तुवन् यावच्छिवे भावे शिवः स्थितः ।
शिवं शिवाय भूतानां स्थितं ज्ञात्वा कृताञ्जलिः ॥
क्रोधाग्निरुक्तवान्देव मह किङ्करवाणि ते ।
तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि ॥
मनुष्याणाञ्च जन्मादौ निधने च महत्तमः ।

प्रकृतिश्च प्रवृत्तिश्च प्रभावश्च प्रदर्शितः ॥
निदाने कारणान्यष्टौ पूर्वरूपाणि विभागशः ।
आलस्यं नयने कण्ठे जृम्भणं गौरवं क्लमः ॥
ज्वलनातपवाय्वम्बु भक्तिद्वेषाव निश्चितौ ।
अविपाकास्यवैरस्ये हानिश्च बलवर्णयोः ॥
शीलवैकृत मल्पञ्च ज्वर लक्षणमग्रजम् ।
केवलं समनस्कञ्च ज्वराधिष्ठान मुच्यते ॥
शरीरम्बल कालस्तु निदाने सम्प्रदर्शितः ।
ज्वर प्रत्यात्मिकं लिङ्गं सन्तापो देह मानसः
ज्वरेणा विशता भूतं न हि किञ्चिन्न तप्यते ।
द्विविधो विधिभेदेन ज्वरः शारीर मानसः ॥
पुनश्च द्विविधो दृष्टः सौम्यश्चाग्ने यएव वा ।
अन्तर्वेगो बहिर्वेगो द्विविधः पुन रुच्यते ।
प्राकृतो वैकृतश्चैव साध्यश्चा साध्य एवच ।
पुन पञ्चविधो दृष्टो दोष काल बलावलात् ।
सन्ततः सततोऽन्येद्यु स्तृतीयक चतुर्थकौ ॥
पुनराश्रय भेदेन धातूनां सप्तधा मतः ।
भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः ॥
शारीरो जायते पूर्वन्देहे मनसि मानसः ।
वैचित्यमरतिर्ग्लानि र्मनसस्ताप लक्षणम् ॥
वातपित्तात्मकः शीतमुष्णं वातकफात्मकः ।
इच्छत्यु भयमेतत्तु ज्वरो व्यामिश्रलक्षणः ॥
योगवाहः परं वायुः संयोगादुभयार्थ कृत् ।
दाह कृत्तेजसा युक्तः शीतकृत् सोम संश्रयात् ॥

अन्तर्दाहोऽधिकं तृष्णाप्रलापः श्वसनभ्रमः।
सन्ध्यस्थिशूलमस्वेदो दोषोवर्चो विनिग्रहः॥
अन्तर्वेगस्य लिङ्गानि सुखसाध्यत्व मेवच।
प्रकृतः सुखसाध्यस्तु वसन्त शरदुद्भवः॥
उष्णामुष्णेन संवृद्धं पित्तं शरदि कुप्यति।
चितः शीते कफश्चैव वसन्ते समुदीर्यते॥
वर्षा स्वम्लविपाकाभिरौषधीभिः सवारिभिः
सञ्चितं पित्तमुत्क्लिष्टं शरद्यादित्यतेजसा॥
ज्वरं सञ्जनयत्याशु तस्य चानुबलः कफः।
हेमन्ते सूर्यसन्तप्तः स वसन्ते प्रकुप्यति॥
वसन्ते श्लेष्मणा तस्माज्ज्वरः स मुपजायते।
आद्यन्तमध्ये तस्यापि वातपित्तश्चवेदनु॥
आदावन्ते च मध्ये च ज्ञात्वा दोष बलाबलम्।
शरद्वसन्तयोर्विद्वान् ज्वरस्य प्रतिकारयेत्॥
काल प्रकृतिमुद्दिश्य निर्दिष्टः प्राकृतो ज्वरः।
प्रायेणानिलजो दुःखः कालेष्वन्येषु वैकृतः॥
हेतवो विविधास्तस्य निदाने सम्प्रदर्शिताः।
बल वत्स्वल्प दोषेषु ज्वरः साध्योऽनुपद्रवः॥
हेतुभिर्बहुभिर्जातो बलिभि र्बहुलक्षणः।
ज्वरः प्राणान्त कृद्यश्च शीघ्र मिन्द्रियनाशनः॥
सप्ताहाद्वा दशाहाद्वा द्वादशाहात्तथैवच।
सप्रलाप भ्रमश्वासः तीक्ष्णो हन्त्या ज्वरो नरम्॥
ज्वरः क्षीणस्य शूरस्य गम्भीरो दैर्घरात्रिकः।
असाध्यो बलवान् यश्च केशसीमन्त कृज्ज्वरः॥

स्रोतोभि र्विसृता दोषा गुरवो रस वाहिभिः ।
सर्वंगात्रानुगास्तब्धा ज्वरङ्कुर्वन्ति सन्ततम् ॥
द्वादशाहं दशाहं वा सप्ताहं वा सुदुः सहः ।
स शीघ्रं शीघ्रकारित्वात् प्रशमं याति हन्ति वा ॥
कालदूष्य प्रकृतिभिर्दोषस्तुल्यो हि सन्ततम् ।
निष्प्रत्यनीकं कुरुते तस्मात् ज्ञेयः सुदुः सहः ॥
यथा धातुं तथा मूत्रं पुरीषञ्चानिलादयः ।
अनुबध्नाति युगपत् अवश्यं सन्तते ज्वरे ॥
स शुद्ध्या वाप्य शुद्ध्या वा रसादीना मशेषतः ।
सप्ताहादिषु कालेषु प्रशमं याति हन्ति वा ॥
यदा तु नाति शुध्यन्ति न वा शुध्यन्ति सर्वशः ।
द्वादशै ते समुद्दिष्टाः सन्ततस्या श्रयास्तदा ॥
विसर्गं द्वादशे कृत्वा दिवसे व्यक्तलक्षणाम् ।
दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते ॥
इति बुद्ध्वा ज्वरं वैद्य उपक्रामेत्तु सन्ततम् ।
क्रिया क्रमविधौ युक्तः प्रायः प्रागपतर्पणैः ॥
रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम् ।
स प्रत्यनीकः कुरुते कालवृद्धि क्षयात्मकः ॥
अहो रात्रे सततको द्वौ कालावनुवर्त्तते ।
कालप्रकृति दूष्याणां प्राप्यै वान्यतमाद्बलम् ॥
दोषो मेदा वहा रुद्ध्वा नाड़ीरन्येद्युकं ज्वरम् ।
स प्रत्यनीकः कुरुते एककाल महर्निशि ॥
दोषोऽस्थिमज्जगः कुर्यात् तृतीयक चतुर्थकौ ।
गतिद्व्येकान्तरान्येद्युर्दोषस्योक्तान्यथा परैः ॥

रक्तमेवाभि संसृज्य कुर्य्यादन्येद्युष्कं ज्वरम्।
मांसस्रोतांस्यनुसृतो जनयेत्तु तृतीयकम्॥
ज्वरं दोषः संसृतो हि मेदोमार्गैश्चतुर्थकम्।
अन्येद्युष्कः प्रतिदिनं दिनं हित्वा तृतीयकः॥
दिनद्वयं यो विश्राम्य प्रत्येति स चतुर्थकः।
अधि शेते यथा भूमिं बीजङ्काले च रोहति॥
अधिशेते तथा धातुं दोष काले च कुप्यति।
ते वृद्धिम्बलकालञ्च प्राप्य दोषा स्तृतीयकम्॥
चतुर्थकञ्च कुर्वन्ति प्रत्यनीक बलक्षयात्।
कृत्वा वेगं गतबलाः स्वे स्वे स्थाने व्यवस्थिताः॥
पुनर्विवृद्धाः स्वे काले ज्वरयन्ति नरं मलाः।
कफपित्तात् त्रिकग्राही पृष्ठाद्वातकफात्मकः॥
वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः।
चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः॥
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसम्भवः।
विषमज्वर एवान्यः चतुर्थकविपर्य्ययाः॥
त्रिविधो धातुरेकैको द्विधातुस्थः करोत्ययम्।
प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः॥
सन्निपाते तु यो भूयान् सदोषः परिकीर्त्तितः।
ऋत्वहो रात्रदोषाणां मनसश्च बला बलात्॥
कालमर्थवशाच्चैव ज्वरस्तन्तं प्रपद्यते।
गुरुत्वं दैन्यमुद्वेगः सदनं छर्द्यरोचकौ॥
रसस्थिते बहिस्तापः साङ्गमर्दो विजृम्भणम्।
रक्तोष्णाः पिड़कास्तृष्णा सरक्तं ष्ठीवनं मुहुः॥

दाहरागभ्रममदप्रलापा रक्तसंस्थिते ।
अन्तर्दाहः सतृष्णमोहः सग्लानिः सृष्टविट्कता ॥
दौर्गन्ध्यं गात्रविक्षेपो ज्वरे मांसस्थिते भवेत् ।
स्वेदस्तीव्रा पिपासा च प्रलापो वम्यभीक्ष्णशः ॥
स्वगन्धस्या सहत्त्वञ्च मेदस्थे ग्लान्यरोचकौ ।
विरेक वमने चोभे सास्थिभेदं प्रकूजनम् ॥
विक्षेपणञ्च गात्राणां श्वासः स्याच्चास्थिगे ज्वरे ।
हिक्का श्वासः तथा कासः तमसश्चातिदर्शनम् ॥
मर्म्मच्छेदो बहिः शैत्यं दाहोऽन्तश्चैव मज्जगे ।
शुक्रस्थानगतः शुक्रमोचं कृत्वा विनाश्य वा ॥
प्राणवाय्वग्निसोमैश्च सार्धं गच्छत्यसौ विभुः ।
रसरक्ताश्रितः साध्यो मेदो मांसगतश्च यः ॥
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थो नैव सिध्यति ।
हेतुभिर्लक्षणैः सिद्धः पूर्व्वमष्टविधो ज्वरः ॥
समासेनोपदिष्टस्य व्यासतः शृणु लक्षणम् ।
शिरोरुक् पर्व्वणां भेदो दाहो रोम्णां प्रहर्षणम् ॥
कण्ठास्यशोषो वमथुस्तृष्णा मूर्च्छा भ्रमो ऽरुचिः ।
स्वप्ननाशोऽतिवाग् जृम्भा वातपित्तज्वराकृतिः ॥
शीतको गौरवं तन्द्रा स्तैमित्यं पर्व्वणाञ्च रुक् ।
शिरोग्रहः प्रतिश्याय कासः स्वेदाप्रवर्त्तनम् ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥
मुहुर्दाहो मुहुः शीतं स्वेदस्तम्भौ मुहुर्मुहुः ।
मोहः कासो रुचिस्तृष्णा श्लेष्मपित्त प्रवर्त्तनम् ॥
लिप्त तिक्तास्यता तन्द्रा श्लेष्मपित्तज्वराकृतिः ।

सन्निपातज्वरस्योर्ध्वं त्रयोदश विधस्य हि ॥
प्राक्सूतितस्य वक्ष्यामि लक्षणं वै पृथक् पृथक् ।
भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् ॥
वातपित्तोल्बणे विद्याल्लिङ्गं मन्दकफे ज्वरे ।
शैत्यं कासो रुचिस्तन्द्रा पिपासा दाहरुग् व्यथा ॥
वातश्लेष्मोल्बणे विद्याल्लिङ्गं पित्तज्वरे विदुः ।
छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना ॥
मन्दवाते व्यवस्यन्ते लिङ्गं पित्तकफोल्बणे ।
सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः ॥
वातोल्बणे स्याद्द्व्यनुगे तृष्णा कण्ठास्य शोषता ।
रक्तविण्मूत्रता दाहः स्वेदस्तृड्बलसंक्षयः ॥
मूर्च्छा चेति त्रिदोषे स्याल्लिङ्गं पित्तगरीयसि ।
आलस्या रुचिहृल्लास दाहवम्य रतिभ्रमैः ॥
कफोल्बणं सन्निपातं तन्द्राकासै न चादिशेत् ।
प्रतिश्या छर्दिरालस्यं तन्द्रा रुच्यग्निमार्दवम् ॥
हीनवाते पित्तमध्ये चिह्नं श्लेष्माधिके मतम् ।
हारिद्रमत्र नेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः ॥
हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ।
शिरोरुक्वेपथुः श्वासः प्रलापो छर्द्यरोचकाः ।
हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् ।
शीतकं गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् ॥
हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके विदुः ।
श्वासकासप्रतिश्यायाः मुखशोषोऽतिपार्श्वरुक् ॥
कफहीने पित्तमध्ये लिङ्गं वाताधिके मतम्

पर्वंवर्चोदग्नि मान्द्यं तृष्णा दाहोऽरुचि भ्रम ।
कफहीने वात मधेत लिङ्गं पित्ताधिके विदुः ।
सन्निपात ज्वरस्योर्द्ध मतो वक्ष्यामि लक्षणम् ।
क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरो रुजः ॥
स स्रावे कलुषे रक्ते निर्भुग्ने चापि दर्शने ।
स स्वनौ स रुजौ कर्णौ कण्ठः शूकैरिवावृतः ॥
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ।
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ॥
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ।
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ॥
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ।
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ॥
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ।
मूकत्वं स्रोतसां पाके गुरुत्व मुदरस्य च ॥
चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः ।
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ॥
सन्निपातज्वरो साध्यः कृच्छ्रसाध्यस्त्वतोऽन्यथा ।
निदाने त्रिविधा प्रोक्ता या पृथक् ज्वराकृतिः ॥
संसर्गं सन्निपातानां तथा चोक्तं स्वलक्षणम् ।
आगन्तुरष्टमो यस्तु स निर्दिष्टश्चतुर्विधः ॥
अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः ।
शस्त्रलोष्टकशा काष्ठमुष्ट्यरत्नि तलद्विजैः ॥
तद्विधैश्च हते गात्रे ज्वरः स्यादभिघातजः ।
तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन् ॥

स व्यथा शोफवैवर्ण्यं करोति सरुजं ज्वरम् ।
कामशोकभयक्रोधैरभिशक्तस्य यो ज्वरः ॥
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः ।
कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः ॥
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः ।
भूताधिकारे व्याख्यातं तदष्टविधलक्षणम् ॥
विषवृक्षानिलस्पर्शात्तथान्यैर्विषसम्भवैः ।
अभिषिक्तस्य चाप्याहुर्ज्वरमेकेऽभिषङ्गजम् ॥
चिकित्सया विषघ्न्यैव प्रशमं लभते नरः ।
अभिचाराभिशापाभ्यां सिद्धानां यः प्रवर्त्तते ॥
सन्निपातज्वरो घोरः सविज्ञेयः सुदुःसहः ।
सन्निपातज्वरस्योक्तं लिङ्गं यत्तस्य तत् स्मृतम् ॥
चित्तेन्द्रियशरीराणामार्तयोन्यास्य नैकशः ।
प्रयोगस्त्वभिचारस्य दृष्टा शापस्य चैव हि ॥
स्वयं श्रुत्वानुमानेन लक्ष्यते प्रशमेन वा ।
वैविध्यादभिचारस्य शापस्य च तदात्मके ॥
यथा कर्म्म प्रयोगेण लक्षणं स्यात् पृथग्विधम् ।
ध्याननिःश्वासबहुलं लिङ्गं कामज्वरे स्मृतम् ।
शोकजे वाष्पबहुलं त्रासप्रायं भयज्वरे ॥
क्रोधजे बहुसंरम्भं भूतावेशे त्वमानुषम् ।
मूर्च्छा मोहमदग्लानि भूयिष्ठं विषसम्भवे ॥
केषाञ्चिदेषां लिङ्गानां सन्तापो जायते पुरः ।
पश्चात्तुल्यन्तु केषाञ्चिदेषु कामज्वरादिषु ॥
कामादिजानामुद्दिष्टं ज्वराणां यद्विशेषणम् ।

कामादिजानां रोगाणामन्येषामपि तत् स्मृतम् ॥
ते पूर्वं केवलाः पश्चान्निजैर्व्यामिश्रलक्षणाः ।
हेत्वौषधिविशिष्टाश्च भवन्त्यागन्तवो ज्वराः ॥
मनस्यभिहते पूर्वं कामाद्यैर्न तथा बलम् ।
ज्वरः प्राप्नोति कामाद्यैर्मनो यावन्न दूष्यति ॥
संसृष्टाः सन्निपतिताः पृथक्‌वाकुपितामलाः ।
रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च ॥
स्वेन तेनोष्मणा चैव कृत्वा देहोष्मणोबलम् ।
स्रोतांसि रुद्ध्वा सम्प्राप्तः केवलं देहमुल्बणाः ॥
सन्तापमधिकं देहे जनयन्ति नरास्तदा ।
भवत्यत्युष्णसर्वाङ्गो ज्वरितस्तेन चोच्यते ॥
स्रोतसां संनिरुद्धत्वात् स्वेदं ना नाधिगच्छति ।
स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे ॥
अरुचिश्चाविपाकाश्च गुरुत्वमुदरस्य च ।
हृदयस्याविशुद्धिश्च तन्द्रा चालस्य मेवच ॥
ज्वरोऽविसर्गी बलवान् दोषाणामप्रवर्त्तनम् ।
लालाप्रसेको हृल्लासो क्षुन्नाशो विरसं मुखम् ॥
स्तब्धसुप्तगुरुत्वञ्च गात्राणां बहुमूत्रता ।
न विड्जीर्णा न च ग्लानिर्ज्वरस्यामस्य लक्षणम् ॥
क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम् ।
दोषप्रवृत्तिरष्टाहो निराम ज्वरलक्षणम् ॥
नवज्वरे दिवास्वप्न स्नानाभ्यङ्गान्नमैथुनम् ।
क्रोधप्रवातव्यायाम कषायांश्च विवर्जयेत् ॥
ज्वरे लङ्घनमेवादौ उपदिष्टमृते ज्वरात् ।

क्षयानिलभयक्रोध कामशोकश्रमोद्भवात् ॥
लङ्घनेन क्षयं नीते दोषे सन्धुक्षितेऽनले।
विज्वरत्वं लघुत्वं च क्षुच्चैवास्य जायते ॥
प्राणा विरोधिना चैनं लङ्घनेनोपपादयेत्।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥
लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः।
पाचनान्यविपक्कानां दोषाणां तरुणे ज्वरे ॥
तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे।
मद्योत्थे पैत्तिके चाथ शीतलं तिक्तकैः शृतम् ॥
दीपनं पाचनञ्चैव ज्वरघ्नमुभयं हि तत्।
स्रोतसां शोधनं बल्यं रुचिस्वेदकरं शिवम् ॥
मुस्तपर्पटको शीरचन्दनो दीच्यनागरैः।
शृतशीतं जलं दद्यात् पिपासा ज्वरशान्तये ॥
कफप्रधानानुत् क्लिष्टान् दोषानामाशय स्थितान्।
बुद्धा ज्वरकरान् काले वम्यानां वमनैर्हरेत् ॥
अनुपस्थितदोषाणां वमनं तरुणे ज्वरे।
हृद्रोगं श्वासमानाहं मोहञ्च जनयेत् क्षतम् ॥
सर्वदेहानुगा सामा धातुस्था दुःखनिर्हराः।
दोषाः फलेभ्य आमेभ्यः स्वरसा इव सात्यया: ॥
वमितं लङ्घितं काले यवागूभिरुपाचरेत्।
यथा स्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥
यावत् ज्वर मृदूभावात् षडहं वा विचक्षणः।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥

तास्र भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः ।
वातमूत्रपुरीषाणां दोषाणाञ्चानुलोमनाः ॥
स्वेदनाय द्रवोष्णत्वाद् द्रवत्वात्तृट् प्रशान्तये ।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥
ज्वरघ्नी ज्वरसात्म्यत्वात्तस्मात् पेयाभिरादितः ।
ज्वरानुपचरेद्धीमानृते मद्य समुत्थितान् ॥
मदात्यये मद्य नित्ये ग्रीष्मे पित्तकफाधिके ।
ऊर्ध्वंगे रक्तपित्ते च यवागूरहिता ज्वरे ॥
तत्र तर्पणमेवाग्रे प्रयोज्यं लाजशक्तुभिः ।
ज्वरापहैः फलरसैर्युक्तं स मधुशर्करम् ॥
ततः सात्म्यबलापेक्षी भोजयेज्जीर्णे तर्पणम् ।
तनुना मुद्गयूषेण जाङ्गलानां रसेन वा ॥
अन्नकालेषु चाप्यस्मै विधेयं दन्तधावनम् ।
योऽस्य वक्त्ररसस्तस्माद्विपरीतं प्रियञ्च यत् ॥
विशोध्य द्रुमशाखाग्रैरास्यं प्रक्षाल्य चासकृत् ।
मस्त्विक्षु रसमद्याद्यैर्यथाहारमवाप्नुयात् ॥
पाचनीयं शमनीयं कषायं पाययेत तम् ।
ज्वरितं षडहेऽतीते लघ्वन्न प्रतिभोजितम् ॥
स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम् ।
दोषावद्धाः कषायेण स्तम्भित्वा तरुणे ज्वरे ॥
यूषैरम्लैरनम्लैर्वा जाङ्गलैर्वा रसैर्हितैः ।
दशाहं तावदश्नीयाल्लघ्वन्नं ज्वरशान्तये ॥
अत ऊर्द्ध्वं कफे मन्दे वातपित्तोत्तरे ज्वरे ।
परिपक्वेषु दोषेषु सर्पिष्पानं यथामृतम् ॥

निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम् ।
न सर्पिः पाययेत् वैद्यः कषायैस्तमुपाचरेत् ॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन च ।
परं ह्यलं दोषहरं परन्तच्च बलप्रदम् ॥
दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम् ।
बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ॥
क्रियाभिराभिः प्रशमं न प्रयाति यदा ज्वरः ।
अक्षीणबलमांसस्य शमयेत्तं विरेचनैः ॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥
निरूहो बलमग्निञ्च विज्वरत्वं मुदं रुचिम् ।
परिपक्वेषु दोषेषु प्रयुक्तः शीघ्रमावहेत् ॥
पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् ।
स्रंसनं त्रीन्मलान् वस्तिर्हरेत् पक्वाशयस्थितान् ॥
ज्वरे पुराणे संक्षीणे कफपित्ते दृढाग्नये ।
रूक्ष बद्धपुरीषाणां प्रदद्यादनुवासनम् ।
गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च ॥
जीर्णे ज्वरे रुचिकरं कुर्यान्मूर्ध्वं विरेचनम् ।
अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सावगाहनान् ॥
विभज्य शीतोष्णतया कुर्याज्जीर्णे ज्वरे भिषक् ।
तैराशु हि शमं यातिबहिर्मार्गं गतो ज्वरः ॥
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्धते ।
धूपनाञ्जन योगैश्च यान्ति जीर्णज्वराः शमम् ॥
त्वङ्मात्र शेषा येषाञ्च भवन्त्यागन्तुरन्वयः ।

इति क्रियाक्रमः सिद्धो ज्वरघ्नः सम्प्रकाशितः ॥
येषान्त्वेष क्रमस्तानि द्रव्याण्यूर्ध्वं मतः शृणु ।
रक्ताः शालयादयः शस्ताः पुराणाः षष्टिकैः सह ॥
यवाग्वोदनलाजार्थं ज्वरितानां ज्वरापहाः ।
अम्लाभिलाषी तामेव दाडिमाम्लां सनागराम् ॥
सृष्टविट्पैत्तिको वाथ शीतां मधुयुतां पिबेत् ।
लाजपेयां सुखजरां पिप्पली नागरैः शृताम् ॥
पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरार्दितः ।
पेयां वा रक्तशालीनां पार्श्ववस्ति शिरोरुजः ॥
श्वदंष्ट्रा कण्टकारिभ्यां सिद्धां ज्वरहरां पिबेत् ।
ज्वरातिसारी पेयां वा पिबेत्साम्लां शृतां नरः ॥
पृश्निपर्णी बला बिल्वनागरोत्पलधान्यकैः ।
शृतां विदारी गन्धाद्यैर्दीपनीं स्वेदनीं नरः ॥
कासी श्वासी च हिक्की च यवागूं ज्वरितः पिबेत् ।
विबद्ध वर्चाः सयवाः पिप्पल्यामलकैः शृताम् ॥
सर्पिष्मतीम्पिबेत् पेयां ज्वरी दोषानुलोमनीम् ।
कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी ॥
मृद्वीका पिप्पलीमूल चव्यामलक नागरैः ।
पिबेत्सबिल्वां पेयां वा ज्वरे स परिकर्तिके ॥
बला वृक्षाम्लकोलाम्लकलशी धावनीशृताम् ।
अस्वेदनिद्रस्तृष्णार्त्तः पिबेत् पेयां सशर्कराम् ॥
नागरामलकैः सिद्धां घृतभृष्टां ज्वरापहाम् ।
मुद्गान्मसूरांश्चणकान् कुलत्थान् सम कुष्टकान् ॥
यूषार्थे यूषसात्म्यानां ज्वरितानाम्प्रकल्पयेत् ।

पटोलपत्रं सफलं कुलकं पापवेलिकाम्॥
कर्कोटकं कटिल्लञ्च विद्यात् शाकं ज्वरे हितम्।
लावान् कापिञ्जलानेणांश्चकोरानुपचक्रकान्॥
कुरङ्गान् कालपुच्छांश्च हरिणान्पृषभान् शशान्।
प्रदद्यान्मांससात्म्याय ज्वरिताय ज्वरापहान्॥
ईषदम्लान् अनम्लान् वा रसान् काले विचक्षणः।
कुक्कुटांश्च मयूरांश्च तित्तिरिं क्रौञ्च वर्त्तकान्॥
गुरूष्णत्वात् न शंसन्ति ज्वरे केचिच्चिकित्सकाः।
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्॥
भिषङ्मात्रा विकल्पज्ञो दद्यात्तानपि कालवित्।
घर्माम्बु चानुपानार्थं तृषिताय प्रदापयेत्॥
मद्यं वा मद्यसात्म्याय यथा दोषं यथाबलम्।
गुर्वुष्णस्निग्धमधुरकषायांश्च नवज्वरे॥
आहारान् दोषपक्त्यर्थं प्रायशः परिवर्जयेत्।
अनुपानक्रमः सिद्धो ज्वरघ्नः सम्प्रकाशितः॥
अत ऊर्द्ध्वं प्रवक्ष्यन्ते कषाया ज्वरनाशनाः।
पाक्यं शीतकषायं वा मुस्तपर्पटकं पिबेत्॥
स नागरं पर्पटकं पिबेद्वा सदुरालभम्।
किराततिक्तकं मुस्तं गुडूची विश्वभेषजम्॥
पाठामुशीरं सोदीच्यं पिबेद्वा ज्वरशान्तये।
ज्वरघ्नादीपनाश्चैते कषाया दोषपाचनाः॥
तृष्णारुचिप्रशमना मुखवैरस्यनाशनाः।
कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी॥
पटोलः शारिवा मुस्तं पाठा कटुकरोहिणी।

निम्बः पटोलस्त्रिफला मृद्वीका मुस्तवत्सकाः ॥
किराततिक्तममृता चन्दनं विश्वभेषजम् ।
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः ॥
कषायाः शमयन्त्याशु पञ्च पञ्चविधं ज्वरम् ।
वत्सकारग्वधं पाठां षड्ग्रन्थां कटुरोहिणीम् ॥
मूर्वां सातिविषां निम्बं पटोलं धन्वयासकम् ।
वचा मुस्तमुशीराणि मधूकं त्रिफलं बलाम् ॥
पाक्यं शीतकषायं वा पिबेज्ज्वरहरं नरः ।
मधूकमुस्त मृद्वीका काश्मर्याणि परूषकम् ॥
त्रायमाणमुशीराणि त्रिफलां कटुरोहिणीम् ।
पीत्वा निशिस्थितं जन्तुर्ज्वरात् शीघ्रं विमुच्यते ॥
जात्या मलकमुस्तानि तद्वद्धन्वयवासकम् ।
विबद्धदोषो ज्वरितः कषायं सगुडं पिबेत् ॥
त्रिफलां त्रायमाणाञ्च मृद्वीकां कटुरोहिणीम् ।
पित्तश्लेष्महरस्त्वेषकषायो ह्यानुलोमिकः ॥
अमृताशर्करायुक्तः पित्तश्लेष्मज्वरापहः ।
कषायाश्च यवाग्वश्च पिपासा ज्वरनाशनाः ॥
निर्दिष्टा भेषजा ध्याये भिषक् तानपि योजयेत् ।
ज्वराः कषायै र्वमनैः लङ्घनैर्लघुभोजनैः ॥
रूक्षस्य येन शाम्यन्ति सर्पिस्तेषां भिषज्जितम् ।
रूक्षं तेजो ज्वरकरं तेजसा रूक्षितस्य च ॥
यः स्याद्नुबलो धातुः स्नेहबन्धः स चानलः ।
कषायाः सर्व एवैते सर्पिषा सह योजिताः ॥
प्रयोज्या ज्वरशान्त्यर्थम् अग्निसन्धुक्षणाः शिवाः ।

पिप्पल्यः चन्दनं मुस्तमुशीरं कटुरोहिणी ॥
कलिङ्गकस्तामलकी शारि वातिविषा स्थिरा।
द्राक्षा मलकबिल्वानि त्रायमाणा निदिग्धिका ॥
सिद्धमेतैर्घृतं सद्यो जीर्णज्वरमपोहति ।
क्षयं कासं शिरः शूलं पार्श्वशूलं हलीमकम् ॥
अंसाभि तापमग्निञ्च विषमं स नियच्छति।
वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम् ॥
पक्का तेन कषायेण पयसा द्विगुणेन च।
पिप्पली मुस्तमृद्वीका चन्दनोत्पलनागरैः ॥
कल्कीकृतैश्च विपचेत् घृतं जीर्णज्वरापहम्।
बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम् ॥
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम्।
कृत्वा कषायं पेष्यार्थं दद्यात्तामलकीं शटीम् ॥
द्राक्षां पुष्करमूलञ्च मेदामामलकानि च।
घृतं पयश्च तत् सिद्धं सर्पिर्ज्वरहरं परम्॥
क्षयकासशिरः शूलपार्श्वशूलांसतापनुत्।
ज्वरिभ्यो बहुदोषेभ्य ऊर्द्धञ्चाधश्च बुद्धिमान् ॥
दद्यात् संशोधने काले कल्पे यदुपदेक्ष्यते।
मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा ॥
युक्तमुष्णाम्बुना पेयं वमनं ज्वरशान्तये।
क्षौद्राम्बुना रसैनेक्षोरथवा लवणाम्बुना ॥
ज्वरे प्रच्छर्दनं शस्तं मद्यैर्वा तर्पणेन वा।
मृद्वीका मलकानां या रसं प्रच्छर्दनं पिबेत् ॥
रसमामलकानां वा घृतभृष्टं ज्वरापहम्।

त्रिफलाद्या भेद्रतं चूर्णं संयुक्तं मधुसर्पिषा ॥
पिबेद्वा चौद्रमाधाय सघृतं त्रिफलारसम् ।
आरग्वधं वा पयसा मृद्वीकानां रसेन वा ॥
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् ।
ज्वराद्विमुच्यते पीत्वा मृद्वीकाभिः सहाभयाम् ॥
पयोऽनुपानमुष्णं वा पीत्वा द्राचारसं नरः ।
कासाच्छ्वासाच्छिरःशूलात् पार्श्वशूलाच्चिरज्वरात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलशृतं पयः ॥
एरण्डमूलोत् क्वथितं ज्वरात् स परिकर्त्तकात् ।
पयो विमुच्यते पीत्वा तद्वद्बिल्वशलाटुभिः ॥
त्रिकण्टकबला व्याघ्री गुड़नागरसाधितम् ।
वर्चो मूत्रविबन्धघ्नं शोफज्वरहरं पयः ॥
सनागरं समृद्वीकं सघृतचौद्र शर्करम् ।
शृतं पयः सखर्जूरं पिपासा ज्वरनाशनम् ॥
चतुर्गुणेनाम्भसा वा शृतं ज्वरहरं पयः ।
धारोष्णं वा पयः सद्यो वातपित्तज्वरं जयेत् ॥
जीर्णे ज्वराणां सर्वेषां पयः प्रशमनं परम् ।
पेयं तदुष्णं शीतं वा यथास्वं भेषजं शृतम् ॥
प्रयोजयेत् ज्वरहरान्निरूहान् सानुवासनान् ।
पक्काशयगते दोषे वच्यन्ते ये च सिद्धिषु ॥
पटोलारिष्टपत्राणि सोशीरश्चतुरङ्गुलः ।
ह्रीवेरं रोहिणं तिक्ताश्वदंष्ट्रा मदनानि च ॥
स्थिरा बला च तत् सर्वं पयस्यर्द्धोदके शृतम् ।
चीरावशेषं निर्यूहं संयुक्तं मधुसर्पिषा ॥

फलजीमूतकेक्ष्वाकुमदनमुस्तानां पिप्पल्या मधुकस्य च।
वत्सकस्य च संयुक्तं वस्तिं दद्यात् ज्वरापहम्॥
शुद्धे मार्गे हृते दोषे विप्रसन्नेषु धातुषु।
गताङ्गशूलो लघ्वङ्गः सद्यो भवति विज्वरः॥
आरग्वधस्य शीर्णानि मधुकं मधुराणि च।
चतस्रः पर्णिनीश्चैव निर्यूहमुपकल्पयेत्॥
प्रियङ्गुं मदनं मुस्तं शताह्वा मधुयष्टिका।
कल्कः सर्पिः गुडः क्षौद्रं ज्वरघ्नो वस्तिरुत्तमः॥
गुडूची त्रायमाणाश्च चन्दनं मधुकम् वृषम्।
स्थिराम्शुमतीं पृश्निपर्णीं मदनश्चेति साधयेत्॥
रसस्त्वाङ्गल मांसस्य रसेन सहितं भिषक्।
पिप्पली फलमुस्तानां कल्केन मधुकस्य च॥
ईषत् सलवणं युक्त्या निरूहं मधुसर्पिषा।
ज्वरप्रशमनं दद्याद्बल स्वेद रुचिप्रदम्॥
जीवन्ती मधुकं मेदां पिप्पलीं मरिचं वचाम्।
ऋद्धिं रास्नां बलां विल्वं शतपुष्पां शतावरीम्॥
पिष्ट्वा क्षीरजलं सर्पिस्तैलञ्च विपचेद्भिषक्।
अनुवासनिकं स्नेह मेतं विद्याज्ज्वरापहम्॥
पटोल पिचुमर्दाभ्यां गुडूच्या मधुकेन च।
मदनेन शृतः स्नेहो ज्वरघ्न मनुवासनम्॥
चन्दना गुरु काश्मर्य पटोलमधुकोत्पलैः।
सिद्धः स्नेहो ज्वरहरः स्नेहवस्तिः प्रयुज्यते॥
तदुक्तं भेषजाध्याये विमानं रोग भेषजे।
शिरो विरेचनं कुर्याच्छिरस्तज्ज्वरापहम्॥

यच्च लावणिकं तैलं यच्च प्राग्धूमवर्त्तयः।
मात्रा शितीये निर्दिष्टाः प्रयोज्यास्ता ज्वरेष्वपि॥
अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत्।
यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरम्॥
सहस्रधौतं सर्पिर्वा तैलं वा चन्दनादिकम्।
दाहज्वरप्रशमनं दद्यादभ्यञ्जनं भिषक्॥

अथ चन्दनाद्यं तैलमुपदेक्ष्यामः।

चन्दन भद्र श्रियकालानुसार्य्यकालीयक पद्मापद्मकोशीरशारिवा मधुकप्रपौण्डरीकनागपुष्पोदीच्य वन्यपद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रबिसमृणालशालूकशैवालकशेरुकानन्ता कुशकाशेक्षुशरनडशालि मूलजम्बुवेतवेतसवानीरगुन्द्राककुभाशनाश्मकर्णस्यन्दनवातपथोशालतालधवतिनिश खदिरकदरकदम्बकाश्मर्य्यफलसर्जप्लक्षवटकपीतनो दुम्बराश्वत्थन्यग्रोधलोध्रधातकी दुर्वोत्कटकशृङ्गाटकमञ्जिष्ठा ज्योतिष्मती पुष्करबीजक्रौञ्चादनबदरीकोविदारकदलीसंवर्तकारिष्टशतपर्वाशीतकुम्भिका शतावरी श्रीपर्णी श्रावणी महाश्रावणी रोहिणी शीतपाक्योदनपाकी कालाबलापयस्या विदारी जीवकर्षभकमेदा महामेदा मधुरस्रथ प्रोक्ता तृणशून्यमोचरसाटरूषकबकुलकुटजपटोलनिम्बशाल्मलीनालिकेरखर्ज्जूरमृद्वीका पियालप्रियङ्गुधन्वनात्मगुप्तामधूकानामन्येषाञ्च शीतवीर्याणां यथालाभमौषधानां कषायं कारयेत्। तेन कषायेण द्विगुणितपयसा तेषामेव च कल्केन कषायार्धं मात्रं मृदग्निना साधयेत् तैलम्। एतत्तैलं सद्योदाहं ज्वरमपनयत्येतैरेव चो-

पद्मैः सुसूक्ष्मपिष्टैः सुशीतैः प्रदेहयेद्धारयेत् एतैरेव च शृत शीतं सलिलमवगाह्य परिषेकार्थं प्रयुञ्जीत इति चन्दनाद्यतैलं। मधूकारनालक्षीरदधिघृतसलिलसेकावगाहाश्च सद्यो-दाहज्वरमपनयन्ति शीतस्पर्शत्वादिति ।

भवतिचात्र । पौष्करेषु सुशीतेषु पद्मोत्पल दलेषु च ।
कह्लाराणाञ्च पत्रेषु क्षौमेषु विमलेषु च ।
चन्दनोदक शीतेषु सुप्याद्दाहार्दितः सुखम् ॥
हिमाम्बु सिक्ते सदने शीते धारा गृहेऽपि वा ।
हेम शङ्खप्रवालानां मणीनां मौक्तिकस्य च ॥
चन्दनोदक शीतानां संस्पर्शानुरसान् स्पृशेत् ।
स्रग्भिर्नीलोत्पलैः पद्मै र्व्यजनैर्विविधैरपि ॥
शीत वातावहैर्व्यज्येच्चन्दनोदक वर्षिभिः ।
नद्यस्तड़ागाः पद्मिन्यो ह्रदाश्च विमलोदकाः ॥
अवगाहे हिता दाह तृष्णा ग्लानि ज्वरापहाः ।
प्रियाः प्रदक्षिणा नाराः प्रमदाश्चन्दनोचिता ॥
सान्त्वयेयुः परैः कामैर्मणि मौक्तिकभूषणाः ।
शीतानि चान्नपानानि शीतान्युपवनानि च ॥
वायवः चन्द्रपादाश्च शीत दाह ज्वरापहा इति ।

---

अथोष्णाभिप्रायिणां ज्वरितानां अभ्यङ्गादीनुपक्रमानुपदेक्ष्यामः।

अगुरु कुष्ठतगरपत्रनलदशैलेयकध्यामकहरेणुकास्थौणेय-
कक्षेमिकैलाचरावराङ्गदलपुरतमालपत्र भूतीकरोहिषसर-

लसुनकी देवदार्वग्निमन्थबिल्वश्योनाककाश्मर्यपाटला पुनर्नवा वृश्चीव कण्टकारिका बृहती शालिपर्णी पृश्निपर्णीमाषपर्णी मुद्गपर्णी गोक्षुरकैरण्ड शोभाञ्जनक वरुणार्क चिरिबिल्वतिल्वकशठी पुष्करमूल भाण्डीररोहिष पत्तुराश्वीवाश्मान्तकशिग्रु मातुलुङ्गमूलकमूलपर्णी पिलुपर्णी तिलपर्णी मेषशृङ्गी हिंस्रादन्तशठैरावतकभल्लातकास्फोतकाण्डीरात्मगुप्ताशीका करञ्जधान्यकाजमोदपृथ्वीका सुमुखसुरसकुठेरककाण्डीरकालमालकपर्णा सक्षवकफणिज्झकशृङ्गवेरपिप्पली सर्षपाश्वगन्धारास्ना रुहा रोहा वषा बलातिबला गुडूची शतपुष्पा शीतवल्ली नाकुली गन्धनाकुली श्वेता ज्योतिष्मती चित्रकाध्यण्डाम्लचाङ्गेरी बदरकुलत्थमाषाणामेवंविधानामन्येषां चोष्णवीर्याणां यथा लाभमौषधानां कषायङ्कारयेत् तेन कषायेण तेषामेव च कल्केन सुरा सौवीरक तुषोदकमैरेयमेदकदधिमण्डारनालकट्वरप्रति विनीतेन तैलपात्रं विपाचयेत्। तेन सुखोष्णेन तैलेनोष्णाभिप्रायिणं ज्वरितमभ्यञ्जयात्। तथा शीतज्वरः प्रशाम्यति तैरेव चौषधैः श्लक्ष्णपिष्टैः सुखोष्णैः प्रदेहं कारयेत्। एतेषामेव च सुखोष्णमुत्क्वाथमवगाहनपरिषेकार्थं प्रयुञ्जीत ज्वरप्रशमार्थमिति। इति शीतज्वरे अगुर्वादितैलम्।

भवति चात्र। त्रयोदशविधः स्वेदः स्वेदाध्याये निदर्शितः।

मात्राकालविदा युक्तः स च शीतज्वरापहः॥

चाकुटी तथ शयनं तथावच्छादनं वरम्।

शीतं प्रशमयन्त्याशु प्रमदाः शिशिरज्वरम्॥

स्वेदनान्यन्नपानानि वातश्लेष्महराणि च।

शीतज्वरं जयन्त्याशु संसर्गबलयोजनात् ॥
वातजे श्रमजे चैव पुराणे क्षतजे ज्वरे ।
लङ्घनं न हितं विद्यात् शमनैस्तानुपाचरेत् ॥
विक्षिप्यामाशयोष्माणं यस्माद्गत्वा रसं नृणाम् ।
ज्वरं कुर्वन्ति दोषास्तु क्षीयतेऽग्निबलं ततः ॥
यथा प्रज्वलितो वह्निः स्थाल्यामिन्धनवानपि ।
न पचत्योदनं सम्यगनिलप्रेरितो बहिः ॥
पक्तिस्थानात्तदा दोषैरूष्मा क्षिप्तो बहिर्नृणाम् ।
न पचत्यभ्यवहृतं कृच्छ्रात् पचति वा लघु ॥
अतोऽग्निबलरक्षार्थं लङ्घनादि क्रमो हितः ।
सप्ताहेन हि पच्यन्ते सर्वधातुगता मलाः ॥
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि ।
उदीर्णदोषस्त्वल्पाग्निरश्नन् गुरु विशेषतः ॥
मुच्यते सहसा प्राणैः चिरं क्लिश्यति वा नरः ।
एतस्मात्कारणाद्विद्वान् वातिकेऽप्यादितो ज्वरे ॥
नाति गुर्वति वा स्निग्धं भोजयेत् सहसा नरम् ।
ज्वरे मारुतजे त्वादावनपेक्ष्यापि हि क्रमम् ॥
कुर्यान्निरनुबन्धानामभ्यङ्गादीनुपक्रमान् ।
पाययित्वा कषायञ्च भोजयेद्रसभोजनम् ॥
जीर्णज्वरहरं कुर्यात् सर्वशश्चाप्युपक्रमम् ।
श्लेष्मलानामवातानां ज्वरोऽनुष्णो कफाधिकः ॥
परिपाकं न सप्ताहे नापि याति मृदूष्मणाम् ।
तं क्रमेण यथोक्तेन लङ्घनाद्याशमादिना ॥
आदशाहमुपक्रम्य कषायाद्यैरुपाचरेत् ।

श्यामा ये ये च कफजाः कफपित्तज्वराश्च ये ॥
लङ्घनं लङ्घनीयोक्तं तेषु कार्यं प्रति प्रति ।
वमनैश्च विरेकैश्च वस्तिभिश्च यथाक्रमम् ॥
ज्वरानुपचरेद्धीमान् कफपित्तानिलोद्भवान् ।
संसृष्टान् सन्निपतितान् बुद्ध्वा तरतमैः समैः ॥
ज्वरान् दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत् ।
वर्द्धनेनैक दोषस्य क्षपणेनोच्छ्रितस्य वा ॥
कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत् ।
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ॥
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ।
रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तञ्जयेत् ॥
प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः ।
शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति ॥
शाखानुसारी रक्तस्य सोऽवसेकात् प्रशाम्यति ।
वीसर्पेणाभिघातेन यश्च विस्फोटकैर्ज्वरः ॥
तत्रादौ सर्पिषः पानं कफपित्तोत्तरो न चेत् ।
कर्म्म साधारणं जह्यात्तृतीयक चतुर्थके ॥
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे ।
वातप्रधानं सर्पिर्भिर्वस्तिभिः सानुवासनैः ॥
स्निग्धोष्णैरनुपानैश्च शमयेद्विषमज्वरम् ।
विरेचनेन पयसा सर्पिषा संस्कृतेन च ॥
विषमन्तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् ।
वमनं पाचनं रूक्षमन्नपानं विलङ्घनम् ॥
कषायोष्णञ्च विषमे ज्वरे कफोत्तरे ।

योगाः परं प्रवक्ष्यन्ते विषमज्वरनाशनाः ॥
प्रयोक्तव्या मतिमता दोषादीन् प्रविभज्य ये ।
सुरासमण्डपानार्थे भक्ष्यार्थे चरणायुधाः ॥
तित्तिरिश्च मयूरश्च प्रयोज्यो विषमज्वरे ।
पिबेद्वा षट्पलं सर्पिरभयां वा प्रयोजयेत् ॥
त्रिफलायाः कषायं वा गुडूच्या रसमेव वा ।
नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम् ॥
पिबेज्ज्वरागमे युक्त्या स्नेहस्वेदोपपादितः ।
सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत् पुनः ॥
उपयुज्यानुपानं वा प्रभूतं पुनरुल्लिखेत् ।
सान्नं मद्यं प्रभूतं वा पीत्वा स्वपग्राज्ज्वरागमे ॥
आस्थापनं यापनं वा कारयेद्विषमज्वरे ।
पयसा वृषदंशस्य शकृद्वा तद्वतः पिबेत् ॥
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ।
पिप्पल्याः त्रिफलायाश्च दध्नस्तक्रस्य सर्पिषः ॥
पञ्चगव्यस्य पयसः प्रयोगो विषमज्वरे ।
रसोनस्य सतैलस्य प्रागभक्तमुपसेवनम् ॥
मेध्यानामुष्णवीर्य्याणामामिषाणाञ्च भक्षणम् ।
हिङ्गुतुल्यानुवैयाघ्री वसानस्यं ससैन्धवाः ॥
पुराणसर्पिः सिंहस्य वशा तद्वत् ससैन्धवा ।
सैन्धवं पिप्पलीनाञ्च तण्डुलाः समनःशिलाः ।
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे ॥
पलं कषा निम्बपत्रं वचाकुष्ठं हरीतकी ।
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥

ये धूमा धूपनं यच्च नावनञ्चाञ्जनञ्च यत् ।
मनोविकारो व्याख्यात कार्य्यं तद्विषमज्वरे ॥
मणीनामौषधीनाञ्च मङ्गल्यानां विषस्य च ।
धारणादगदानाञ्च सेवनाच्च भवेत् ज्वरः ॥
सोमं सानुचरं देवं समातृगणमीश्वरम् ।
पूजयन् प्रयतं शीघ्रं मुच्यते विषमज्वरात् ॥
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम् ।
स्तुवन्नाम सहस्रेण ज्वरान् सर्वानपोहति ॥
ब्रह्माणमश्विनाविन्द्रं हुतभक्षं हिमाचलम् ।
गङ्गां मरुद्गणांश्चेष्ट्वा पूजयन् जयति ज्वरान् ॥
भक्त्या मातापितृणाञ्च गुरूणां पूजनेन च ।
ब्रह्मचर्य्येण तपसा सत्येन नियमेन च ॥
जपहोमप्रदानेन वेदानां श्रवणेन च ।
ज्वराद्विमुच्यते शीघ्रं साधूनां दर्शनेन च ॥
ज्वरे रसस्थे वमनं उपवासञ्च कारयेत् ।
सेकप्रदेहौ रक्तस्थे तथा संशमनानि च ॥
विरेचनं सोपवासं मांसमेदःस्थिते हितम् ।
अस्थिमज्जगते देया निरूहाः सानुवासनाः ॥
शापाभिचाराद् भूतानामभिषङ्गाच्च यो ज्वरः ।
दैवव्यपाश्रयं तत्र सर्वमौषधमिष्यते ॥
अभिघातज्वरो न स्यात् पानाभ्यङ्गेन सर्पिषः ।
रक्तावसेकैर्मद्यैश्च सात्म्यैर्मांसरसोदनैः ॥
सानाद्यो मद्यसात्म्यानां मदिरा रसभोजनैः ।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ॥

आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ।
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ॥
काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ।
सद्वाक्यैः शाम्यति ह्याशु ज्वरः क्रोधसमुत्थितः ॥
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुत्थितः ॥
ज्वरकालञ्च वेगञ्च चिन्तयन् ज्वर्य्यते तु यः ।
तस्येष्टैश्च विचित्रैश्च विषयैर्नाशयेत् स्मृतिम् ॥
ज्वरप्रमोक्षे पुरुषः कूजन् वमति चेष्टते ।
श्वसन् विवर्णः स्विन्नाङ्गो वेपते लीयते मुहुः ॥
प्रलपत्युष्णसर्वाङ्गः शीताङ्गश्च भवत्यपि ।
विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते ॥
सदोषशब्दञ्च शकृद्द्रवं स्रवति वेगवत् ।
लिङ्गान्येतानि जानीयात् ज्वरमोक्षे विचक्षणः ॥
बहुदोषस्य बलवान् प्रायेणाभिनवो ज्वरः ।
सत्क्रिया दोषपक्त्या चेद्विमुञ्चति सुदारुणम् ॥
क्षत्वा दोषवशाद्वेगं क्रमाद्युपरमन्ति ये ।
तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम् ॥
विगतक्लमसन्तापमव्यथं विमलेन्द्रियम् ।
युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम् ॥
सज्वरो ज्वरमुक्तश्च विदाहीनि गुरूणि च ।
असात्म्यान्यन्नपानानि विरुद्धानि विवर्जयेत् ॥
व्यवायमतिचेष्टाश्च स्नानशय्यासनानि च ।
तथा ज्वरः शमं याति प्रशान्तो जायते न च ॥

व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्न वलवान् भवेत् ॥
असञ्जातवलोयस्तु ज्वरमुक्तो निषेवते ।
वर्ज्यमेतन्नवस्तस्य पुनरावर्त्तते ज्वरः ॥
दुर्हृतेषु च दोषेषु यस्य वा विनिवर्त्तते ।
स्वल्पेनाप्यपचारेण तस्य व्यावर्त्तते पुनः ॥
चिरकालपरिक्लिष्टं दुर्वलं दीनचेतसम् ।
अचिरेणैव कालेन स हन्ति पुनरागतः ॥
अथवापि परीपाकं धातुष्वेव क्रमान्मलाः ।
याति ज्वरमकुर्वन्तः ते तथाप्यपकुर्वते ॥
दीनतां स्वयथुं ग्लानिं पाण्डुतां नान्नकामजम् ।
कण्डूरुत् कोठपिडकाः कुर्वन्त्यग्निञ्च ते मृदुम् ॥
एवमन्येऽपि गदा व्यावर्त्तन्ते पुनर्गताः ।
अनिर्घाते न दोषाणामल्पैरप्यहितैर्नृणाम् ॥
निवृत्तेऽपि ज्वरे तस्माद्यथावस्थं यथावलम् ।
यथा प्राणं हरे द्दोषं प्रयोगैर्वा शमन्नयेत् ॥
मृदुभिः शोधनैः शुद्धिर्यापनावस्तयो हिताः ।
हिताश्च लघवो यूषा जाङ्गलामिषजा रसाः ॥
अभ्यङ्गोद्वर्तन स्नानं धूपनाभ्यञ्जनानि च ।
हितानि पुनरावृत्ते ज्वरे तिक्त घृतानि च ॥
गुर्व भिष्यन्दसात्म्यानां भोजनात् पुनरागते ।
लङ्घनोष्णोपचारादिः क्रमः कार्य्यश्च पूर्ववत् ॥
किरात तिक्तकं तिक्तामुस्तं पर्पटकोऽमृता ।
घ्नन्ति पीतानि चाभ्यासात् पुनरावर्तकं ज्वरम् ॥

तस्यां तस्यामवस्थायां ज्वरितानां विचक्षण:।
ज्वरक्रिया क्रमापेक्षी कुर्यात्तत्र चिकित्सितम्॥
रोगराट् सर्वभूतानामन्त क्षद्दारुणो ज्वर:।
तस्माद्विशेषत स्तस्य यतेत प्रथमं भिषगिति॥
भवतिचात्र। यथाक्रमं यथा प्रश्नमुक्तं ज्वर चिकित्सितम्।
अत्रिजेनाग्निवेशाय भूतेभ्यो हित मिच्छता॥

इति ज्वर चिकित्सितम्।

---

## चतुर्थोऽध्याय:।

अथातो रक्तपित्त चिकित्सितं व्याख्यास्याम:।

विहरन्तं जितात्मानं पञ्चगङ्गे पुनर्वसुम्।
प्रणम्योवाच निर्मोह मग्निवेशोऽग्निवर्चसम्॥
भगवन्! रक्त पित्तस्य वक्तुमर्हसि तद्गुरो।
गुरुरुवाच। महागदं महावीर्य्य मग्निवत् शीघ्रकारि च॥
हेतु लक्षण विच्छीघ्रं रक्तपित्तमुपाचरेत्।
तस्योष्णं तीक्ष्ण मम्लञ्च कटूनि लवणानि च॥
घर्मश्चान्न विदाहश्च हेतु: पूर्वंनिदर्शित:।
तैर्हेतुभि: समुद्दिष्टं पित्तं रक्तं प्रपद्यते।
तद्योनित्वात् प्रपन्नञ्च वर्द्धते तत्प्रदूषयेत्॥

तस्योष्मणा द्रवो धातुर्धातोर्धातोः प्रसिच्यते ।
स्विद्यतस्तेन संवृद्धिं भूयस्तदधिगच्छति ॥
संयोगाद्दूषणात्तत्तु सामान्याद्गन्धवर्णयोः ।
रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः ॥
प्लीहानाञ्च यकृच्चैव तदधिष्ठाय वर्त्तते ।
स्रोतांसि रक्तवाहीनि तन्मूलानि हि देहिनाम् ॥
सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफान्वितम् ।
श्यावारुणं सफेनञ्च तनु रूक्षञ्च वातिकम् ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम् ।
मेचकागारधूमाभं अञ्जनाभञ्च पैत्तिकम् ॥
संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गं सान्निपातिकम् ।
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥
यत्त्रिदोषजमसाध्यं तन्मन्दाग्नेरतिवेगवत् ।
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥
गतिरूर्द्ध्वमधश्चैव रक्तपित्तस्य दर्शिता ।
ऊर्द्ध्वाः सप्तविधा द्वारा द्विद्वारा त्वधरागतिः ॥
सप्तच्छिद्राणि शिरसि द्वे चाधः साध्यमूर्द्ध्वगम् ।
याप्यन्त्वधोगमं मार्गौ द्वावसाध्यं प्रपद्यते ॥
यदा तु सर्वच्छिद्रेभ्यो रोमकूपेभ्य एव च ।
वर्त्तते तामसंख्येयां गतिं तस्याहुरन्तिकीम् ॥
यच्चोभयाभ्यां मार्गाभ्यामतिमात्रं प्रवर्त्तते ।
तुल्यं कुणपगन्धेन रक्तं कृष्णमतीव च ॥
संसृष्टं कफवाताभ्यां कण्ठे सज्जति चापि यत् ।
यच्चाप्युपद्रवैः सर्वैर्यथोक्तैः समभिद्रुतम् ॥

हारिद्रनीलहरितताम्रैर्वर्णैरुपद्रुतम्।
क्षीणस्य कासमानस्य यच्च तच्च न सिध्यति॥
यद्गद्दिदोषानुगं यद्वा शान्तं शान्तं प्रकुप्यति।
मार्गं मार्गं चरेद्यद्वा याप्यं पित्तं असृक् च तत्॥
एकमार्गं बलवतो नातिवेगं नवोत्थितम्।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम्॥
स्निग्धोष्णमुष्णरूक्षञ्च रक्तपित्तस्य कारणम्।
अधोगस्योत्तरं प्रायः पूर्वं स्यादूर्ध्वगस्य तु॥
ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम्।
द्विमार्गं कफवाताभ्यां उभाभ्यामनुबध्यते॥
अक्षीणबलमांसस्य रक्तपित्तं यदश्नतः।
तद्दोषदुष्टं उत्क्लिष्टं नादौ स्तम्भनमर्हति॥
गलग्रहं पूतिनस्यं मूर्च्छायमरुचिं ज्वरम्।
गुल्मं प्लीहानमानाहं किलासं कृच्छ्रमूत्रता॥
कुष्ठान्यर्शांसि वीसर्पं वर्णनाशं भगन्दरम्।
बुद्धीन्द्रियोपरोधञ्च कुर्यात् स्तम्भितमादितः॥
तस्मादुपेक्ष्यं बलिनं बलदोषविचारिणा।
रक्तपित्तं प्रथमतः प्रवृद्धं सिद्धिमिच्छता॥
प्रायेण हि समुत्क्लिष्टमामदोषाच्छरीरिणाम्।
वृद्धिं प्रयाति पित्तासृक् तस्मात्तल्लङ्घनमादितः॥
मार्गदोषानुबन्धञ्च निदानं प्रसमीक्ष्य च।
लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत्॥
ह्रीवेरं चन्दनोशीरमुस्तपर्पटकैः शृतम्।
केवलं शृतशीतं वा दद्यात्तोयं पिपासवे॥

अध्वंगे तर्पणं पूर्वं पेयां पूर्वमधोगतम् ।
कालसात्म्यानुबन्धज्ञो दद्यात् प्रकृति कल्पवित् ॥
जलं खर्जूरमृद्वीकामधूकैः सपरूषकैः ।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥
तर्पणं सघृतक्षौद्रं लाजा चूर्णैः प्रयोजयेत् ।
शालि षष्टिकनीवारकोरदूषप्रशातिकाः ॥
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ।
मुद्गा मसूराश्चणकाः समकुष्ठाढकी फलाः ॥
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम् ।
पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः ॥
किरातितिक्तकं शाकं शण्डीरः सकटिल्लकः ।
कोविदारस्य पुष्पाणि काश्मर्य्यस्याथ शाल्मलेः ॥
अन्नपानविधौ शाकं यच्चान्यद्रक्तपित्तनुत् ।
शाकार्थं शाकसात्म्यानां तच्छस्तं रक्तपित्तिनाम् ॥
सिद्धं वा सर्पिषा भृष्टं यूषवद्वा विपाचितम् ।
पारावतान् कपोतांश्च लावान् रक्ताक्षवर्तकान् ॥
शशान् कपिञ्जलांश्चैणान् हरिणान् कालपुच्छकान्
रक्तपित्तहितान् विद्याद्रसां स्तेषां प्रयोजयेत् ॥
ईषदम्लाननम्लान् वा घृतभृष्टान् स शर्करान् ।
कफानुगे यूषशाकं दद्याद्वातानुगे रसम् ॥
रक्तपित्ते यवागूनामतः कल्पः प्रवक्ष्यते ।
पद्मोत्पलानां किञ्जल्कः पृश्निपर्णी प्रियङ्गुकाः ॥
जले साध्यरसे तस्मिन् पेया स्याद्रक्त पित्तिनाम् ।
चन्दनो शीररोध्राणां रसे तद्वत्स नागरे ॥

किरात तिक्तको शीरमुस्तानां तद्वदेव च।
धातकी धन्वयासाम्बु बिल्वानां वा रसे सृताः॥
मसूर पृश्निपर्ण्यो वा स्थिरा मुद्गरसेन वा।
रसे हरेणुकानां वा सहृते सबला रसे॥
सिद्धाः पारावतादीनां रसे वा स्युः पृथक्पृथक्।
इत्युक्ता रक्तपित्तघ्नः शीताः समधुशर्कराः॥
यवागूवः कल्पना चैषां कार्या मांसरसेष्वपि।
शशः सवास्तुकः शस्तो विबन्धो रक्तपित्तिनाम्॥
वातोल्बणे तित्तिरिः स्यादुदुम्बररसे सृताः।
मयूरः प्लक्षनिर्यूहे न्यग्रोधस्य च कुक्कुटः॥
रसे शिल्वोत्पलादीनां वर्तकक्रकरौ हितौ।
तृष्यते तिक्तकैः सिद्धं तृणाख्यं वा फलोदकम्॥
सिद्धं विदारि गन्धाद्यैरथ वा सृत शीतलम्।
ज्ञात्वा दोषावनुबलाम्बल माहारमेव च॥
जलं पिपासवे दद्याद्विसर्गाद्रक्ष्यशोऽपि वा।
निदानं रक्तपित्तस्य यत्किञ्चित्तं प्रकाशितम्॥
जीविता रोग्यकामैस्तन्न सेव्यं रक्तपित्तिभिः।
इत्यन्नपानं निर्दिष्टं क्रमशो रक्तपित्तिषु॥
वच्यते वहुदोषाणां कार्यं बलवताञ्च यत्।
अक्षीणबल मांसस्य यस्य सन्तर्पणोत्थितम्॥
बहु दोषम्बलवतो रक्तपित्तं शरीरिणः।
काले संशोधनार्हस्य तद्धरेन्निरुपद्रवम्॥
विरेचनेनोर्ध्वभाग मधोगं वमनेन च।
त्रिवृतामभयां प्राज्ञः फलान्यारग्वधस्य वा॥

त्रायमाणा गवाक्ष्योर्वा मूलमामलकानि वा ।
विरेचनं प्रयुञ्जीत प्रभूत मधुशर्करम् ॥
रसः प्रशस्यते तेषां रक्तपित्ते विशेषतः ।
वमनं मदनोन्मिश्रोमन्थः सक्षौद्रशर्करः ॥
स शर्करं वा सलिलं इक्षूणां रस एव वा ।
वत्सकस्य फलं मुस्तं मदनं मधुकं मधु ॥
अधो वहे रक्तपित्ते वमनं परमुच्यते ।
ऊर्ध्वगे शुद्धकोष्ठस्य तर्पणादिः क्रमोहितः ॥
अधो वहे यवाग्वादि र्नचेत्स्यान्मारुतो बली ।
बल मांस परिक्षीणं शोकभाराध्व कर्षितम् ॥
ज्वलनादित्य सन्तप्त मन्यैर्वाक्षीण मामयैः ।
गर्भिणीं स्थविरं बालं रूक्षाल्प प्रमिताशनम् ॥
अवम्यम विरेच्यं वा यं पश्येद्रक्त पित्तिनम् ।
शोषेण सानुबन्धं वा यस्य संशमनी क्रिया ॥
शस्यते रक्तपित्तस्य पुरो या तु प्रवक्ष्यते ।
अटरूषकनिर्यूहे प्रियङ्गुं मृत्तिकाञ्जने ॥
विनीयलोध्रं क्षौद्रञ्च रक्तपित्तनुदं पिबेत् ।
प्रपुण्डरीकं मधुकं मधुचाश्वशकृद्रसे ॥
यवास भृङ्गराजयोर्मूलं वागोम शकृद्रसे ।
विनीय रक्तपित्तघ्नं पेयं स्यात्तण्डुलाम्बुना ॥
युक्तं वा मधु सर्पिर्भ्यां लिह्यात् वा गोऽश्वशकृद्रसम् ।
खदिरस्य प्रियङ्गूनां कोविदारस्य शाल्मलेः ॥
पूर्ण चूर्णानि मधुना लिह्यात्वा रक्तपित्तिकः ।
शृङ्गाटकानां लाजानां मुस्त खर्जूरयोरपि ॥

लिह्याच्चूर्णानि मधुना पद्मानां केशरस्य च।
धन्वजानामसृग्लिह्यान्मधुना मृगपक्षिणाम्॥
सक्षौद्रं ग्रथिते रक्ते लिह्यात् पारावतं शकृत्।
उशीर कालीयक लोध्रपद्मक प्रियङ्गुका कट्फल शङ्खगैरिकाः।
पृथक्पृथक् चन्दन तुल्यभागिकाः सशर्करास्तण्डुलधावनाप्लुताः
रक्तं सपित्तन्तमकं पिपासां दाहञ्च पीताः शमयन्ति सद्यः।
किरात तिक्तं क्रमुकं समुस्तं प्रपुण्डरीकं कमलोत्पले च॥
ह्रीवेरमूलानि पटोलपत्रन्दुरालभापर्पटका मृणालम्।
धनञ्जयो दुम्बरवेतसत्वग्न्यग्रोध जम्बूद्वय मारक त्वक्॥
तुङ्गालता वेतस तण्डुलीयं स शारिवम्मोच रसः समङ्गा।
पृथक् पृथक् चन्दनयोजितानि तेनैव कल्केन स्थितानि तत्र॥
निशि स्थिता वा स्वरसीकृता वा कल्कीकृता वा मृदिताशृता वा
एते समस्तागणशः पृथग्वा रक्तं सपित्तं शमयन्ति योगाः॥
मुद्गाः सलाजाः सयवाः सकृष्णाः सोशीरमुस्ताः सह चन्दनेन।
बलाजले पर्युषितः कषायो रक्तं सपित्तं शमयन्त्युदीर्णम्॥
वैदूर्यमुक्तामणि गैरिकाणां मृच्छङ्खहेमामलकोदकानाम्।
मधूदकस्येक्षुरसस्य चैव पानाच्छमङ्गच्छति रक्तपित्तम्॥
उशीर पद्मोत्पल चन्दनानां पक्वस्य लोष्टस्य चयः प्रसादः।
सशर्करः क्षौद्रयुतः सुशीतो रक्तातियोग प्रशमाय देयः॥
प्रियङ्गुका चन्दनलोध्रशारिवा मधूकमुस्ताभयधातकी जलम्।
सम्प्तप्रसादं सह षष्टिकाम्बुना सशर्करं रक्तनिबर्हणं परम्॥
कषाय योगैर्विविधैर्यथोक्तैर्दीप्ते ऽनले श्लेष्मणि निर्जिते च।
यद्रक्तपित्तं प्रशमं न याति तत्रानिलः स्यादनु तत्र कार्यम्॥

छागम्पय: स्यात् प्रथमं प्रयोगे गव्यं शृतं पञ्चगुणे जले वा ।
सशर्करं माक्षिक सम्प्रयुक्तं विदारि गन्धादिगणैः शृतं वा ॥
द्राक्षा शृतं नागरकैः शृतं वा बलाशृतं गोक्षुरकैः शृतं वा ।
स जीरकं सर्षपकं ससर्पिः पयः प्रयोज्यं सितया शृतं वा ॥
शतावरी गोक्षुरकैः शृतं वा शृतम्पयो वाप्यथ पर्णिनीभिः ।
रक्तं हिनस्त्याशु विशेषतस्तु यन्मूत्रमार्गात्सरुजम्प्रयाति ॥
विशेषतो विट् प्रथमं प्रवृत्ते पयोमतम्मोच रसेन सिद्धम् ।
वटावरोहैर्वट शुङ्गकैर्वा ह्रीवेर नीलोत्पल नागरैर्वा ॥
कषाय योगात् पयसा पुरा वा पीत्वानुदद्यात् पयसानुशालीन्।
कषाय योगैरथवा विपक्वमेतैः पिवेत् सर्पिरतिस्रवेण ॥
वासां सशाखां सपलाशमूलां कृत्वा कषायं कुसुमानि चास्याः ।
प्रदाय कल्कं विपचेद्घृतं तत्सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥
पलाशवृन्तस्य रसेन सिद्धं तस्यैव कल्केन मधुद्रवेण ।
लिह्याद्घृतं वत्सक कल्कसिद्धन्तद्वत् समङ्गोत्पल रोध्रसिद्धम्।
स्यात् त्रायमाणा विधिरेष एव सोदुम्बरे चैव पटोलपत्रे ।
सर्पीषि पित्त ज्वरनाशनानि सर्वाणि शस्तानि च रक्तपित्ते ॥
अभ्यङ्गयोगाः परिषेचनानि सेकावगाहाः शयनानि वेश्म ।
शीतो विधिर्वस्ति विधानमग्र्यं पित्तज्वरे यत्प्रशमाय दृष्टम् ॥
तद्रक्त पित्ते निखिलेन कार्यं कालञ्च मात्राञ्च पुरा समीक्ष्य।
सर्पिर्गुडा ये सहिताः क्षतेभ्यः ते रक्तपित्तं शमयन्ति सद्यः ॥
कफानुबन्धे रुधिरे सपित्ते कण्ठागमे स्याद्ग्रथिते प्रयोगः ।
युक्तस्य युक्त्या मधुसर्पिषोश्च क्षारस्य चैवोत्पल नालजस्य ॥
मृणाल पद्मोत्पल केशराणां तथा पलाशस्य तथा प्रियङ्ग्वाः ।
तथा मधूकस्य तथासनस्य क्षाराः प्रयोज्या विधिनैव तेन ॥

शतावरी दाड़िमतिन्तिडी कङ्काकोड़मेदो मधुकं विदारीम् ।
पिष्ट्वा च मूलम्फल पूरकस्य घृतं पचेत् क्षीरचतुर्गुणेन ॥
कासज्वरानाहविबन्धशूलन्तद्रक्तपित्तञ्च घृतन्निहन्यात् ।
यत्पञ्चमूलै रथ पञ्चभिर्वा सिद्धं घृतं तच्च तदर्थकारि ॥
कषाययोगा य इहोपदिष्टास्ते चावपीड़े भिषजा प्रयोज्याः।
घ्राणात्प्रवृत्तं रुधिरं स पित्तं यदा भवेन्निःसृतदुष्टदोषम् ॥
रक्ते प्रदुष्टे ह्यव पीड़बन्धे दुष्टप्रतिश्याय शिरोविकाराः ।
रक्तं सपूयञ्च ुणपस्य गन्धः स्याद्घ्राणनाशः क्रिमयश्च दुष्टाः ॥
नीलोत्पलं गैरिक शङ्खयुक्तं सचन्दनं स्यात्तु सिता जलेन ।
नस्यन्तथा स्यात्स्थिरसः समङ्गाःसधातकी मोचरसः सरोध्रः ॥
द्राक्षारसस्ते क्षुरसस्य नस्यं क्षीरस्य दूर्वा स्वरसस्य चैव ।
यवास मूलानि पलाण्डु मूलं नस्यं तथा दाड़िमपुष्प तोयम् ॥
पियालतैलं मधुकम्पयश्च सिद्धं घृतं माहिषमाजकं वा ।
आम्रास्थिपूर्वैः पयसाच नस्यं स शारिवैः स्यात् कमलोत्पलैश्च ॥
भद्रश्रियं लोहित चन्दनञ्च प्रपुण्डरीकं कमलोत्पलञ्च ।
उशीरवाणीरजलं मृणालं सहस्रवीर्यं तृणशून्य मृद्विः ॥
मूलानि पुष्पाणि च वारिजानां प्रलेपनं पुष्करिणी मृदश्च ।
उदुम्बराश्वत्थ मधूकरोध्राः कषाय वृक्षाः शिशिराश्च सर्वे ॥
प्रदेहकल्के परिषेचने च तथावगाहे घृततैलसिद्धौ ।
रक्तस्य पित्तस्य च शान्ति मिच्छन्भद्रश्रियादीनि भिषक्प्रयुञ्ज्यात्
धारागृहं भूमिगृहञ्च शीतं वनञ्च रम्यञ्जल वातशीतम् ।
वैदूर्यमुक्तामणि भाजनानां स्पर्शांश्च दाहे शिशिराम्बु शीताः ॥
पत्राणि शीतानि च वारिजानां क्षौमञ्च शीतं कदलीदलाश्च ।
प्रच्छादनार्थं शयनासनानां पद्मोत्पलानाञ्च दलाः प्रशस्ताः ॥

प्रियङ्गुका चन्दनरूषितानां स्पर्शाः प्रियाणाञ्च वराङ्गनानाम् ।
दाहे प्रशस्ताः सजलाः सुशीताः पद्मोत्पलानाञ्च कलापवाताः
सरिद्ध्रदानां हिमवद्दरीणाञ्चन्द्रोदयानां कमलाकराणाम् ।
मनोऽनुकूलाः शिशिराश्च सर्वाः कथाः स रक्तं शमयन्ति पित्तम्

इति भवति चात्र ।

हेतुं वृद्धिं संज्ञां स्थानं लिङ्गं पृथक् प्रदुष्टस्य ।
मार्गौ साध्यमसाध्यं याप्यं कार्य्यक्रमञ्चैव ॥
पानान्न पानमेव च वर्ज्यं संशोधनञ्च शमनञ्च ।
गुरुरुक्तवान् यथावत् चिकित्सिते रक्तपित्तस्येति ॥

अथ रक्तपित्तचिकित्सितं समाप्तम् ।

---

पञ्चमोऽध्यायः ।

अथातो गुल्मचिकित्सितं व्याख्यास्यामः ।

सर्वप्रजानां पितृवच्छरण्यः पुनर्वसुर्भूतभविष्यदीशः ।
चिकित्सितं गुल्मनिवर्हणार्थं प्रोवाच सिद्धं वदतां वरिष्ठः ॥
विट्श्लेष्मपित्तादिपरिस्रयाद्वा तैरेव वृद्धैः परिपीड़ितो वा ।
वेगैरुदीर्णैर्विहितैरधो वा वाह्याभिघातैरतिपूरणैर्वा ॥
रूक्षान्नपानैरतिसेवनैर्वा शोकेन मिथ्या प्रतिकर्म्मणा वा ।
विचेष्टितैर्वा विषमातिमात्रैः कोष्ठे प्रकोपं समुपैति वायुः ॥
कफञ्च पित्तञ्च स दूषयित्वा प्रोद्धूय मार्गान् विनिबध्य ताभ्याम् ।

हृत्शीर्षपार्श्वोदरवस्तिशूलं करोत्यधो याति न बद्धमार्गः॥
पक्वाशये पित्तकफाशये वा स्थितः स्वतन्त्रः परसंश्रयो वा।
स्पर्शोपलभ्यः परिपिण्डितत्वात् गुल्मो यथा दोषमुपैति नाम॥
वस्तौ हि नाभ्यां हृदि पार्श्वयोर्वा स्थानानि गुल्मस्य भवन्ति पञ्च।
पञ्चात्मकस्य प्रभवन्तु तस्य वक्ष्यामि लिङ्गानि चिकित्सितञ्च॥
रूक्षान्नपानं विषमातिमात्रं विचेष्टितं वेगविनिग्रहश्च।
शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः॥
यत् स्थानसंस्थानरुजां विकल्पं विड्वातसङ्गं गलवक्त्रशोषम्।
श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वांसशिरोरुजश्च॥
करोति जीर्णेऽभ्यधिकं प्रयोगं भुंक्ते मृदुत्वं समुपैति यश्च।
वातात् सगुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपशेते॥
कट्वम्लतीक्ष्णोष्णविरोधिरूक्षक्रोधातिमद्यार्कहुताशसेवा।
आमाभिघातो रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम्॥
ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्जति भोजने च।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम्॥
शीतं गुरुस्निग्धमचेष्टनञ्च सम्पूरणं प्रस्वपनं दिवा च।
गुल्मस्य हेतुः कफसम्भवस्य सर्वस्तु दृष्टो निचयात्मकस्य॥
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य॥
निमित्तलिङ्गान्युपलभ्य गुल्मं द्विदोषजे दोषबलाबलञ्च।
व्यामिश्रदोषानपरांश्च गुल्मां स्त्रीनादिशेदौषधकल्पनार्थम्॥
महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम्।
मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत्॥
ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहैश्च।

संस्तम्भनोत्ले खनयोनिदोषैर्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति ॥
यः स्पन्दते पिण्डित एव नाङ्गैः चिरात् सशूलः समगर्भलिङ्गः
सरौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः

क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशनम् ।
प्रवक्ष्याम्यत ऊर्द्ध्वञ्च योगान् गुल्मनिवर्हणान् ॥
रूक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम् ।
बद्धविट् मारुतं स्नेहैरादितः समुपाचरेत् ॥
भोजनाभ्यञ्जने पानैर्निरूहैः सानुवासनैः ।
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ॥
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्वणम् ।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥
स्नेहपानं मतं गुल्मे विशेषेणोर्द्धनाभिजे ।
पक्वाशयगते वस्तिरुभयं जठराश्रये ॥
दीप्ताग्नौ वातिके गुल्मे विबन्धेऽनिलवर्चसोः ।
वृंहणान्यन्नपानानि स्निग्धोष्णानि प्रयोजयेत् ॥
पुनः पुनः स्नेहपानं निरूहाः सानुवासनाः ।
प्रयोज्या वातगुल्मेषु कफपित्तानुरक्षिणा ॥
कफे वाते जितप्राये पित्तं शोणितमेव वा ।
यदि कुप्यति वातस्य क्रियमाणैश्चिकित्सितैः ॥
यथोल्वणस्य दोषस्य तत्र कार्य्यं भिषग्जितम् ।
आदावन्ते च मध्ये च मारुतं परिरक्षता ॥
वातगुल्मे कफो वृद्धो हत्वाग्निमरुचिं यदि ।
हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत्तु तम् ॥
शूलानाह विबन्धेषु गुल्मे वातकफोल्वणे ।

वर्त्तयो गुलिकाः चूर्णं कफ वातहरम्मतम् ॥
पित्तं वा यदि संवृत्तं सन्तापं वातगुल्मिनः।
कुर्याद्विरेच्यः स भवेत्स्नेहनैरानुलोमिकैः ॥
गुल्मं यद्यनिलादीनां कृते सम्यग्भिषजिते।
न प्रशाम्यति रक्तेन स स्रुतेनोप शाम्यति ॥
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं मतम्।
रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम् ॥
पित्तं वा पित्त गुल्मं वा ज्ञात्वा पक्वाशय स्थितम्।
कालविन्निर्हरेत् सद्यः सतिक्तैः क्षीरवस्तिभिः ॥
पयसा वा सुखोष्णेन स तिक्तेन विरेचयेत्।
भिषगग्निबलापेक्षी सर्पिषा तैलकेन च ॥
तृष्णा ज्वर परीदाह शूल स्वेदाग्निमार्दवे।
गुल्मिनामरुचौ चापि रक्तमेवावसेचयेत्।
छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ॥
रक्तं हि व्यम्लतां याति तच्च नास्ति नचास्ति रुक्।
हृतदोषम्परिम्लानं जाङ्गलैस्तर्पितं रसैः ॥
समाश्वस्तं च शेषार्तिं सर्पिषा पुनराचरेत्।
रक्तपित्तातिवृद्धत्वात् क्रियामनुपलभ्य वा ॥
यदि गुल्मो विदह्येत शस्तं तत्र भिषग्जितम्।
गुरुः कठिनसंस्थानो गूढमांसोत्तराश्रयः ॥
अविवर्णः स्थिरश्चैव ह्यपक्वो गुल्म उच्यते।
दाहशूलाग्निसंक्षोभस्वप्ननाशा रतिज्वरैः ॥
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत्।
विदाहलक्षणाल्पत्वे बहिस्तुङ्गे समुन्नते ॥

श्यावैसरक्तपर्यन्ते संसृष्टे वस्ति सन्निभे।
निपीडितोन्नते स्तब्धे शुभे तत्पार्श्वपीडनात् ॥
तत्रैव पिण्डिते शूले संपक्वं गुल्ममादिशेत्।
तत्र धान्वन्तरीयाणामधिकारः क्रियविधौ ॥
वैद्यानां कृतयोग्यानां व्यधशोधनरोपणैः।
अन्तर्भागस्य चाप्येतत् पच्यमानस्य लक्षणम् ॥
हृत्क्रोडशूनतान्तः स्थे बहिः स्थे पार्श्वनिर्गतिः।
पक्वः स्रोतांसि संक्लिद्य व्रजत्यूर्द्ध्वमधोऽपि वा ॥
स्वयं प्रवृत्तन्तं दोषमुपेक्षेत हिताशनैः।
दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवान् ॥
अत ऊर्द्ध्वं मतं पानं सर्पिषः सविशोधनम्।
शुद्धं सतिक्तं सक्षौद्रं प्रयोगे सर्पिरिष्यते ॥
शीतलैर्गुरुभिः स्निग्धैर्गुल्मे जाते कफात्मके।
अवम्यस्याल्पकायाग्नेः कुर्याल्लङ्घनमार्दितः ॥
मन्दोऽग्निर्वेदना मन्दो गुरुस्तिमितकोष्ठता।
सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ॥
उष्णैरेवोपचार्यस्य कृते वमनलङ्घने।
योजया चाहारसंसर्गो भेषजैः कटुतिक्तकैः ॥
सानाहं स विबन्धं च गुल्मं कठिनमुन्नतम्।
दृष्ट्वादौ स्वेदयेद्युक्त्या स्विन्नञ्च विनयेद्भिषक् ॥
लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते।
कफगुल्मे पिवेत्काले सक्षारकटुकं घृतम् ॥
स्थानादपसृतं ज्ञात्वा कफगुल्मं विरेचनैः।
सस्नेहैर्वस्तिभिर्वापि शोधयेद्दशमूलकैः ॥

मन्दाग्नावनिले मूढे ज्ञात्वा सस्नेहमाशयम्।
गुलिकाः चूर्णनिर्यूहाः प्रयोज्याः कफगुल्मिनाम्॥
कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम्।
जयेत् कफकृतं गुल्मं क्षारारिष्टाग्निकर्मभिः॥
दोषप्रकृति गुल्मन्तु योगं बुद्धा कफोल्वणे।
बलदोषप्रमाणज्ञः क्षारं गुल्मे प्रयोजयेत्॥
एकान्तरं द्व्यन्तरं वा त्र्यहं विश्रम्य वा पुनः।
शरीरबलदोषाणां वृद्धिं क्षपणकोविदः॥
श्लेष्माणं मधुरं स्निग्धं मांसक्षीरघृताशिनः।
भित्त्वा भित्त्वा शमं क्षारः क्षरत्वात् क्षारयत्यधः॥
मन्देऽग्नावरुचौ सात्म्यैर्मद्यैः सस्नेहमश्नताम्।
प्रयोज्या मार्गशुद्ध्यर्थमरिष्टाः कफगुल्मिनाम्॥
लङ्घनोल्लेखनैः स्वेदैः सर्पिष्पानैर्विरेचनैः।
वस्तिभिर्गुलिकाचूर्णक्षारारिष्टगणैरपि॥
श्लैष्मिकः कृतमूलत्वाद्यस्य गुल्मो न शाम्यति।
तस्य दाहं हृते रक्ते शरलोहादिभिर्मतः॥
औष्ण्यात्तैक्ष्ण्याच्च शमयेदग्निर्गुल्मे कफानिलौ।
तयोः शमाच्च सङ्घातो गुल्मस्य विनिवर्त्तते॥
दाहे धान्वन्तरीयाणामत्रापि भिषजां बलम्।
क्षारप्रयोगे भिषजां क्षारतन्त्रविदां बलम्॥
व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः।
सिद्धानतः प्रवक्ष्यामि योगान् गुल्मनिवर्हणान्॥
त्र्यूषणं त्रिफला धान्यं विडङ्गं चव्यचित्रकैः।
कल्कीकृतैः घृतं सिद्धं सक्षीरं वातगुल्मनुत्॥

एत एव च कल्काः स्युः कषायः पञ्चमूलिकः ।
द्विपञ्चमूलिको वाथ तद्घृतं गुल्मनुत् परम् ॥
प्रसन्नया वा क्षीरार्थः सुरया दाड़िमेन वा ।
दध्नः शरेण वा कार्य्यं घृतं मारुतगुल्मिनाम् ॥
हिङ्गु सौवर्च्चला जाजी विड्दाड़िमदीप्यकैः ।
पुष्करव्योषधान्याम्लवेतसक्षारचित्रकैः ॥
शठीवचाजगन्धैला सुरसैश्च विमोदितम् ।
शूलानाहहरं सर्पिर्द्दध्ना चानिलगुल्मिनाम् ॥
हपुषाव्योषपृथ्वीका चव्यचित्रकसैन्धवैः ।
साजाजी पिप्पली मूलदीप्यकैर्विपचेद्घृतम् ॥
मातुलुङ्गदधि क्षीरकोलमूलकदाड़िमैः ।
रसैस्तद्वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥
योन्यर्शो ग्रहणीदोषश्वासकासारुचि ज्वरान् ।
वातहृत् पार्श्वशूलञ्च घृतमेतद्व्यपोहति ॥
पिप्पल्याः पिचुरध्यर्द्धो दाड़िमाद् द्विपलं पलम् ।
धान्यात् पञ्च घृतात् शुण्ठ्या कर्षं क्षीरं चतुर्गुणम् ॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति ।
योनि शूलं शिरः शूलं अर्शांसि विषमज्वरम् ॥
घृतानामौषधगणा य एते परिकीर्त्तिताः ।
ते चूर्णयोगानन्यस्थाः कषायांस्ते च गुल्मिनाम् ॥
कोलदाड़िमघर्माम्बु सुरामण्डाम्लकाञ्जिकैः ।
शूलानाहनुदः पेया वीजपूररसेन वा ॥
चूर्णानि मातुलुङ्गस्य भावितस्य रसेन वा ।
कुर्याद्वर्त्तीः सगुड़िका गुल्मा नाहार्त्ति शान्तये ॥

हिङ्गु त्रिकटुकां पाठां हपुषामभयां शटीम्।
अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसौ ॥
दाडिमं पुष्करं धान्यमजाजीं चित्रकं वचाम्।
द्वौ क्षारौ लवणे द्वे च चव्यं चैकत्र योजयेत् ॥
चूर्णमेतत्प्रयोक्तव्यमनुपानेष्वनत्ययम्।
प्राग्भक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥
पार्श्वहृद्वस्ति शूलेषु गुल्मे वातकफात्मके।
आनाहे मूत्रकृच्छ्रे वा शूले च गुदयोनिजे ॥
ग्रहण्यर्शो विकारेषु प्लीह्नि पाण्डामये रुचौ।
उरो विबन्धे कासे च, हिक्काश्वासे गलग्रहे ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा।
बहुशो गुलिकाः कार्याः कार्मुकाः स्युः ततोऽधिकम्
मातुलुङ्गरसो हिङ्गु दाडिमं विड़सैन्धवे।
सुरा मण्डेन पातव्यं वातगुल्मरुजापहम् ॥
नागरार्द्धपलं पिष्ट्वा द्वे पले लुञ्चितस्य च।
तिलस्यैकं गुड़पलं क्षीरेणोष्णेन वा पिबेत् ॥
वातगुल्ममुदावर्तं योनि शूलञ्च नाशयेत्।
पिबेदेरण्डकं तैलं वारुणी मण्डमिश्रितम् ॥
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः।
श्लेष्मण्यनुबले पूर्वं मतं पित्तानुगे परम् ॥
साधयेत् सिद्ध शुष्कस्य लशुनस्य चतुष्पलम्।
क्षीरे जलाष्टगुणिते क्षीरशेषञ्च ना पिबेत् ॥
वातगुल्ममुदावर्तं गृध्रसीं विषमज्वरम्।
हृद्रोगं विद्रधीं शोषं साधयत्याशु तत्पयः ॥

तैलं प्रसन्नाभागो मूत्रमारनालं यवाग्रजः ।
गुल्मजठरमानाहपीतमेकत्र साधयेत् ॥
पञ्चमूलकषायेण सक्षीरेण शिलाजतु ।
पिबेत्तस्य प्रयोगेण वातगुल्मात् प्रमुच्यते ॥
वाट्यं यूषेण पिप्पल्या मूलकानां रसेन वा ।
भुक्त्वा स्निग्धमुदावर्त्ताद्वातगुल्माद्विमुच्यते ॥
शूलानाहविबन्धार्त्तं स्वेदयेद्वातगुल्मिनम् ।
स्वेदैः स्वेदविधावुक्तैर्नाली प्रस्तरशङ्करैः ॥
वस्ति कर्म परं विद्यात् गुल्मघ्नं तद्धि मारुतम् ।
स्वे स्थाने प्रथमञ्जित्वा सद्यो गुल्म पोहति ॥
तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः ।
प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः ॥
गुल्मघ्ना विविधा दृष्टाः सिद्धाः सिद्धिषु वस्तयः ।
गुल्मघ्नानि च तैलानि वक्ष्यन्ते वातरोगिके: ॥
तानि मारुतगुल्मेषु पानाभ्यङ्गानुवासनैः ।
प्रयुक्तान्याशु सिद्धन्ति तैलं ह्यनिलजित्वरम् ॥
नीलिनी चूर्णसंयुक्तं पूर्वोक्तं घृतमेव वा ।
समलाय प्रलेयं स्याच्छोधिनं वातगुल्मिके ॥
नीलिनी त्रिवृता दन्ती पथ्या काम्पिल्लकैः सह ।
शोधनार्थं घृतं देयं सविडक्षारनागरम् ॥
नीलिनीं त्रिवृतां रास्नां बलां कटुकरोहिणीम् ।
पचेद्विडङ्गं व्याघ्रीञ्च पालिकानि जलाढके ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
दध्नः प्रस्थेन संयोज्य सुधा क्षीरपलेन च ॥

ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम्।
जीर्णे सम्यग्विरिक्तञ्च भोजयेद्रसभोजनम्॥
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान्।
श्वित्रं प्लीहानमुन्मादं घृतमेतदपोहति॥ नीलिन्याद्यं घृतं।
कुक्कुटाश्च मयूराश्च तित्तिरि क्रौञ्चवर्त्तकाः।
शालयो मदिरा सर्पिर्वातगुल्मभिषजितम्॥
हितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम्।
समण्डवारुणी पानं पक्वं वा धान्यकैर्जलम्॥
मन्देऽग्नौ वर्धते गुल्मो दीप्ते चाग्नौ प्रशाम्यति।
तस्मान्नानातिसौहित्यं कुर्य्यान्नाति विलङ्घितम्॥
सर्वत्र गुल्मे प्रथमे स्नेहस्वेदोपपादिते।
या क्रिया क्रियते सिद्धिं सा याति न विरूक्षिते॥
भिषगात्ययिकम्बुद्ध्वा पित्तगुल्ममुपाचरेत्।
वैरोचनिक सिद्धेन पयसा सर्पिषापि वा॥
रोहिणी कटुका निम्बा मधुक त्रिफलात्वचः।
कर्षिकास्त्रायमाणा च पटोला त्रिवृतापले॥
द्विपलञ्च मसूराणां साध्यमष्ट गुणेऽम्भसि।
घृताच्छेष ह्रतसमं सर्पिषश्च चतुष्पलम्॥
पिवेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः।
ज्वरस्तृष्णा च शूलञ्च भ्रममूर्च्छारुचिस्तथा॥ रोहिण्याद्यं घृतं
जले दशगुणे साध्यन्त्रायमाणा चतुष्पलम्।
पञ्चभाग स्थितं पूतं कल्कैः संयोज्य कार्षिकैः॥
रोहिणी कटुका मुस्ता त्रायमाणा दुरालभा।

कल्कैस्सामलकी वीरा जीवन्ती चन्दनोत्पलैः ॥
रसस्यामलकानाञ्च चीरस्य च घृतस्य च ।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥
पित्त रक्तभवं गुल्मं वीसर्पं पैत्तिकं ज्वरम् ।
हृद्रोगं कामलाकुष्ठं हन्यादेतद्घृतोत्तमम्॥ त्रायमाणाद्यं घृतं
रसेना मलकीचूर्णाद्घृत पादं विपाचयेत् ।
पथ्यापादम्मिदेत् सर्पिस्तत्सिद्धं पित्तगुल्मनुत् ॥आमलकाद्यं घृतं
द्राक्षामधुकं खर्जूरं विदारीं सशतावरीम् ।
परूषकाणि त्रिफलां साधयेत् पल संमिताम् ॥
जलाढके पाद शेषे रस मामलकस्य च ।
घृत मिक्षुरसं चीरमभया कल्कपादिकम् ॥
साधयेत्तद्घृतं सिद्धं शर्करा चौद्रपादिकम् ।
प्रयोगात् पित्तगुल्मघ्नं सर्वं पित्तविकारनुत् ॥ द्राक्षाद्यं घृतं ।
वृषं समूलमापोथ्य पचेदष्ट गुणे जले ।
शेषेऽष्ट भागे तस्यैव पुष्पकल्कं प्रदापयेत् ॥
तेन सिद्धं घृतं शीतं सक्षौद्रं पित्तगुल्मनुत् ।
रक्तपित्त ज्वरश्वास कास हृद्रोगनाशनम् ॥ वासा घृतं ।
द्विपलन्त्रायमाणाया जलद्विप्रस्थ साधितम् ।
अष्टभाग स्थितं पूतं कोष्णं चीरसमं पिबेत् ॥
पिबेदुपरि तस्योष्णं चीरमेव यथाबलम् ।
तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः॥ त्रायमाणाद्यं घृतं
द्राक्षा भया रसं गुल्मे पैत्तिके स गुडं पिबेत् ।
लिह्यात् कम्पिल्यकं वापि विरेकार्थं मधुद्रवम् ॥
शूल प्रशमनोऽभ्यङ्गः सर्पिषा पित्तगुल्मिनाम् ।

चन्दनाद्येन तैलेन तैलेन मधुकस्य वा ॥
ये च पित्तज्वरार्त्तानां सर्पिष्काः क्षीरवस्तयः ।
हितास्ते पित्तगुल्मिभ्यो वक्ष्यन्ते ये च सिद्धिषु ॥
शालयो जाङ्गलं मांसङ्गव्याजे पयसी घृतम् ।
खर्जूरामलकं द्राक्षा दाडिमं सपरूषकम् ॥
आहारार्थं प्रयोक्तव्यं पानार्थं सलिलं शृतम् ।
बला विदारीगन्धाद्यैः पित्तगुल्मचिकित्सितम् ॥
आमान्वये पित्तगुल्मे सामे वा कफवातिके ।
यवागूभिः खलैर्यूषैःसन्धुक्ष्योऽग्निर्विलङ्घिते ॥
समप्रकोपौ दोषाणां सर्वेषामग्निसंश्रितौ ।
तस्मादग्निं सदा रक्षेन्निदानानि च वर्जयेत् ॥
वमनार्हाय वमनं प्रदद्यात्कफगुल्मिने ।
स्निग्धस्विन्नशरीराय गुल्मे शैथिल्यमागते ॥
परिवेष्ट्य प्रदीप्तांस्तु बल्वजानथवा कुशान् ।
भिषक्कुम्भे समावाप्य गुल्मे घटमुखं क्षिपेत् ॥
सङ्गृहीतो यदा गुल्मस्तदा घटमथोद्धरेत् ।
वस्त्रान्तरं ततः कृत्वा भिन्द्याद्गुल्मं प्रमाणवित् ॥
विमार्गजं यदा दर्शैर्यथा लाभं प्रपीडनैः ।
मृद्नीयाद्गुल्ममेवैकं न त्वन्त्रहृदयं स्पृशेत् ॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य च ।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥
सव्योषक्षारलवणं दशमूलीशृतं घृतम् ।
कफगुल्मं जयत्याशु सहिङ्गुविडदाडिमम् ॥ दशमूलीघृतम्
भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम् ।

साध्यं विदारीस्वरसं चापोथ्य कलिकाकृते ॥
पाद शेषे रसे तस्मिन् पिप्पलीं नागरं वचाम् ।
विड़ङ्गं सैन्धवं हिङ्गु यावशूकं विड़ं शठीम् ॥
चित्रकं मधुकं रास्नामिद्धा कर्षसमं भिषक् ।
प्रस्थञ्च पयसः कृत्वा घृतप्रस्थं विपाचयेत् ॥
एतत् भल्लातक घृतं कफगुल्महरं परम् ।
प्लीहपाण्ड्वामय श्वासग्रहणी रोगकासनुत् ॥भल्लातकाद्यं घृतम्
पिप्पली पिप्पलीमूल चव्य चित्रक नागरैः ।
पलिकैः सयवक्षारैः घृतप्रस्थं विपाचयेत् ॥
क्षीरप्रस्थञ्च तत्सर्पिर्हन्ति गुल्मं कफात्मकम् ।
ग्रहणी पाण्डुरोगघ्नं प्लीहकास ज्वरापहम् ॥ पञ्चकोलघृतम्
त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितम् ।
जले चतुर्गुणे पक्त्वा चतुर्भागस्थितं रसम् ॥
सर्पिरेरण्डजं तैलं क्षीरञ्चैकत्र साधयेत् ।
स सिद्धो मिश्रक स्नेहः स क्षौद्रः कफवातनुत् ॥
कफ वात विबन्धेषु कुष्ठ प्लीहोदरेषु च ।
प्रयोज्यो मिश्रकःस्नेहो योनि शूलेषु चाधिकम् ॥मिश्रकःस्नेहः।
यदुक्तं वातगुल्मघ्नं स्रंसनकोलिनी घृतम् ।
द्विगुणं तद्विरेकार्थम्प्रयोज्यं कफगुल्मिनाम् ॥
सुधा क्षीरद्रवे चूर्णं त्रिवृतायाः सुभावितम् ।
कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥
जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैवच ॥
अष्टभागस्थितं तच्च रसं पूतमधिक्षिपेत् ।

दन्ती समगुड़ं पूतं चिपेत्तवा भयास ताः॥
तैलार्धं कुडवश्चैव त्रिवृतायाः चतुष्पलम्।
चूर्णितं पलमेकञ्च पिप्पली विश्वभेषजम्॥
तत्साध्यं लेहवच्छीते तस्मिंस्तैल समं मधु।
चिपेच्चूर्णं पलञ्चैकन्त्व गेला पत्रकेशरात्॥
ततो लेहपलं लीढ्वाजग्ध्वाचैकां हरीतकीम्।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोग मरोचकम्।
हृद्रोगं ग्रहणी दोषं कामलां विषमज्वरम्॥
कुष्ठं प्लीहानमानाहं एतान् घ्नन्तुरपसेवितः।
निरत्ययः क्रमश्चास्याद्रवो मांस रसोदनः॥
सिद्धाः सिद्धिषु वच्यन्ते निरूहा कफगुल्मिनाम्।
अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शं चिकित्सिते॥
यत् चूर्णगुटिका कार्य्या विहिता वातगुल्मिनाम्।
द्विगुणचार हिङ्ग्वम्ल वेतसास्ताः कफे मताः॥
य एव ग्रहणी दोषे चारास्ते कफगुल्मिनाम्।
सिद्धा निरत्ययाः शस्ता दाहस्त्वन्ते प्रशस्यते॥
प्रपुराणानि धान्यानि जाङ्गला मृगपक्षिणः।
कौलत्थो मुद्गयूषश्च पिप्पल्या नागरस्य च॥
शुष्कमूलक यूषश्च विल्वस्य वरुणस्य च।
चिरि विल्वाङ्कुराणाञ्च यवान्याः चित्रकस्य च॥
बीजपूरक हिङ्ग्वम्ल वेतस चार दाडिमैः।
तक्रेण तैल सर्पिर्भ्यां व्यञ्जनान्युप कल्पयेत्॥
पञ्चमूलीश्रितं तोयं पुराणं वारुणीरसम्॥

कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा
यवानी चूर्णितन्तक्रं विडेन लवणीकृतम् ।
पिबेत् सन्दीपनं वात कफमूत्रानुलोमनम् ॥
सञ्चितः क्रमशो गुल्मो महावास्तु परिग्रहः ।
कृतमूलः शिरानद्धो यदा कूर्म इवोन्नतः ॥
दौर्बल्या रुचि हृल्लास कासवम्यरति ज्वरैः ।
तृष्णा तन्द्रा प्रतिश्यायैर्युज्यते न स सिध्यति ॥
गृहीत्वा स ज्वरश्वासं वम्यतीसार पीड़ितम् ।
हृन्नाभि हस्तपादेषु शोफः कर्षति गुल्मिनम् ॥
रौधिरस्य तु गुल्मस्य गर्भकाल व्यतिक्रमे ।
स्निग्ध स्विन्नशरीराय दद्यात् स्नेह विरेचनम् ॥
पलाशक्षार पात्रे द्वे द्वे पात्रे तैल सर्पिषोः ।
गुल्मशैथिल्य जननीं पक्त्वा मात्रां प्रयोजयेत् ॥
प्रभिद्येत न यद्येवं दद्याद्योनि विरेचनम् ।
क्षारेण युक्तं पललं सुधा क्षीरेण वा पुनः ॥
ताभ्यां वा भावितान्दद्याद्योनौ कटुक मत्स्यकान् ।
वराह मत्स्यपित्ताभ्यां नक्तकान्वा सुभावितान् ॥
अधोहरैश्चोर्ध्वहरैर्भावितान् वा समाक्षिकान् ।
किण्वं वा सगुड़क्षारं दद्याद्योनि विशोधनम् ॥
रक्तपित्तहरं क्षारं लेहयेन्मधु सर्पिषा ।
लशुनं मदिरां तीक्ष्णं मत्स्यांश्चास्यै प्रदापयेत् ॥
वस्तिं स क्षारगोमूत्रं स क्षारन्दाश मूलिकम् ।
अदृश्यमाने रुधिरे दद्याद्गुल्मप्रभेदनम् ॥
प्रवर्तमाने रुधिरे दद्यान्मांस रसौदनम् ।

घृततैलेन चाभ्यङ्गं पानार्थं तरुणीं सुराम् ॥
रुधिरेऽति प्रवृत्ते तु रक्तपित्तहराः क्रियाः।
कार्य्या वातरुगार्त्तायाः सर्व्वा वातहराः पुनः ॥
घृततैलावसेकाश्च तित्तिरिश्चरणायुधः।
सुरा स मण्डा पूर्व्वञ्च पानमम्लस्य सर्पिषः ॥
अति प्रवृत्ते रुधिरे स तिक्तेनानुवासनमिति।
भवन्ति चात्र। सर्पिः स तिक्तं सिद्धं क्षीरं प्रस्नं समन्निरूहांश्च ॥
रक्तस्य चाव सेचन माश्वासन संशमन योगाः।
उपनाहनं स शस्त्रं पक्वस्याभ्यन्तर प्रभिन्नस्य ॥
संशोधन संशमने पित्तप्रभवस्य गुल्मस्य।
स्नेहः स्वेदो भेदोलङ्घन मुल्लेखनं विरेकाश्च ॥
सर्पिर्व्वस्तिगुडिकाः चूर्णमरिष्टाश्च स क्षाराः।
गुल्मस्यान्ते दाहः कफजस्याग्रे परीत रक्तस्य ॥
गुल्मस्य रौधिरस्य क्रियाक्रमः स्त्रीभवस्योक्तः।
पथ्यान्नपान सेवा हेतूनां वर्जनं यथास्वञ्च ॥
नित्यञ्चाग्नि समाधिः स्निग्धस्य च सर्व्वकर्म्माणि।
हेतुर्लिङ्गं सिद्धिः क्रियाक्रमः साध्यता न योगाश्च ॥
गुल्मचिकित्सित संग्रह एतत् वानग्निवेशस्येति।

इति गुल्मचिकित्सितं समाप्तम्।

---

षष्ठोऽध्यायः।

अथातः प्रमेह चिकित्सितं व्याख्यास्यामः।

निर्म्मोहमानानुशयो निरामः पुनर्व्वसुर्ज्ञान तपोविशालः।

कालेऽग्निवेशाय स हेतु लिङ्गान्युवाच मेहान् शमनञ्च तेषाम्।
आस्या सुखं स्वप्न सुखन्दधीनि ग्राम्यौदकानूपरसाः पयांसि।
नवान्नपानं गुड़वैकृतञ्च प्रमेह हेतुः कफकृच्च सर्वम् ॥
मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफोवस्तिगतं प्रदूष्य ।
करोति मेहान्समुदीर्णमुष्णै स्तान्येव पित्तं परिदूष्य भूयः ॥
क्षीणेषु दोषेष्ववकृष्य वस्तौ धातून् प्रमेहाननिलः करोति।
दोषो हि वस्तौ समुपेत्य मूत्रं सन्दूष्य मेहान् जनयेद्यथास्वम् ॥
साध्याःकफोत्था दश पित्तजाः षड्याप्यान साध्याःपवनाश्चतुष्काः
सम क्रियत्वाद्विषम क्रियत्वान्महात्ययत्वाच्च यथा क्रमन्ते ॥
कफः स पित्तः पवनश्च दोषा मेदोऽस्र शुक्राम्बु वसालसीकाः।
मज्जारसौजः पिशितञ्च दूष्यमप्रमेहिणां विंशतिरेव मेहाः ॥
जलोपमं चेक्षु रसोपमं वा घनक्वनं चोपरिविप्रसन्नम् ।
शुक्रं सशुक्रं शिशिरं शनैर्वा लालेव वा वालुकया युतं वा ॥
विद्यात् प्रमेहान् कफजान्दशैतान् चारोपमक्कालमथापि नीलम्
हारिद्रमाञ्जिष्ठ मथापि रक्तमेतान् प्रमेहान् षडुपन्ति पित्तात्
मज्जोजसा वा वसयान्वितं वा लसीकया वा सततं विबद्धम् ।
चतुर्विधं मूत्रयतीव वातात् शेषेषु धातुष्वपकर्षितेषु ॥
वर्णं रसं स्पर्शमथापि गन्धं यथास्व दोषम्भजते प्रमेहः ।
श्यावारुणो वातकृतःस शूलो मज्जादि षाड्गुण्यमुपेत्य साध्यः॥
स्वेदोऽङ्ग गन्धः शिथिलाङ्गता च शय्यासन स्वप्नसुखेरतिश्च ।
हृन्नेत्र जिह्वा श्रवणोपदेहो घनाङ्गता केशनखाति वृद्धिः ॥
शीतप्रियत्वङ्गलतालु शोषो माधुर्यमास्ये करपाद दाहः ।
भविष्यतो मेहगदस्य रूपं मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥
स्थूलः प्रमेही बलवानिहैकः कृशस्तथैकः परिदुर्बलश्च ।

सर्वं तु रूपं नत जातस्य कार्यं संशोधनं दोष बलाधिकस्य ॥
स्निग्धस्य योगा विविधाः प्रयोज्याः कल्पोपदिष्टामल शोधनाय।
ऊर्ध्वं तथा धश्च मलेऽपनीते मेहेषु सन्तर्पण मेव कार्यम् ॥
गुल्मः क्षयो मेहनवस्ति शूलं मूत्रग्रहश्चाप्यप तर्पणेन।
प्रमेहिणः स्युःपरितर्पणानि कार्याणि तस्मात्प्रसमीक्ष्य वह्निम् ॥
संशोधनं नार्हति यःप्रमेही तस्य क्रिया संशमनी प्रयोज्या ।
मन्थाःकषायाः यम चूर्णलेहाः प्रमेह शान्त्यै लघवश्च भक्ष्याः ॥
ये विष्किरा ये प्रतुदा विहङ्गा स्तेषां रसैर्जाङ्गलजै र्मनोज्ञैः ।
यवौदनं रुक्षमथापि वाट्यान्सक्त्यान्स शक्तूमपि चाप्य पूपान्॥
मुद्गादि यूषैरथ तिक्तशाकैः पुराणशाल्योदन माददीत ।
दन्तीङ्गुदी तैलयुतं प्रमेही तथा तसी सर्षपतैल युक्तम् ॥
सपिष्टकं स्यात्तृण धान्यमन्नं यव प्रधानस्तु भवेत् प्रमेही ।
यवस्य भक्ष्यान् विविधांस्तथा द्यात्कफप्रमेही मधु सम्प्रयुक्तान्॥
निशि स्थितानां त्रिफला कषायैःस्युस्तर्पणा क्षौद्रयुता यवानाम्।
तान् शीधु युक्तान् प्रपिबेत्प्रमेही प्रायोगिकान्मेहवधार्थमेव ॥
ये श्लेष्म मेहे विहिताः कषायास्तैर्भावितानाञ्च पृथग्यवानाम्।
शक्तून पूपान् सगुडान् सधानान् भक्ष्यांस्तथान्यान्विविधांश्च खादेत्
खराश्व गोर्धेनुक सम्भृतानां तथा यवानां विविधाश्च भक्ष्याः॥
देयास्तथा वेणु यवा यवानां कल्पेन गोधूम मयाश्च भक्ष्याः ॥
संशोधनो ल्लेखन लङ्घनानि काले प्रयुक्तानि कफ प्रमेहान् ।
जयन्ति पित्तप्रभवान् विरेकाः सन्तर्पणाः संशमनो विधिश्च ॥
दार्वीं सुराह्वं त्रिफलां समुस्तां कषाय मुत्क्वाथ्य पिबेत्प्रमेही
क्षौद्रेण युक्तामथवा हरिद्रां पिबेद्र सेना मलकी फलानाम् ॥
हरीतकी कट्फल मुस्तरोध्रम्पाठा विडङ्गार्जुन धन्वनश्च ।

इभे हरिद्रे तगरं विडङ्गं कदम्बशालार्जुन दीप्यकाश्च ॥
दार्वी विडङ्गं खदिरो धवश्च सुराह्व कुष्ठागुरु चन्दनानि ।
चव्याग्निमन्थौ त्रिफला सपाठा पाठाश्वदंष्ट्रे सहमूर्वया च ॥
यवान्युशीराण्यभया गुडूची जम्बूभया चित्रक सप्तपर्णाः ।
पादैः कषायाः कफमेहिनान्ते दशोपदिष्टा मधु सम्प्रयुक्ताः ॥
उशीरलोध्राञ्जन चन्दनानां उशीरमुस्तामलकाभयानाम् ।
पटोल निम्बामलका मृतानां मुस्ताभया पद्मक वृक्षकाणाम् ॥
लोध्राम्बुकालीयकधातकीनां निम्बार्जुनाम्रात निशोत्पलानाम्
शिरीष सर्जार्जुन केसराणां प्रियङ्गु पद्मोत्पल किंशुकानाम् ॥
अश्वत्थ पाठासन वेतसानां कटङ्कटेर्युत्पल मुस्तकानाम् ।
पैत्तेषु मेहेषु दशैव दृष्टाः पादैः कषाया मधु सम्प्रयुक्ताः ।
सर्वेषु मेहेषु मतौ तु पूर्वौ कषाय योगौ विहितास्तु सर्वे ॥
मन्थस्य पाने यव भावनायां स्युर्भोजने पानविधौ पृथक् च ।
सिद्धानि तैलानि घृतानि चैव देयानि मेहेष्वनिलात्मकेषु ॥
मेदः कफश्चैव कषाय योगैः स्नेहैश्च वायुः शममेति तेषाम् ।
कम्पिल्लक सप्तच्छद शालजानि वैभीत रौहीतक कौटजानि ॥
कपित्थ पुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात्कफपित्तमेही ।
पिबेद्रसेनामलकस्य वापि कल्कीकृतान्यत्र समानि काले ॥
जीर्णं च भुञ्जीत पुराणमन्नं मेही रसैर्जाङ्गलजैर्मनोज्ञैः ।
दृष्ट्वानुबन्धं पवनं कफस्य पित्तस्य वा स्नेह विधिर्विकल्प्यः ॥
तैलं कफे स्यात्स्वकषाय सिद्धं पित्ते घृतं पित्तहरैः कषायैः
त्रिकण्टकाश्मन्तक सोमवल्कैर्भल्लातकैः सातिविषैः सलोध्रैः ॥
वचा पटोलार्जुन निम्बमुस्तैर्हरिद्रया पद्मक दीप्यकैश्च ।
मञ्जिष्ठया वा गुरुचन्दनैश्च सर्वैः समस्तैः कफवातजेषु ॥

मेहेषु तैलं विपचेद्घृतं तु पैत्तेषु मिश्रं त्रिषु लक्षणेषु ।
फलत्रिकं दारु निशा विशालामुस्ता च निःक्वाथ्य निशा स कल्का ।
पिबेत् कषायं मधु सम्प्रयुक्तं सर्वं प्रमेहेषु समुत्त तेषु ।
लोध्रं शठीं पुष्करमूलमेलां मूर्वां विडङ्गं त्रिफलां यवानीम् ॥
चव्यं प्रियङ्गुं क्रमुकं विशालां किराततिक्तं कटु रोहिणीञ्च ॥
भार्गीनतं चित्रक पिप्पलीनां मूलं सकुष्ठातिविषं सपाठम् ॥
कलिङ्गकान् केशरमिन्द्र साह्वानखं स पत्रं मरिचं प्लवञ्च ।
द्रोणेऽम्भसः कर्षसमानि पक्वा पूते चतुर्भाग जलावशेषे ॥
रसेऽर्धभागं मधुनः प्रदाय पक्षान्निधेयो घृतभाजनस्थः ।
मध्वासवोऽयं कफपित्तमेहान् क्षिप्रं विहन्याद्द्विपल प्रयोगात् ।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या दोषं किलासं विविधञ्च कुष्ठम् ।
क्वाथः सएवाष्टपले च दन्त्या भल्लातकानाञ्च चतुष्पले स्यात् ॥
सितोपलात्वष्टपला विशेषः क्षौद्रञ्च तावत् पृथगासवौ तौ ।
सारोदकञ्चाथ कुशोदकं वा मधूदकं वा त्रिफला रसं वा ॥
शीधुं पिबेद्वा निगदं प्रमेही माध्वीकमग्र्यं चिरसं स्थितं वा ।
मांसानि शूल्यानि मृगद्विजानाञ्चादेद्यवानां विविधांश्च भक्ष्यान् ॥
संशोधनारिष्ट कषाय लेहैः सन्तर्पणोत्थः शमयेत् प्रमेहान् ।
भृष्टान्यवान् भक्षयतः प्रयोगाच्छुष्कांश्च शक्तून्न भवन्ति मेहाः ॥
श्वित्रञ्च कुष्ठञ्च कफञ्च कृच्छ्रं तथैव मुद्गामलक प्रयोगात् ।
सन्तर्पणोत्थेषु गदेषु योगा मेदस्विनां ये च मयोपदिष्टाः ॥
विरूक्षणार्थं कफपित्तजेषु सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः ।
व्यायाम योगैर्विविधैः प्रगाढैरुद्वर्तनैः स्नानजलावसेकैः ॥
सेव्यत्वगेला गुरुचन्दनाद्यैर्विलेपनैश्चाशु न सन्ति मेहाः । ]
क्लेदश्च मेदश्च कफश्च वृद्धः नाशं प्रयाति प्रशमोऽत्र तस्मात् ॥

वैद्येन मात्रां कफ पित्तजेषु मेहेषु कार्य्याण्य पतर्पणानि।
या वातमेहान् प्रतिपूर्वमुक्ता वातोल्वणानां विहिता क्रिया सा
वायुर्हि मेहेष्वति कर्षितानां कुपत्यसाध्यान् प्रति नास्ति चिन्ता
यैर्हेतुभिर्ये प्रभवन्ति मेहास्तेषु प्रमेहेषु न ते निषेव्याः॥
हेतो रसे वा विहितायथैव जातस्य रोगस्य भवेच्चिकित्सा।
हारिद्र वर्णं रुधिरञ्च मूत्रं विना प्रमेहस्य हि पूर्वरूपैः॥
यन्मूत्रयेत्तन्नवदेत् प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः।
दृष्ट्वा प्रमेहं मधुरं स पिच्छं मधूपमं स्याद्द्विविधोपचारः॥
क्षीणेषु दोषेष्व निलात्मकःस्यात्सन्तर्पणाद्वा कफ सम्भवःस्यात्
स पूर्वरूपाः कफपित्तमेहाः क्रमेण ये वात कृताश्च मेहाः॥
साध्या न ते पित्त कृतास्तु याप्याःसाध्यास्तु मेदो यदि न प्रदुष्टम्
जात प्रमेही मधु मेहिना वा न साध्यरोगःस हि वीजदोषात्
ये चापि केचित्कुलजा विकारा भवन्ति तांश्च प्रवदन्त्य साध्यान्॥
प्रमेहिणां याः पिडकामयोक्ता रोगाधिकारे पृथगेव सप्त।
ताःशल्य वृद्धिःकुशलैश्चिकित्स्याःशस्त्रेण संशोधन रोपणैश्चेति॥
भवतिचात्र। हेतुर्दोषा दूष्यं मेहानां साध्यतासु रूपञ्च।
मेही द्विविध स्त्रिविधमिति कुणप दोषाः॥
आद्या यवान्न विकृतिर्मन्था मेहापहाः कषायाश्च।
तैल घृतलेह योगा भक्ष्याः प्रवरा सवा सिद्धाः॥
व्यायामविधि र्विविधः स्नानान्युद्वर्तनानि गन्धाश्च।
मेहानां प्रशमार्थं चिकित्सिते दृष्टमेतावदिति॥

इति प्रमेह चिकित्सितं समाप्तम्।

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः ।

हेतुं लिङ्गं त्रिविधं कुष्ठानामाश्रयं प्रशमनञ्च ।
शृणुग्निवेश ! सम्यग्विशेषतः स्पर्शनघ्नानाम् ॥
विरोधीन्यन्नपानानि द्रव स्निग्ध गुरूणि च ।
भजता मागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥
व्यायाम मति सन्तापमति भुक्तानिषेविणाम् ।
शीतोष्ण लङ्घना हाराः क्रमं मुक्ता निषेविणाम् ॥
घर्मश्रम भयार्तानां द्रुतं शीताम्बु सेविनाम् ।
अजीर्णाध्य शिनाञ्चैव पञ्चकर्मा पचारिणाम् ॥
नवान्न दधिमत्स्याति लवणाम्लनिषेविणाम् ।
माषमूलक पिष्टान्न गुड़क्षीरतिलाशिनाम् ॥
व्यवायं वा वि जीर्णेऽन्ने निद्रां वा भजता दिवा ।
विप्रान् गुरून् धर्षयतां पापं वा कर्म कुर्वताम् ॥
वातादय स्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ।
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥
अतः कुष्ठा विजायन्ते सप्तचैकादशैव च ।
न चैक दोषजं किञ्चित्कुष्ठं स मुपलभ्यते ॥
स्पर्शोन्यत्वं स्वेदोलि नव वैवर्ण्यं मुन्नतिः ।
कोठानां लोमहर्षस्य कण्डूस्तोदः श्रमः क्लमः ॥
व्रणामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
दाहः सुप्ताङ्गता चेति कुष्ठलक्षण मग्रजमिति ॥

अत ऊर्ध्वमष्टादशानां कुष्ठानां कपालोदुम्बर मण्ड-
लर्ष जिह्व पुण्डरीक सिध्मकाकणकैक कुष्ठचर्मकिटि मंवि

पादिकालसक दद्रु चर्मदलपामा विस्फोटकशता रुविचर्चिकानां लक्षणान्युपदेक्ष्यामः।

कृष्णारुण कपालाभं यद्रूक्षं परुषन्तनु।
कापालन्तोद बहुलं तत् कुष्ठं विषमं स्मृतम्॥
कण्डूविदाहरुग्राग परीतं लोमपिञ्जरम्।
उदुम्बर फलाभासं कुष्ठमौदुम्बरं विदुः॥
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्न मण्डलम्।
कृच्छ्रमन्योन्य संसक्तं कुष्ठं मण्डलमुच्यते॥
यदृष्यजिह्वा संस्थाने ऋष्यजिह्वं तदुच्यते॥
सश्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम्।
सोत्सेधञ्च सदाहञ्च पुण्डरीकं तदुच्यते॥
श्वेतं ताम्रं तनुच यद्रजो घृष्टं विमुञ्चति।
अलाबुपुष्पवर्णं तत्सिध्मं प्रायेण चोरसि॥
यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम्।
त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिद्ध्यति॥ सप्तमहाकुष्ठानि

अस्वेदनं महा वास्तु यन्मत्स्य शकलोपमम्।
तदेक कुष्ठं चर्माख्यं बहलं हस्तिचर्मवत्॥
श्यावं किणखरस्पर्शं परुषं क्तिटिमं स्मृतम्।
वैपादिकं करे पादे स्फोटनं तीव्रवेदनम्॥
सकण्डूकैः सरागैश्च गण्डैरलसकं स्मृतम्।
सकण्डूरागपिडकं दद्रुमण्डलमुद्गतम्॥
रक्तं सकण्डू सस्फोटं सरुग्दलति चापि यत्।
तच्चर्मदलमाख्यातं संस्पर्शा सहमुच्यते।
पामाः श्वेतारुणाः श्यावाःपिडकाः कण्डुला भृशम्

श्वेताः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः।
रक्तं श्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम्॥
सकण्डूः पिडकाः श्यावा बहुस्रावा विचर्चिकाः।
वातेऽधिकतरे कुष्ठं कापालं मण्डलं कफे॥
पित्ते त्वौदुम्बरं विद्यात् काकणन्तु त्रिदोषजम्।
वातपित्ते श्लेष्मपित्ते वातश्लेष्मणि चाधिके॥
ऋष्यजिह्वं पुण्डरीकं सिध्मकुष्ठं च जायते।
चर्माख्यमेकं कुष्ठञ्च किटिमं सविपादिकम्॥
कुष्ठञ्चालसकं ज्ञेयं प्रायो वातकफाधिकम्।
दद्रूश्चर्मदलं पामा विस्फोटाश्च शतारुषः॥
पित्तश्लेष्माधिकाः प्रायः कफप्राया विचर्चिका।
सर्वं त्रिदोषजं कुष्ठं दोषाणाञ्च बलाबलम्॥
यथास्वैर्लक्षणैर्बुद्ध्वा कुष्ठानां क्रियते क्रिया।
दोषस्य यस्य पश्येत् कुष्ठेषु विशेषलिङ्गमुद्रिक्तम्।
तस्यैव शमं कुर्यात्ततः परञ्चानुबन्धस्य॥
कुष्ठविशेषैर्दोषाद्दोषविशेषैः पुनः कुष्ठानि।
ज्ञायन्ते तैर्हेतुर्हेतुस्तांश्च प्रकाशयति॥
रौक्ष्यं शोषस्तोदः शूलं सङ्कोचनं तथायासः।
पारुष्यं खरभावो हर्षः श्यावारुणत्वं च॥
कुष्ठेषु वातलिङ्गं दाहो रागः परिस्रावः पाकः।
विस्रो गन्धः क्लेदः तथाङ्गपतनञ्च पित्तकृतम्॥
श्वैत्यं शैत्यं कण्डूः स्थैर्यं सोत्सेधगौरवं स्नेहाः।
कुष्ठेषु तु कफलिङ्गं जन्तुभिरभिभक्षणं क्लेदः॥
सर्व्वैरेतैर्लिङ्गैर्युक्तं मतिमान् विवर्ज्जयेदबलम्।

तृष्णादाहपरीतं शान्ताग्निं जन्तुभिर्जग्धम् ॥
वातकफप्रबलं यद्यदेकदोषोल्वणं न तत्कृच्छ्रम् ।
कफपित्तवातपित्तप्रबलानि तु कृच्छ्र कुष्ठानि ॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्रे ॥
वमनविरेचन योगाः कल्पोक्ताःकुष्ठिनां प्रयोक्तव्याः।
प्रच्छेदमल्पे कुष्ठे मतं शिरा वेधनं महति च शस्तं ॥
बहुदोषःसंशोध्यःकुष्ठी बहुशोनुरक्षता प्राणान् ।
दोषे ह्यति मात्रहृते वायुर्हन्यादबलमाशु ॥
स्नेहस्य पानमिष्टं शुद्धे कोष्ठे प्रवाहिते रुधिरे ।
वायुर्हि शुद्धकोष्ठं कुष्ठिनमबलं विशति शीघ्रम् ॥
दोषोत्क्लिष्टे हृदये वम्यः कुष्ठेषु चोर्द्धभागेषु ।
कुटजफलमदनमधुकैः सपटोलैर्निम्बरसयुक्तैः ॥
शीतरसः पद्मरसो मधूनि मधुकञ्च वमनानि ।
कुष्ठेषु त्रिवृता दन्ती त्रिफला च विरेचने शस्ताः ॥
सौवीरकं तुषोदकमालोडनमासवांस्तु सिध्वादीन् ।
शंसन्त्यधोहराणां यथा विरेकः क्रमश्चेष्टः ॥
दार्वी बृहती सेव्यैः पटोलपिचुमर्दमदनकृतमालैः ।
सस्नेहैरास्थाप्यः कुष्ठी सकलिङ्गयवमुस्तैः ॥
वातोल्वणं विरिक्तं निरूढमनुवासनार्हमालक्ष्य ।
फलमधूकनिम्बकुटजैः सपटोलैः साधयेत् स्नेहम् ॥
दन्ती मधूकसैन्धवफणिज्जकाः पिप्पली करञ्जफलम् ।
नस्यं स्यात् सविडङ्गं क्रिमिकुष्ठकफप्रदोषघ्नम् ॥
वैरोचनिकैर्धूमैः श्लोकस्थानेरितैश्च शाम्यन्ति ।

क्रिमयः कुष्ठकिलासप्रयोजितं रक्तमाहस्याः ॥
स्थिरकठिनमण्डलानां स्विन्नानां प्रस्तरप्रणालीभिः।
कूर्चैर्विघट्टितानां रक्तोत्क्लेशोपनेतव्यः ॥
आनूपवारिजानां मांसानां पटोलैः सुखोष्णैश्च।
स्विन्नोत्सन्नं विलिखेत् कुष्ठं तीक्ष्णेन शस्त्रेण ॥
रुधिरागमार्थमथवा शृङ्गलाबूभि राहरेत रक्तम्।
प्रच्छितमल्पं कुष्ठं विरेचयेद्वा जलौकाभिः॥
ये लेपाः कुष्ठानां युज्यन्ते निःहृतासु दोषाणाम्।
संशोधिता शयानां सद्यः सिद्धिर्भवेत् तेषाम् ॥
येषु न शस्त्रं क्रमते स्पर्शेन्द्रिय नाशनानि यानि स्युः।
तेषु निपात्यः चारं रक्तं च दोषं च निःस्राव्य ॥
पाषाणकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च।
पीता गदस्य कार्यो विषैः प्रदेहो गदेषानु ॥
स्तब्धानि सुप्तसुप्तानि अस्वेदनकण्डुलानि कुष्ठानि।
कूर्चैर्दन्ती त्रिफला करवीरकरञ्जनिम्बकुटजानाम् ॥
जात्यर्कनिम्बकुटजैर्वा पत्रैः शस्त्रैः समुद्रफेनैर्वा।
घृष्टानि गोमयैर्वा ततः प्रलेपैः प्रदेह्यानि ॥
मारुतकफकुष्ठघ्नं कर्मोक्तं पित्तकुष्ठानां कार्यम्।
कफपित्तरक्तहरणं तिक्तकषायैःप्रशमनञ्च सर्पींषि ॥
तिक्तकानि च यच्चान्यद्रक्तपित्तनुत्कर्म।
बाह्याभ्यन्तरमग्र्यं तत्कार्यं पित्तकुष्ठानाम् ॥
दोषाधिक्य विभागादित्येतत् कर्म कुष्ठनुत् प्रोक्तम्।
वक्ष्यामि कुष्ठशमनं प्रायस्त्वग्दोषसामान्यात् ॥
दार्वी रसाञ्जनं वा गोमूत्रेण प्रबाधते कुष्ठम्।

अभया प्रयोजिता वा मांसव्योषगुड़तैलाः ॥
मूलं पटोलस्य तथा गवाक्षाः पृथक् पलांशं त्रिफलात्वचश्च ।
स्यात्त्रायमाणा कटुरोहिणी च भागार्द्धिका नागरपादयुक्ता ॥
पलं त्वेकं सह चूर्णितानां जले शृतं दोषहरं पिबेत्तत् ।
जीर्णे रसैर्धन्वमृगद्विजानां पुराणशाल्योदनमाददीत ॥
कुष्ठानि शोफं ग्रहणी प्रदोषं अर्शांसि कृच्छ्राणि हलीमकञ्च।
षड्रात्र योगेन निहन्तिचैव हृद्वस्ति शूलं विषम ज्वरञ्च ॥
मुस्तं व्योषं त्रिफला मञ्जिष्ठा दारु पञ्चमूले द्वे ।
सप्तच्छद निम्बत्वक्सविशालश्चित्रको मूर्वा ॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वंशम् ।
श्रेष्ठं कुष्ठनिवर्हणं एतत्प्रायोगिकं भक्ष्यम् ॥
श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणी प्रदोष मर्शांसि।
व्रधभगन्दर पिड़का कण्डूकोठांश्च विनिहन्ति ॥
खदिरसुरदारु सारं क्षपयित्वा तद्रसेन तोयार्थः ।
क्षौद्रप्रस्थे कार्यः कार्ये ते चाष्टपलिके च ॥
ततश्चाय चूर्णानामष्टपलं प्रक्षिपेत्तथा मूनि ।
त्रिफलात्वक्मरिचम्पलवङ्गनकञ्च कर्षांशम् ॥
मत्स्यण्डिका मधुसमा तन्मांसमायसे भाण्डे ।
मध्वासवमाचरतः कुष्ठकिलासे शमं याताः ॥
त्रिफला सवश्चगौडः सचित्रकः श्वित्ररोग कुष्ठघ्नः ।
क्रमुकदशमूलदन्ती वराङ्ग मधु योग संयुक्तः ॥
लघूनि चान्नानि हितानि विद्यात्कुष्ठेषु शाकानि च तिक्तकानि
भल्लातकैश्च त्रिफलैःसनिम्बैर्युक्तानि चान्नानि घृतानि चैव ॥
पुराणधान्यान्यथ जाङ्गलानि मांसानि मुद्गाश्च पटोलयुक्ताः।

शस्ता न गुर्वम्लपयोदधीनि नानूपमत्स्या न गुडास्तिलाश्च ॥
एला कुष्ठन्दार्व्वीशतपुष्पा चित्रकं विडङ्गञ्च।
कुष्ठलेपनमिष्टञ्चरसाञ्जनञ्चाभया चैव ॥
चित्रक मेलां त्रिवृतीं वृषकाकुरविन्दमर्क नागरकम्।
चूर्णीकृत्याष्टाहं भावितव्यम्यत्ताश्चम् ॥
क्षारेण गवां मूत्र स्रुतेन तेनास्य मण्डलान्याशु।
भिद्यन्ते च विशन्ति च लिप्तान्यर्काभि तप्तानि ॥
मांसीं मरिचं लवणं रजनीतगरं सुधा गृहधूमः।
मूत्रं पित्तं क्षारः पलाशः कुष्ठनुल्लेपः ॥
त्रपुसीसमयश्चूर्णं मण्डलनुत्चित्रकं बृहती।
गोधारसः स लवण दारु च मूत्रञ्च मण्डलनुत् ॥
कदलीपलाश पाटलिनिचुल क्षाराम्भसा प्रसन्नेन।
माषेषु तोय कार्यं कार्यंम्पिष्टे च किण्वे च ॥
नैमेचकः सुजातः किण्वैर्जनित प्रलेपनं शस्तम्।
मण्डल कुष्ठविनाशनं मातपसंस्थे क्रिमिघ्नश्च ॥
मुस्तं मदनं त्रिफलाःकरञ्ज आरग्वधःकलिङ्गयवाः।
दार्वी ससप्तपर्णा स्नानं सिद्धार्थकं नाम ॥
एष कषायो वमनं विरेचनं वर्णकस्तथोद्वर्षः।
त्वग्दोष कुष्ठशोफ प्रशाहनः पाण्डुरोगघ्नः ॥
कुष्ठं करञ्जबीजान्येडगजः कुष्ठसूदनोलेपः।
प्रपुन्नाडबीजसैन्धव रसाञ्जन कपित्थरोध्राश्च ॥
करवीरमूलकल्कःकुटजकरञ्जयोःफलत्वचन्दार्व्योः॥
सुमनः प्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥
रोध्रस्य धातकीनां वत्सक बीजस्य नक्तमालस्य।

कल्कश्च मालतीनां कुष्ठे सुहच्चैना लेपौ ॥
शिरीषोत्पलक पुष्पं कार्पास्या राजवृक्ष पत्राणि ।
पिष्टा च काचमाची चतुर्विधः कुष्ठनुल्लेपः ॥
दार्व्वीरसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य ।
आरग्वध वृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥
इति षट्कषाय योगा निर्दिष्टाः सप्तमश्चतिनि शस्य ।
स्नाने पाने च मतास्तथाष्टमश्चास्य सारस्य ॥
आलेपनं प्रघर्षणमवचूर्णनमेत एवच कषायाः ।
तैलघृत पाकयोगे चेष्यन्ते कुष्ठशान्त्यर्थम् ॥
त्रिफला निम्बपटोलमञ्जिष्ठा रोहिणीवचारजनी ।
एष कषायोऽभ्यस्तो हन्ति कफपित्तजं कुष्ठम् ॥
एतैरेव च सर्पिः सिद्धं वातोल्वणं जयति कुष्ठम् ।
एष च कल्पोद्दिष्टः खदिरासन दारु निम्बानाम् ॥
कुष्ठार्कतुत्थ कट्फल मूलकबीजानि रोहिणी कटुका ।
कुटजफलोत्पलमुस्तं बृहतीकरवीरकाशीशम् ॥
एडगज निम्बपाठा दुरालभारोचना विडङ्गञ्च ।
तिक्तेक्ष्वाकु बीजं कम्पिल्लक सर्षपा दार्व्वी ॥
एतैस्तैलं सिद्धं कुष्ठघ्नं योग एष वा लेपः ।
तन्मर्दनं प्रघर्षणमवचूर्णन मेष एवेष्टः ॥
श्वेतकरवीरकरसो गोमूत्रं चित्रको विडङ्गश्च ।
कुष्ठार्क मूलसर्षप शिग्रुत्वग्रोहिणी कटुका ॥
एतैस्तैलं साध्यं कल्कैः पादांशिकैर्गवां मूत्रम् ।
दत्त्वा तैल चतुर्गुणमभ्यङ्गः कुष्ठकण्डूघ्नः ॥
तिक्तेक्ष्वाकु बीजं द्वे तुल्ये रोचना हरिद्रे द्वे ।

बृहतीफलमेरण्डः सविशालः चित्रको मूर्वा ॥
कासी स हिङ्गुशिग्रू तुत्थञ्च सुरदारु तुम्बुरु विडङ्गम्।
लाङ्गलकी कुटजत्वक् कटुकाख्या रोहिणी चैव ॥
सर्षप कल्कै रेतैर्मूत्रे चतुर्गुणं साध्यम्।
कण्डूकुष्ठविनाशनमभ्यङ्गान्मारुतकफन्नं तैलम् ॥
कनकक्षीरीशैला भार्ङ्गी दन्ती फलानि मूलञ्च।
जाती फलानि प्रवालसर्षपलशुन विडङ्गं करञ्जत्वक् ॥
सप्तच्छदार्कपल्लवमूलत्वङ् निम्बचित्रकास्फोताः
गुञ्जैरण्डबृहती मूलकसुरसार्जकफलानि ॥
कुष्ठं पाठामुस्तं तुम्बुरुमूर्वा वचा सषड्ग्रन्था।
एडगजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः ॥
हरितालमर्वाक् पुष्पीतुत्थं कम्पिल्लको मृता सङ्गः।
सौराष्ट्रीका सीसं दार्वी त्वक् सर्जिका लवणम् ॥
कल्कैरेतैस्तैलं करवीरकमूलकपल्लवकषाये।
सार्षपमथ वा तैलं गोमूत्रचतुर्गुणं साध्यम् ॥
स्याप्यं कटुका लाबूनि तस्मिन् तेनास्य मण्डलान्याशु।
भिन्द्याद्भिषगभ्यङ्गात् क्रिमींश्च कण्डूं विनिहन्यात् कुष्ठम् ॥
तमालपत्रं मरिचं समनःशिलं स कासीसम्।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥
तेनालिप्तं सिध्मं सप्ताहाद्व्येति तिष्ठतो घर्मे।
मासान्तरं किलासं स्नानं मुक्त्वा विशुद्धतनोः सिद्धालेपः।
सर्षपकरञ्जकोशातकानि तैलान्यथेङ्गुदीनाञ्च ॥
कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरस्य। तैलानि।
जीवन्ती मञ्जिष्ठादार्वीकम्पिल्लकास्तथा तुत्थम् ॥

एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः चेप्यः ।
समधूच्छिष्टो विपादिका नश्यति व्याप्ता चर्मैककुष्ठम् ॥
किटिमं कुष्ठं ग्राम्यत्वलसकस्य विपादिकायाम् ।
किण्वं वराहरुधिरं पृथ्वीका सैन्धवश्च लेपःस्यात् ॥
लेपो योज्यः कुसुम्भकृषि कुष्ठघ्न मण्डलनुत् ।
पूतीकादारुजटिला पक्कसुराचोद्रमुद्गपर्ण्यौ च ॥
लेपः स काकणाखो मण्डलककुष्ठापहः सिद्धः । मण्डलकुष्ठे लेपः
चित्रकशोभाञ्जनकौ गुडूच्यपामार्गदेव दारूणि ।
खदिरो धवश्च लेपः श्यामादन्ती द्रवन्ती च ।
लाक्षारसाञ्जनैला पुनर्नवा चेति कुष्ठिनो लेपाः ॥
दधिमण्डयुताः सर्वे देयाः षण्मासकतकफघ्नाः ।
एडगजकुष्ठ सैन्धवसौवीरकसर्षपैः क्रिमिघ्नैश्च ॥
क्रिमिकुष्ठमण्डलाख्यं दद्रूकुष्ठञ्च शममुपैति ।
एडगजः सर्जरसो मूलकबीजञ्च सिध्मकुष्ठनाम् ॥
काञ्जिकयुक्तन्तु पृथक् मतमिदम् उद्वर्त्तनं क्रमशो लेपाः ।
वासा त्रिफलापाने स्नाने चोद्वर्त्तने प्रलेपे च ॥
बृहती सेव्यपटोलाः सशारिवा रोहिणी चैव ।
खदिरावघातककुभा रोहीतककुटजनिम्बाः ॥
सप्तच्छदकरवीराः शस्यन्ते स्नानपानेषु ।
जलवाप्यलोहकेसरपत्रप्लवचन्दनं मृणालानि ॥
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ।
यष्ट्याह्वरोध्रपद्मकपटोलपिचुमन्दचन्दनरसाश्च ॥
स्नाने पाने च हिताः सुशीतलाः पित्तकुष्ठिभ्यः ।
आलेपनं प्रियङ्गुहरेणुकावत्सकस्य च फलानि ॥

सातिविषा च सेव्या सचन्दना रोहिणी कटुका ।
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ॥
तैलैश्चन्दनमधुकप्रपुण्डरीकोत्पलयुतैश्चाभ्यङ्गः ।
क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके सचर्मदले ॥
शीताः प्रदेहसेकाव्यधनविरेचकौ घृतं तिक्तम् ।
खदिरघृतं निम्बघृतं दार्वीघृतमुत्तमं पटोलघृतम् ॥
कुष्ठेषु रक्तपित्तप्रबलेषु भिषग्जितं सिद्धम् ।
त्रिफलात्वचोऽर्द्धपलिकाःपटोलपत्रञ्च कार्षिकाःशेषाः ॥
कटुरोहिणी सनिम्बा यष्ट्याह्वा त्रायमाणा च ।
एष कषायः साध्यो दत्त्वा द्विपलं मसूराणाम् ॥
सलिलाढ़केऽष्टभागे शेषे पूतो रसो ग्राह्यः ।
ते च कषायाष्टपले चतुष्पलं सर्पिषश्च पक्तव्यम् ॥
यावत् स्यादष्टपलं शेषे पेयं ततः कोष्णम् ।
तद्वातपित्तकुष्ठं वीसर्पवातशोणितमप्रबलम् ॥
ज्वरदाहगुल्मविद्रधिं विभ्रमविस्फोटकान् हन्ति ।
निम्बपटोलदार्वीन्दुरालभां तिक्तरोहिणीं त्रिफलम् ॥
कुर्यादर्द्धपलांशं पर्पटकं त्रायमाणाञ्च ।
सलिलाढकसिद्धानां रसेऽष्टभागस्थितेक्षिपेत् पूते ॥
चन्दनकिराततिक्तकमागधिकास् त्रायमाणाञ्च ।
मुस्तं मुस्तकवीजं कल्की कत्वार्द्धकार्षिकान् भागान् ॥
नवसर्पिषश्च षट्पलमेतत् सिद्धं घृतं पेयम् ।
कुष्ठज्वरगुल्मार्शो ग्रहणी पाण्ड्वामय श्वयथु हारि ॥
वीसर्पपिडकपामा कण्डू मदगण्डनुत्तिक्तम् ।
सप्तच्छदं प्रतिविषं शम्पाकं तिक्तरोहिणीं पाठाम् ॥

मुस्तमुशीरं त्रिफलां पटोलपिचुमन्दपर्पटकम् ।
धन्वय वाशं चन्दनमुपकुल्यां पद्मकं रजन्यौ च ॥
षड्ग्रन्थां सविशालां शतावरीं शारिवे चोभे ।
वत्सकबीजं वाशां मूर्वाममृतं किराततिक्तकञ्च ॥
कल्कान् कुर्य्यान् मतिमान् यष्ट्याह्वां त्रायमाणाञ्च ।
कल्कस्य चतुर्भागो जलमष्टगुणं रसोऽमृतफलानाम् ॥
द्विगुणो घृतात् प्रदेयस्तत् सर्पिः पाययेत् सिद्धम् ।
कुष्ठानि रक्तपित्तप्रबलान्यर्शांसि रक्तवाहीनि ॥
वीसर्परक्तपित्तं वातासृक् पाण्डुरोगञ्च ।
विस्फोटकान् सपामानुन्मादं कामलां ज्वरं कण्डूम् ॥
हृद्रोगं गुल्मपिडका न सृग्दरो गण्डमालाञ्च ।
हन्यादेतत् सर्पिः पीतं काले यथाबलं सद्यः ॥
योगशतैरप्यजितान् महाविकारान् महातिक्तम् ।
दोषे हृतेऽपनीते रक्ते बाह्यान्तरकृते सम्यक् ॥
स्नेहे च कालयुक्ते न कुष्ठमनुवर्त्तते साध्यम् ।
अपतत् सुल्लसीका प्रस्रुतेषु गात्रेषु जन्तु दग्धेषु ॥
मूत्रं निम्बविडङ्गे स्नानं पानं प्रदेहश्च ।
वृषकुटजसप्तपर्णाः करवीरकरञ्जनिम्बाश्च ॥
स्नाने पाने लेपे क्रिमिकुष्ठनुदः सगोमूत्राः ।
पानाहारविधाने प्रसेचने दीपने प्रदेहे च ॥
क्रिमिनाशनं विडङ्गं विशिष्यते कुष्ठहृत् खदिरः ॥
एडगजः सविडङ्गो मूलान्यारग्वधस्य कुष्ठानाम् ।
उद्दालनं खदन्तागो खदराह्नोद्धृन्ताश्च ॥
एडगजः स विडङ्गो रजनीद्वय राजवृक्षमूलञ्च ।

कुष्ठोद्दालनमग्र्यं सपिप्पली पाकलं योज्यम् ॥
श्वित्राणां सविशेषं प्रयोक्तव्यं सर्वतो विशुद्धानाम् ।
श्वित्रे स्रंसनमग्र्यं मलपूरस्य दृश्यते सगुडः ॥
तं पीत्वा सुस्निग्धो यथाबलं सूर्यपादसन्तापम् ।
सेवेत विरिक्तश्च त्र्यहं पिपासुः पिबेत् पेयाम् ॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ।
स्फोटेषु विस्रुतेषु प्रातः प्रातः पिबेत् पक्षम् ॥
मलपूमशनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य ।
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥
यच्चान्यत् कुष्ठघ्नं श्वित्राणां सर्वमेवतच्छस्तम् ।
खदिरोदकसंयुक्तं खदिरोदकपानमग्र्यम् ॥
समनः शिलं विडङ्गं कासीसं रोचनां कनकपुष्पीम् ।
श्वित्राणां प्रशमार्थं ससैन्धवं लेपनं दद्यात् ॥
कदली क्षारयुतं वा खदिरास्थि दग्धं गवां रुधिरयुक्तम् ।
हस्ति मदाध्युषितं वा मालत्याः क्षारकक्षारम् ॥
नीलोत्पलं सकुष्ठं ससैन्धवं हस्ति मूत्रपिष्टं वा ।
मूलजलेपः फल्गुजलेपः पिष्टो गवां मूत्रे ॥
काकोदुम्बरिका वासावल्गुजचित्रको गवां मूत्रे ।
पिष्टा मनःशिला वा संयुक्ता बर्हिपित्तेन लेपः ॥
किलासहन्ता मूलान्यावल्गुजानि लाक्षा च ।
गोपित्तमञ्जने द्वे पिप्पल्यः काललोहरजः ॥
शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥

दारुणं वारुणं श्वित्रं किलासं नामभिस्त्रिभिः ।
विज्ञेयं त्रिविधं तच्च त्रिदोषं प्रायशश्च तत् ॥
दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते ।
श्वेत्यमेदःश्रितं श्वित्रं गुरुतयोत्तरोत्तरम् ॥
यत् परस्परतो भिन्नं बहु यद्रक्तलोम यत् ।
यच्च वर्षगणोत्पन्नं तच्छित्रं नैव सिध्यति ॥
दोषे युक्ते विदग्धे वा श्वित्रन्त्वचि तु जायते ।
ततस्ता परान् दूषयति नैव धातून् कुणाति च नानुकुङ्गतः॥
वचांस्य तथ्यानि कृतघ्नभावो निन्दा सुराणां गुरुधर्षणञ्च ।
पापक्रिया पूर्वकृतञ्च कर्म हेतुः किलासस्य विरोधि चान्नम् ॥ इति
भवति चात्र । हेतुद्र्व्यो लिङ्गं समासतो दोषनिर्देशात् ।
साध्यासाध्यं कृच्छ्रं कुष्ठापह्याश्च ये योगाः ॥
सिद्धाः किलासहेतुर्लिङ्गं गुरुलाघवं भ्रान्तिः ।
इति संग्रहः प्रणीतो महर्षिणा कुष्ठनाशनेऽध्याये ॥
स्मृति बुद्धि वर्द्धनार्थं शिष्याय हुताशवेशायेति ।
इति कुष्ठचिकित्सितम् ।

---

अष्टमोऽध्यायः ।

अथातो राजयक्ष्मचिकित्सितं व्याख्यास्यामः ।

दिवौकसां कथयता ऋषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥

रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात्॥
दुहितॄणामसम्भोगात् शेषाणाञ्च प्रजापतेः।
क्रोधो निःश्वासरूपेण मूर्तिमान्निःसृतो मुखात्॥
प्रजापतिर्हि दुहितॄरष्टाविंशतिरंशुमान्।
भार्यार्थं प्रतिजग्राह न च सर्वास्ववर्त्तत॥
गुरुणा तमवध्यातं भार्यास्वसमवर्त्तिनम्।
रजोऽन्धमवलं ह्रीणं यक्ष्मा शशिनमाविशत्॥
सोऽभिभूतोऽतिगुरुणा गुरुक्रोधेन निष्प्रभः।
देवदेवर्षिसहितो जगाम शरणं गुरुम्॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः।
प्रसादं कृतवान् सोमस्ततोऽश्विभ्यां चिकित्सितः॥
स विमुक्तग्रहश्चन्द्रो विरराज विशेषतः।
तेजसा वर्द्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च॥
क्रोधो यक्ष्मा ज्वरो रोग एकोऽर्थो दुःखसंज्ञितः।
यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो मतः॥
स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं लोकमागतः।
लब्ध्वा चतुर्विधं हेतुं समाविशति मानवान्॥
अयथा बलमारम्भं वेगसन्धारणक्षयम्।
यक्ष्मणः कारणं विद्यात् चतुर्थं विषमाशनम्॥
युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः
पतनैरभिघातैर्वा साहसैर्वा तथापरैः॥
अयथा बलमारब्धैर्जन्तोरुरसि विक्षते।
वायुः प्रकुपितो दोषावुदीर्य्योभौ विधावति॥

सशिराः स्वः शिरःशूलं करोति मलमाश्रितः ।
कण्ठोद्ध्वंसञ्च कासञ्च स्वरभेदमरोचकम् ॥
पार्श्वशूलञ्च पार्श्वस्थो वर्चोभेदं गुदे स्थितः ।
जृम्भां ज्वरं च सन्धिस्थ उरस्थोरसो रुजम् ॥
क्षणनाच्चोरसो रक्तं कासमानः कफानुगम् ।
जर्जरेणोरसा क्षिप्रमुरःशूली निरस्यति ॥
इति साहसिकं यक्ष्मा रूपैरेतैः प्रपद्यते ।
एकादशभिरालक्ष्यो भजेत्तस्मान्न साहसम् ॥
ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् ।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः ॥
तदा वेगप्रतीघातात् कफपित्ते समीरयन् ।
ऊर्द्ध्वं तिर्य्यगधः कुर्य्याद्विकारान् कुपितोऽनिलः ॥
प्रतिश्यायञ्च कासञ्च स्वरभेदमरोचकम् ।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्द्दनम् ॥
अङ्गमर्द्दं मुहुश्छर्द्दिं वर्चोभेदं त्रिलक्षणम् ।
रूपाण्येकादशैतानि यक्ष्मा यैरुच्यते महान् ॥
ईर्ष्योत्कण्ठाभयत्रासक्रोधशोकातिकर्षणात् ।
व्यवायानशनाभ्याञ्च शुक्रमोजश्च क्षीयते ॥
ततः स्नेहक्षयाद्वायुर्वृद्धो दोषानुदीरयन् ।
प्रतिश्यायं ज्वरं कासमङ्गमर्द्दं शिरोरुजम् ॥
श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम् ।
करोति चांससन्तापमेकादशमिहाकृत् ॥
लिङ्गान्यावेदयन्त्येतानेकादश महागदम् ।
संप्राप्तं राजयक्ष्माणं क्षयात् प्राणक्षयप्रदम् ॥

विविधान्यन्नपानानि वैषम्येण समश्नतः ।
जनयन्त्या मयान् घोरान् विषमा मारुतादयः ॥
स्रोतांसि रुधिरादीनां वैषम्याद्विषमं गताः ।
यदा रोगाय कल्पन्ते पुष्यन्ति च न धातवः ॥
प्रतिश्यायं प्रसेकञ्च कासं छर्दिमरोचकम् ।
ज्वरं अंसाभितापञ्च छर्दनं रुधिरस्य च ॥
पार्श्वशूलं शिरःशूलं स्वरभेदमथापि वा ।
कफपित्तानिलकृतं लिङ्गं विद्याद्यथाक्रमम् ॥
इति व्याधिसमूहस्य रोगराजस्य हेतुजम् ।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्विधः ॥
पूर्वरूपं प्रतिश्यायो दौर्बल्यं दोषदर्शनम् ।
अदोषेष्वपि भावेषु काये बीभत्सदर्शनम् ॥
घृणित्वमश्नतश्चापि बलमांसपरिक्षयः ।
स्त्रीमद्यमांसप्रियता प्रियता चावगुण्ठने ॥
मक्षिकाघुणकेशानां नखानाञ्चाभिवर्द्धनम् ।
पतत्रिभिः पतङ्गैश्च श्वापदैश्चाभिधर्षणम् ॥
स्वप्ने केशास्थिराशीनां भस्मनश्चाधिरोहणम् ।
जलाशयानां शैलानां वनानां ज्योतिषामपि ॥
शुष्यतां क्षीयमाणानां पततां यच्च दर्शनम् ।
प्राग्रूपं बहुरूपस्य तज्ज्ञेयं राजयक्ष्मणः ॥
रूपं त्वस्य यथोद्दिष्टं परं शृणु सभेषजम् ।
यथाग्निनोष्मणा पाकं शरीरा यान्ति धातवः ॥
स्रोतसा च यथास्वेन धातुः पुष्यति धातुना ।
स्रोतसां सन्निरोधाच्च रक्तादीनाञ्च संक्षयात् ॥

धातूष्मणां चापचयाद्राजयक्ष्मा प्रवर्तते ।
तस्मिन् काले पचत्यग्निर्यदन्नं कोष्ठमाश्रितम् ॥
मलीभवति तत्प्रायः कल्प्यते किञ्चिदोजसे ।
तस्मात् पुरीषं संरक्ष्यं विशेषाद्राजयक्ष्मिणः ॥
सर्वधातुक्षयार्त्तस्य बलं तस्य हि विड्बलम् ।
रसः स्रोतःसु रुद्धेषु स्वस्थानस्थो विदह्यते ॥
स ऊर्द्ध्वं कासवेगेन बहुरूपः प्रवर्त्तते ।
जायन्ते व्याधयश्चातः षडेकादश वा पुनः ॥
येषां संघातयोगेन राजयक्ष्मेति कथ्यते ।
कासोऽंसतापो वैस्वर्यं ज्वरः पार्श्वशिरोरुजौ ॥
शोणितश्लेष्मणो छर्दिः श्वासः कोष्ठामयोऽरुचिः ।
रूपाण्येकादशैतानि यक्ष्मिणः षडिमानि वा ॥
कासो ज्वरः पार्श्वशूलं स्वरवर्चोगदोऽरुचिः ।
सर्वैरर्द्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षये ॥
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ।
घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा ॥
मारुताघ्रातशिरसो मारुतं श्यायते प्रति ।
प्रतिश्यायस्ततो रोगो जायते देहकर्षणः ॥
तस्य रूपं शिरःशूलं गौरवं घ्राणविप्लवः ।
ज्वरः कासः कफोत्क्लेशः स्वरभेदोऽरुचिः क्लमः ॥
इन्द्रियाणामसामर्थ्यं यक्ष्मा चातः प्रवर्त्तते ।
पिच्छिलं बहलं विस्रं हरितं श्वेतपीतकम् ॥
कासमानो रसं यक्ष्मी निष्ठीवति कफानुगम् ।
अंसपार्श्वाभितापश्च तापः पादकरस्य च ॥

ज्वरः श्वासोऽरुचिश्चेति लक्षणं राजयक्ष्मणः।
वातात् पित्तात् कफात् रक्तात् कासवेगात् सपीनसात्॥
स्वरभेदो भवात् वातात् रूक्षः क्षामश्चल स्वरः।
तालु कण्ठपरिप्लोषः पित्तात्‌वक्तुं नसूयते॥
कफात् मन्दो विबद्धश्च स्वरः खुरखुरायते।
सक्तो रक्तविबन्धत्वात् स्वरः कृच्छ्रात् प्रवर्तते।
कासातिवेगात् कषणः पीनसात् कफवातिकः॥
पार्श्वशूलं त्वनियतं संकोचायाम लक्षणम्।
शिरः शूलं ससन्तापं यक्ष्मिणः स्यात् सगौरवम्॥
अत्यभिष्यन्ददेहस्य यक्ष्मिणो विषमाशनात्।
कण्टात् प्रवर्तते रक्तं श्लेष्मा चोत्क्लिष्टसञ्चितः।
रक्तं विबद्धमार्गत्वादुरसः कासमृच्छति॥
दोषैरुपहते चाग्नौ सपिच्छमभि सार्यते।
पृथग्दोषैः समस्तैर्वा जिह्वा हृदय संश्रिते॥
जायतेऽरुचिराहारैर्दुष्टैरर्थैश्च मानसैः।
कषायतिक्तमधुरैर्विद्यात् मुखरसैः क्रमात्॥
वाताद्यैररुचिं जातां मानसीं दोषदर्शनात्।
अरोचकात् श्वासवेगाद्दोषोत्क्लेशाद्भयादपि॥
छर्दिर्या सर्वविकाराणां अन्येषामप्युपद्रवः।
सर्वस्त्रिदोषजो यक्ष्मा दोषाणान्तु बलाबलम्॥
परीक्ष्यावस्थितं वैद्यः शोषिणं समुपाचरेत्।
प्रतिश्याये शिरः शूले कासे श्वासे स्वरक्षये॥
पार्श्वशूले च विविधाः क्रियाः साधारणीः शृणु।
पीनसे स्वेदमभ्यङ्गं धूममालेपनानि च॥

परिषेकावगाहांश्च सावकं बाह्यमेव च ।
लवणाम्लकटूष्णांश्च रसान् स्नेहोपसंहितान् ॥
लावतित्तिरिदक्षाणां वर्त्तकानाञ्च कल्पयेत् ।
स पिप्पलीकं सयवं सकुलत्थं सनागरम् ॥
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ।
तेन षड्विनिवर्त्तन्ते विकाराः पीनसादयः ॥
मूलकानां कुलत्थानां यूषैर्वा सूपकल्पितैः ।
यवगोधूमशाल्यन्नैर्यथासात्म्यमुपाचरेत् ॥
पिबेत् प्रसादं वारुण्या जलं वा पाञ्चमूलिकम् ।
धान्यनागरसिद्धं वा तामलक्याथ वा शृतम् ॥
पर्णिनीभिश्चतसृभिस्तेन चान्नानि कल्पयेत् ।
कृशरोत्कारिका माषकुलत्थयवपायसैः ॥
सङ्करस्वेदविधिना कण्ठं पार्श्वमुरः शिरः ।
स्वेदयेत् पत्रभङ्गेन शिरश्च परिषेचयेत् ॥
बला गुडूची मधुकशृतैर्वा वारिभिः सुखैः ।
वस्तमत्स्यशिरोभिर्वा नाडीस्वेदैः प्रयोजयेत् ॥
कण्ठे शिरसि पार्श्वे च पयोभिर्वा सवातिकैः ।
औदकानूपमांसानि सलिलं पाञ्चमूलिकम् ॥
सस्नेहं सारनालं वा नाडीस्वेदं प्रयोजयेत् ।
जीवन्त्याः शतपुष्पाया बलाया मधुकस्य च ॥
वचाया वेशवारस्य विदार्या मूलकस्य च ।
औदकानूपमांसानामुपनाहाय संस्कृताः ॥
प्रयुक्ते च ततः स्नेहाः शिरःपार्श्वांसशूलिनाम् ।
शतपुष्पा समधुकं कुष्ठं तगरचन्दनम् ॥

आलेपनं स्यात् सघृतं शिरःपार्श्वांसशूलनुत्।
बला रास्ना तिलाः सर्पिर्मधुकं नीलमुत्पलम्॥
पलं कषा देवदारुचन्दनं केशरं घृतम्।
वीराबला विदारी च कृष्णगन्धा पुनर्नवा॥
शतावरी पयस्या च कत्तृणं मधुकं घृतम्।
चत्वार एते श्लोकार्धैः प्रदेहाः परिकीर्तिताः॥
शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनाम्।
नावनं धूमपानानि स्नेहाश्चोत्तरभक्तिकाः॥
तैलान्यभ्यङ्गयोगानि वस्तिकर्म तथा परम्।
जलौकोलावुशृङ्गैर्वा प्रदुष्टं व्यधनेन वा॥
शिरःपार्श्वांसशूलेषु रुधिरं तस्य निर्हरेत्॥
प्रदेहः सघृतश्चेष्टः पद्मकोशीरचन्दनैः॥
दूर्वा मधुकमञ्जिष्ठा केशरैर्वा घृताप्लुतैः।
प्रपुण्डरीकनिर्गुण्डी पद्मकेशरमुत्पलम्॥
कशेरुका पयस्या च ससर्पिष्कं प्रलेपनम्।
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा॥
अभ्यङ्गः सर्पिषा सेकः शस्तश्च मधुकाम्बुना।
माहेन्द्रेण सुशीतेन चन्दनादिशृतेन वा॥
परिषेकः प्रयोक्तव्य इति संशमनी क्रिया।
दोषाधिकानां वमनं शस्यते सविरेचनम्॥
स्नेहस्वेदोपपन्नानां सस्नेहं यच्च कर्षणम्।
क्षामो मुञ्चति गात्राणि पुरीषस्रंसनादपि॥
अन्नलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते॥
दोषात् संवृद्धकोपानां कासे श्वासे स्वरक्षये॥

शिरः पार्श्वांस शूलेषु विहानेतान् प्रयोजयेत् ।
बला विदारिगन्धाद्यैर्विदार्या मधुकेन वा ॥
सिद्धं सलवणं सर्पिर्नस्यं स्यात् स्वर्य्यमुत्तमम् ।
प्रपुण्डरीकं मधुकं पिप्पल्यो बृहती बला
क्षीरं सर्पिश्च तत्सिद्धं स्वर्यं स्यान्नावनं परम् ।
शिरः पार्श्वांस शूलघ्नं कासश्वासनिवर्हणम् ॥
प्रयुज्यमानं बहुशो घृतं चोत्तरभक्तिकम् ।
दशमूलेन पयसा सिद्धं मांसरसेन च ॥
बला गर्भं घृतं सद्यो रोगानेतान् प्रबाधते ।
भक्तस्योपरि मध्ये वा यथाग्नि प्रविचारितम् ॥
रास्ना घृतं वा सक्षीरं सक्षीरं वा बला घृतम्
लेहान् कासापहान् सर्वान् श्वासहिक्का निवर्हणान्
शिरःपार्श्वांस शूलघ्नान् स्वे हांश्चातः परं शृणु ।
घृतं खर्जूर मृद्वीका शर्करा क्षौद्रसंयुतम् ॥
सपिप्पलीकं वैस्वर्य्यकास श्वासनिवर्हणम् ।
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ॥
सपिप्पलीकं सक्षौद्रन्तत्परं स्वरबोधनम् ।
शिरः पार्श्वांस शूलघ्नं कासश्वासज्वरापहम् ॥
पञ्चभिः पञ्चमूलैर्वा शृतायदुदियाद्घृतम् ।
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ॥
सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः सप्तकं बलम् ।
खर्जूरं पिप्पली द्राक्षा पथ्या शृङ्गी दुरालभा ॥
त्रिफला पिप्पली मुस्तं शृङ्गाटी गुडशर्करा ।
वीरा शठी पुष्कराख्यं सुरसः शर्करा गुडः ॥

नागरं चित्रको लाजाः पिप्पल्यामलकं गुड़ः।
श्लोकार्द्धविहितानेतान् लिह्यात्का मधु सर्पिषा॥
कासश्वासापहान् सर्व्वान् पार्श्वशूलापहांस्तथा।
सितोपलान्तु गाक्षीरीं पिप्पलीं बहुलां त्वचम्॥
अन्त्यादूर्द्धं द्विगुणितं लेहयेन्मधु सर्पिषा।
चूर्णितं प्राशयेद्वा तत् श्वासकासकफातुरम्॥
सुप्तजिह्वा रोचकिनं अल्पाग्निं पार्श्वशूलिनम्।
हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्द्धगे॥
वासासर्पिः शतावर्य्याः सिद्धं वा परमं हितम्।
दुरालभां श्वदंष्ट्राञ्च चतस्रः पर्णिनीर्बलाम्॥
भागान् पलोन्मितान् कृत्वा पलं पर्पटकस्य च।
पचेद्दशगुणे तोये दशभागावशेषिते॥
रसे सुपूते द्रव्याणामेषां कल्कान् समापयेत्।
शठ्याः पुष्करमूलस्य पिप्पली त्रायमाणयोः॥
तामलक्याः किराततानां तिक्तस्य कुटजस्य च।
फलानां शारिवायाश्च सुपिष्टान् कर्षं सम्मितान्॥
ततस्तेन घृतप्रस्थं क्षीरद्विगुणितं पचेत्।
ज्वराच्छर्दिरतीसार मेतान् सर्पिरपोहति॥
जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शटीं पुष्करमूलञ्च व्याघ्रीन्तामलकीम्बलाम्॥
नीलोत्पलं तामलकीं त्रायमाणां त्रिकण्टकम्।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत्॥
एतद्व्याधि समूहस्य समुत्थं राजयक्ष्मणः।
रूपमेकादशविधं सर्पिरेकं व्यपोहति॥

बलां स्थिरां पृश्निपर्णीं बृहतीं सनिदिग्धिकाम् ।
साधयित्वा रसे तस्मिन् पयो गव्यं सनागरम् ॥
द्राक्षा खर्जूरसर्पिर्भिः पिप्पल्या च श्रुतं सह ।
सक्षौद्रं ज्वर कासघ्नं स्वर्यञ्चैतत् प्रयोजयेत् ॥
आजस्य पयसश्चैव प्रयोगो जाङ्गला रसाः ।
यूषार्थे चणका मुद्गा मकुष्ठ श्चोपकल्पिताः ॥
ज्वराणां शमने योगः पूर्वमुक्तः क्रियाविधिः ।
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते ॥
कफप्रसेके बलवान् श्लैष्मिकः छर्दयेन्नरः ।
पयसा फलयुक्तेन मधुरेण रसेन वा ॥
सर्पिष्मत्या यवाग्वा वा वमनीयोप सिद्धया ।
वमितोऽद्यात् लघून्नञ्च काले सदीपनम् ॥
यव गोधूममाध्वीक शीध्वरिष्ट सुरासवान् ।
जाङ्गलानि च शूल्यानि सेवमानः कफञ्जयेत् ॥
श्लेष्मणोऽतिप्रसेके तु वायुः श्लेष्माणमस्यति ।
कफप्रसेकन्तं विद्वान् स्निग्धोष्णेनैव निर्जयेत् ॥
क्रिया कफप्रसेकेन याम्यांसेव प्रशस्यते ।
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥
प्रायेणोपहताग्नित्वात्सपिच्छमति सर्यते ।
प्राप्नोत्यास्यस्य वैरस्यं न चान्नमभिनन्दति ॥
तस्याग्नि दीपनाद्योगानतीसार निवर्हणान् ।
वक्त्रशुद्धिकरान् कुर्यादरुचि प्रतिबाधकान् ॥
स नागरानिन्द्रयवान् पिबेद्वा तण्डुलाम्बुना ।
सिद्धां यवा गूञ्जीर्णे च चाङ्गेरीतक्र दाडिमैः ॥

पाठाम्बिल्वं यवानीं च पातव्यं तक्रसंयुतम् ॥
दुरालभां शृङ्गवेरं पाठाञ्च सुरया सह।
जाम्ब्वाम्र बिल्व मध्यञ्च सकपित्थं सनागरम् ॥
पेया मण्डेन पातव्य मतीसार निवृत्तये।
एतानेव च योगां स्त्रीन् पाठादीन् कारयेत् खडान् ॥
ससूपधान्यान् सस्नेहान् साम्लान् संग्रहणान् परान्।
वेतसार्जुन जम्बूनां मृणाली कृष्णगन्धयोः ॥
श्रीपर्ण्या मदयन्त्याश्च यूथिकायाश्च पल्लवान्।
मातुलुङ्गस्य धातक्या दाड़िमस्य च कारयेत् ॥
स्नेहाम्ल लवणोपेतान् ससर्पिष्कान् स दाड़िमान्।
मांसानां लघुपाकानां रसाः सांग्राहिकैर्युताः ॥
व्यञ्जनार्थं प्रशस्यन्ते भोजनार्थं रक्तशालयः।
स्थिरादि पञ्चमूलेन पाने शस्तं शृतञ्जलम् ॥
तक्रं सुरा सचुक्रीका दाड़िमस्याथवा रसः।
दीपनं ग्राहि निर्दिष्टं भेषजं भिन्न वर्चसे ॥
वरं मुखस्य वैरस्य नाशनं रोचनं शृणु।
द्वौकालौ दन्त पवनं भक्षयेन् मुखधावनैः ॥
तद्वत् प्रक्षालये दास्यं धारयेत्कवल ग्रहान्।
पिबेद्धूमन्ततो भृष्टमद्याद्दीपन रोचनम् ॥
भेषजं पानमन्नञ्च हितमिष्टोपकल्पितम्।
त्वङ्मुस्तमेला धान्यानि मुस्त मामलकन्त्वचम् ॥
त्वचोदार्व्या यवानी च पिप्पल्यस्तेज वत्यपि।
यवानीं तिन्तिड़ीकञ्च पञ्चैते मुखधावनाः ॥

गुलिका धारयेदास्ये चूर्णैर्वा शोधयेन्मुखम् ।
एषा मातुलुङ्गिकानां वा धारयेत्कवलग्रहान् ॥
सुरामाध्वीकशीधूनां तैलस्य मधुसर्पिषोः ।
कवलान् धारयेदिष्टान् क्षीरस्येक्षुरसस्य च ॥
यवानी तिन्तिडीकञ्च नागरं साम्लवेतसम् ।
दाडिमम्बदरं चाम्लं कार्षिकानुपकल्पयेत् ॥
धान्यसौवर्च्चलाजाजीवराङ्गञ्चार्द्धकार्षिकम् ।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च ॥
शर्कारायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥
तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्धभागिके ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पाण्डुग्रहणीदोषशोषप्लीहज्वरापहम् ।
वम्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥
कल्पयेद्गुटिकाश्चैव चूर्णं पक्त्वा सितोपलैः ।
गुटिका ह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः ॥
शुष्यते क्षीणमांसाय कल्पितानि विधानवत् ।
दद्यान्मांसादमांसानि बृंहणानि विशेषतः ॥
शोषिणे बार्हिणं दद्याद्बर्हिशब्देन चापरान् ।
गृध्रानुलूकान् चासांश्च विधिवत् सूपकल्पितान् ॥

काकांस्तित्तिरिशब्देन मत्स्यशब्देन चोरगान् ।
भृष्टान्मत्स्यान्त्रशब्देन दद्याद्गण्डूपदानपि ॥
लोमशान् स्थूलनकुलान् बिड़ालांश्चोपकल्पितान् ।
शृगालशावांश्च भिषक् शशशब्देन दापयेत् ॥
सिंहानृक्षांस्तरक्षूंश्च व्याघ्रानेवं विधांस्तथा ।
मांसादान् मृगशब्देन दद्यान्मांसाभिवृद्धये ॥
मांसेनोपचिताङ्गानां मांसं मांसकरं परम् ।
तीक्ष्णोष्णं लघुशोधित्वाद्विशेषान् मृगपक्षिणाम् ॥
मांसानि यान्यनभ्यासादनिष्टानि प्रयोजयेत् ।
तेषूपधा सुखं भोक्तुं तथा शक्यानि तानि हि ॥
जानन् जुगुप्सन्नैवाद्याज्जग्धं वा पुनरुल्लिखेत् ।
तस्मात् छद्मोपसिद्धानि मांसान्येतानि दापयेत् ॥
वर्हितित्तिरिदक्षाणां हंसानां शूकरोष्ट्रयोः ।
खरगोमहिषाणाञ्च मांसं मांसकरं परम् ।
योनिरष्टविधा चोक्ता मांसानामान्नपानिके ।
तान् परीक्ष्य भिषग्विद्वान् दद्यात् मांसानि शोषिणे ॥
प्रसहा भूशया नूपवारिजा वारिचारिणः ।
आहारार्थे प्रदातव्या मात्रया वातशोषिते ॥
प्रतुदा विष्किराश्चैव धन्विजाश्च मृग द्विजाः ।
कफपित्तपरीतानां प्रयोज्याः शोषरोगिणाम् ॥
विधिवत् सूपसिद्धानि मनोज्ञानि मृदूनि च ।
रसवन्ति सुगन्धीनि मांसान्येतानि भक्षयेत् ॥
मांसमेवाश्नतः शोषे माध्वीकं पिबतोऽपि च ।
नियतस्याल्पचित्तस्य चिरेको येन तिष्ठति ॥

वारुणी मण्डभक्तस्य बहिर्मार्जन सेविनः ।
अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम् ॥
प्रसन्नां वारुणीं शीधुमरिष्टानासवान्मधु ।
यथेष्टमनुपानार्थं पिबेन्मांसानि भक्षयेत् ॥
मांसाद मांसस्वरसे सिद्धं सर्पिः प्रयोजयेत् ।
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ॥
सिद्धं मधुकरैद्रैर्व्यैर्दशमूलकषायिकैः ।
क्षीरमांसरसोपेतं घृतं शोषहरं परम् ॥
पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः ।
सयावशूकैः सक्षीरैः स्रोतसां शोधनं घृतम् ॥
रास्ना बला गोक्षुरकं स्थिरा वर्षान्तसाधितम् ।
जीवन्ती पिप्पली भार्गी सक्षीरं शोषनुद घृतम् ॥
यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह ।
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह ॥
शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ।
बहिः स्पर्शमाश्रित्य वक्ष्यतेऽतःपरं विधिः ॥
स्नेहक्षीराम्बुकोष्ठे तं स्वभ्यक्तमवगाहयेत् ।
स्रोतो विबन्धमोक्षार्थं बलपुष्ट्यर्थमेव वा ॥
उत्तीर्णं मिश्रकैः स्नेहैः पुनरक्तैः सुखाकरैः ।
मृद्नीयात् सुखमासीनं सुखं चाच्छादयेन्नरम् ॥
जीवन्तीं शतवीर्य्याञ्च विकसां सपुनर्नवाम् ।
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ॥
विदारीं सर्षपं कुष्ठं तण्डुलानतसी फलम् ।
माषांस्तिलांश्च किण्वञ्च सर्वमेकत्र चूर्णयेत् ॥

त्रिगुणं यवचूर्णेन दध्नायुक्तं समाक्षिकम्।
एतदुत्सादनं कार्य्यं पुष्टिवर्णं बलप्रदम्॥
गौरसर्षपकल्केन गन्धैश्चापि सुगन्धिभिः।
स्नायादृतुसुखैस्तोयैर्जीवनीयौषधैः शृतैः॥
गन्धैः समाल्यैर्वासोभिर्भूषणैश्च विभूषितः।
स्पृश्यान् संस्पृश्य संपूज्य देवताः सभिषग् द्विजान्॥
इष्टवर्णरसस्पर्शं गन्धवत् पानभोजनम्।
इष्टमिष्टैरुपहितं सुखमद्यात् सुखप्रदम्॥
समातीतानि धान्यानि कल्पनीयानि शुष्यताम्।
लघूनि हीनवीर्य्याणि तानि पथ्यतमानि हि॥
यच्चोपदेक्ष्यते पथ्यं क्षतक्षीणचिकित्सिते।
यक्ष्मिणस्तत्प्रयोक्तव्यं बलमांसाभिवृद्धये॥
अभ्यङ्गोत्सादनैः स्नानैरवगाहैर्विमार्जनैः।
वस्तिभिः क्षीरसर्पिर्भिर्मांसैर्मांसरसौदनैः॥
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः।
यथर्तु विहितैः स्नानैर्वासोभिरहतैः प्रियैः॥
सुहृदां रमणीयानां प्रमदानां च दर्शनैः।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च॥
हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः।
ब्रह्मचर्येण दानेन तपसा देवतार्चनैः॥
सत्येनाचारयोगेन मङ्गलैरविहिंसया।
वैद्यविप्रार्चनाच्चैव रोगराजो निवर्त्तते॥
प्रयुक्तया यया चेष्टया राजयक्ष्मा पुरा जितः।
तं वेदविहितामिष्टिमारोग्यार्थी प्रयोजयेत्॥

इति तत्र श्लोकौ ।

प्रागुत्पत्तिनिमित्तानि प्राग्रूपं रूपसंग्रहः ।
समासव्यासतश्चोक्तं भेषजं राजयक्ष्मणः ॥
नामहेतुरसाध्यत्वं साध्यत्वं कृच्छ्रसाध्यता ।
इत्ययं संग्रहः प्रोक्तो राजयक्ष्मचिकित्सिते ॥

इति राजयक्ष्म चिकित्सितम् ।

---

## नवमोऽध्यायः ।

अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ।

आसीनं मुनिमव्यग्रं कृतजप्यं कृतक्षणम् ।
पृष्टवानर्शसां युक्तिमग्निवेशः पुनर्वसुम् ॥
प्रकोपहेतुः संस्थानं स्थानं लिङ्गचिकित्सितम् ।
साध्यासाध्यविभागश्च तस्मै तन्मुनिरब्रवीदिति ॥

इह खल्वग्निवेश ! द्विविधान्यर्शांसि सहजानि कानिचित्

कानिचिज्जातस्योत्तरकालजानि। तत्र बीजं गुदवलि-
बीजोपतप्तमायतनमर्शसां सहजानां तत्र द्विविधो बीजो-
पतप्तौ हेतुः मातापित्रोरपचारः पूर्वकृतञ्च कर्म्म तथान्ये-
षामपि सहजानां विकाराणाम्। तत्र सहजातानीति शरीरे-
णार्शांसीत्यधिमांसविकाराः सर्व्वेषाञ्चार्शसां क्षेत्रं गुदस्यार्द्ध-
पञ्चमाङ्गुलेऽवकाशे त्रिभागान्तरास्तिस्रो गुदवलयः क्षेत्र-
मिति देशः। केचित्तु भूयांसमेव देशमुपदिशन्त्यर्शसां
शिश्नमपत्यपथं गलमुखनासिकाकर्णाक्षिवर्त्मानि त्वक् च
तदस्त्वधिकमांसदेश एषः गुदवलिजानां त्वर्शांसीति
संज्ञा तत्र अस्मिन् सर्व्वेषां चार्शसां अधिष्ठानं मेदोमांसं
त्वक्सहजान्यर्शांसि कानिचिदणूनि कानिचिन्महान्ति
कानिचिद्दीर्घाणि कानिचिद्ध्रस्वानि कानिचिद्वृत्तानि
कानिचिद्विषमविसृतानि कानिदन्तःकुटिलानि कानिचि-
द्बहिः कुटिलानि कानिचिज्जटिलानि कानिचित्तनुमुखानि
यथास्वं दोषानुबद्धवर्णानि तैरुपहतो जन्मप्रभृति भवति
कृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमूत्रपुरीषः
शार्करी चाश्मरीवा तथा नियतविबद्धमुक्तपक्वामशुष्कभिन्न-
वर्चाः अन्तरा अन्तरामश्वेतपाण्डुहरितपीतरक्तारुणतनु-
सान्द्रपिच्छिलोपवेशी नाभिवस्तिवङ्क्षणोद्देशप्रचुरपरिकर्त्ति-
कान्वितः सशूलगुदप्रवाहिकापरिहर्षप्रमेहप्रसक्तविष्टम्भा-
न्त्रकूजहृदयेन्द्रियोपलेपः सततविग्रथपक्वाम्लोद्गारः सुदु-
र्बलो दुर्बलाग्निरल्पशुक्रः क्रोधनो दुःखोपचारशीलः कास-
श्वासतमकतृष्णाहृल्लासच्छर्द्दिररोचकपीनसक्षवथुपरीतस्तैमि-
रिकः शिरःशूली क्षामभिन्नसन्नसक्तजर्जरस्वरः कर्ण-

रोगी संशूनपाणिपादवदनाक्षिकूटः सज्वरः साङ्गमर्दः सर्वपर्वास्थिशूली चान्तरान्तरा पार्श्वकुक्षिवस्तिहृदयपृष्ठत्रिकग्रहोपतप्तः प्रध्यानपरः परमलसश्चेति जन्मप्रभृति अस्य गुदजैराहतो मार्गोपरोधाद्वायुरपानः प्रत्यारोहन् समानव्यानप्राणोदानान् पित्तश्लेष्माणौ च प्रकोपयति। ते प्रकुपिताः पञ्चवाताः पित्तश्लेष्माणौ चार्शसामभिद्रवन्त एतान् विकारानुपजनयन्तीत्युक्तानि सहजान्यर्शांसि। अत ऊर्द्ध्वं जातस्योत्तरकालजानि व्याख्यास्यामः। गुरुमधुरशीताभिष्यन्दविदाहि विरुद्धा जीर्णप्रमिताशनासात्म्यभोजनाद्गव्यमात्स्यवाराहमाहिषाविकपिशितभक्षणात् कृशशुष्कपूतिमांसपैष्टिकपरमान्नक्षीरमोदकदधितिलगुडविकृतिसेवनान्माषयूषेक्षुरसपिण्याकपिण्डालुकशुष्कशाकशुक्तलशुनकिलाटपिण्डकविषमृणालशालूककौञ्चादनकशेरुकाशृङ्गाटकतरुणविरूढनवधान्याममूलकोपयोगाद् गुरुफलशाकरागहरितवधूवसाशिरस्पदपर्युषितपूतिशीत सङ्कीर्णान्नाभ्यवहरणान्मन्दकातिक्रान्तमद्यपानाद्व्यापन्नगुरुसलिलपानादतिस्नेहपानादसंशोधनाद्वस्तिकर्मविभ्रमादव्यायामाद्दिवा स्वप्नात् सुखशयनासनोपसेवनाच्चोपहताग्नेर्मलोपचयो भवत्यतिमात्रम्। अथोत्कटुकविषमकठिनाशनसेवनादुद्भ्रान्तयानोष्ट्रप्रयाणादतिव्यवायाद् वस्तिनेत्रासम्यक् प्रणिधानात् गुदक्षणनादभीक्ष्णं शीताम्बुसंस्पर्शाच्चेललोष्टतृणादिघर्षणात् प्रततातिनिवर्हणाद्वातमूत्रपुरीषवेगोदीरणात् समुदीर्णवेगविनिग्रहात् स्त्रीणाञ्चामगर्भभ्रंशाद्गर्भोत्पीडनाद्विषमप्रसूतिभिश्च प्रकुपितो वायुरपानो मलमुपचितमधोगम-

मासाद्य गुदवलिष्वाधत्ते ततस्तास्वभिष्यन्नासु अर्शांसि प्रा-
दुर्भवन्ति। सर्षपमसूरमाषमुद्गमकुष्ठकयवकलायटिण्टिकेर-
खर्जूरककर्कन्धुकाकणन्तिका बिम्बीबदरकरीरोदुम्बरजाम्बव-
गोस्तनाङ्गुष्ठककशेरुका शृङ्गाटक शृङ्गीदक्षशिखिशुकतुण्डजि-
ह्वा मुकुलकर्णिकासंस्थानानि सामान्याद्वातपित्तकफप्रबलानि
तेषामयं विशेषः। शुष्कम्लानकठिनपरुषरूक्षश्यावानि तीक्ष्णा-
ग्राणि वक्राणि स्फुटितमुखानि विषमविस्तृतानि शूला-
क्षेपतोदस्फुरणचिमिचिमासंहर्षपरीतानि स्निग्धो-
ष्णोपशयानि प्रवाहिकाध्मानशिश्नवृषणबस्तिवङ्क्षणहृद्ग्रहा-
ङ्गमर्दहृदयद्रवप्रबलानि प्रततविबद्धवातमूत्रवर्चांसि कठिन-
वर्चांस्यूरुकटीपृष्ठत्रिकपार्श्वकुक्षिबस्तिशूलं शिरोऽभितापि
क्षवथूद्गारप्रतिश्यायकासायासशोषशोथमूर्च्छारोचकमुखवैर-
स्यतैमिर्यं कर्णशब्दशङ्खशूलस्वरोपघातकराणि श्यावारु-
णपरुषनखनयनवदनत्वङ्मूत्रपुरीषस्य वातोल्वणार्शांसीति
विद्यात् भवति चात्र।

कषायकटुतिक्तानि रूक्षशीतलघूनि च।
प्रमिताल्पाशनं तीक्ष्णमद्यमैथुनसेवनम्॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म्म च।
तीक्ष्णो वातातपस्पर्शो हेतुर्वातार्शसामिति॥

मृदुशिथिलसुकुमाराण्यस्पर्शसहानि रक्तपीतनीलकृष्णानि
स्वेदोपक्लेदबहुलानि विस्रगन्धानि तनुपीतरक्तस्रावाणि
रुधिरहाणि दाहकण्डूशूलनिस्तोदपाकवन्ति शिशिरो-
पशयानि संभिन्नपीतहरितवर्चांसि पीतविस्रगन्धप्रचुरवि-
ण्मूत्राणि पिपासाज्वरतमकसंमोहभोजनद्वेषकराणि पीत-

नखनयनवदनत्वङ्मूत्रपुरीषस्य पित्तोल्वणान्यर्शांसीति विद्यात् । भवति चात्र ।

कट्वम्ललवणक्षार व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥
विदाहि तीक्ष्णमुष्णञ्च सर्वं पानान्नभेषजम् ।
पित्तोल्वणानां विज्ञेयः प्रकोपहेतुरर्शसामिति ॥

तत्र यानि प्रमाणवन्त्युपचितानि श्लक्ष्णानि स्थिरस्तब्धपृथूनि पततपिच्छस्निग्धतानि स्वेतरक्तपिच्छास्रावीणि कण्डूबहुलानि गुरुपिच्छिलश्वेतमूत्रपुरीषाणि रूक्षोष्णोपशयानि प्रवाहिकातिमात्रोत्थानि वङ्क्षणानाह नाभि परिकर्त्तिका श्वास निष्ठीविकाकासारोचकप्रतिश्याय गौरवच्छर्दिमूत्रकृच्छ्र शोषशोथपाण्डु रोगशीतज्वराश्मरीशर्कराहृदयेन्द्रियास्योपलेपास्यमाधुर्यप्रमेहकराणि दीर्घकालानुपशयान्यतिमात्रमग्निमार्दवक्लैब्यकराण्यामविकारप्रबलानि गुरूणि च शुक्लनखनयनवदनत्वङ्मूत्रपुरीषस्य श्लेष्मोल्वणान्यर्शांसीति विद्यात् भवति चात्र ।

मधुरस्निग्धशीतानि लवणानि गुरूणि च ।
अव्यायाम दिवास्वप्न शय्यासन सुखे रतिः ॥
प्राग्वातसेवा शीतौ च देशकालानुचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥
हेतुलक्षणसंसर्गाद्विद्याद् द्वन्द्वोल्वणानि च ।
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः सह ।
विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षे राटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥

ग्रहणी दोषपाण्ड्वर्त्तिराशङ्का चोदरस्य च ।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥
अर्शांसि खलु जायन्ते नासन्निपतितैः त्रिभिः ।
दोषैर्दोष विशेषात्तु विशेषः कल्प्यतेऽर्शसाम् ॥
पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् ।
सर्व्वाण्येतानि जायन्ते गुदजानां समुद्भवे ॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ।
सर्व्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥
हस्ते पादे गुदे नाभ्यां मुखे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूली च योऽर्शसः स न सिध्यति ॥
हृद्वस्तिशूलं संमोहच्छर्दिरङ्गस्य रुग्ज्वरः ।
तृष्णा गुदास्य पाकश्च निहन्युर्गुदजातुरम् ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरावलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्द्दिशेत् ॥
शेषत्वात् आयुषस्तानि चतुष्पादसमन्विते ।
याप्यन्ते दीप्तकायाग्निः प्रत्याख्येयोऽन्यतोऽन्यथा ॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसम्वत्सराणि च ॥
वाह्यायान्तु वलौ जातान्येकदोषोल्वणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ।
तेषां प्रशमने यत्नमाशु कुर्य्याद्विचक्षणः ॥
तान्याशु हि गुदं बद्धा कुर्य्युर्बद्धगुदोदरम् ।
तत्राहुरेके शस्त्रेण कर्त्तनं हितमर्शसाम् ॥
दाहं क्षारेण चाप्येके दाहमेके तथाग्निना ।

अस्येतद्दुरितन्त्रेण धीमता दृष्टकर्म्मणा ॥
क्रियते त्रिविधं कर्म्मभ्रंशस्तस्य सुदारुणः ।
पुंस्त्वोपघातः श्वयथुर्गुदे वेगपरिग्रहः ॥
आध्मानं दारुणं शूलं व्यथा रक्तातिवर्त्तनम् ।
पुनर्विरोहो रूढानां क्लेदो भ्रंशो गुदस्य च ।
मरणं वा भवेच्छीघ्रं शस्त्रक्षाराग्निविभ्रमात् ।
यत्तु कर्म्म सुखोपायमल्पभ्रंशमदारुणम् ॥
तदर्शसां प्रवक्ष्यामि समूलानां निवृत्तये ।
वातश्लेष्मोल्वणान्याहुः शुष्काण्यर्शांसि तद्विदः ॥
प्रस्रावीणि तथार्द्राणि रक्तपित्तोल्वणानि च ।
तत्र शुष्कार्शसां पूर्वं प्रवक्ष्यामि चिकित्सितम् ॥
स्तब्धानि स्वेदयेत्तानि शोफशूलान्वितानि च ।
चित्रकक्षारबिल्वानां तैलेनाभ्यज्य बुद्धिमान् ॥
यवमाषपुलाकानां कुलत्थानां च पोटलैः ।
गोखराश्वशकृत्पिण्डैस्तिलकल्कैस्तुषैरपि ॥
वचा शताह्वा पिण्डैर्वा सुखोष्णैः स्नेहसंयुतैः ।
शक्तूनां पिण्डिकाभिर्वा स्निग्धानां तैलसर्पिषा ॥
शुष्कमूलकपिण्डैर्वा पिण्डैर्वा कार्ष्णगन्धिकैः ।
रास्नापिण्डैः सुखोष्णैर्वा सस्नेहैर्हुषैरपि ॥
भृष्टकस्य खराश्वायाः शाकैर्गृञ्जनकस्य च ।
अभयजा कुष्ठतैलेन स्वेदयेत् पोट्टलीकृतैः ॥
वृषार्केरण्डबिल्वानां पत्रोत्क्वाथैश्च सेचयेत् ।
मूलकत्रिफलार्काणां वेणूनां वारुणस्य च ॥
अग्निमन्थस्य शिग्रोश्च पत्राण्यश्मन्तकस्य च ।

जलेनोत्क्वाथ्य शूलार्त्तं स्वभ्यक्तमवगाहयेत्॥
कौलोत् क्वाथेऽथवा कोष्णे सौवीरकतुषोदके।
किण्वोत्क्वाथेऽथवा तक्रे दधिमण्डाम्लकाञ्जिके॥
गोमूत्रे वा सुखोष्णे तं शूलार्त्तमुपवेशयेत्।
कृष्णसर्पं वराहोष्ट्र जतूका वृषदंशजम्॥
वसामभ्यञ्जनं कुर्य्याद्धूपनं चार्शसां हितम्।
नृकेशाः सर्पनिर्म्मोको वृषदंशस्य चर्म्म च॥
अर्कमूलं शमीपत्रं अर्शोभ्यो धूपनं हितम्।
तुम्बुरूणि विड़ङ्गानि देवदार्वक्षता घृतम्॥
वृहती चाश्वगन्धा च पिप्पल्यः सुरसो घृतम्।
वराह वृषविट् चैव धूपनं शक्तवो घृतम्॥
कुञ्जरस्य पुरीषन्तु घृतं सर्ज्जरसो रसः।
हरिद्रा चूर्णसंयुक्तं सुधा क्षीरं प्रलेपनम्॥
गोपित्तपिष्टाः पिप्पल्यः सहरिद्राः प्रलेपनम्।
शिरीषवीजं कुष्ठञ्च पिप्पल्यः सैन्धवं गुड़ः।
अर्कक्षीरं सुधा क्षीरं त्रिफला च प्रलेपनम्॥
पिप्पल्यः चित्रकाः श्यामाः किण्वं मदनतण्डुलाः।
प्रलेपः कुक्कुट शकृत् हरिद्रा गुड़संयुतः॥
निकुम्भः साम्रतागङ्गः पारावतशकृद्गुड़ः।
प्रलेपः स्याद्रजाख्योनि निम्बो भल्लातकानि च॥
प्रलेपः स्याद्दलर्क्काभ्यो वसन्तजवसायुतः।
शूलस्वयथु हृद्युक्तो वुलूकी वसयाथवा॥
आर्कं पयः सुधाकाण्डं कटुकालावपल्लवाः।



।।६

करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ।
अभयाद्याः प्रदेहास्तु य एते परिकीर्त्तिताः ॥
स्तम्भश्वयथुकण्ड्वार्त्ति शमनास्तेऽर्शसां मताः ।
प्रदेहान्तेरुपशान्तान्यर्शांसि प्रस्रवन्ति हि ॥
सञ्चितं दुष्टरुधिरं ततः सम्पद्यते सुखी ।
शीतोष्णस्निग्धरूक्षैर्हि न व्याधिरुपशाम्यति ॥
रक्ते दुष्टे भिषक् तस्माद्रक्तमेवावसेचयेत् ।
जलौकोभिस्तथा शस्त्रैः सूचीभिर्वा पुनः पुनः ॥
प्रवर्त्तमानं रुधिरं रक्तार्शोभिरः प्रवाहयेत् ।
रक्तक्षयभयशूलार्त्तं मन्दाग्निं पाययेत च ॥
ऊषणं पिप्पलीमूलं पाठां हिङ्गु च चित्रकम् ।
सौवर्च्चलं पुष्करस्यमजाजीं बिल्वपेषिकाम् ॥
विड़ं यवानीं हपुषां विड़ङ्गं सैन्धवं वचाम् ।
तिन्तिड़ीकञ्च मण्डेन मद्येनोष्णोदकेन च ।
तथार्शी ग्रहणी दोष शूलानाहाद्विमुच्यते ॥
कुर्याद्वा पाचनं तस्य यदुक्तं ह्यातिसारिके ।
सगुड़ामभयां वाथ प्राशयेत् पौर्वभक्तिकीम् ॥
पाययेत त्रिवृच्चूर्णं त्रिफलाया रसेन वा ।
हृते गुदाश्रये दोषे गच्छन्त्यर्शांसि संचयम् ॥
गोमूत्राध्युषितामद्यात् सगुड़ां वा हरीतकीम् ॥
हरीतकीं तक्रयुतां त्रिफलां वा प्रयोजयेत् ।
सनागरं चित्रकं वा शीधुयुक्तं प्रयोजयेत् ॥
चव्यं वा शीधुसंयुक्तमजाजीदीप्यकं पिबेत् ।
सुरां वा हपुषां पाठां युक्तां सौवर्च्चला युताम् ॥

दधित्थबिल्वयुक्तं वा तथा वा चव्यचित्रकौ।
भल्लातकयुतां वाथ प्रदद्यात्तत्र तर्पणम्॥
बिल्वनागरयुक्तं वा यवान्या चित्रकेण वा।
चित्रकं हपुषां हिङ्गुं दद्याद्वा तक्रसंयुतम्॥
पञ्चकोलयुतं वापि तक्रमस्मै प्रदापयेत्।
हपुषा कुञ्चिकां धान्यमजाजीं कारवीं शटीम्॥
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्।
यवानीं चाजमोदं च चूर्णितं तक्रसंयुतम्॥
मन्दाम्लकटुकं विद्वान् स्थापयेद्घृतभाजने।
व्यक्ताम्लकटुकं जातं तक्रारिष्टं सुखप्रियम्॥
प्रपिबेन्मात्रया कालेष्वन्नस्य तृषित स्त्रिषु।
दीपनं रोचनं वर्ण्यं कफवातानुलोमनम्॥
गुदश्वयथुकण्ड्वार्त्ति नाशनं बलवर्द्धनम्।
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्॥
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत्।
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम्॥
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा।
सप्ताहं वा दशाहं वा पक्षं मासमथापि वा॥
बलकालविशेषज्ञो भिषक् तक्रं प्रयोजयेत्।
अत्यर्थं मृदुपाकाग्नेस्तक्रमेवावधारयेत्।
सायं वा लाजशक्तूनां दद्यात्तक्रावलेहिकाम्।
जीर्णे तक्रे प्रदद्याद्वा तक्रे पेयां ससैन्धवाम्।
तक्रानुपानं सस्नेहं तक्रौदनमथोत्तरम्।
यूषैर्मांसरसैर्वापि भोजयेत्तक्रसाधितम्॥

कालक्रमज्ञः सहसा न च तक्रं निवारयेत् ।
तक्रप्रयोगाभ्यासान्ते क्रमेणोपशमो मतः ॥
अपकर्षो यथोत्कर्षो न त्वमादपकृष्यते ।
प्रत्यागममरक्षार्थं दार्ढ्यार्थमनलस्य च ॥
बलोपचयवर्णार्थं क्रम एषोपवर्ण्यते ।
रूक्षमर्द्धोद्धृत स्नेहं यतश्चानुद्धृतं घृतम् ॥
तक्रं दोषाग्निबलवित्त्रिविधं तत्प्रयोजयेत् ।
हतानि न विरोहन्ति तक्रेण गुदजानि तु ॥
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः ।
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते ॥
वातश्लेष्मविकाराणां शतं चापि निवर्त्तते ।
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥
शृङ्गवेरमजाजीं च कारवीं धानका फलम् ।
बिल्वकर्कटकं पाठां पिष्ट्वा पेयां विपाचयेत् ॥
फलाम्लां यमकस्नेहान्तां दद्याद्गुदजापहाम् ।
एतैरेव खड़ं कुर्य्यादेतैरेव पचेज्जलम् ॥
एतैरेव घृतं साध्यमर्शसां विनिवृत्तये ।
शठीपलाशसिद्धां वा पिप्पल्या नागरेण वा ॥
दद्याद्यवागूं तक्राम्लां मरिचैरवचूर्णिताम् ।
शुष्कमूलकयूषं वा यूषं कौलत्थमेव वा ॥
दधित्थ बिल्वयूषं वा सकुलत्थमकुष्ठकम् ।
छागलं वा रसं दद्याद्यूषैरेतैर्विमिश्रितम् ॥
लावादीनां फलाम्लं वा सतक्रं ग्राहिभिर्हतम् ।
रक्तशालिर्महाशालिः कलमोलाङ्गलः सितः ॥

यारद्: पाटिन्मयेव स्यादच विधिरर्शसाम्।
इत्युक्तो भिन्न शकृतामर्शसां च विधिक्रमः॥
योऽत्यर्थं गाढशकृतस्तेषां वक्ष्यामि भेषजम्।
सस्नेहैः शक्तुभिर्युक्तां प्रसन्नां लवणीकृताम्॥
दद्यान्मत्स्यण्डिकां पूर्वं भक्षयित्वा सनागराम्।
गुडं सनागरं पाठां दाड़िमस्य रसं गुड़म्॥
सतक्रं लवणं दद्याद्वातवर्चोऽनुलोमनम्।
दुःस्पर्शकेन बिल्वेन यवान्या नागरेण वा।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम्॥
प्राग्भक्तार्धपके भृष्टान् शक्तुभिश्चावचूर्णिताम्।
करञ्जपल्लवान् दद्यात् वातवर्चोऽनुलोमनान्॥
मदिरां वा सलवणां शीधुं सौवीरकं तथा।
गुड़ नागरसंयुक्तं पिवेद्वा पौर्वभक्तिकम्॥
पिप्पलीं नागरक्षार कारवीधान्यजीरकैः।
फाणितेन च संयोज्य फलाम्लं दापयेत् घृतम्॥
पिप्पली पिप्पलीमूलम् चित्रको हस्तिपिप्पली।
शृङ्गवेरं यवक्षारं तैः सिद्धं वा पिवेत् घृतम्॥
चव्यचित्रकसिद्धं वा गुरक्षारसमन्वितम्।
पिप्पलीमूलसिद्धं वा सगुड़क्षार नागरम्॥
पिप्पली पिप्पलीमूल दधिदाड़िमधान्यकैः।
सिद्धं सर्पिर्विधातव्यं वातवर्चो विबन्धनुत्॥
चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च।
यवानीं पिप्पलीमूलमुभे च विडसैन्धवे।
चित्रकं विल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।

शकृद्वातानुलोम्यार्थं जाते दध्निचतुर्गुणे ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।
गुदवंक्षणशूलञ्च घृतमेतत् व्यपोहति ॥
पिप्पलीं नागरं पाठां श्वदंष्ट्राञ्च पृथक् पृथक् ।
भागां स्त्रिपलिकान् कृत्वा कषायमुपकल्पयेत् ॥
कण्टीरं पिप्पलीमूलं व्योषचव्यञ्च चित्रकम् ।
पिष्टा कषाये विनयेत् पूते द्विपलिकं भिषक् ॥
पलानि सर्पिषस्तस्मिंश्चत्वारिंशत् प्रदापयेत् ।
चाङ्गेरीस्वरसं तुल्यं सर्पिषा दधिषड्गुणम् ॥
मृद्वग्निना ततः साध्यं सिद्धं सर्पिर्निधापयेत् ।
तदाहारे विधातव्यं पाने प्रायोगिके विधौ ॥
ग्रहण्यर्शो विकारघ्नं गुल्महृद्रोगनाशनम् ।
शोथप्लीहोदरानाह मूत्रकृच्छ्र ज्वरापहम् ॥
कास हिक्का रुचिश्वाससूदनं पार्श्वशूलनुत् ।
बलपुष्टिकरं वर्ण्यमग्निसन्दीपनं परम् ॥
सगुड़ां पिप्पलीयुक्तां घृतभृष्टां हरीतकीम् ।
त्रिवृद्दन्तीयुतां वापि भक्षयेदानुलोमिकीम् ॥
विड्वातकफपित्तानामानुलोम्येन निर्मले ।
गुदेऽर्शांसि प्रशाम्यन्ति पावकश्चाभिवर्द्धते ।
बर्हितित्तिरिलावानां रसानम्लान् सुसंस्कृतान् ॥
दक्षाणां वर्त्तकानाञ्च दद्यात् विड्वातसंग्रहे ।
त्रिवृद्दन्ती पलाशानां चाङ्गेर्याश्चित्रकस्य च ॥
सुभृष्टं यमके दद्यात् शाकं दधिशरायुतम् ।
उपोदिका चञ्चुपुटी वीरा वास्तुकपल्लवाः ॥

सुवर्चला सलोणीका यवशाकमवल्गुजम्।
काकमाचीं रुहापत्रं महापत्रं तथाम्लिकाम्॥
जीवन्ती शटिशाकञ्च शाकं गृञ्जनकस्य च।
दधिदाड़िमसिद्धानि भृष्टानि यमकेऽपि च॥
धान्यनागरयुक्तानि शाकान्येतानि दापयेत्।
गोधाश्वाविल्लोपाकमार्जारोष्ट्रगवामपि॥
कूर्मशल्यकयोश्चैव साधयेच्छाकवद्रसान्।
रक्तशाल्योदनं दद्याद्रसैस्तैर्वातशान्तये॥
ज्ञात्वा वातोल्बणं रूक्षं दीप्ताग्निं गुदजातुरम्।
मदिरां शार्करं जातं शीधुं तक्रं तुषोदकम्॥
अरिष्टं दधिमण्डं वा शृतं शा शिशिरं जलम्।
कण्टकार्य्या शृतं वापि शृतं नागरधान्यकैः॥
अनुपानं भिषक् दद्यात् वातवर्चोऽनुलोमनम्।
उदावर्त्तपरीता ये ये चात्यर्थं विरूक्षिताः॥
विलोमवाताः शीतार्त्ताः तेष्विष्टमनुवासनम्।
पिप्पलीं मदनं विल्वं शताह्वां मधुकं वचाम्॥
कुष्ठं शठीं पुष्कराख्यं चित्रकं देवदारु च।
पिष्ट्वा तैले विपक्तव्यं पयसा द्विगुणेन च॥
अर्शसां मूढ़वातानां तच्छ्रेष्ठमनुवासनम्।
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम्॥
कट्यूरुपृष्ठदौर्बल्यमानाहं वंक्षणाश्रयम्।
पिच्छास्रावं गुदे शोथं वातवर्चो विनिग्रहम्॥
उत्थानं बहुशो यच्च जयेत्तच्चानुवासनम्।
आनुवासनिकैः पिष्टैः सुखोष्णैः स्नेहसंयुतैः॥

दार्वस्तैः स्तब्धशूलानि गुदजानि प्रलेपयेत् ।
दिग्धा तैः प्रस्रवन्त्याशु श्लेष्मपिच्छांसशोणिताः ॥
कण्डूस्तम्भोरुजो ह्याथः स्रुतानां विनिवर्त्तये ।
निरूहं वा प्रयुञ्जीत सक्षीरं दाशमूलिकम् ॥
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः ।
हरीतकीनां प्रस्थार्द्धं प्रस्थमामलकस्य च ॥
स्यात्कपित्थाद्दशपलं ततोऽर्द्धेन्द्रवारुणी ।
विडङ्गं पिप्पलीरोध्रं मरिचं सैलवालुकम् ।
द्विपलांशं निर्यासस्य चतुर्द्रोणे विपाचयेत् ।
द्रोणशेषे रसे तस्मिन् पूतशेषे समावपेत् ॥
गुड़स्य द्विशतं तिष्ठेत्तत्सर्वं घृतभाजने ।
पक्षादूर्द्धं भवेत् पेया ततो मात्रा यथाबलम् ॥
अस्याभ्यासादरिष्टस्य नश्यन्ति गुदजानपि ।
ग्रहणी पाण्डुहृद्रोग प्लीह गुल्मोदरापहाः ॥
कुष्ठशोफारुचिहरो बलवर्णाग्निवर्द्धनः ।
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः ॥
क्रिमिग्रन्थ्यर्बुदव्यङ्ग राजयक्ष्मज्वरान्तकृत् ।
दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ॥
भागान् पलांशान् पोथ्य जलद्रोणे विपाचयेत् ।
त्रिफलाया दलानां च प्रक्षिप्य त्रिपलं ततः ॥
रसे चतुर्थशेषे तु पूतशेषे समावपेत् ।
गुड़स्यैकां तुलां वैद्यः संस्थाप्यो घृतभाजने ॥
पक्षस्थितं पिबेदेनं ग्रहण्यर्शो विकारवान् ।
हृत्पाण्डुरोगं प्लीहानं कामलां विषमज्वरम् ॥

कासं गुल्ममुदावर्त्तं फलारिष्टो व्यपोहति।
दुरालभायाः प्रस्थः स्याच्चित्रकस्य वृषस्य च॥
पथ्यामलकयोश्चैव पाठाया नागरस्य च।
दन्त्याश्च द्विपलान् भागान् जलद्रोणे विपाचयेत्॥
पादावशेषे पूते च सुशीते शर्कराशतम्।
प्रक्षिप्य स्थापयेत् कुम्भे मासार्द्धं घृतभाजने॥
प्रलिप्ते पिप्पली चव्य प्रियङ्गु क्षौद्रसर्पिषा।
तस्य मात्रां पिबेत् काले शार्करस्य यथाबलम्
अर्शांसि ग्रहणी दोष मुदावर्त्तं मरोचकम्।
शकृन्मूत्रानिलोद्गारविबन्धानग्निमार्द्दवम्॥
हृद्रोगं पाण्डुरोगञ्च सर्वमेतेन साधयेत्।
नवस्यामलकस्यैकां कुर्य्याज्जर्ज्जरितां तुलाम्॥
कुडवांशं विडङ्गानि पिप्पली मरिचानि च।
पाठां मूलं च पिप्पल्याः क्रमुकं चव्यचित्रकौ॥
मञ्जिष्ठैलालुकं रोध्रं पालिकान्युपकल्पयेत्।
कुष्ठं दारु हरिद्रां च सुराह्वं शारि वा द्वयम्॥
इन्द्राह्वां भद्रमुस्तं च कुर्य्यादर्द्धपलोन्मिताम्।
चत्वारि नागपुष्पस्य पलान्यभिनवस्य च॥
द्रोणाभ्यामम्भसो द्वाभ्यां साधयित्वावतारयेत्।
पादावशेषे पूते च रसे तस्मिन् समावपेत्॥
मृद्वीकाद्व्याढ़करसं शीतं निर्यूहसंमितम्।
शर्करायाश्च शुक्लायाश्चिताया द्विगुणां तुलाम्॥
कुसुमस्य रसस्यैकमर्द्धप्रस्थं नवस्य च।
त्वगेला म्बुपत्राम्बु सेव्य क्रमुककेसरम्॥

चूर्णयित्वा तु मतिमान् कार्षिकान् अत्र दापयेत् ।
तत् सर्वं स्थापयेत् पक्षं शुचौवे घृतभाजने ॥
प्रलिप्ते सर्पिषा किञ्चिच्छर्करागुरुधूपिते ।
पक्षादूर्ध्वं अरिष्टोऽयं कनको नाम विश्रुतः ॥
प्रायः स्वादुरसो हृद्यः प्रयोगाद्भक्तरोचनः ।
अर्शांसि ग्रहणी दोष मानाह मुदरं ज्वरम् ॥
हृद्रोगं पाण्डुतां शोथं गुल्मवर्चो विनिग्रहम् ।
कासं श्लेष्मामयांश्चोग्रान् सर्वानेवापकर्षति ॥
वलीपलितखालित्यं दोषजं च व्यपोहति ।
पत्रभङ्गोदकैः शौचं कुर्य्यादुष्णेन चाम्भसा ॥
इति शुष्कार्शसां पूर्वमुक्तमेतच्चिकित्सितम् ।
चिकित्सितमिदं सिद्धं स्राविणां शृणुतःपरम् ॥
तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च ।
विट्श्यावा कठिना रूक्षा चाधो वायुर्न वर्त्तते ॥
तनुरारुणवर्णं च फेनिलं चासृगर्शसाम् ।
कट्यूरुगुदशूलं च दौर्बल्यं यदि वाधिकम् ॥
तत्रानुबन्धो वातस्य हेतुर्यदि विरूक्षणम् ।
शिथिला श्वेतपीता च विट् स्निग्धागुरुपिच्छिला ॥
यद्यर्शसां घनं चासृक्तन्तुमत् पाण्डुपिच्छिलम् ।
गुदः सपिच्छः स्तिमितो गुरुस्निग्धश्च कारणम् ॥
श्लेष्मानुबन्धो विज्ञेयः तत्र रक्तार्शसां बुधैः ।
स्निग्धशीतं हितं वाते रूक्ष शीतं कफेऽनुगे ॥
चिकित्सितमिदं तस्मात् सम्प्रधार्य्य प्रयोजयेत् ।
पित्तश्लेष्माधिकं मत्वा शोधनेनोपपादयेत् ॥

स्रवणं चाप्युपेक्षेत लङ्घनैर्वा समाचरेत्।
प्रवृत्तमादावर्शोभ्यो यो हि गृह्णात्यबुद्धिमान्॥
शोणितं दोषमलिनं तद्रोगान् जनयेद्बहून्।
रक्तपित्तं ज्वरं तृष्णामग्निनाशमरोचकम्॥
कामलां श्वयथुं शूलं गुदवङ्क्षणसंश्रयम्।
कण्डूरुःकोठपिड़का कुष्ठं पाण्ड्वामयं गदम्॥
वातमूत्रपुरीषाणां विबन्धं शिरसो रुजम्।
स्तैमित्यं गुरुगात्रत्वं तथान्यान् रक्तजान् गदान्॥
तस्मात् स्रुते दुष्टरक्ते रक्तसंग्रहणं मतम्।
हेतुलक्षणकालज्ञो बलशोणितवर्णवित्॥
कालं तावदुपेक्षेत यावन्नात्ययमाप्नुयात्।
अग्निसन्दीपनार्थं च रक्तसंग्रहणाय च॥
दोषाणां पाचनार्थञ्च परं तिक्तैरुपाचरेत्।
यत्तु प्रक्षीणदोषस्य रक्तं वातोल्वणस्य च।
वर्त्तते स्नेहसाध्यं तत्पानाभ्यङ्गानुवासनैः।
यत्तु पित्तोल्वणं रक्तं घर्मकाले प्रवर्त्तते॥
स्तम्भनीयं तदेकान्तान्न चेद्वातकफानुगम्।
कुटजत्वङ्निर्यूहः सनागरः स्निग्धरक्तसंग्रहणः॥
त्वग्दाड़िमस्य तद्वत् सनागरः चन्दनरसश्च।
चन्दनकिराततिक्तकधन्वयवाषाः सनागराः क्वथिताः॥
रक्तार्शसां प्रशमना दार्वीत्वगुशीरनिम्बाश्च।
सातिविषा कुटजत्वक् फलं च सरसाञ्जनम्॥
मधुयुतं हि रक्तापहं प्रदद्यात् पिपासवे तण्डुलजलेन।
कुटजशकलस्य साध्यं पलशतमार्द्रस्य मेघसलिलेन॥

यावत् स्यात् गतरसं तद्‌द्रव्यं पूतो रसस्ततो ग्राह्यः ।
मोचरसः ससमङ्गः फलिनी च समांशिकैस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं चूर्णितमत्र प्रदातव्यम् ॥
पूतः क्वथितः सरसोदार्वीलेपो ततः समवतार्य्यः ।
मात्रा कालोपहिता रसक्रियैषा जयति रक्तम् ॥
छागली पयसा पीता पेया मण्डेन वा यथाग्निबलम् ।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जितः ॥
छगलीपयः प्रयुक्तं निहन्ति रक्तं सवाखुकरसञ्च ।
धन्वविहङ्गमृगाणां रसो निरम्लः कदम्लो वा ॥
पाठा वत्सकबीजं रसाञ्जनं नागरं यवानीं वा ।
विल्वमिति च गुदजान्तर्विचूर्ण्य पेयानि शूलेषु ॥
दार्वीकिरात तिक्तं शुस्तं दुःस्पर्शकञ्च रुधिरघ्नम् ।
रक्तेऽतिवर्त्तमाने शूले च घृतं विधातव्यम् ॥
कुटजफलवल्ककेसरनीलोत्पलरोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा ॥
पेया पीता चक्रिका केशरोत्पलैः सिद्धा ।
हन्त्याशु रक्तरोगं तथा बला पृश्निपर्णीभ्याम् ।
ह्रीवेरविल्वनागरनिर्यूहे साधितं सनवनीतम् ॥
वृक्षाम्लादाड़िमाम्ला मञ्जीकाम्ला सकोलाम्लाम् ।
गञ्जनकसुरा सिद्धां भृष्टां यमकेन वा पिबेत् पेयाम् ॥
रक्तातिसारशूलप्रवाहिका शोथनिग्रहणीम् ।
काश्मर्य्यामलकानां उदुम्बराणां खण्डान् फलाम्लांश्च ॥
गञ्जनकशल्मलीनां चोरिण्याः चुक्रिकायाश्च ।
न्यग्रोधपल्लवानां खण्डांस्तथा कोविदारपुष्पाणाम् ॥

दध्नः शरेण सिद्धां दद्याद्रक्ते प्रवृत्तेऽति ।
सिद्धं पलाण्डुशाकं च तक्रेणोपदिकां सबदरां च ॥
रुधिरस्रवे प्रदद्यात् मसूरसूपञ्च तक्राम्लम् ।
पयसा शृतेन यूषैर्मसूरमुद्गाढ़कीमकुष्ठानाम् ॥
भोजनमद्याम्लैः शालिश्यामाककोद्रवजम् ।
शशहरिणलावमांसैः कपिञ्जलैणेयैः सुसिद्धैश्च ॥
भोजनमद्यादम्लैर्मधुरैरीषत् समरिचैर्वा ।
दक्षशिखितित्तिरिरसैर्द्विककुभोपाः शणीय मधुराम्लैः ॥
अद्याद्रसैरतिवहे ष्वरसे ष्वनिलोल्बणशरीरः ।
रसखण्डयूषयवागूसंयुक्तः केवलोऽथवा जयति ॥
रक्तमतिवर्त्तमानं वातं च पलाण्डुरुपयुक्तः ।
छागोत्तरोधितरुणं सरुधिरमुपसाधितं बहुपलाण्डु ॥
व्यत्यासान्मधुराम्लं विट्शोणितसंक्षये देयम् ।
नवनीतघृताभ्यासात् केसरनवनीतशर्कराभ्यासात् ।
दधिशरमथिताभ्यासादर्शांस्य पयाति रक्तानि ॥
नवनीतं घृतं छागं मांसं सषष्टिकः शालिः ।
तरुणश्च सुरामण्डः तरुणी च सुरा निहन्त्यजस्रम् ॥
प्रायेण वातबहुलान्यर्शांसि भवन्त्यति स्रुते रक्ते ।
तस्माद्रक्ते दुष्टेऽप्यनिलः सविशेषतो जेयः ॥
दृष्ट्वा तु रक्तपित्तं प्रबलं कफवातलिङ्गमल्पञ्च ।
शीताः क्रियाः प्रयोज्याः यथेरिता वक्ष्यते चान्या ॥
मधुकं सपञ्चवल्कं बदरीत्वगुदुम्बराश्वपटोलम् ।
परिषेचने विदध्याद्वृषककुभयवासनिम्बांश्च ॥

रक्तेऽतिवर्त्तमाने दाहे क्लेदे च गाहयेच्चापि ।
मधुक मृणालपद्मकचन्दनकुशकाशनिक्वाथे ॥
इक्षुरसमधुकवेतसनिर्यूहे शीतले पयसि वातम् ।
अवगाहयेत् प्रदिग्धं पूर्वं शिशिरेण तैलेन ॥
दत्त्वा घृतं सशर्करमुपस्थदेशे गुदे त्रिकदेशे ।
शिशिरजलस्पर्शसुखाधाराः प्रस्तम्भनी मृजया ॥
कदली दलैरभिनवैः पुष्करपत्रैश्च शीतजलसिक्तैः ।
प्रच्छादनं मुहुर्मुहुरिष्टं पद्मोत्पलदलैश्च ॥
दूर्वाघृतप्रदेहः शतधौतसहस्रधौतमपि सर्पिः ।
व्यजनपवनश्च रक्तो रक्तस्रावं जयत्याशु ।
चर्मासामधुकाभ्यां तिलमधुकाभ्यां रसाञ्जनघृताभ्याम् ।
सर्जं रसघृताभ्यां वा निम्बघृताभ्यां मधुघृताभ्याम् ॥
दार्वी त्वक् सर्पिर्भ्यां सचन्दनाभ्यामथोत्पलघृताभ्याम् ।
दाहक्लेदभ्रंशे गुदजाः प्रतिसारणीयाः स्युः ।
आभिः क्रियाभिरथवा शीताभिर्यस्य तिष्ठति न रक्तम् ।
तं काले स्निग्धोष्णैर्मांसैस्तर्पयेन्मतिमान् ।
अवपीडकसर्पिर्भिः कोष्णैर्घृततैलिकैस्तथाभ्यङ्गैः ॥
क्षीरघृततोयसेकैः कोष्णैः समुपाचरेद्वाश ।
कोष्णो न वातप्रबलं घृतमण्डेनानुवासयेत् शीघ्रम् ।
पिच्छावस्तिं दद्याद्वस्तिं काले तस्याथवा सिद्धम् ॥
यवाष कुशकाशानां मूलं पुष्पञ्च शाल्मलम् ।
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥
त्रिपस्थे सलिलस्यैतत् क्षीरप्रस्थे च साधयेत् ।
क्षीरशेषं कषायञ्च पूतं कल्कैर्विमिश्रयेत् ॥

कल्काः शाल्मलिनिर्य्यासः समङ्गा चन्दनोत्पले।
वत्सकस्य च बीजानि प्रियङ्गुः पद्मकेशरम्।
पिच्छावस्तिरयं सिद्धः सघृतक्षौद्रशर्करः॥
प्रवाहिका गुदभ्रंश रक्तस्रावज्वरापहः।
प्रपौण्डरीकं मधुकं पिच्छावस्तौ यथेरितम्॥
पिष्टानुवासनं स्नेहं क्षीरद्विगुणितं पचेत्।
ह्रीवेरमुत्पलं रोध्रं समङ्गा चव्यचन्दनम्॥
पाठा सातिविषा बिल्वं धातकी देवदारु च।
दार्व्वी त्वक् नागरं मांसी मुस्तं क्षारो यवाग्रजः॥
चित्रकश्चेति पेष्याणि चाङ्गेरी स्वरसो घृतम्।
ऐकध्यं साधयेत् सर्वं तत् सर्पिः परमौषधम्॥
अर्शोऽतिसारग्रहणी पाण्डुरोगज्वरारुचौ।
मूत्रकृच्छ्रे गुदभ्रंशे वस्त्यानाहे प्रवाहने॥
पिच्छास्रावेऽर्शसां शूले योज्यमेतत् त्रिदोषनुत्।
अश्वाक् पुष्पीबला दार्व्वी पृश्निपर्णी त्रिकण्टकः॥
न्यग्रोधो डुम्बराश्वत्थशुङ्गाश्च त्रिपलोन्मिताः।
कषाय एष पेष्याणि जीवन्ती कटुरोहिणी॥
पिप्पली पिप्पलीमूलं नागरं सुरदारु च।
कलिङ्गाः शाल्मलं पुष्पं वीरा चन्दनमुत्पलम्॥
कट्फलं चित्रकं मुस्तं प्रियङ्गुतिविषा स्थिरा।
पद्मोत्पलानां किञ्जल्कं समङ्गा सनिदिग्धिका॥
बिल्वं मोचरसः पाठा भागाः कर्षसमन्विताः।
चतुःप्रस्थे श्रितं प्रस्थं कषायस्यावतारयेत्॥
त्रिंशत्पलानि प्रस्थोऽत्र विज्ञेयो द्विपलाधिकः।

सुनिषन्नकचाङ्गेर्य्याः प्रस्थौ द्वौ स्वरसस्य च ॥
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ।
एतदर्शस्वतीसारे रक्तस्रावे त्रिदोषजे ॥
प्रवाहने गुदभ्रंशे पिच्छासु विविधासु च ।
उत्थाने चातिबहुशः शोथशूले गुदाश्रये ॥
मूत्रग्रहे मूढ़वाते मन्देऽग्नावरुचावपि ।
प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम् ॥
विविधेष्वन्नपानेषु केवलं वा निरत्ययमिति ।

भवति चात्र ।

व्यत्यासान्मधुराम्लानि शीतोष्णानि च योजयेत् ।
नित्यमग्निबलापेक्षी जयत्यर्शः कृतान् गदान् ॥
त्रयो विकाराः प्रायेण ये परस्परहेतवः ।
अर्शांसि चातिसारश्च ग्रहणीदोष एव च ॥
एषामग्निबले हीने वृद्धिर्वृद्धे परिक्षयः ।
तस्मादग्निबलं रक्ष्यमेषु त्रिषु विशेषतः ॥
भृष्टैः शाकैर्यवागूभिर्यूषैर्मांसरसैः खडैः ।
क्षीरतक्रप्रयोगैश्च विचित्रैर्गुदजान् जयेत् ॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधं द्रव्यं तत् सेव्यं नित्यमर्शसैः ॥
यदतो विपरीतं स्यान्निदाने यत् प्रदर्शितम् ।
गुदजैस्तत् परीतेन नैव सेव्यं कथञ्चन ॥
अर्शसां द्विविधं जन्म पृथगायतनानि च ।
स्थानसंस्थानलिङ्गानि साध्यासाध्यविनिश्चयः ॥
अभ्यङ्गाः स्वेदनं धूमाः सावगाहाः प्रलेपनाः ।

शोणितस्यावसेकश्च योगा दीपनपाचनाः॥
तक्रयोगान्नपानानि दीपन ग्राहकाणि च।
योगाः संशोधनार्थेव सर्पींषि विविधानि च॥
अन्नपानमधो भागं वस्त्यरिष्टाः सशर्कराः।
शुष्काणामर्शसां शस्ताः स्राविणां लक्षणन्तथा॥
द्विविधं सानुबन्धानां तेषां चेष्टं यथौषधम्।
रक्तसंशमना योगाश्चेष्टाश्च विविधात्मिकाः॥
स्नेहपानविधिश्चाग्र्यो विधिः पानाच्चयोश्च यः।
परिषेकावगाहाश्च प्रदेहाः प्रतिसारणम्॥
अतिवृत्तस्य रक्तस्य विधातव्यं यदुत्तरम्।
तत् सर्वमिह निर्दिष्टं गुदजानां चिकित्सितम्॥

इति अर्शसां चिकित्सितम्।

---

## दशमोऽध्यायः।

अथातोऽतीसार चिकित्सितं व्याख्यास्यामः।

भगवन्तं खल्वात्रेयं कृताह्निकं कृताग्निहोत्रमासीन मृषिगणपरिवृतमुत्तरे हिमवतः पार्श्वे विनयादुपेत्याभिवाद्याग्निवेश उवाच—

भगवन्नतीसारस्य प्रागुत्पत्तिनिमित्तलक्षणोपशमनानि प्रजानुग्रहार्थमाख्यातुमर्हसीति।

अथ भगवानात्रेयः तदग्निवेशवचनमनुनिशम्योवाच।— श्रूयतामग्निवेश! सर्वमेतदखिलेन व्याख्यायमानमादिकाले। खलु यज्ञेषु पशवः समालम्भनीया बभूवुर्नारम्भाय प्रक्रियन्ते स्म ततो दचयज्ञप्रत्यवरकालं मनोः पुत्राणां मरिष्य-न्नाभागेक्ष्वाकुकुविड़चर्य्यात्यादीनाञ्च क्रतुषु पशूनामेवाभ्य-नुज्ञानात्पशवः प्रोक्षणमवापुः। अतश्च प्रत्यवरकालं पृषध्रेण-दीर्घसूत्रेण यजमानेन पशूनामलाभाद्गवामालम्भः प्रा-वर्त्तितः। तं दृष्ट्वा प्रव्यथिता भूतगणाः तेषाञ्चोपयोगादुपमृ-तानां गवां गौरवा दौष्ण्यादसात्म्यत्वा दशस्तोपयोगा-च्चोपहताग्नीनामुपहतमनसां अतीसारः पूर्वमुत्पन्नः पृ-षध्रयज्ञे अथापरं कालं वातलस्य वातातपव्यायामातिमात्र निषेविणो रूक्षाल्पप्रमिताशिनः तीक्ष्णमद्यव्यवाय नित्यस्य उदावर्त्तयतश्च वेगाद्वायुः प्रकोपमापद्यते पक्ता चोपहन्यते सवायुः कुपितोऽग्नावुपहते मूत्रस्वेदौ पुरीषाशयमुपहृत्य ताभ्यां पुरीषं द्रवीकृत्यातीसाराय प्रकल्पते तस्य रूक्षाणि विज्जलमांसं विप्लुतनवचादितं रूचं द्रवं सशब्दं अशब्दं वा विबद्ध गूचवातमतिसार्य्यते पुरीषं वायुश्चान्तःकोष्ठस्थ स-शब्दशूलः तिर्य्यक् चरति विबद्ध इत्यामातिसारो वाता-त्मकं निबद्धमल्पाल्पं सशब्दं सशूलफेन पिच्छापरिकर्त्तिकं हृष्ट रोमा विनिश्वसन् शुष्कमुखः कट्यूरुत्रिकजानुशूलपृष्ठ-शूली भ्रष्टगुदो मुहुर्मुहुर्विग्रथितमुपवेश्यते। पुरीषं वा-तान्नमाहुरनुपन्नमित्येके वातानुग्रथितवर्चस्त्वात् पित्त-

लस्य पुनरम्ललवणकटुकक्षारोष्णतीक्ष्णातिमात्रनिषेविणः प्रततान्निसूर्य्यसन्तापो ष्णमारुतोपहतगात्रस्य क्रोधेर्ष्या बहुलस्य पित्तं प्रकोपमापद्यते तत् प्रकुपितं द्रवत्वादूष्माणमुपहत्य पुरीषाशयविस्मृतमौष्ण्याद् द्रवत्वात् सरत्वाच्च भित्वा पुरीषमतिसाराय प्रकल्पते तस्य रूपाणि हरिद्र हरितनीलकृष्णपित्तोपहितमतिदुर्गन्धमतिसार्य्यते पुरीषं तृष्णादाहस्वेदमूर्च्छाशूलब्रध्नसन्तापपाकपरीत इति पित्तातिसारः ।

श्लेष्मलस्य तु गुरुमधुरशीतस्निग्धोपसेविनः सम्पूरकस्य चिन्तयतो दिवास्वप्नपरस्यालस्य श्लेष्मा कोपमापद्यते । स्वभावाद्गुरुमधुरशीतस्निग्धः स स्रोतोऽग्निमुपहत्य सौम्यस्वभावात् पुरीषाशयमुपहत्योपक्लेद्य पुरीषमतिसाराय कल्पते तस्य रूपाणि स्निग्धं श्वेतं पिच्छिलं तन्तुमदामं गुरुदुर्गन्धश्लेष्मोपहितमनुबद्ध शूलमल्पाल्पमभीक्ष्णमतिसार्य्यते सप्रवाहिकां गुरूदरगुदवस्तिवङ्क्षणोद्देशः कृतोऽप्यकृतसंज्ञो भवति सलोमहर्षः सोत्क्लेशः निद्रालस्य परितः सादनोऽन्नद्वेषो चेति श्लेष्मातिसारः ।

अतिशीतस्निग्धरूक्षोष्ण गुरुखरकठिनविषमविरुद्धासात्म्य भोजना दभोजना त्कालातीत भोजनाद्यत्किञ्चिदभ्यवहरणाद् दुष्ट मद्यपानीय पाना दतिमद्यपानादसंशोधनात् प्रति कर्म्मणां विषमगमनादनुपचाराज्ज्वलनादित्य पवनसलिलाति सेवनादस्वप्नादति स्वप्राद्वेगविधारणा दृतु विपर्य्यया दयथा बलमारम्भाद्भयशोकचित्तोद्वेगातियोगात् क्रिमिशोषज्वरार्शो विकारातिक-

शनाद्वा विपन्नाग्नेस्त्रयो दोषाः प्रकुपिता भूय एवाग्निमुपहत्या पक्वाशयमनुप्रविश्यातीसारं सर्वदोषलिङ्गं जनयन्ति। अपि च शोणितादीन् धातूनतिप्रदुष्टान् दूषयन्तो धातुदोषस्वभावकृतानतीसारवर्णानुपदर्शयन्ति। तत्र शोणितादिषु धातुषु नातिप्रदुष्टेषु हारिद्रनीलमाञ्जिष्ठमांसधावनसन्निकाशं रक्तं कृष्णं श्वेतं वराहमेदःसदृशमनुबद्धवेदनमवेदनं वा समासव्यत्यासादुपविश्यते शकृद् ग्रथितमामं सकृत् सकृदपि पक्वमनतिक्षीणमांसशोणितबलो मन्दाग्निर्विहितसुखरसस्तादृशमातुरमासाद्य साध्योऽयमिति प्रत्याचक्षीत तद्यथा पक्वशोणिताभं यकृत् पिण्डोपमं मांसोदकसन्निकाशं दधिघृतमज्जतैलवसाक्षीरवेशवाराभमति नीलमतिरक्तमतिकृष्णमुदकमिवाच्छं पुनर्मेचकाभं अतिस्निग्धं हरितनीलकषाय वर्णं कर्बुरमाविलं तन्तुमदामं चन्द्रकोपहितमतिकुणपपूतिपूयगन्धमाममत्स्यगन्धं मक्षिकाक्रान्तं कुपितबहुधातुद्रवमल्पपुरीषमपुरीषं वातिसार्यमाणं तृष्णादाहज्वरतमकहिक्काश्वासानुबद्धमतिवेदनमवेदनं वा स्रस्तपक्वगुदं पतितगुदवलिं मुक्तनालमतिक्षीणबलमांसशोणितबलं सर्वपार्श्वास्थिशूलिनमरोचकातिप्रलापसंमोहपरीतं सहसोपरतविकारमतिसारिणमचिकित्स्यं विद्यादिति सन्निपातातिसारः।

तमसाध्यतामसंप्राप्तं चिकित्सेद्यथा प्रधानोपक्रमेण हेतूपशयदोषविशेषपरीक्षया चेति। भवति चात्र॥

आगन्तू द्वावतीसारौ मानसौ भयशोकजौ।<br>
तत्तयोर्लक्षणं वायोर्यदतीसारलक्षणम्॥

मारुतो भयशोकाभ्यां शीघ्रं हि परिकुप्यति।
तयोः क्रिया वातहरा हर्षणा श्वासनानि चेति ॥
इत्युक्ताः षडतीसाराः।
अतःपरं साध्यानां साधनमनुव्याख्यास्यामः।
दोषाः सन्निचिता यस्य विदग्धाहार मूर्च्छिताः।
अतीसाराय कल्पन्ते भूयस्तान् संप्रवर्त्तयेत् ॥
न तु संग्रहणं देयं पूर्वमामातिसारिणे।
विबध्यमानाः प्राग्दोषा जनयन्त्यामयान् बहून् ॥
शोथपाण्ड्वामय प्लीह कुष्ठगुल्मोदरज्वरान्।
दण्डकालसकाध्मानग्रहण्यर्शो गदांस्तथा ॥
तस्मादुपेक्षेतोत्क्लिष्टान् वर्त्तमानः स्वयं मलान्।
कृच्छ्रं वातहृतं दद्यादभयां संप्रवर्त्तिनीम् ॥
प्रमथ्यां मध्यदोषाणां दद्याद्दीपनपाचनीम्।
लङ्घनञ्चाल्पदोषाणां प्रशस्तमतिसारिणाम् ॥
पिप्पली नागरं धान्यं भूतीकमभया वचा।
ह्रीवेरं भद्रमुस्तानि बिल्वं नागरधान्यकम् ॥
पृश्निपर्णी श्वदंष्ट्रा च समांशा कण्टकारिका।
तिस्रः प्रमथ्या विहिताः श्लोकार्द्धेष्वतिसारिणाम् ॥
वचा प्रतिविषाभ्यां वा मुस्तपर्पटकेन वा।
ह्रीवेर शृङ्गवेराभ्यां पक्वं वा पाययेज्जलम् ॥
युक्तेऽन्नकाले क्षुत् क्षामं लघून्यन्नानि भोजयेत्।
तथा स शीघ्रमाप्नोति रुचिमग्निबलं बलम् ॥
तक्रेणावन्ति सोमेन यवाग्वा तर्पणेन वा।
सुरया मधुनाचादौ यथा सात्म्यमुपाचरेत् ॥

यवागूभिर्विलेपीभिः खडैर्यूषैरसौदनैः ।
दीपनग्राहिसंयुक्तैः क्रमश्च स्यादतः परम् ॥
सालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकाम् ।
बलां श्वदंष्ट्रां बिल्वानि पाठां नागरधान्यकम् ॥
शठीं पलाशं हपुषां वचां जीरकपिप्पलीम् ।
यवानीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥
वृक्षाम्लं दाडिमाम्लञ्च सहिङ्गु बिडसैन्धवम् ।
प्रयोजयेदन्नपाने विधिना सूपकल्पितम् ॥
वातश्लेष्महरोह्येष गणो दीपनपाचनः ।
ग्राही बल्यो रोचनश्च तस्मात् शस्तोऽतिसारिणाम् ।
आमे परिणते यस्तु विबद्धमतिसार्य्यते ।
सशूलं पिच्छमल्पाल्पं बहुशः सप्रवाहिकम् ॥
तं मूलकानां यूषेण बदराणामथापि वा ।
उपोदकायाः क्षीरिण्या यवान्या वास्तुकस्य वा ॥
सुवर्चलायाः चञ्चोर्वा शाकेना वल्गुजस्य वा ।
शठ्याः कर्कारुकाणां वा जीवन्त्याश्चिर्भटस्य वा ॥
लोणीकायाः सपाठायाः शुष्कशाकेन वा पुनः ।
दधिदाडिमसिद्धेन बहुस्नेहेन भोजयेत् ॥
कल्कः स्याद् बालबिल्वानां तिलकल्कश्च तत् समः ।
दध्नः शरोऽम्लस्नेहाद्यः खडो हन्यात् प्रवाहिकाम् ।
यवानां मुद्गमाषाणां शालीनाञ्च तिलस्य च ।
कोलानां बालबिल्वानां धान्ययूषं प्रकल्पयेत् ॥
ऐकध्यं यमके भृष्टं दधिदाडिमसाधितम् ।
वर्च्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥

दध्नः शरं वा यमके भृष्टं सगुडनागरम्॥
सुरां वा यमके भृष्टां व्यञ्जनार्थं प्रदापयेत्।
फलाम्लं यमके भृष्टं यूषं स्नेहनकस्य वा॥
वर्हितित्तिरिदक्षाणां वर्त्तकाणां तथा रसः।
स्निग्धाम्लाः शालयश्च चाग्र्या वर्चः क्षयरुजापहाः॥
अन्तराविरसं पूत्वा रक्तं मेषस्य चोभयम्।
पचेद्दाड़िमसाराम्लं सधान्यस्नेहनागरम्॥
भोजनं रक्तशालीनां तेनाद्यात् प्रपिवेच्च तत्।
तथा वर्चःक्षयकृतैर्व्याधिभिर्विप्रमुच्यते॥
गुदनिःसरणे शूले पानमम्लस्य सर्पिषः।
प्रशस्यते निरामाणामथवाप्यनुवासनम्॥
चाङ्गेरी कोलदध्यम्लनागरक्षारसंयुतम्।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम्॥
सचव्यपिप्पलीमूलं सव्योषं विड़दाड़िमम्।
पेयमम्लं घृतं युक्त्या सधान्या जाजिचित्रकम्॥
दशमूलोपसिद्धं वा सविल्वमनुवासनम्।
शताह्वा शटिविल्वैर्वा वचया चित्रकेण वा॥
स्तब्धभ्रष्टो गुदे पूर्वं स्नेहस्वेदौ प्रयोजयेत्।
सुस्विन्नञ्च मृदुभूतं पिचुना संप्रवेशयेत्॥
विबद्धवातवर्चास्तु बहुशूलप्रवाहिकः।
सरक्तपिच्छस्तृष्णार्त्तः क्षीरसौहित्यमर्हति॥
यमकस्योपरि क्षीरं धारोष्णं वा पिवेन्नरः।
शृतमेरण्डमूलेन बालविल्वेन वा पयः॥
एवं क्षीरप्रयोगेण रक्तं पिच्छावशाम्यति।

शूलं प्रवाहिका चैव निवन्धश्चोपशाम्यति ॥

पित्तातिसारं पुनर्निदानो पशमा कृतिभिरामान्वयमुपलभ्य यथाबलं लङ्घनपाचनाभ्यामुपाचरेत् तृष्यतस्तु मुस्तपर्पटको शीरशारिवा चन्दनकिराततिक्तकोदीच्यवारिभिरुपचारो लङ्घितस्य चाहारकाले बलातिबला सूर्य्यशालपर्णी पृश्निपर्णी बृहती कण्टकारिका शतावरी श्वदंष्ट्रानिर्यूहसंयुक्तेन यथा साम्यं यवागूमण्डादिना तर्पणादिना वा क्रमेणोपचारः मुद्गमसुरहरेणु कुष्ठकयूषैः लावकपिञ्जलशशहरिणैणेयकालपुच्छकरसैरीषदम्लैरनम्लैर्वा क्रमशोऽग्निं सन्धुक्षयेदनुबन्धत्वे तस्य दीपनीयपाचनीयोपशमनीयसंग्रहणीयान् योगान् प्रयोजयेदिति ।

भवन्ति चात्र ।

सक्षौद्रातिविषं पिष्ट्वा वत्सकस्य फलत्वचम् ।
पिबेत् पित्तातिसारघ्नं तण्डुलोदकसंयुतम् ॥
किराततिक्तकं मुस्तं वत्सकः सरसाञ्जनः ।
विल्वं दारुहरिद्रा च त्वक् ह्रीवेरं दुरालभम् ॥
चन्दनञ्च मृणालञ्च नागरं रोध्रमुत्पलम् ।
तिला मोचरसो रोध्रं समङ्गा कमलोत्पलम् ॥
उत्पलं धातकीपुष्पं दाड़िमत्वक् महौषधम् ।
कट्फलं नागरं पाठा जम्बाम्रास्थिदुरालभाः ॥
योगाः षडेते सक्षौद्रास्तण्डुलोदकसंयुताः ।
पेयाः पित्तातिसारघ्नाः श्लोकार्द्धेन निदर्शिताः ॥
जीर्णौषधानां शस्यन्ते यथा योगं प्रकल्पितैः ।
रसैः सांग्राहिकैर्युक्ताः पुराणा रक्तशालयः ॥

पित्तातिसारो दीप्ताग्नेः क्षिप्रं समुपशाम्यति।
आजक्षीरप्रयोगेन बलं वर्णश्च वर्द्धते॥
बहुदोषस्य दीप्ताग्नेः स प्राणस्य न तिष्ठति।
पैत्तिको यद्यतीसारः पयसा तं विरेचयेत्॥
पलाशफलनिर्यूहं पयसा पाययेत तम्।
ततोऽनुपाययेत् कोष्णं क्षीरमेव यथाबलम्॥
प्रवाहिते तेन मले प्रशाम्यत्युदरामयः।
पलाशवत् प्रयोज्या वा त्रायमाणा विशोधिनी।
संसर्गां क्रियमाणायां शूलं यद्यनुवर्त्तते।
स्रुतदोषस्य तं शीघ्रं यथा वदनुवासयेत्॥
शतपुष्पावरीभ्याञ्च पयसा मधुकेन वा।
तैलपादं घृतं सिद्धं सबिल्वमनुवासनम्।
कृतानुवासनस्यापि कृतसंसर्जनस्य च॥
वर्त्तते यद्यतीसारः पिच्छावस्तिरतः परम्।
परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः॥
श्रिते पयसि मृद्वीयादापोथ्योलूखले ततः।
पिष्टं मुष्टिसमं प्रस्थे तत् पूतं तैलसर्पिषा॥
योजितं मात्रया युक्तं कल्केन मधुकस्य च।
वस्तिमभ्यक्तगात्राय दद्यात् प्रत्यागते ततः॥
स्नात्वा भुञ्जीत पयसा जाङ्गलानां रसेन वा।
पित्तातिसारज्वरशोथगुल्माजीर्णातिसारग्रहणीप्रदोषान्॥
जयत्ययं शीघ्रमतिप्रवृद्धान् विरेचनास्थापनयोश्च वस्तिः।
पित्तातिसारी यस्त्वेतां क्रियां मुक्त्वा निषेवते॥

पित्तलान्यन्नपानानि तस्य पित्तं महाबलम् ।
कुर्य्याद्रक्तातिसारन्तु रक्तमाशु प्रदूषयेत् ॥
तृष्णां शूलं विदाहञ्च गुदपाकञ्च दारुणम् ।
छागं तत्र पयः शस्तं शीतं समधुशर्करम् ॥
पानार्थं व्यञ्जनार्थं च गुदप्रक्षालनं तथा ।
भोजनं रक्तशालीनां पयसा तेन भोजयेत् ॥
रसैः पारावतादीनां घृतभृष्टैः सशर्करैः ।
शशपक्षिमृगाणाञ्च शीतानां वनचारिणाम् ॥
रसैरनम्लैः सघृतैर्भोजयेत्तं सशर्करैः ।
रुधिरं मार्गमाजं वा घृतभृष्टं प्रशस्यते ॥
काश्मर्य्याः फलयूषो वा किञ्चिदम्लः सशर्करः ।
नीलोत्पलं मोचरसो समङ्गा पद्मकेसरम् ॥
अजाक्षीरयुतं दद्याज्जीर्णे च पयसौदनम् ।
दुर्बलं पाययित्वा वा तस्यैवोपरि भोजयेत् ॥
प्रागुक्तं नवनीतं वा दद्यात् समधुशर्करम् ।
प्राश्य क्षीरोत्थितं सर्पिः कपिञ्जलरसाशनः ।
त्र्यहादारोग्यमाप्नोति पयसाक्षीरभुक्तथा ॥
पीत्वा शतावरीकल्कं पयसा क्षीर भुक्जयेत् ।
रक्तातिसारं पीत्वा वा तथा सिद्धं घृतं नरः ॥
घृतं यवागूमण्डेन कुटजस्य फलैः शृतम् ।
पेयं तस्यानुपातव्यं पेयरक्तोपशान्तये ।
त्वक्‌चदारु हरिद्रायाः कुड़जस्य फलानि च ॥
पिप्पली शृङ्गवेरञ्च द्राक्षा कटुक रोहिणी ।
षड्‌भिरेतैर्घृतं सिद्धं पेया मण्डावदारितम् ॥

अतीसारं जयेत् शीघ्रं त्रिदोषमपिदारुणम् ।
कृष्णामृन्मधुकं शङ्खं रुधिरं तण्डुलीयकम् ॥
पीतमेकत्र सक्षौद्रं रक्तसंग्रहणं परं ।
पीतप्रियङ्गुकाकल्कः सक्षौद्रः तण्डुलाम्भसा ॥
रक्तस्रावं जयेच्छीघ्रं धन्वमांसरसाशिनः ।
कल्कस्तिलानां कृष्णानां शर्करा पञ्चभागिकः ।
आजेन पयसापीतः सद्योरक्तं नियच्छति ॥
पलं वत्सकवीजस्य श्रपयित्वा रसं पिवेत् ।
यो रसाशीजयेच्छीघ्रं सपैत्तं जठरामयम् ॥
पीत्वा सशर्करा क्षौद्रं चन्दनं तण्डुलाम्भसा ।
दाहतृष्णा प्रमेहेभ्यो रक्तस्रावाद्विमुच्यते ॥
गुदो बहुभिरुत्थानैर्यस्य पित्तेन पच्यते ।
सेचयेत्तं सुशीतेन पटोलमधुकाम्बुना ॥
पञ्चवल्कमधूकानां रसैरिक्षुरसैर्घृतैः ।
छागैर्गव्यैः पयोभिर्वा शर्करा क्षौद्रसंयुतैः ॥
प्रक्षालनानां कल्कैर्वा ससर्पिष्कैः प्रलेपयेत् ।
एषां वा सुकृतैश्चूर्णैस्तं गुदं प्रतिसारयेत् ॥
धातकी रोध्रचूर्णैर्वा समांशैः प्रतिसारयेत् ।
तथा तत्र स्रवत्यस्रं गुदस्तैः प्रतिसारितः ॥
यथोक्त सेचनैः शीतैः शोणिते निःस्रवत्यपि ।
गुदवङ्क्षणकट्यूरु सेचयेद्घृतभावितम् ॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ।
कार्पाससंगृहीतेन सेचयेद्गुदवङ्क्षणौ ॥
अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते ।

यदा वायुर्विबद्धश्च कृच्छ्रं चरति वा न वा ॥
पिच्छावस्तिं तदा तस्य यथोक्तमुपकल्पयेत् ।
प्रपौण्डरीकसिद्धेन सर्पिषा चानुवासयेत् ॥
प्रायशो दुर्बलगुदाः चिरकालातिसारिणः ।
तस्मादभीक्ष्णशस्तेषां गुदस्नेहं प्रयोजयेत् ॥
पवनोऽतिप्रवृत्तो हि स्वे स्थाने लभतेऽधिकम् ।
बलं तस्य सपित्तस्य जयार्थं वस्तिरुत्तमः ॥
रक्तं विट् सहितं पूर्वं पश्चाद्वायोऽतिसार्य्यते ।
शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ॥
शर्कराद्धांशिकं लीढ़ा नवनीतं नवोद्धृतम् ॥
क्षौद्रपादं जयेत् शीघ्रं तं विकारं हिताशिनः ।
न्यग्रोधोदुम्बराश्वत्थ शुङ्गानापोथ्य वासयेत् ॥
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत् ।
तदर्द्धं शर्करा युक्तं लिह्यात् सक्षौद्रपादिकम् ॥
अधो वा यदि वाप्यूर्द्ध्वं यस्य रक्तं प्रवर्त्तते ।
यस्त्वेवं दुर्बलो मोहात् पित्तलान्येव सेवते ॥
शीघ्रं विपद्यते प्राप्य वलीपाकं सुदारुणम् ।
श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम् ॥
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः ।
लङ्घितस्यानुपूर्व्याच्च कृतायान्न निवर्त्तते ॥
कफजो यद्यतीसारः कफघ्नैस्तमुपाचरेत् ।
विल्वकर्कटिका मुस्त मभया विश्वभेषजम् ॥
वचा विड़ङ्गं भूतीकं धान्यकं देवदारु च ।
कुष्ठं सातिविषा पाठा चव्यं कटुक रोहिणी ॥

पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली ।
योगान् श्लेष्मातिसारविहितांश्चतुरस्तान् प्रयोजयेत् ॥
शृतान् श्लेष्मातिसारेषु कायाग्निबलवर्द्धनान् ।
अजाजीं गजितां पाठां नागरं मरिचानि च ॥
चाङ्गेरी कोलतक्राम्लांश्चतुरस्तान् कफातुरे ।
श्लेष्मातिसारविहितान् दद्यात् सस्नेहलवणान् खड़ान् ।
कपित्थमध्यं लीढ्वा तु सव्योषं क्षौद्रशर्करम् ॥
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात् ।
बालबिल्वं गुड़ं तैलं पिप्पलीं विश्वभेषजम् ।
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ॥
भोज्यं मूलकयूषेण वातघ्नैश्चोपभेषजैः ।
वातातिसारविहितैर्यूषैर्मांसरसैः खड़ैः ॥
पूर्वोक्तमम्लसर्पिर्वा कट्फलं वा यथाबलम् ।
पुराणं वा घृतं दद्याद्यवागूमण्डपायितम् ॥
वातश्लेष्मविबन्धे वा कफे वाते स्रवत्यपि ।
शूले प्रवाहिकायां वा पिच्छाबस्तिं प्रकल्पयेत् ॥
पिप्पली बिल्वकुष्ठानां शताह्वा वचयोरपि ।
कल्कैः सलवणैर्युक्तं पूर्वोक्तं सन्निधापयेत् ॥
प्रत्यागते सुखस्नातं कृताहारं दिनात्यये ।
बिल्वतैलेन मतिमान् सुखोष्णेनानुवासयेत् ॥
वचाग्नेरथवा कल्कैस्तैलं पक्त्वानुवासयेत् ।
बहुशः कफवातार्त्तं तथा स लभते सुखम् ॥
स्वे स्थाने मारुतोऽस्य वर्द्धते कफसंक्षये ।
सद्यः सहसा हन्यात्प्राणान् तं त्वरया जयेत् ॥

वातस्यानुजयेत् पित्तं पित्तस्यानुजयेत् कफम् ।
त्रयाणां वा जयेत् पूर्वं यो भवेद् बलवत्तमः ॥
इति तत्र श्लोकः ।
प्रागुत्पत्तिनिमित्तानि लक्षणं साध्यता तथा ।
क्रिया चावस्थिकी सिद्धा निर्दिष्टा ह्यातिसारिकी ॥

इत्यतीसार चिकित्सितम् ।

---

द्वादशोऽध्यायः ।

अथातो वीसर्पचिकित्सितं व्याख्यास्यामः ।

कैलासे किन्नराकीर्णे बहुप्रस्रवणोपले ।
पादपैर्विविधैः स्निग्धैर्नित्यं कुसुमसम्पदैः ॥
वमद्भिर्मधुरान् गन्धान् सर्वतः समलङ्कृते ।
विहरन्तं जितात्मानमात्रेयमृषिवन्दितम् ॥
महर्षिभिः परिवृतं विभुं भूतहिते रतम् ।
अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥

भगवन्! दारुणं रोगमाशीविषविषोपमम्।
विसर्पन्तं शरीरेषु देहिनामुपलक्षये॥
सहसैव नरास्तेन परीताः शीघ्रकारिणा।
विनश्यन्त्यनुपक्रान्तास्तत्र नः संशयो महान्॥
स नाम्ना केन विज्ञेयः संस्थितः केन हेतुना।
कतिभेदः किमधातुः किं निदानः किमाश्रयः॥
सुखसाध्यः कृच्छ्रसाध्यो ज्ञेयो यश्चानुपक्रमः।
कथं कैर्लक्षणैः किञ्च भगवंस्तस्य भेषजम्॥
तदग्निवेशस्य वचः श्रुत्वात्रेयः सुदुर्वचम्।
यथावदखिलं सर्वं प्रोवाच मुनिसत्तमः॥
विविधं सर्पति यतो विसर्पस्तेन स स्मृतः।
परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात्॥
स च सप्तविधो दोषैर्विज्ञेयः सप्तधातुकः।
पृथक् त्रयस्त्रिभिः किन्तु विसर्पो द्वन्द्वजास्त्रयः॥
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः।
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः।
यस्तु कर्दमको घोरः स पित्तकफसम्भवः॥
रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः।
वीसर्पाणां समुत्पत्तौ विज्ञेयाः सप्तधातवः॥
लवणाम्लकटूष्णानां रसानामतिसेवनम्।
दध्यम्लमस्तुशुक्तानां सुरासौवीरकस्य च॥
व्यापन्नबहुमद्योष्णरागषाड़वसेवनात्।
शाकानां हरितानाञ्च सेवनाच्च विदाहिनाम्॥

कूर्चिकानां किलाटानां सेवनान्मन्दकस्य च ।
दध्नः शाण्डाकिपूर्वाणामासुतानाञ्च सेवनात् ॥
तिलमाषकुलत्थानां तैलानां पैष्टिकस्य च ।
ग्राम्यानूपौदकानाञ्च मांसानामतिसेवनात् ।
अत्यादान दिवास्वप्नादजीर्णाध्यशनात् क्षतात् ॥
क्षतबन्धप्रपतनाद् घर्मकर्मातिसेवनात् ।
विषवाताग्निदोषाच्च वीसर्पाणां समुद्भवः ॥
एतैर्निदानैर्व्यामिश्रैः कुपिता मारुतादयः ।
दूष्यं संदूष्य रक्तादि विसर्पन्त्यहिताशिनाम् ॥
बहिः श्रितः श्रितश्चान्तस्तथा चोभयसंश्रितः ।
वीसर्पो बलमेतेषां ज्ञेयं गुरु यथोत्तरं
बहिर्मार्गाश्रितं साध्यमसाध्यमुभयाश्रितम् ।
वीसर्पं दारुणं विद्यात् सुकृच्छ्रं त्वन्तराश्रयम् ॥
अन्तः प्रकुपिता दोषा वीसर्पन्त्यन्तराश्रये ।
बहिर्बहिः प्रकुपिताः सर्वत्रोभयसंश्रिताः ॥
मर्मोपघातात् संमोहादयनानां विघट्टनात् ।
तृष्णातियोगाद्वेगानां विषमञ्च प्रवर्त्तनात् ॥
विद्याद्विसर्पमन्तर्जमाशु चाग्निबलक्षयात् ।
अतो विपर्ययाद्बाह्यमन्यैर्विद्यात् स्वलक्षणैः ॥
यस्य लिङ्गानि सर्वाणि बलवद्यस्य कारणम् ।
यस्य चोपद्रवाः कष्टा मर्मगो यश्च हन्ति सः ॥
रूक्षोष्णैः केवलो वायुः पूरणैर्वा समावृतः ।
प्रदुष्टो दूषयन् दूष्यं विसर्पति यथाबलम् ॥

इति तस्य स्वरूपाणि

भ्रमदवथु पिपासा निस्तोदशूलाङ्गमर्दोद्वेष्टन कम्पनज्वर-तमकास्थिसन्धिभेदविश्लेषणवेपनारोचकाश्चक्षुषोराकुलत्वम-स्रागमनं पिपीलिकासञ्चार इव चाङ्गेषु यस्मिंश्चावकाशे विसर्पो विसर्पति सोऽवकाशः श्यावारुणावभासः श्वयथुमा-न्निस्तोदभेदशूलायाससङ्कोचहर्षस्फुरणैरतिमात्रं प्रपीड्यते। अनुपक्रान्तश्चोपचीयते शीघ्रं भेदैः स्फोटकैस्तनुभिररुणाभैः श्यावैर्वा तनुविशदारुणाल्पास्रावैर्विबद्धवातमूत्रवर्चं स्तानि निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति वातवीसर्पः।

पित्तमुष्णोपचारादिविदाह्यम्लाशनैश्चितम्।
दूष्यं संदूष्य मार्गांश्च पूरयन् वै विसर्पतीति॥

तस्य रूपाणि ज्वरस्तृष्णामूर्च्छामोहच्छर्दिररोचकोऽङ्ग-भेदः स्वेदोऽतिमात्रमन्तर्दाहः प्रलापः शिरोरुक् चक्षुषोरा-कुलत्वमरतिभ्रमः शीतवातवारितर्षोऽतिमात्रं हरितनेत्र मूत्रवर्चस्त्वं तेषां हरितहारिद्ररूपदर्शनं यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशस्ताम्रहरितहारिद्रनीलकृष्णर-क्तानां वर्णानामन्यतमं पुष्यति। सोत्सेधैश्चातिमात्रं दाह-सम्भोजनपरीतैः स्फोटकैरुपचीयते तुल्यवर्णास्रावैरचिर-पाकैर्निदानोक्तानि नोपशेरते विपरीतानि चोपशेरत इति पित्तविसर्पः।

स्वाद्वम्ललवणस्निग्ध गुर्वन्न स्वप्नसञ्चितः।
कफः संदूषयन् दूष्यं कृच्छ्रमङ्गे विसर्पतीति॥

तस्य रूपाणि शीतकः शीतकज्वरो गौरवं निद्रा तन्द्रा रोचको मधुरास्यत्वमास्योपलेपो निष्ठीविका छर्दिरालस्यं

श्लेष्मिकमग्निनाशो दौर्बल्यं यस्मिंश्चावकाशे विसर्पति सोऽवकाशः श्वयथुमान् पाण्डुर्मात्रातिरक्तः स्नेहः सुप्तिस्तम्भगौरवैरन्वितोऽल्पवेदनः कृच्छ्रपाकैः चिरकारिभिः बहुलत्वगुपलेपैः स्फोटैः श्वेतपाण्डुभिरनुबध्यते प्रभिन्नश्च श्वेतं पिच्छिलं तन्तुमद्घनमनुबद्धस्निग्धमास्रावं स्रवत्यूर्ध्वं च गुरुभिः स्निग्धैर्जालावततैः स्निग्धैर्बहुलत्वगुपलेपैर्व्रणैरनुबध्यतेऽनुसक्तोऽश्वेतनखनयनवदनत्वङ्मूत्रवर्चस्तानि निदानोक्तानि नोपशेरते विपरीतानि चोपशेरत इति श्लेष्मविसर्पः।

वातपित्तं प्रकुपितं अतिमात्रं स्वहेतुभिः।
परस्परं लब्धबलं दहद् गात्रं विसर्पतीति॥

तदुपतापादातुरः सर्वशरीरमङ्गारैरिवाकीर्य्यमाणं मन्यते। छर्द्यतीसारमूर्च्छादाहमोहज्वरतमकारोचकास्थिसन्धिभेदतृष्णाविपाकाङ्गभेदादिभिश्चाभिभूयते। यं यं चावकाशं विसर्पोऽनुसर्पति सोऽवकाशः शान्ताङ्गारप्रकाशोऽतिरिक्तो वा भवत्यग्निदग्धप्रकारैश्च स्फोटैरुपचीयते स शीघ्रगत्वादाश्वेव मर्मानुसारी भवति सर्पति चोपतप्तपवनोऽतिबलो भिनत्त्यङ्गान्यतिमात्रं प्रमोहयति संज्ञां हिक्काश्वासौ जनयति नाशयति निद्रां। सनष्टनिद्रः प्रमूढसंज्ञो व्यथितचेता न क्व वचनसुखमुपलभते अरतिपरीतः स्थानादासनात् शय्यां क्रान्तुमिच्छति क्लिष्टभूयिष्ठश्चाशु निद्रां भजत्य बलो दुःखप्रबोधश्च तमेवंविधमग्निवीसर्पपरीतमचिकित्स्यं विद्यात्।

कफपित्तं प्रकुपितं बलवत् स्वेन हेतुना।
विसर्पत्येकदेशं तु प्रक्लेदयति देहिनः॥

तद्विकाराः शीतज्वरः शिरोगुरुत्वं दाहः स्तैमित्य-
मङ्गावसादनं निद्रा तन्द्रा मोहोऽन्नद्वेषः प्रलापोऽग्निना-
शो दौर्बल्यमस्थिभेदो मूर्च्छा पिपासा स्रोतसां प्रलेपो
जाड्यमिन्द्रियाणां प्रायोपवेशनमङ्गविक्षेपो रतिरौत्सुक्यं
चोपजायते प्रायश्चामाशये विसर्पत्यलसक एकदेशग्राही
यस्मिंश्चावकाशे विसर्पति सोऽवकाशो रक्तपित्तपीतपाण्डु-
पीड़कापकीर्ण इव मेचकाभः कालो मलिनः स्निग्धो ब-
हूष्मा गुरु स्तिमितवेदन श्वयथुमान् गम्भीरपाकः निरा-
स्रावः शीघ्रक्लेदः स्विन्नक्लिन्नपूतिमांसत्वक् क्रमेणाल्परुक्
परामृष्टोऽवदीर्य्यते । कर्द्दम इवावपीड़ितोऽनन्तरं प्रयच्छ-
त्युपक्लिन्नपूतमांसत्यागी शिरास्नायुसंदर्शी कुणपगन्धी संज्ञा-
स्मृतिहर्त्ता तं कर्द्दमवीसर्पपरीतमचिकित्स्यं विद्यात् । स्थि-
रगुरुकठिनमधुरशीतस्निग्धान्नपानाभिष्यन्दि सेविनामव्याया-
माप्रतिकर्म्म शीलिनां श्लेष्मावायुश्च प्रकोपमापद्यते तावुभौ
दुष्टप्रवृद्धौ अतिबलौ प्रदूष्य दूष्यं विसर्पाय कल्पेते । तत्र वायुः
श्लेष्मणा विबद्धमार्गस्तमेव न श्लेष्माणमनेकधा भिन्दन् क्रमेण
ग्रन्थिमालां कृच्छ्रपाकसाध्यां कफाशये संजनयत्युत्सन्नर-
क्तस्य वा प्रदूष्य रक्तं सिरास्नायुमांसत्वगाश्रितं ग्रन्थिवीसर्पं
कुरुतः तीव्ररुजाग्रन्थीनां स्थूलानामणूनां दीर्घवृत्तरक्तानां
अणूनान्तु तदुपतापाज्ज्वरातीसारकासहिक्काश्वासशोषप्रमेह
वैवर्ण्या रोचक विपाकच्छर्द्दिमूर्च्छाङ्गभङ्गनिद्रारतिसंसद-
नाद्याः प्रादुर्भवन्त्युपद्रवा स्तैरुपद्रवैरुपद्रुतः सर्वकर्म्मणां
विषयमतिपतितो विवर्ज्जनीयो भवति ग्रन्थिवीसर्पः । उप-
द्रवस्तु खलु रोगान्तरकालजो रोगाश्रयो रोग एव स्थलो-

ग्पूर्व्वो रोगात् पश्चाज्जायतेत्युपद्रवसंज्ञः तत्र प्रधानो व्याधिर्व्याधेर्गुणभत उपद्रवस्तस्य प्रायः प्रधानप्रशमे प्रशमो भवति स तु पीड़ाकरतरो भवति पश्चादुत्पद्यमानो व्याधिः परिक्लिष्टशरीरत्वात्तस्मादुपद्रवं त्वरमाणोऽभिबाधेत् सर्व्वायतनसमुत्थं सर्व्वलिङ्गव्यापिनं सर्व्वधात्वनुसारिणमाशुकारिण महात्ययिकमिति सन्निपातवीसर्पं अचिकित्स्यं विद्यात् तत्र वातपित्तश्लेष्मनिमित्ता वीसर्पास्त्रयः साध्या भवन्त्यग्निकर्द्दमाख्यौ पुनरनुपसृष्टे मर्म्मणि अनुपहते वा सिरास्नायुमांसक्लेदे सावधारणक्रियाभिरुपायैः भावे वाभ्यस्यमानो प्रशान्तिमापद्ये यातामनादरोपक्रान्तं पुनस्तयोरन्यतरो हन्याद्देहमाश्वे वाशीविषवत् तथा ग्रन्थिवीसर्पमज्जातोपद्रवमारभेत चिकित्सितुमुपद्रवोपद्रुतं त्वेनं परिहरेत सन्निपातजं त्वनुसारित्वादाशु कारित्वाद्विरुद्धोपक्रमत्वाच्चासाध्यं विद्यात् ।

तत्र साध्यानां साधनमनुव्याख्यास्यामः ।
लङ्घनोल्लेखने शस्ते तिक्तकानां च सेवनम् ।
कफस्थानगते सामे रूक्षशीतैः प्रलेपयेत् ॥
पित्तस्थानगतेऽप्येतत् सामे कुर्य्याच्चिकित्सितम् ।
शोणितस्यावसेकश्च विरेकं च विशेषतः ॥
मारुताशनसम्भूतेऽप्यादितः स्याद्विरूक्षणम् ।
रक्तपित्तान्वयेऽप्यादौ स्नेहनं न हितं मतम् ॥
वातोल्वणे पित्त घृतं पैत्तिके च प्रशस्यते ।
लघुदोषे महादोषे पैत्तिके स्याद्विरेचनम् ॥
न घृतं बहुदोषाय देयं यन्न विरेचयेत ।

तेन दोषो ह्युपस्तब्धः त्वङ्मांसरुधिरं पचेत्॥
तस्मादिहैकमेवादौ शस्तं विद्यात् विसर्पिणः।
रुधिरस्यावसेकं च तद्ध्याश्रयसंज्ञितम्॥
इति वीसर्पनुत् प्रोक्तं समासेन चिकित्सितम्।
एतदेव पुनः सर्वं व्यासतः संप्रवक्ष्यते॥
मदनं मधुकं निम्बं वत्सकस्य फलानि च।
वमनं संप्रदातव्यं वीसर्पे कफपित्तजे॥
पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च।
वीसर्पे वमनं शस्तं तथाचेन्द्रयवैः सह॥
यांश्च योगान् प्रवक्ष्यामि कफेषु कफपित्तिनाम्।
विसर्पिणां प्रयोज्यास्ते दोषनिर्हरणाः परम्॥
मुस्त निम्बपटोलानाञ्चन्दनोत्पलयोरपि।
शारिवामलकौ शीरं मुस्तानां वा विचक्षणः॥
पाययेत कषायान् हि शिवान् वीसर्पनाशनान्।
किराततिक्तकं रोध्रं दुरालभां सचन्दनाम्॥
नागरं पद्मकिञ्जल्कं उत्पलं सविभीतकम्।
मधुकं नागपुष्पं च दद्याद्वीसर्पशान्तये॥
प्रपुण्डरीकं मधुकं पद्मकिञ्जल्कमुत्पलम्।
नागपुष्पं च रोध्रं च तेनैव विधिना पिबेत्॥
द्राक्षां पर्पटकं शुण्ठीं गुडूचीं धन्वयावकम्।
निशापर्युषितं दद्यात् तृष्णा वीसर्पशान्तये॥
पटोलं पिचुमर्दश्च दार्वीं कटुकरोहिणीम्।
यष्ट्याह्वां त्रायमाणाञ्च दद्याद्वीसर्पशान्तये॥

७६।

पटोलादि कषायं वा पिवेत् त्रिफलया सह ।
मसूर विदलैर्युक्तं घृतमिश्रं प्रदापयेत् ॥
पटोलपत्र मुद्गानां रसमामलकस्य च ।
पाययेत घृतोन्मिश्रं नरं वीसर्पपीड़ितम् ॥
यच्च सर्पिर्महातिक्तं पित्तकुष्ठ निवर्हणम् ।
निर्दिष्टं तदपि प्राज्ञो दद्याद्वीसर्पशान्तये ॥
त्रायमाणा घृतं सिद्धं गौल्मिके यदुदाहृतम् ।
वीसर्पाणां प्रशान्त्यर्थं दद्यात्तदपि बुद्धिमान् ॥
त्रिवृच्चूर्णं समालोड्य सर्पिषा पयसा तथा ।
त्रायमाणा शृतं वापि पयो दद्याद्विरेचनम् ॥
त्रिफला रससंयुक्तं सर्पिस्त्रिवृतया सह ।
प्रयोक्तव्यं विरेकार्थं वीसर्पं ज्वरनाशनम् ॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत् ।
स एव गुरुकोष्ठाय त्रिवृच्चूर्णं युतो हि सः ॥
दोषे कोष्ठगते भूय एतत् कुर्य्याच्चिकित्सितम् ।
शाखा दुष्टे तु रुधिरे रक्तमेवादितो हरेत् ॥
भिषग्वातान्वितं रक्तं विषाणेनाभिनिर्हरेत् ।
पित्तान्वितं जलौकोभिः कफपित्तमलावुना ॥
यथासन्नं विकारस्य व्यधयेदाशु वासिनाम् ।
त्वङ्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥
अन्तः शरीरे संशुद्धे दोषत्वङ्मांससंश्रिते ।
आदितः स्वल्पदोषाणां क्रिया बाह्या प्रवक्ष्यते ॥
उदुम्बरत्वग्मधुकं पद्मकिञ्जल्कमुत्पलम् ।
नागपुष्पं प्रियङ्गुश्च प्रदेहः सघृतो हितः ॥

न्यग्रोध पादास्तरुणाः कदली गर्भसंयुताः।
विसग्रन्थिः सलेपः स्यात् शतधौत घृताप्लुतः॥
कालीयं मधुकं हेम वस्त्रं चन्दनपद्मकम्।
एणामृणालं फलिनी प्रलेपः स्याद् घृताप्लुतः॥
शाद्वलञ्च मृणालञ्च शङ्खचन्दनमुत्पलम्।
वेतसस्य च मूलानि प्रदेहः स्यात् सतण्डुलम्॥
शारिवा पद्मकिञ्जल्कमुशीरं पद्मकोत्पलम्।
मञ्जिष्ठा चन्दनं रोध्रं अभया च प्रलेपनम्॥
नलदञ्च हरेणुश्च रोध्रं मधुकपद्मकौ।
दूर्वा सर्ज्जरसश्चैव सघृतं स्यात् प्रलेपनम्॥
यावकाः शक्तवश्चैव सर्पिषा सह योजिताः।
प्रदेहो मधुकं वीरा सघृता यवशक्तवः॥
बलामुत्पलशालूकं वीरामगुरुचन्दनम्।
कुर्य्यादालेपनं वैद्यो मृणालञ्च विसान्वितम्॥
यवचूर्णं समधुकं सघृतञ्च प्रलेपनम्॥
हरेणवो मसूराश्च समुद्गाःश्वेतशालयः।
पृथक् पृथक् प्रदेहाः स्युः सर्वे वा सर्पिषा सह॥
पद्मिनी कर्दमः शीतो मौक्तिकं पिष्टमेव वा।
शङ्खः प्रवालः शुक्तिर्वा गैरिको वा घृताप्लुतः॥
प्रपुण्डरीकं मधुकं बला शालूकमुत्पलम्।
न्यग्रोधपत्रं दुग्धीका सघृतं स्यात् प्रलेपनम्॥
विसानि च मृणालाश्च सघृता च कशेरुका।
शतावर्य्या विदार्य्याश्च कन्दौ धौत घृताप्लुतौ॥
शैवालं नलमूलानि गोजिह्वा वृषकर्णिका।

इन्द्राणीशाकं सघृतं शिरीषत्वग् बला घृतम् ॥
न्यग्रोधोदुम्बरप्लक्षवेतसाश्वत्थ पल्लवैः ।
त्वक् कल्कैर्बहुसर्पिष्कैः शीतैरालेपनं हितम् ॥
प्रदेहाः सर्व्व एवैते वातपित्तोल्बणे शुभाः ।
सकफे तु प्रवक्ष्यामि प्रलेपनपरान् शुभान् ॥
त्रिफलां पद्मको शीरं समङ्गां करवीरकम् ।
नलमूलान्यनन्तं च प्रदेहमुपकल्पयेत् ॥
खदिरं सप्तपर्णञ्च मुस्तमारग्वधं धवम् ।
कुरण्टकं देवदारु दद्यादालेपनं भिषक् ॥
आरग्वधस्य पत्राणि त्वचं श्लेष्मान्तकस्य च ।
इन्द्राणीशाकं काकाह्वां शिरीष कुसुमानि च ।
प्रपुण्डरीकं ह्रीवेरं दार्व्वी त्वङ्मधुकं बलाम् ॥
पृथगालेपनं कुर्य्याद् द्वन्द्वशः सर्व्वशोऽपि वा ।
प्रदेहाः सर्व्व एवै ते देयाः स्वल्पघृता युताः ॥
वातपित्तोल्बणे ये तु प्रदेहास्ते घृताधिकाः ।
घृतेन शतधौतेन प्रदिह्यात् केवलेन च ॥
घृतमण्डेन शीतेन पयसा मधुकाम्बुना ।
पञ्चवल्ककषायेण सेचयेत् शीतलेन वा ॥
वातासृक् पित्त बहुलं विसर्पं बहुशो भिषक् ।
सेचना स्ते प्रदेहा ये तएव घृतसाधनाः ॥
ते चूर्णयोगा वीसर्पे चूर्णानामवचूर्णनाः ।
दूर्वा स्वरससिद्धं च घृतं स्याद् व्रणरोपणम् ॥
दार्व्वी त्वङ् मधुकं रोध्रं केसरञ्चावचूर्णनम् ।
पटोल पिचुमर्द्दस्तु त्रिफला मधुकोत्पले ॥

एतत् प्रक्षालनं सर्पिर्भिश्च चूर्णं प्रलेपनम्।
प्रदेहाः सर्व एवैते कर्त्तव्याः संप्रसादनाः॥
व्रणे व्रणे प्रयोक्तव्याः पूर्वमुद्धृत्य लेपनम्।
अनवीने घृते पूर्वे प्रदेहा बहुशोधनाः॥
देयाः प्रदेहाः कफजे पर्य्याधानोद्धृते घनाः।
त्रिभागाङ्गुष्ठमात्रः स्यात् प्रलेपः कर्षयेपितः॥
नातिस्निग्धो न रूक्षश्च न पिण्डो न द्रवः समः।
न च पर्युषितं लेपं कदाचिदवचारयेत्॥
न च तेनैव लेपेन पुनर्जातु प्रलेपयेत्।
ते दवीसर्पशूलानि सोष्णभावात् प्रवर्त्तयेत्॥
लेपोह्यपरिपट्टस्य क्षतः स्वेदयति व्रणम्।
स्वेदजाः पीड़कास्तस्य कण्डूश्चैवोपजायते॥
उपर्युपरिलेपस्य लेपो यद्यवचार्य्यते।
तानेव दोषान् जनयेत् पट्टस्योपरि यान् क्षतः॥
अतिस्निग्धोऽतिद्रवश्च लेपो यद्यवचार्य्यते।
त्वचि न श्लिष्यते सम्यक् न दोषं शमयत्यपि॥
तन्वालिप्तं न कुर्वीत संशुष्को ह्यापुटायते।
नचौषधिरसो व्याधिं प्राप्नोत्यपि च शुष्यति॥
तन्वालिप्तेन ये दोषास्तानेव जनयेद् भृशम्।
संशुष्कः पीड़येत् व्याधिं निस्नेहो ह्यवचारितः।
अन्नपानानि वक्ष्यामि वीसर्पाणां निवृत्तये॥
लङ्घितेभ्यो हितो मन्थो रूक्षः सक्षौद्रशर्करः।
मधुरः किञ्चिदम्लो वा दाड़िमामलकान्वितः॥
सपरूषकमृद्वीकः सखर्जूरः शृताम्बुना।

तर्पणैर्यवशालीनां यूषैर्भुञ्जीत भोजनम् ॥
मुद्गांश्च मसूरांश्च चणकान्यवार्थमुपकल्पयेत् ।
अनम्लान् दाड़िमान् वापि पटोलामलकैः सह ॥
जाङ्गलानाञ्च मांसानां रसांस्तस्योपकल्पयेत् ।
येषां नात्युचितः शालिर्नरा ये च कफाधिकाः ॥
विदाहीन्यन्नपानानि विरुद्धानि च वर्जयेत् ।
क्रोधव्यायामसूर्य्याग्निप्रवातस्वपनं दिवा ॥
कुर्य्याच्चिकित्सितादस्मात् शीतप्रायाणि पैत्तिके ॥
रूक्षप्रायाणि कफजे स्नेहिकान्यनिलात्मके ।
वातपित्तप्रशमनमग्निविसर्पणे हितम् ॥
कफपित्तप्रशमनं प्रायः कर्द्दमसंज्ञिते ।
रक्तपित्तोत्तरं दृष्ट्वा ग्रन्थिवीसर्पमादितः ॥
रूक्षणैर्लङ्घनैः सेकैः प्रदेहैः पाञ्चवल्किकैः ।
शिरा मोक्षैर्जलौकोभिर्वमनैः सविरेचनैः ॥
घृतैः कषायतिक्तैश्च कालज्ञः समुपाचरेत् ।
ऊर्द्धञ्चाधश्च शुद्धाय रूक्षे चाप्यवसेचिते ॥
वातश्लेष्महरं कर्म ग्रन्थिवीसर्पिणे हितम् ।
उत्कारिकाभिरुष्णाभिरुपनाहः प्रशस्यते ॥
स्निग्धाभिर्वेशवारैर्वा ग्रन्थिवीसर्पशूलिनः ।
दशमूलोपसिद्धेन तैलेन परिषेचनम् ॥
सुखोष्णया प्रदिह्याद् वा पिष्टया कृष्णगन्धया ।
शुष्कमूलककल्केन नक्तमालत्वचापि वा ॥
विभीतकस्य वा ग्रन्थिं कल्केनोष्णेन वा पिबेत् ।
शङ्खां नागबलां पथ्यां भूर्जग्रन्थिं विभीतकम् ॥

वंशपत्राण्यग्निमन्थं कुर्य्यात् ग्रन्थिप्रलेपनम्।
दन्ती चित्रकमूलत्वक् सौधार्को पयसी गुड़ः॥
भल्लातकास्थिकासीसं लेपो भिन्द्याच्छिलामपि।
बहिर्मार्गस्थितं ग्रन्थिं किं पुनः कफसम्भवम्॥
दीर्घकालस्थितं ग्रन्थिं भिन्द्याद्वा भेषजैरिमैः।
मूलकानां कुलत्थानां यूषैः सक्षारदाड़िमैः॥
गोधूमान्नैर्यवान्नैर्वा सशीधु मधुशर्करैः।
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः॥
त्रिफलायाः प्रयोगैश्च पिप्पलीक्षौद्रसंयुतैः।
मुस्तभल्लातसक्तूनां प्रयोगैर्माक्षिकस्य च॥
देवदारुगुड़ूच्योश्च प्रयोगैर्गिरिजस्य च।
धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः॥
अयोलवणपाषाणहेमताम्रैः प्रपीड़नैः।
आभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बली स्थिरः॥
ग्रन्थिः पाषाणकठिनो यदा नैवोपशाम्यति।
अथास्य दाहः क्षारेण शरैर्लौहेन वाहितः॥
पाकिभिः पाचयित्वा वा पाटयित्वा समुद्धरेत्।
मोचयेत् बहुशश्चास्य रक्तमुत्क्लेशमागतम्॥
पुनश्चापहृते रक्ते वातश्लेष्मजिदौषधम्।
धूमो विरेकः शिरसः स्वेदनं परिमर्दनम्॥
अपशाम्यति दाहेन पाटवं वा प्रशस्यते।
प्रक्लिन्ने दाहपाकाभ्यां भिषक् शोधनरोपणैः॥
बाह्यैश्चाभ्यन्तरैश्चैव व्रणवत् समुपाचरेत्।
कम्पिल्यकं विड़ङ्गानि दार्व्वीं कारञ्जकं फलम्॥

पिष्ट्वा तैलं विपक्तव्यं ग्रन्थिव्रण चिकित्सितम् ।
द्विव्रणीयोपदिष्टेन कर्म्मणा चाप्युपाचरेत् ॥
देशकाल प्रमाणज्ञो व्रणग्रन्थि विसर्पवित् ।
य एव विधिरुद्दिष्टो ग्रन्थीनां विनिवृत्तये ॥
स एव गलगण्डानां कफजानां निवृत्तये ।
सर्वे च गलगण्डास्तु ये कफानुगता नृणाम् ॥
घृतक्षारकषायाणां मभ्यासान्न भवन्ति ते ।
यानीहोक्तानि कर्म्माणि वीसर्पाणां निवृत्तये ॥
एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः ।
विसर्पो न ह्यसंसृष्टो रक्तपित्तेन जायते ॥
तस्मात् साधारणं सर्वमुक्तमेतच्चिकित्सितम् ।
विशेषो दोषवैषम्यान्न च नोक्तः समासतः ॥
समासव्यासनिर्दिष्टां क्रियां विद्यानुपाचरेत् ।

भवति चात्र ।

निरुक्तं नामभेदाश्च दोषाधिष्ठानि हेतवः ।
आश्रयो मार्गतश्चैव वीसर्पे गुरुलाघवम् ॥
लिङ्गान्युपद्रवा ये च यल्लक्षणा उपद्रवाः ।
साध्यत्वं न च साध्यानां साधनञ्च यथाक्रमम् ।
इति वीप्रीषया सिद्धिमग्निवेशाय धीमते ॥
उक्तं भगवतात्र्येण तद्वीसर्पाणां चिकित्सिते ।

इति वीसर्पचिकित्सितम् ।



द्वादशोऽध्यायः।

अथातो मदात्यय चिकित्सितं व्याख्यास्यामः।

सुरैः सुरेश सहितैर्या पुरा प्रति पूजिता।
सौत्रामण्यां हूयते या कर्म्मभिर्या प्रतिष्ठिता॥
यज्ञे च या यया शक्रः सोमानि पिबतो भृशम्।
निरुजस्तमसाविष्टः तस्माद् दुर्गात् समुद्धृतः॥
विधिभिर्वेदविहितैर्या यजद्भिर्महात्मभिः।
दृश्य स्पृश्या प्रकल्प्या च यज्ञिया यज्ञसिद्धये॥
योनिसंस्कारनामाद्यैर्विशेषैर्बहुधा च या।
भूत्वा भवत्येक विधा सामान्यान्मदलक्षणात्॥
या देवा न मृतं भूत्वा स्वधा भूत्वा पितृंश्च या।
सोमो भूत्वा द्विजातीन्या भुङ्क्ते श्रेयोभिरुत्तमैः॥
आश्विनं या महत्तेजा वीर्यं सारस्वतञ्च या।
बलमैन्द्रञ्च या सोमः सौत्रामण्याञ्च या मता॥
शोका रतिभयोद्वेगनाशनीया महाबला।
या प्रीतिर्या रतिर्या वाग्या पुष्टिर्या च निर्वृतिः॥
या सुरा सुरगन्धर्वं यक्षराक्षसमानुषैः।
रतिः सुरेत्यभिहिता तां सुरां विधिना पिबेत्॥
शरीरकृतसंस्कारः शुचिरुत्तमगन्धवान्।
प्रावृतो निर्मलैर्वस्त्रैर्यथर्तु कामगन्धिभिः॥
विचित्र विविधस्रग्वी रत्नाभरणभूषितः।

देव द्विजातीन् संपूज्य स्पृष्ट्वा मङ्गलमुत्तमम् ।
ग्रीष्मे यथर्तुके सृष्टे कुसुमप्रकरी कृते ॥
संवास संमते मुख्ये धूपसंमोदबोधिते ।
सोपधाने सुसंस्तीर्णे विहिते शयनासने ॥
उपाविष्टोऽथवा तिर्यक् स्वशरीरसुखे स्थितः ।
सौवर्णैराजतैश्चापि तथा मणिमयैरपि ॥
भाजनैर्विमलैश्चित्रैः सुकृतैश्च पिबेत् सदा ।
स्त्रीभिर्यौवनमत्ताभिः शिक्षिताभिर्यथर्तुकैः ॥
वस्त्राभरणमाल्यैश्च भूषिताभिर्विभूषितः ।
शौचानुरागयुक्ताभिः प्रमदाभिरितस्ततः ॥
संवाह्यमान इष्टाभिः पिबेन्मद्यमनुत्तमम् ।
पिबेन्मद्यानुकूलैर्वा फलैर्हरितकैः शुभैः ॥
लवणैर्गन्धपिशुनैर्वरदग्रैर्यथर्तुकैः ।
भृष्टैर्मांसैर्बहुविधैर्भूजलाम्बरचारिणाम् ॥
पौरयवज विहितैर्भक्ष्यैश्च विविधात्मकैः ।
पूजयित्वा सुरान् पूर्वं माशिषः प्राक् प्रयुज्य च ।
प्रदाय सजलं मद्य मादितो वसुधा तले ।
अभ्यङ्गोत्सादनस्नान वासो धूमानुलेपनैः ॥
स्निग्धोष्णैर्भावितैश्चान्नैः पातव्यं मात्रया हितम् ।
वातिकेभ्यो हितं मद्यं प्रायो गौडिकपैष्टिकम् ॥
कफपित्ताधिकेभ्यस्तु फालमाधवशर्करम् ।
बहुद्रवं बहुगुणं बहुकर्म्म मदात्मकम् ॥
गुणैर्दोषैश्च तन्मद्यमुभयैरुपदिश्यते ।
विधिना मात्रया काले हितैरन्नैर्यथाबलम् ॥

प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम्।
यथोपेतं पुनर्मद्यं प्रसङ्गाद्येन पीयते॥
रूक्षव्यायामनित्यैर्न विषवद्याति तस्य तत्।
मद्यं हृदयमाविश्य स्वगुणै रोजसो गुणान्॥
दशभिर्दशसंक्षोभ्य चेतो नयति विक्रियाम्।
लघूष्णतीक्ष्णसूक्ष्माम्लव्यवाया शुगमेन च॥
रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम्।
गुरु शीतं मृदु स्निग्धं बहुलं मधुरं स्थिरम्॥
प्रसन्नं पिच्छिलं स्निग्धमोजो दशगुणं तथा॥
गुरुत्वं लाघवाच्छैत्यं चौष्ण्यादम्लस्वभावतः।
माधुर्यं मार्दवं तैक्ष्ण्यात् प्रसादश्चाशुभावनात्॥
रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं श्लक्ष्णतामपि।
विकाशिभावात् पैच्छिल्यं वैशद्यात् सान्द्रतां तथा।
सौक्ष्म्यान्मद्यं विहन्त्येवमोजसः स्वगुणैर्गुणान्॥
सत्त्वं तदाश्रयं चाशु संक्षोभ्य जनयेन्मदम्।
रसधात्वादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम्॥
प्रधानस्यौजसश्चैव हृदयस्थानमुच्यते।
अतिपीतेन मद्येन विहृतेनौजसा च तत्॥
हृदयं याति वै छत्वं तत्रस्था ये च धातवः।
ओजस्यभिहते पूर्वं हृदि च प्रतिबोधिते॥
मध्यमे विहतेऽल्पे च विहितेतूत्तमो मदः।
नैवं विघातं जनयेन्मद्यं पैष्टिकमोजसः॥
विकाश रूक्षविशदा गुणास्तत्र हितोल्वणाः।
हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम्॥

विकारश्च यथा सत्त्वं चित्ताराजस तामसाः ।
जायन्ते मोहनिद्रान्तां मद्यस्यात्ति निषेवणात् ॥
स मद्य विभ्रमो नाम्ना मद इत्यभिधीयते ।
पीयमानस्य मद्यस्य विज्ञातव्या स्त्रयो मदाः ॥
प्रथमो मध्यमोऽन्त्यश्च लक्षणैस्तान् प्रवक्ष्यते ।
प्रहर्षणः प्रीतकरः पानान्न गुणदर्शकः॥
वाद्यगीतप्रहासनां कथानाञ्च प्रवर्त्तकः ।
न च बुद्धिस्मृतिहरो विषयेषु न चाक्षमः ॥
सुखनिद्रा प्रबोधश्च प्रथमः ससुखो मदः ।
मुहुः स्मृतिर्मुहुर्मोहो व्यक्ता सज्जति वा मुहुः ॥
युक्तायुक्तप्रलापश्च प्रचलायनमेव च ।
स्थानपानान्नसांकथ्ये योजना सविपर्य्यया ॥
लिङ्गान्येतानि जानीयादाविष्टे मध्यमे पदे ।
मध्यमं पदमुत्क्रम्य मदमप्राप्य चोत्तमम् ॥
न किञ्चिन्नाशुभं कुर्युर्नरा राजसतामसाः ।
को मदं तादृशं विद्वानुन्मादमिव दारुणम् ॥
गच्छेदध्वानमस्तञ्च वहुदोषमिवाध्वगः ।
तृतीयं तु मदं प्राप्य भग्नदार्वीव निष्क्रियः ॥
मदमोहावृतमना जीवन्नपि मृतैः समः ।
रमणीयान् स विषयान्न वेत्ति न सुहृज्जनम् ॥
यदर्थं पीयते मद्यं रतिं तां च न विन्दति ।
कार्य्याकार्य्यं सुखं दुःखं लोके यच्च हिताहितम् ॥
यदवस्थो न जानाति कोऽवस्थां तां व्रजेद् बुधः ।
सदूष्यः सर्वभूतानां निन्द्यश्चाग्राह्य एव च ॥

व्यसनित्वादुदर्कं च सदुःखं व्याधिमश्नुते।
प्रेत्य चेह च यच्छ्रेयः श्रेयो मोक्षश्च यत् परम्॥
मनः समाधौ तत् सर्वं मायत्तं सर्वदेहिनाम्।
मद्येन मनसश्चास्य संक्षोभः क्रियते महान्॥
महामारुतवेगेन तटस्थस्येव शाखिनः।
मद्यप्रसङ्गमज्ञानं महादोषं महागदम्॥
सुखमित्यधिगच्छन्ति रजो मोहपराजिताः।
मद्योपहतविज्ञाना वियुक्ताः सात्त्विकैर्गुणैः॥
श्रेयोभिर्विप्रयुज्यन्ते मदान्धा मदलालसाः।
मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः।
सोन्मादं मदमूर्च्छाद्याः सापस्मारापतानकाः॥
यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधुवत्।
इत्येवं मद्यदोषज्ञा मद्यं गर्हन्ति यत्नतः॥
सत्यमेते महादोषा मद्यस्योक्ता न संशयः।
अहितस्यातिमात्रस्य पीतस्य विधिवर्ज्जनम्॥
किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्।
न युक्ति युक्तं रोगाय युक्तियुक्तं तथा मृतम्॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून्।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम्॥
हर्षमौर्ज्जं मदं पुष्टिमारोग्यं पौरुषं परम्।
युक्त्या पीतं करोत्याशु मद्यं मदसुखावहम्॥
रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम्।
प्रीणनं बृंहणं बल्यं भयशोकश्रमापहम्॥

स्वापनं नष्टनिद्राणां मूकानां वाग्विबोधनम् ।
बोधनञ्चातिनिद्राणां विबद्धानां विबन्धनुत् ॥
वधबन्धपरिक्लेशदुःखानाञ्चावमोहनम् ।
मदोत्थानाञ्च रोगाणां मद्यमेव प्रसाधकम् ॥
रतिविषयसंयोगो प्रीतिसंयोगवर्द्धनम् ।
अतिप्रवयसां मद्यमुत्सवा मोदकारकम् ॥
पञ्चस्वर्थेषु कान्तेषु या क्षतिः प्रथमे पदे ।
यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवि ॥
बहुदुःखक्षतस्यास्य शोकेनोपहतस्य च ।
विश्रामो जीवलोकस्य मदं युक्त्या निषेवितम् ॥
अन्नपानवयो व्याधिबलकालत्रिकाणि षट् ।
त्रीन् दोषांस्त्रिविधं सत्त्वं ज्ञात्वा मद्यं पिबेत् सदा ॥
तेषां त्रिकाणामष्टानां योजना युक्तिरुच्यते ।
यथायुक्त्या पिबेन्मद्यं मद्यदोषैर्न युज्यते ॥
मद्यस्य चागुणान् सर्वान् यथोक्तान् समुपाश्नुते ।
धर्मार्थयोरपीडार्थी नरः सत्त्वगुणोच्छ्रितः ॥
सत्त्वानि तु प्रबुध्यन्ते प्रायशः प्रथमे मदे ।
द्वितीये व्यक्ततां याति मध्ये चोत्तममध्ययोः ॥
सत्त्व सम्बोधकं हर्षं हेमाप्रकृतिदर्शकः ।
यथाग्निरेवं सत्त्वानां मध्यं प्रकृतिदर्शकम् ॥
सुगन्धमाल्यगान्धर्वं सुप्रणीतमनाकुलम् ।
मिष्टान्नपानविषदं सदा मधुरसं कथम् ॥
सुखप्रमाणं सुमदं प्रहर्षप्रीतिवर्द्धनम् ।
स्नन्तं सात्त्विकमापानं न चोत्तममदप्रदम् ॥

वैगुण्यं सहसा यान्ति मद्यदोषैर्न सात्त्विकाः।
मद्यं हि बलवत् सत्त्वं गृह्णाति सहसा न तु॥
सौम्या सौम्यकथाप्रायं विषदा विषदं घृणात्।
चित्रं राजसमापानं प्रायेणाशान्तमाकुलम्॥
हर्षक्षतिकथोपेतम् अतुष्टं पानभोजने।
संमोहक्रोधनिद्रार्त्तमापानं तामसं स्मृतम्॥
आपाने सात्त्विकान् बुद्धा तथा राजस तामसान्।
जह्यात् सहायान् यैः पीत्वा सह दोषानुपाश्नुते॥
सुखशीलाः सुसंभाषाः सुमुखाः संमताः सताम्।
कलास्वबाह्या विषदा विषद प्रवणाश्च ये॥
परस्परविधेया ये येषामैक्यं सुहृत् तथा।
सहर्षं प्रीतिमाधुर्य्यैरापानं वर्द्धयन्ति ये॥
उत्सवादुत्सवतरं येषामन्योन्य दर्शनम्।
ते सहायाः सुखाः पानैः तैः पिबन् सह मोदते॥
रूपगन्धरसस्पर्शैः शब्दैश्चापि मनोरमैः।
पिबन्ति सुसहाया ये ते वै सुकृतिभिः समाः॥
पञ्चभिर्विषयैरिष्टैरुपेतैर्मनसः प्रियैः।
देशे काले पिबेन्मद्यं प्रहृष्टेनान्तरात्मना॥
स्थिर सत्त्व शरीरा ये पुराणा मद्यपान्वयाः।
बहु मद्योचिता ये च माद्यन्ति सहसा न ते॥
शाक् मद्याः क्षुद् पिपासार्त्ता दुर्बला वातपैत्तिकाः।
रूक्षाल्प प्रमिताहारा विस्तब्धाः सत्त्वदुर्बलाः॥
क्रोधिनोऽनुचिताः क्षीणाः परिश्रान्ता मदक्षताः।
ल्पेनापि मदं शीघ्रं यान्ति मदशेन मानवाः॥

ऊर्द्ध्वं मदात्ययस्यातः सम्भवं सस्वलक्षणम्।
अग्निवेश ! चिकित्साञ्च प्रवक्ष्यामि यथाक्रमम्॥
स्त्रीशोकभयभाराध्वकर्म्मभि र्योऽतिकर्षितः।
रूक्षाल्प प्रमिताशी वा यः पिवत्यतिमात्रया॥
रूक्षं परिणतं मद्यं निशि निद्रां विहत्य च।
करोति तस्य तच्छीघ्रं वात प्रायं मदात्ययम्॥
हिक्का श्वासशिरः कम्प पार्श्वशूलः प्रजागरैः।
विद्याद् बहुप्रलापस्य वातप्राये मदात्ययम्॥
तीक्ष्णोष्णं मद्यमम्लं वा योऽतिमात्रं निषेवते।
अम्लोऽम्लाजीर्णं गुलमाशी क्रोधनोऽग्न्यातपप्रियः॥
तस्योपजायते पित्ताद्विशेषेण मदात्ययः।
सत्त्ववातोल्वणस्याशु प्रशमं याति हन्ति वा॥
तृष्णा दाहज्वरस्वेद मूर्च्छातीसारविभ्रमैः।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम्॥
तरुणं मधुरप्रायं गौडं पैष्टिकमेव वा॥
मधुर स्निग्धगुर्वाशी यः पिवत्यतिमात्रया।
अव्यायाम दिवास्वप्न शय्यासन सुखे रतः॥
मदात्ययं कफप्रायं स शीघ्रमधिगच्छति।
छर्द्य रोचकहृल्लास तन्द्रा स्तैमित्य गौरवैः॥
विद्यात् शीतपरीतस्य कफप्रायं मदात्ययम्।
विषस्य ये गुणा दृष्टाः सन्निपात प्रकोपणाः॥
तएव मद्ये दृश्यन्ते विषे तु बलवत्तराः।
हन्त्याशु हि विषं किञ्चित् किञ्चित् रोगाय कल्पते॥
यथाविषं तथैवान्त्यो ज्ञेयो मद्यकृतो मदः।

तस्मात् त्रिदोषजं लिङ्गं सर्व्वत्रापि मदात्यये ॥
दृश्यते रूपवैशेष्यात् पृथक्त्वं चास्य लक्ष्यते।
शरीरं दुःखं बलवत् संमोहो हृदयव्यथा ॥
अरुचिः प्रतता तृष्णा ज्वरः शीतोष्णलक्षणः ।
शिरः पार्श्वास्थिसन्धीनां विद्युत् तुल्या च वेदना ॥
जायतेऽतिबला जृम्भा स्फुरणं वेपनं श्रमः ।
उरो विबन्धः कासश्च हिक्का श्वासः प्रजागरः ॥
शरीरकम्पः कर्णाक्षि मुखरोग स्त्रिकग्रहः ।
छर्द्यतीसारमुत्क्लेशो वातपित्तकफात्मकः ॥
भ्रमः प्रलापो रूपाणामसतां चैव दर्शनम् ।
तृणभस्मलता पर्णपांसुभिश्चावपूरणम् ।
प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते ॥
व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च ।
मदात्ययस्य रूपाणि सर्व्वाण्येतानि लक्षयेत् ॥
सर्व्वं मदात्ययं विद्यात् त्रिदोषमधिकन्तु यत् ।
दोषं मदात्यये पश्येत्तस्यादौ प्रतिकारयेत् ॥
कफस्थानानुपूर्व्या च क्रिया कार्य्या मदात्यये ।
पित्तमारुतपर्य्यन्तः प्रायेण हि मदात्ययः ।
मिथ्यातिहीनपीतेन यो व्याधिरुपजायते ॥
समपीतेन तेनैव स मद्येनोपशाम्यति ।
जीर्णाममद्यदोषाय मद्यमेव प्रदापयेत् ॥
प्रकाङ्क्षा लाघवे जाते यदाद्यस्मै हितं भवेत् ।
सौवर्च्चलानुसंविद्धं शीतं स विड़सैन्धवम् ॥
मातुलुङ्गार्द्रकौ पीतं जलयुक्तं प्रमाणवित् ।

तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ॥
मद्येनान्नरसोत्क्लेदो विदग्धः क्षारतां गतः ।
अन्तर्दाहं ज्वरं तृष्णां प्रमोहं विभ्रमं मदम् ॥
जनयत्याशु तच्छान्त्यै मद्यमेव प्रदापयेत् ।
क्षारो हि याति माधुर्य्यं शीघ्रमम्लोपसंहितः ॥
श्रेष्ठमम्लेषु मद्यञ्च येगुणैस्तान् परं शृणु ।
मद्यस्याम्लस्वभावस्य चत्वारोऽनुरसाः स्मृताः ॥
मधुरश्च कषायश्च तिक्तः कटुक एव च ।
गुणाश्च दश पूर्वोक्तास्तैः चतुर्दशभिगुणैः ॥
सर्व्वेषां मद्यमम्लानामुपर्युपरि तिष्ठति ।
मदोत्क्लिष्टेन दोषेण रुद्धः स्रोतःसु मारुतः ॥
करोति वेदनां तीव्रां शिरस्यस्थिषु सन्धिषु ।
दोषविष्यन्दनार्थं हि तस्मै मद्यं विशेषतः ॥
व्यवायि तीक्ष्णोष्णतया देयमम्लेषु सत्स्वपि ।
स्रोतो विबन्धमुक्मादत्र मारुतस्यानुलोमनम् ॥
रोचनं दीपनं चाग्नेरभ्यासात् मान्द्यमेव च ।
रुजः स्रोतःसु रुद्धेषु मारुते चानुलोमिते ॥
निवर्त्तन्ते विकाराश्च शाम्यन्त्यस्य मदोदयाः ।
वीजपूरकवृक्षाम्लकोलदाडिमसंयुतम् ॥
यमानी हपुषा जाजी शृङ्गवेरावचूर्णितम् ।
ससेहैः शक्तुभिर्युक्तमर्धदंशैश्चिरोत्थितम् ॥
दद्यात् सलवणं मद्यं पैष्टिकं वातशान्तये ।
दृष्ट्वा वातोल्वणं लिङ्गं रसैर्यैनमुपाचरेत् ॥
लावतित्तिरिदक्षाणां स्निग्धाम्लैः शिखिनामपि ।

पक्षिणां मृगमत्स्यानां आनूपानाञ्च संस्कृते॥
भूशयप्रसहानाञ्च रसैः शाल्योदनेन च।
स्निग्धोष्णलवणाम्लैश्च वेशवारैर्मुखप्रियैः॥
चित्रैर्गोधूमिकैश्चान्नैर्वारुणी मण्डसंयुतैः।
पिशिताद्रकगर्भाभिः स्निग्धाभिर्धूपवर्तिभिः॥
माषपूपलिकाभिश्च वातिकं समुपाचरेत्।
नातिस्निग्ध न चाम्ले न सिद्धंसमरिचाद्रकम्॥
रसप्रलेपि संपूपैः सुखोष्णैः सह संपिवेत्।
भुक्तेन वारुणी मण्डं दद्यात् पातुं पिपासवे॥
दाड़िमस्य रसे वाथ जलं वा पाञ्चमूलिकम्।
धान्यनागरतोयं च दधिमण्डमथापि वा॥
अम्लकाञ्जिक मण्डं वा शुक्तोदकमथापि वा।
कर्म्मणानेन सिद्धेन विकार उपशाम्यति॥
मात्रा कालप्रयुक्तेन बलवर्णश्च वर्द्धते।
रागखाण्डवसंयोगैर्विविधैर्भक्तरोचनैः॥
पिशितैर्बहुपिष्टान्नैर्यवगोधूमशालिभिः।
अभ्यङ्गोत्सादनैः स्नानैरुष्णैः प्रावरणैर्घनैः॥
घनैरगुरुपङ्कैश्च धूपैश्चागुरुजैर्घनैः।
नारीणां यौवनोष्णानां निर्दयैरवगूहनैः॥
श्रोण्यूरुकुचभारैश्च संरोधोष्णा सुखावहैः।
शयनाच्छादनैरुष्णैः कुथैश्चास्तरणैः सुखैः॥
मारुतः प्रबलः शीघ्रं प्रशाम्यति मदात्ययः।
भव्यखर्जूरमृद्वीका परूषकरसैर्युतम्॥
सदाड़िमं रसं शीतं शक्तुभिः स्वकचूर्णितम्।

सशर्करं शार्करं वा मार्द्वीकमथवा परम ॥
दद्यात् बहूदकं काले पातुं पित्तमदात्यये ।
शशान् कपिञ्जलानेणान् लावानसितपुच्छकान् ॥
मधुराम्लान् प्रयुञ्जीत भोजने शालिषष्टिकान् ।
पटोलयूषमिश्रं वा छागलं कल्पयेद्रसम् ॥
सतीन मुद्गमिश्रं वा दाड़िमामलकान्वितम् ।
द्राक्षामलकखर्जूर परूषकरसेन वा ॥
कल्पनात् तर्पणान् यूषान् रसांश्च विविधात्मकान् ।
आमाशयस्थमुत्क्लिष्टं कफपित्तं मदात्यये ॥
विज्ञाय बहुदोषस्य दह्यमानस्य तृष्यतः ।
मद्यं द्राक्षारसं तोयं दत्वा तर्पणमेव वा ॥
निःशेषं वामयेत् शीघ्रमेवं रोगाद्धि मुच्यते ।
काले पुनस्तर्पणाद्यं क्रमं कुर्यात् प्रकाङ्क्षते ॥
तेनाग्निर्दीप्यते तस्य दोषशेषान्नपाचनः ।
कासे सरक्तनिष्ठीवे पार्श्वे स्तनरुजोस्तथा ॥
तृष्णते सविदाहे च सोत्क्लेशे हृदयोरसि ।
गुड़ूची भद्र मुस्तानां पटोलस्याथवा भिषक् ॥
रसं सनागरं दद्यात्तित्तिरि प्रति भोजनम् ।
तृष्यते चातिबलवद्वातपित्ते समुद्धते ।
दद्याद् द्राक्षारसं पातुं शीतं दोषानुलोमनम् ।
जीर्णं समधुराम्लेन छागमांसरसेन तम् ।
भोजनं भोजयेन्मद्यस्यानुतर्षञ्च पाययेत् ॥
अनुतर्षस्य मात्रा सा यया नो हन्यते मनः ।
तृष्यते मद्यमल्पाम्लं प्रदेयं स्याद् बहूदकम् ॥

तृष्णा येन च संशाम्येन्मदं येन च नाप्नुयात् ।
परूषकाणां पीलूनां रसं शीतमथापि वा ॥
पर्णिनीनां चतसृणां पिवेद्वा शिशिरं जलम् ।
मुस्तदाडिमलाजानां तृष्णाघ्नं वा पिवेद्रसम् ॥
कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः ।
पञ्चाम्लको मुखालेपः सद्यः तृष्णां नियच्छति ॥
शीतलान्यन्नपानानि शीतशय्यासनानि च ।
शीतवातजलस्पर्शः शीतान्युपवनानि च ॥
क्षौमपद्मोत्पलानाञ्च मणीनां मौक्तिकस्य च ।
चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः ॥
हेमराजतकांस्यानां पात्राणां शीतवारिभिः ।
पूर्णानां हिमपूर्णानां हृतानां पवना हृताः ।
संस्पर्शाश्चन्दनार्द्राणां नारीणाञ्च समावृताः ॥
चन्दनानाञ्च मुख्यानां शस्ताः पित्तमदात्यये ।
कुमुदोत्पलपत्राणां सिक्तानाञ्चन्दनाम्बुना ॥
हिताः स्पर्शा मनोज्ञानां दाहे मद्यसमुत्थिते ।
कथाश्च विविधाः शस्ताः शब्दाश्च शिखिनां शिवाः ॥
तोयदानाञ्च शब्दा हि शमयन्ति मदात्ययम् ।
जलयन्त्राभिवर्षीणि वातयन्त्रगृहाणि च ॥
कल्पनीयानि भिषजा दाहे धारागृहाणि च ।
फलिनी सेव्यलोध्राम्बु हेमपत्रं कुटन्नटम् ॥
कालीयकरसो पेतं दाहे शस्तं प्रलेपनम् ।
वदरीपल्लवोत्थाश्च तथैवारिष्टकोद्भवाः ।
फेनिलायाश्च यः फेनस्तैर्दाहे लेपनं शुभम् ॥

सुरा समण्डा दध्यम्लं मातुलुङ्गरसो मधु ॥
सेकप्रदेहे शस्यन्ते दाहघ्नाः साम्लकाञ्जिकाः ।
परिषेकावगाहेषु व्यजनानाञ्च सेवने ।
शस्यते शिशिरं तोयं दाह तृष्णा प्रशान्तये ॥
मात्रा कालप्रयुक्तेन कर्म्मणानेन शाम्यति ।
धीमतो वैद्यवश्यस्य शीघ्रं पित्तमदात्ययम् ।
उल्लेखनोपवासाभ्यां जयेत् कफमदात्ययम् ॥
तृष्यते सलिलं चास्मै दद्याद्ध्रीवेरसाधितम् ।
बलायाः पृश्निपर्ण्या वा कण्टकार्य्याथवा शृतम् ॥
सनागराभिः सर्व्वाभिर्जलं वा शृतशीतलम् ।
दुःस्पर्शितेन मुस्तेन मुस्तपर्पटकेन वा ॥
जलं मुस्तं शृतैर्व्वापि दद्याद्दोषविपाचनम् ।
एतदेव च पानीयं सर्व्वत्रापि मदात्यये ।
निरत्ययं पीयमानं पिपासाज्वरनाशनम् ॥
निरामं काङ्क्षितं काले सक्षौद्रं पाययेन्नरम् ।
शार्करं मधु वा जीर्णमरिष्टं शीधुमेव वा ॥
रूक्षतर्पणसंयुक्तं यवानी नागरान्वितम् ।
यवगोधूमिकं चान्नं रूक्षयूषेण भोजयेत् ॥
कुलत्थानां सुशुष्कानां मूलकानां रसेन वा ।
तनुनाम्लेन लघुना कट्वम्लेनाल्पसर्पिषा ॥
व्योषयूषमयाम्लं वा यूषं वा साम्लवेतसम् ।
छागमांसरसं रूक्षम् अच्छं वा जाङ्गलं रसम् ॥
स्थाल्यां वाथ कपाले वा भृष्टं नीरसवर्त्तिनम् ।
कट्वम्ललवणं मांसं भक्षयन् तर्पयान् मधु ॥

व्यक्तमारिचिकं मांसं मातुलुङ्गरसान्वितम्।
भृष्टं दाड़िमसाराम्लमुष्णयूषोपवेष्टितम्॥
यथाग्निर्भक्षयेत् काले प्रभूतार्द्रकपेशिकम्।
पिवेच्च निगदं मद्यं कफप्राये मदात्यये॥
सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम्।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम्॥
एतल्लवणमष्टाङ्गमग्निसन्दीपनं परम्।
मदात्यये कफप्राये दद्यात् स्रोतो विशोधनम्॥
एतदेव पुनर्युक्त्या मधुराम्लैर्द्रवीकृतम्।
गोधूमान्न यवान्नानां मांसानाञ्चातिरोचनम्॥
पेषयेत् कटुकैर्युक्तां श्वेतां बीजविवर्जिताम्।
मृद्वीकां मातुलुङ्गस्य दाड़िमस्य रसेन वा॥
सौवर्चलैलामरिचैरजाजी भृङ्गदीप्यकैः।
स रागः क्षौद्रसंयुक्तः श्रेष्ठो रोचनदीपनः॥
मृद्वीकानां विधानेन कारयेत् कारवीमपि।
युक्तमत्स्यण्डिकोपेतं रागं दीपनपाचनम्॥
आम्रामलकपेशीनां रागात् कुर्य्यात् पृथक् पृथक्।
धान्यसौवर्चला जाजी कारवी मरिचान्वितान्॥
गुड़ेन मधुयुक्तेन व्यक्ताम्ललवणीकृतान्।
तैरन्नं रोचते स्निग्धं सम्यक् भुक्तं विजीर्य्यति॥
रूक्षोष्णेनान्नपानेन स्नानेनाशिशिरेण च।
व्यायामलङ्घनाभ्याञ्च युक्ताभ्यां जागरेण तु॥
काले युक्तेन तीक्ष्णेन स्नानेनोद्वर्त्तनेन च।
स्नानवर्णकवासानां प्रहर्षाणाञ्च सेवया॥

सुखशिशिरहस्तानां स्त्रीणां संवाहनेन च ।
मदात्ययः कफप्रायः शीघ्रमेवोपशाम्यति ।
यदिदं कर्मनिर्दिष्टं पृथग्दोषवलं प्रति ॥
सन्निपाते दशविधे तद्विकल्प्यं भिषग्विदा ।
यस्तु दोषविकल्पज्ञो यश्चौषधिविकल्पवित् ॥
स साध्यान् साधयेद्रोगान् साध्यासाध्यविभागवित् ।
वनानि रमणीयानि पद्मिन्यः सलिलाशयाः ॥
विशदान्यन्नपानानि सहायाश्च प्रहर्षणाः ।
माल्यानि गन्धयोगाश्च वासांसि विमलानि च ॥
गान्धर्वशब्दाः कान्ताश्च गोष्ठ्यश्च हृदयप्रियाः ।
सङ्कथाहास्य गीतानां विशदार्थेव योजनाः ॥
प्रियाश्चानुगता नार्य्यो नाशयन्ति मदात्ययम् ।
नाक्षोभ्यं हि मनो मद्यं शरीरमवहत्य च ॥
कुर्य्यान्मदात्ययं तस्माद्दिष्ट्या हर्षणोक्रिया ।
आभिः क्रियाभिः सिद्धाभिः शमं याति मदात्ययः ॥
न चेन्मद्य विधिं हुत्वा क्षीरमस्य प्रयोजयेत् ।
लङ्घनैः पाचनैश्चैव दोषसंशोधनैरपि ॥
विमदस्य कफे क्षीणे जाते दौर्बल्यलाघवे ।
तस्य मदविदग्धस्य वातपित्ताधिकस्य वा ॥
ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः ।
पयसाभिहते रोगे वले जाते निवर्त्तयेत् ॥
क्षीरप्रयोगं मद्यञ्च क्रमेणाल्पाल्पमाचरेत् ।
विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते ॥
ध्वंसको विक्षयश्चैव रोगस्तस्योपजायते ।

व्याध्युपक्षीणदेहस्य दुश्चिकित्स्यतमौ मतौ।
तयोर्लिङ्गं चिकित्साञ्च यथावदुपधारयेत्॥
श्लेष्मप्रकोपः कण्ठस्य शोषः शब्दासहिष्णुता।
तन्द्रा निद्राभियोगश्च ज्ञेयं ध्वंसकलक्षणम्॥
तयोः कर्म्म तदेवेष्टं वातिके यन्मदात्यये।
तौ हि प्रक्षीणदेहस्य जायते दुर्बलस्य वा॥
वस्तयः सर्पिषः पानं प्रयोगः क्षीरसर्पिषोः।
अभ्यङ्गोद्वर्त्तनस्नानान्यनुपानञ्च वातनुत्॥
ध्वंसको विक्षयश्चैव कर्म्मणानेन शाम्यति।
युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते॥
निवृत्तः सर्वमद्येभ्यो नरो यः स्याज्जितेन्द्रियः।
शरीरमानसैर्धीमान् विकारैर्न स युज्यते।
भवति चात्र। यत् प्रभावा भगवती सुरा पेया यथा च सा।
यद्द्रव्या यस्य या चेष्टा योगश्चापेक्षते यथा॥
यथायथा मदयते येश्च युक्ता महागुणैः।
यो मदो मदभेदाश्च ये त्रयः स्वस्वलक्षणाः॥
ये च मद्यकृता दोषा गुणा ये च तदात्मकाः।
यच्च त्रिविधमापानं यथा सत्त्वं च लक्षणम्॥
ये सहायाः सुखा ये च विरक्ति प्रमदा नराः।
मदात्ययस्य यो हेतुर्लक्षणं यदयथा च यत्॥
मद्यं मद्योत्थितान् रोगान् हन्ति यच्च क्रिया क्रमः।
सर्वं तदुक्तमखिलं मदात्यय चिकित्सिते॥

इति मदात्यय चिकित्सितम्।

त्रयोदशोऽध्यायः ।

अथातो द्विव्रणीय चिकित्सितं व्याख्यास्यामः ।

परावरज्ञमात्रेयं गतमान मदव्ययम् ।
अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥
भगवन् ! पूर्वमुद्दिष्टौ द्वौ व्रणौ रोगसंग्रहे ।
तयोर्लिङ्गं चिकित्साञ्च वक्तुमर्हसि शर्म्म च ॥
इत्यग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
यौ व्रणौ पूर्वमुद्दिष्टौ निजश्चागन्तुरेव च ॥
श्रूयतां विधिवत् सौम्य ! तयोर्लिङ्गञ्च भेषजम् ।
निजः शरीरदोषोत्थ आगन्तुर्बाह्य हेतुजः ॥
बधबन्धप्रपतनाद्दंष्ट्रा दन्तनखक्षतात् ।
आगन्तवो व्रणास्तद्वद्विषस्पर्शाग्नि शस्त्रजाः ॥
मन्त्रागदप्रलेपाद्यैर्भेषजैर्हेतुभिश्च ते ।
लिङ्गैकदेशैर्निर्दिष्टा विपरीता निजव्रणाः ॥
व्रणानां निजहेतूनामागन्तूनामसाध्यताम् ।
कुर्य्याद्दोष बलापेक्षी निजानामौषधं तथा ॥
यथास्वं हेतुभिर्दुष्टा वातपित्तकफा नृणाम् ।
वहिर्मार्गं समाश्रित्य जनयन्ति निजान् व्रणान् ॥
स्तब्धः कठिनसंस्पर्शो मन्दस्रावोऽतितीव्ररुक् ।
तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भवः ॥

संपूरणैः स्नेहपानैः स्निग्धैः स्वेदोपनाहनैः।
प्रदेहैः परिषेकैश्च वातव्रणमुपाचरेत्॥
तृष्णामोहज्वरस्वेद दाहावदरणौषधैः।
व्रणं पित्तकृतं विद्यात् गन्धस्रावैः सपूतिकैः॥
शीतलैर्मधुरैः स्निग्धैः प्रदेहपरिषेचनैः।
कफव्रणं प्रशमयेत् तथा लङ्घनपाचनैः॥
तौ द्वौ नानात्वभेदेन निरुक्ता विंशति व्रणाः।
तेषां परीक्षा त्रिविधा प्रदुष्टा द्वादश स्मृताः॥
स्थानान्यष्टौ तथा गन्धाः परिस्रावाश्चतुर्दश।
षोड़शोपद्रवा दोषाश्चत्वारो विंशतिस्तथा॥
तथा चोपक्रमाः सिद्धाः षड्त्रिंशत् समुदाहृताः।
विभाव्यमानाः शृणु तान् सर्वानेव यथेरितान्॥
कृत्योत्कृत्यतया दुष्टौ तथा मर्म्म स्थितो नव।
संवृतो दारुणः स्रावी सविषो विषम स्थितः॥
तत् सङ्ख्यत्सन्न एवाच्च व्रणान् विद्याद्विपर्य्ययात्।
इति नानात्वभेदेन निरुक्ता विंशति व्रणाः॥
दर्शनस्पर्शसंस्पर्शात् परीक्षा त्रिविधा स्मृता।
वयो वर्णं शरीराणामिन्द्रियाणाञ्च दर्शनात्॥
हेत्वर्त्ति मान्द्याग्निबलं परीक्ष्यं वचनाद् बुधैः।
स्पर्शान् मार्दवशैत्ये च परीक्ष्ये सविपर्य्यये॥
श्वेतोपसन्नवर्त्माति स्थूलवर्त्माति पिञ्जरः।
नीलः श्यावोऽति पिड़को रक्तः कृष्णोऽति पूतिकः॥
रौप्यः कुम्भीमुखश्चेति प्रदुष्टा द्वादशव्रणाः।
कल्पेनान्येन दोषाणां चतुर्विंशतिरुच्यते॥

त्वक् शिरा मांसमेदोऽस्थि स्नायु मर्मान्तराश्रयाः ।
व्रणस्थानानि निर्द्दिष्टान्यष्टावेतानि संग्रहे ।
सर्पिस्तैल वसा पूय रक्तश्यावाम्लपूतिकाः ॥
व्रणानां व्रणगन्धज्ञैरष्टौ गन्धाः प्रकीर्त्तिताः ।
लसीकाजलपूयासृक् हरितारुणपिञ्जराः ॥
कषाय नीलहरित स्निग्धरूक्ष सितासिताः ।
इति रूपैः समुद्दिष्टैर्व्रणस्रावास्त्रयोदशः ॥
वीसर्पः पक्षघातश्च शिरास्तम्भोपतानकाः ।
मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः ॥
कासच्छर्द्दिरतीसारो हिक्का श्वासः सवेपथुः ।
षोडशोपद्रवः प्रोक्तो व्रणानां व्रणचिन्तकैः ॥
स्नायुक्लेदात् शिराक्लेदाद्गाम्भीर्य्यात् क्रिमिदर्शनात् ।
अस्थिभेदात् सशल्यत्वात् सविषत्वात् च सर्पणात् ॥
नखकाष्ठप्रतोदाच्च चर्म्मलोमातिघट्टनात् ।
मिथ्या बन्धादतिस्नेहादतिभेषज्यकर्षणात् ॥
अजीर्णादतिभुक्ताच्च विरुद्धासात्म्यभोजनात् ।
शोकात् क्रोधात् दिवास्वप्नाद्व्यवायात् चाभणादति ॥
व्रणा न प्रशमं यान्ति निष्क्रियत्वाच्च देहिनाम् ।
परिस्रावाच्च गन्धाच्च दोषाद्योपद्रवैः सह ॥
व्रणानां बहुदोषाणां कृच्छ्रत्वं चोपजायते ।
त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः ॥
धीमतोऽभिनवः काले सुखसाध्यः सुखं व्रणः ।
गुणैरन्यतमैर्हीनस्ततः कृच्छ्रतमः स्मृतः ॥
सर्वैर्विहीनो विज्ञेयः त्वसाध्यो निरुपक्रमः ।

व्रणानामादितः कार्य्यं यथासन्नं विशोधनम्।
ऊर्ध्वभागैरधोभागैः शस्त्रैर्बस्तिभिरेव च॥
सद्यः शुद्धशरीराणां प्रशमं यान्ति हि व्रणाः।
यथाक्रममतश्चोर्ध्वं शृणु सर्वानुपक्रमान्॥
शोफघ्नं षड्विधञ्चैव शस्त्रकर्म्मावपीड़नम्।
निर्वापणं सन्धानं स्वेदः शमनमेषणा।
शोधनौ रोपणीयौ च कषायौ सप्रलेपनौ॥
द्वौ स्नेहौ तद्गुणौ पत्रच्छेदने द्वे च बन्धने।
शोणितुत्सादनं दाहो द्विविधः सावसादनः॥
काठिन्यमार्दवकरे धूपनालेपने शुभे।
व्रणावचूर्णनं वर्ण्यं लेपनं लोमरोपणम्॥
इति षट्त्रिंशदुद्दिष्टा व्रणानां समुपक्रमाः।
पूर्वरूपं भिषक् बुद्धा व्रणानां शोफमादितः।
रक्तावसेचनं कुर्य्यादजातव्रणशान्तये।
शोधयेद् बहुदोषांस्तु स्वल्पदोषान् विलङ्घयेत्॥
पूर्वं कषायैः सर्पिर्भिर्जयेद्वा मारुतोत्तरम्।
न्यग्रोधोदुम्बराश्वत्थ प्लक्षवेतसवल्कलाः॥
ससर्पिष्काः प्रलेपः स्यात् शोफनिर्वापणः परम्।
त्रिजटा मधुकं वीरा बिसग्रन्थिः शतावरी।
नीलोत्पलं नागपुष्पं प्रदेहः स्यात् सचन्दनः॥
शक्तवो मधुकं सर्पिः प्रदेहः स्यात् सशर्करः।
अविदाहीनि चान्नानि शोफे भेषजमुत्तमम्॥
सर्वैर्वानुपक्रान्तः शोफो न प्रशमं व्रजेत्।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते॥

तैलेन वा सर्पिषा वा ताभ्यां वा शक्तुपिण्डिका ।
सुखोष्णा शोफपाकार्थमुपनाहः प्रशस्यते ॥
सतिला सातसी बीज दध्यम्ला शक्तु पिण्डिका ।
सकिण्व कुष्ठलवणा शस्ता स्यादुपनाहने ॥
रुग्दाह रागतोदैश्च विदग्धं शोथमादिशेत् ।
अलस्थितमसंस्पर्शं सं पक्कं पिण्डितोन्नतम् ॥
तमाथ गुग्गुलुः शोधं पयो दचकपोतयोः ।
शिट् पलाशभवः चारो हेमचीरोमकूलकः ॥
इत्युक्तो भेषजगणः पक्कशोथप्रभेदनः ।
सुकुमारस्य कच्छ्रस्य शस्त्रन्तु परमुच्यते ॥
पाटनं व्यधनं चैव छेदनं लेपनं तथा ।
प्रच्छनं सेवनञ्चैव षड्विधं शस्त्रकर्म्म तत् ।
नाडीव्रणाः पक्कशोथास्तथा चतगुदोदरम् ॥
अन्तः शल्याश्च ये शोथाः पाट्यास्ते तद्विधाश्च ये ।
इकोदराणि संपक्का गुल्मा ये ये च रक्तजाः ॥
वध्याः शोणितरोगाश्च विसर्प पिड़कादयः ।
अर्शः प्रभृत्यधीमांसं छेदनैरोपपादयेत् ॥
किलासानि सकुष्ठानि लिखेच्छ्रेयानि बुद्धिमान् ।
वातासृग् ग्रन्थिपिडकाः सकोठा रक्तमण्डलाः ॥
कुष्ठान्यभ्याहतं चाङ्गं शोथांश्च प्रच्छयेद्भिषक् ।
सीव्यं क्षुद्रराद्यन्तु गम्भीरं यद्विपाटितम् ॥
इति षड्विधमुद्दिष्टं शस्त्र कर्म्म मनीषिभिः ।
सूक्ष्माननाः कोपवन्तो ये व्रणा स्तान् प्रपीड़येत् ॥
कलायाश्च मसूराश्च गोधूमाः सह रेणवः ।

कल्कीकृताः प्रशस्यन्ते निःस्नेहा व्रणपीडने ॥
शाल्मली त्वग्बला मूलं तथा न्यग्रोधपल्लवाः।
न्यग्रोधादिकमुद्दिष्टं बलादिकमथापि वा ॥
आलेपनं निर्वपणं तद्विधान्यैश्च सेचनम् ॥
सर्पिषा शतधौतेन पयसा मधुकाम्बुना।
निर्वापयेत् सुशीतेन रक्तपित्तोत्तरान् व्रणान्।
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ॥
संदधीत समं वैद्यो बन्धनैश्चोपपादयेत्।
तान् समान् सुस्थितान् ज्ञात्वा फलिनीरोध्रकट्फलैः।
समङ्गा धातकीयुक्तैः चूर्णितैरवचूर्णयेत् ॥
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः।
धातकी रोध्रचूर्णैर्वा तथा रोहन्ति ते व्रणाः ॥
अस्थिभग्नं च्युतं सन्धिं संदधीत समं पुनः।
समेन सममङ्गेन कृत्वान्येन विचक्षणः ॥
स्थिरैः कवलिका बन्धैः कुशिकाभिश्च संस्थितम्।
पट्टैः प्रभूतसर्पिष्कैर्बध्नीयादचलं सुखम्।
अविदाहिभिरन्नैश्च पैष्टिकैस्तमुपाचरेत् ॥
ग्लानिर्हि न हिता तस्य सन्धिविश्लेषकारिका।
विच्युताभिहताङ्गानामानाहाद्यानुपक्रमान्।
उपाचरेद्यथाकालं कालज्ञः स्वचिकित्सितान् ॥
शुष्का महारुजः स्तब्धा ये व्रणा मारुतोत्तराः।
स्वेद्याः शङ्करकल्पेन ते स्युः कृशरपायसैः ॥
ग्राम्या वैलाम्बुजा नूपैर्वेशवारैश्च संस्कृतैः।
उत्कारिकाभिरुष्णाभिः सुखी स्याद् वृषितस्तदा ॥

सदाह वेदनावन्तो ये व्रणा मारुतोत्तराः ।
तेषां तिलानुमां चैव भृष्टान् पयसि निर्वृतान् ॥
तेनैव पयसा पिष्टा कुर्य्यादालेपनं भिषक् ।
बला गुडूची मधुकं पृश्निपर्णी शतावरी ॥
जीवन्ती शर्करा चीरं तैलमत्स्यं वसा घृतम् ।
ससिद्धा समधूच्छिष्टा स्नेहघ्नी स्नेहशर्करा ॥
द्विपञ्चमूलक्वथितेनाम्भसा पयसाथवा ॥
सर्पिषा वा सतैलेन कोष्णेन परिषेचयेत् ।
यवचूर्णं समधुकं सतैलं सह सर्पिषा ॥
दद्यादालेपनं कोष्णं दाहशूलोपशान्तये ।
उपनाहश्च कर्त्तव्यः सतिलो मुद्गपायसः ॥
रुग्दाहयोः प्रशमनो व्रणेष्वेषु विधिर्हितः ।
सूक्ष्मा नाना बहुस्रावा कोशवन्तश्च ये व्रणाः ॥
न च मर्माश्रितास्तेषां एषणं हितमुच्यते ।
द्विविधामेषणीं विद्यात् मृद्वीञ्च कठिनामपि ॥
उद्भिदैर्मृदुभिर्नालैर्लौहानां वा शलाकया ।
एष्यं विद्याद् व्रणं नालैर्विपरीतमतो भिषक् ॥
पूतिगन्धान् विवर्णांश्च बहुस्रावान् महारुजः ।
व्रणानशुद्धान् विज्ञाय शोधनैः समुपाचरेत् ॥
त्रिफला खदिरो दार्वी न्यग्रोधोऽतिबला कुशः ।
निम्बकोलकपत्राणि कषायाः शोधना मताः ॥
तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद् घृतम् ।
मधुकं निम्बपत्राणि प्रलेपो व्रणशोधनः ॥
नातिरक्तो नातिपाण्डुर्नातिश्यावो न चातिरुक् ।

नचोत्सन्नो न चोत्सङ्गी शुद्धो रोप्यः परं व्रणः ॥
न्यग्रोधोदुम्बराश्वत्थ कदम्बप्लक्षवेतसाः ।
करवीरार्ककुटजाः कषाया रोपणाः स्मृताः ॥
चन्दनं पद्मकिञ्जल्कं दार्वीत्वङ् नलमुत्पलम् ।
मेदां मूर्वां समङ्गाश्च यष्ट्याह्वां वर्णशोधनीम् ॥
प्रपुण्डरीकं जीवन्तीङ्गोजिह्वां धातकीं बलाम् ।
रोपणं सतिलं कुर्यात् प्रलेपं सघृतं व्रणे ॥
काम्पिल्लकं विडङ्गानि वत्सकं त्रिफलां बलाम् ।
पटोलं पिचुमन्दं च रोध्रं मुस्तं प्रियङ्गुकम् ॥
खदिरं धातकी सर्जमेलामगुरुचन्दने ।
पिष्ट्वा साध्यं भवेत्तैलं तत्परं व्रणशोधनम् ॥
प्रपुण्डरीकं मधुकं काकोल्यौ द्वे सचन्दने ।
सिद्धमेतैः समैस्तैलं तर्पणं व्रणरोपणम् ॥
दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा ।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥
येनैव विधिना तैलं घृतं तेनैव साधयेत् ।
रक्तपित्तोत्तरं दृष्ट्वा रोपणीयं घृतं तथा ॥
कदम्बार्जुननिम्बानां पाटल्याः पिप्पलस्य च ।
व्रणप्रच्छादने विद्वान् पत्राण्यर्कस्य चादिशेत् ॥
क्षौमोऽथ वाजिनश्चैव पट्टो व्रणहितः स्मृतः ।
बन्धश्च द्विविधः शस्तो व्रणानां सव्यदक्षिणः ॥
लवणाम्लकटूष्णानि विदाहीनि गुरूणि च ।
वर्जयेदन्नपानानि व्रणी मैथुनमेव च ॥
नातिशीतगुरुस्निग्धमविदाहि यथाक्रमम् ।

अन्नपानं व्रणाहितं हितं वा स्नापनं शिवा ॥
स्तन्यानि जीवनीयानि बृंहणीयानि यानि च ।
उत्सादनार्थं निम्नानां व्रणानां तानि कल्पयेत् ॥
भूर्जग्रन्थ्यश्मकाशां सीसमधो भागानि गुग्गुलुः ।
व्रणावसादनं तद्वत्कलविङ्ककपोतविट् ॥
रुधिरेऽति प्रवृत्ते तु छिन्ने छेद्येऽधिमांसके ।
कफग्रन्थिषु गण्डेषु वातस्तम्भानिलार्तिषु ॥
गूढपूयलसीकेषु गम्भीरेषु स्थिरेषु च ।
क्लिन्नेषु चाङ्गदेशेषु कर्माग्नेः संप्रशस्यते ॥
मधूच्छिष्टेन तैलेन मज्जक्षौद्रवसाघृतैः ।
तप्तैर्वा विविधैर्लौहैर्दहेद्दाह्यं विशेषवित् ॥
त्वक्स्थानां सुकुमाराणां गम्भीरान् मारुतोत्तरान् ।
दहेत् स्नेहैर्मधूच्छिष्टैर्लौहैः क्षौद्रैस्ततोऽन्यथा ॥
बालदुर्बलवृद्धानां गर्भिण्या रक्तपित्तिनाम् ।
तृष्णाज्वरपरीतानां अबलानां विषादिनाम् ॥
नाग्निकर्मोपदेष्टव्यं स्नायुमर्मव्रणेषु च ।
सविशेषेषु शल्येषु नेत्रकुष्ठव्रणेषु च ॥
रोगदोषबलापेक्षी मात्राकालाग्निकोविदः ।
शस्त्रकर्माग्निकृत्येषु क्षारमप्यवचारयेत् ॥
कठिनत्वं व्रणा यान्ति गन्धैः सारैश्च धूपिताः ।
सर्पिर्मज्जवसा धूपैः शैथिल्यं यान्ति हि व्रणाः ॥
रुजः स्रावाश्च गन्धाश्च क्रिमयश्च व्रणाश्रिताः ।
शैथिल्यं मार्दवं चापि धूपने नोपशाम्यति ॥
रोध्रन्यग्रोधशुङ्गानि खदिरत्रिफलाघृतम् ।

प्रलेपो व्रणशैथिल्यं सौकुमार्य्यप्रबोधनः ॥
सरुजः कठिनाः स्तब्धा निरास्रावाश्च ये व्रणाः ।
यवचूर्णैः सर्पिःक्षौद्रैर्बहुशस्तान् प्रलेपयेत् ॥
मुद्गषष्टिकशालीनां पायसैर्वा यथाक्रमम् ।
सघृतैर्जीवनीयैर्वा तर्पयेत्तानभीक्ष्णशः ॥
ककुभोडुम्बराश्वत्थरोध्रजाम्बवकट्फलैः ।
त्वचमाश्विव गृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥
मनःशिलैला मञ्जिष्ठा लाक्षा च रजनीद्वयम् ।
प्रलेपः सघृतः क्षौद्रस्त्वग्निशुद्धिकरः परः ॥
अयोरजः सकासीसं त्रिफला कुसुमानि च ।
करोति लेपः कृष्णत्वं सद्य एव नवत्वचि ॥
कालीयकलताम्रास्थि हेमकालारसोत्तमाः ।
लेपः सगोमयरसः सवर्णीकरणः परः ॥
कासकाश्वत्थनिचुलमूलं लाक्षा सगैरिका ।
सहेमश्यामृतामज्जा कासीसञ्चेति वर्णकृत् ॥
चतुष्पदां हि त्वग्लोमखुरशृङ्गास्थि भस्मना ।
तैलाक्ताचूर्णिता भूमिर्भवेल्लोमवती पुनः ॥
षोड़शोपद्रवा ये च व्रणानां परिकीर्त्तिताः ।
तेषां चिकित्सा निर्दिष्टा यथा स्वे स्वे चिकित्सिते ॥

इति तत्र श्लोकौ ।

द्वौ व्रणौ व्रणभेदाश्च परीक्षा दुष्टिरेव च ।
स्थानानि गन्धाः स्रावाश्च सोपसर्गाः क्रियाश्च याः ॥

व्रणाधिकारे स प्रशमितत्रवकमुक्तवान् ।
मुनिर्व्यासममासाभ्यामग्निवेशाय धीमते ॥

इति द्विव्रणीयचिकित्सितम् ।

---

चतुर्दशोऽध्यायः ।

अथात उन्मादचिकित्सितम् ।

बुद्धिस्मृतिज्ञानतपो निवासः पुनर्वसुः प्राणभृतां शरण्यः ।
उन्मादहेत्वाकृतिभेषजानि कालेऽग्निवेशाय शशंस पृष्टः ॥
विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्वो मनोविकारो विषमाश्च चेष्टाः ॥
तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ॥
स मूढचेता न सुखं न दुःखं नाचारधर्मौ कुत एव शान्तिम् ।
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो भ्रमत्ययं चेत इतस्ततश्च ॥
समुद्भ्रमं बुद्धिमनःस्मृतीनामुन्मादमागन्तु निजोत्थमाहुः ।
तस्योद्भवं पञ्चविधस्य भूयो वक्ष्यामि लिङ्गानि चिकित्सितं च ।
रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः ।

चिन्तातिदुःखं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम्॥
अस्थानहासस्मितनृत्यगीत वागङ्गविक्षेपणरोदनानि।
गात्रस्य कार्श्यारुणवर्णता च जीर्णे बलं चानिलजस्य रूपम्॥
अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम्।
उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदेव कुर्यात्।
अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः॥
प्रच्छायशीतान्नजलाभिलाषः पीताच भाः पित्तकृतस्य लिङ्गम्
संपूरणैर्मन्दविचेष्टनैश्च सोष्मा कफो मर्मणि सम्प्रवृद्धः॥
वाक् चेष्टितं मन्दमरोचकश्च नारी विविक्तप्रियतातिनिद्रा
छर्दिश्च लालाचरणञ्च भुंक्ते नखादिशौक्ल्यञ्च कफात्मके स्यात्
यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स तु हेतुभिः स्यात्
सर्वाणि रूपाणि बिभर्त्ति तादृग् विरुद्धभैषज्य विधिर्विवर्ज्यः॥
देवर्षिगन्धर्वपिशाचयक्षरक्षः पितॄणामभिधर्षणानि।
आगन्तुहेतुर्नियमव्रतादिर्मिथ्या कृतं कर्म्म च पूर्वदेहे॥
असत्यवाग्विक्रमवीर्य्यचेष्टा ज्ञानादिविज्ञानबलादिभिर्यः।
उन्मादकालो नियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत् तम्॥
अदूषयन्तः पुरुषस्य देहं देवादयः स्वैस्तु गुणप्रभावैः।
विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्य्यकान्तौ॥
अजातकालो हि सपूर्वरूपः प्रोक्तो निदानेऽस्य परं सुराद्यैः।
उन्मादरूपाणि पृथग् निबोधकालञ्च गमंत्र पुरुषांश्च तेषामिति

तद्यथा

सौमग्र दृष्टिं गम्भीरमप्रधृष्यमकोपनं अस्वप्नं भोजना-
भिलाषिणमल्पस्वेदमूत्रपुरीषवाचं शुभगन्धं फुल्लपद्मवदनं

इति देवोन्मत्तं विद्यात्। गुरुवृद्धसिद्धर्षीणामभिचाराभिध्यानानुरूपा चाहाराचेष्टाहारव्याहारं तेनमत्तं विद्यात्। अप्रसन्नदृष्टिं अपश्यन्तं निद्रालुं प्रतिहतवाचमनन्नाभिलाषा रोचका विपाकपरीतं पितृभिरुन्मत्तं विद्यात्। चण्डं साहसिकं तीक्ष्णं गम्भीरमप्रधृष्यं मुखवाद्यनृत्यगीतानुपानस्नानपानमाल्यधूपगन्धरक्तवस्त्रबलिकर्महास्य कथा योगप्रियं शुभगन्धमिति गन्धर्वोन्मत्तं विद्यात्। असकृत् स्वप्नरोदनहास्यं नृत्यगीतवाद्यकथान्नपानस्नानमाल्यधूपगन्धरतिं रक्तविप्लुताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषिणमिति यक्षोन्मत्तं विद्यात्। नष्टनिद्रमन्नपानद्वेषिणमनाहारमप्रतिबलिनं शस्त्रशोणितमांसरक्तमाल्याभिलाषिणं तर्ज्जनमिति राक्षसोन्मत्तं विद्यात्। प्रहासनृत्यप्रधानं देवविप्रवैद्यद्वेषावज्ञाभिस्तुतिवेदमन्त्रशास्त्रोदाहरणैः काष्ठादिभिरात्मपीड़नेन च ब्रह्मराक्षसोन्मत्तं विद्यात्। अस्वस्थचित्तं स्थानमलभमानं नृत्यगीतहासिनं बद्धाबद्धप्रभाषिणं सङ्करकूटमलिनरथ्या चेलतृणेष्वारोहणरतिं संभिन्नवर्णरूक्षस्वरं नग्नं विधावन्तं नैकत्र तिष्ठन्तं दुःखान्यावेदयन्तं नष्ट स्मृतिं पिशाचोन्मत्तं विद्यात्। तत्र शौचाचारं तपः स्वाध्याय कोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्याञ्च देवाः पानशुचिं विविक्तसेविनं धर्मशास्त्रस्मृतिकाव्यकुशलं प्रायः षष्ठी नवम्यो ऋषयः। मातृपितृगुरुवृद्धसिद्धाचार्योपसेविनं प्रायो दशम्याममावास्यायाञ्च पितरः गन्धर्वास्तु स्तुतिगीतवादि त्ररतिं परदारगन्धशास्त्रप्रियशौचाचारं द्वादश्याञ्चतुर्थ्याञ्च सत्त्व बलरूपगर्वशौ-

र्थ्ययुक्तं माल्यानुलेपनं हास्यप्रियमतिवाक् करणं प्रायः शुक्ल कादश्यां सप्तमग्रां च यक्षाः स्वाध्याय तपो नियमोपवासव्रतचर्य्यादेव यति गुरुपूजा रतिं भ्रष्टशौचं ब्राह्मणमब्राह्मणं वा ब्रह्मवादिनं शूरमानिनं देवतागारसलिलक्रीड़नरतिं प्रायः शुक्लपञ्चमग्रां पूर्णचन्द्रदर्शने च ब्रह्मराचसाः रक्षः पिशाचास्तु हीनसत्त्व पिशुनस्त्रैन लुब्धं प्रायो द्वितीयातृतीयाष्टमीषु पुरुषं छिद्रमन्वेष्याभिधर्षयन्तीत्यपरिसंख्येयानां ग्रहाणामाविष्कृततमाह्यष्टावेते व्याख्याताः॥ सर्वेष्वपि तु खल्वेषु यो हस्तावुद्यम्य रोषसंरम्भान्निःसङ्गमन्येष्वात्मनि वा पातयेत्। सोह्य साध्यो ज्ञेयस्तथा सास्रुनेत्रो मेढ्रप्रवृत्तरक्तः जातजिह्वः प्रस्नुतनासिकः। छिद्यमानमर्म्मप्रतिहन्यमानपाणिः सततं विकूजन् दुर्वर्णस्तृषार्त्तः पूतिगन्धिश्च हिंसार्थी उन्मत्तो ज्ञेयस्तं परिवर्ज्जयेत् रत्यर्चनाकामोन्मादिनौ तु भिषगभिप्रायाचाराभ्यां बुद्धा तदङ्गोपहारबलिश्रमेण मन्त्रभेषज्य विधिनोपक्रमेत्। तत्र द्वयोरपि निजा गन्तु निमित्तयोरुन्मादयोः समास विस्ताराभ्यां भेषजविधिं व्याख्यास्यामः।

उन्मादे वातजे पूर्वं स्नेहपानं विशेषवित्।
कुर्य्यादावृतवाते तु सस्नेहं मृदुशोधनम्॥
कफपित्तभवेऽप्यादौ वमनं सविरेचनम्।
ततः कुर्य्याद्यथा दोषं तेषां भूयस्त्वमाचरेत्॥
हृदीन्द्रियशिरः कोष्ठे संशुद्धे वमनादिभिः।
मनः प्रसादमाप्नोति स्मृतिसंज्ञाञ्च विन्दति॥
शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।

ताड़नञ्च मनो बुद्धि देह संतर्ज्जनं हितम् ॥
यः सक्तो विनये पट्टे संयम्य सुदृढैः सुखैः ।
अपेतलोष्टकाष्ठाद्यैः संरोध्यश्च तमो गृहे ॥
तर्ज्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम् ।
विस्मयो विस्मृतेर्हेतुर्नयन्ति प्रकृतिं मनः ॥
प्रदेहोत्सादनाभ्यङ्ग धूमा पानञ्च सर्पिषः ।
प्रयोक्तव्यं मनो बुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥
सर्पिः पानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ।
अतः सिद्धतमान्योगान् शृणून्मादविनाशनान् ॥
हिङ्गु सौवर्चलं व्योषं द्विपलांशैर्घृताढ़कम् ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् ।
स्थिरानन्तरजन्यौ द्वे शारिवे द्वे प्रियङ्गुकम् ॥
नीलोत्पलैला मञ्जिष्ठा दन्ती दाड़िमकेसरम् ।
तालीसपत्रं बृहती मालत्याः कुसुमं नवम् ॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकम् ।
कल्कैः कर्षसमैरेतैर्विंशत्याष्टाभिरेव च ॥
चतुर्गुणे जले पक्वा घृतप्रस्थं प्रयोजयेत् ।
अपस्मारे ज्वरे कासे श्वासे मन्देऽनलक्षये ॥
वातरोगे प्रतिश्याये तृतीयक चतुर्थके ।
छर्द्यर्शो मूत्रकृच्छ्रे च विसर्पोपहतेषु च ॥
कण्डूपाण्ड्वामयोन्माद विषमेह गरेषु च ।
भूतोपहतचित्तानां गद्गदानामरेतसाम् ॥
शस्तं स्त्रीणाञ्च बन्ध्यानां धन्यमायुर्बलप्रदम् ।

अलक्ष्मी पापरक्षोघ्नं सर्वग्रहविनाशनम्॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च।
एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम्॥
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरचतुर्गुणे।
वीरार्द्धमाषा काकोड़ी स्वगुप्तर्षभकर्द्धिभिः॥
मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत्।
बृंहणीयं विशेषेण सन्निपातहरं परम्॥
जटिलां पूतना केशीं चारटीं मर्कटीं वचाम्।
त्रायमाणां जयां वीराञ्चोरकं कटुरोहिणीम्॥
वयःस्थां शूकरीं छत्रामतिच्छत्रां पलङ्कषाम्।
महापुरुषदन्ताञ्च वयःस्थां नाकुलीद्वयम्॥
कटम्भरां वृश्चिकालीं स्थिरां चाहृत्य तैः घृतम्॥
सिद्धं चतुर्थकोन्मादग्रहापस्मारनाशनम्।
महापैशाचिकं नाम घृतमेतद्यथामृतम्॥
बुद्धिस्मृतिकरं चैव बालानां चाङ्गवर्द्धनम्।
लशुनानां शतं त्रिंशमभया त्र्यूषणात् पलम्।
गवां चर्म्ममपि प्रस्थोदशाढ़कं क्षीरमूत्रयोः॥
पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत्।
हिङ्गुचूर्णपलं शीते दत्त्वा च मधुमाक्षिकाम्॥
तद्दोषा गन्तुसम्भूतानुन्मादान् विषमज्वरान्।
अपस्मारांश्च हन्त्याशु पानाभ्यञ्जननावनैः।
लशुनस्या विनष्टस्य तुलार्द्धं निस्तुषी कृतम्॥
तदर्द्धं दशमूलस्य द्व्याढ़केऽपां विपाचयेत्।
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा॥

कोलमूलकषायाम्लमातुलुङ्गार्द्रकेसरैः ।
दाड़िमाम्बुसुरामस्तु वेतसैश्च पलार्द्धिकैः ।
सिद्धमेतत् पिवेत् शूलगुल्मार्शो जठरापहम् ॥
अथ पाण्ड्वामयघ्नोऽह योनिदोषज्वरक्रिमीन् ।
वातश्लेष्मामयांश्चान्यानुन्मादश्चापकर्षति ॥
हिङ्गुना हिङ्गुपर्ण्या च सकायस्था वयस्थया ।
सिद्धं सर्पिर्हितं तद्वद्यस्था हिङ्गुरोचकैः ॥
केवलं सिद्धमेभिर्वा पुराणं पाययेद् घृतम् ।
पाययित्वोत्तमां मात्रां स्वभ्रे रुन्ध्याद् गृहेऽपि वा ॥
विशेषतः पुराणञ्च घृतं तं पाययेद्भिषक् ।
त्रिदोषघ्नं पवित्रत्वात् विशेषाद् ग्रहमोक्षणम् ।
गुणकर्माधिकं स्थानाद्रासादात् कटुतिक्तकम् ॥
उग्रमन्धं पुराणं स्याद्दश वर्षस्थितं घृतम् ।
लाक्षारसनिभं शीतं तद्धि सर्वग्रहापहम् ॥
मेध्यं विरेचनेष्वग्र्यं प्रपुराणेष्वतःपरम् ।
ना साध्यं नाम तस्यास्ति यत् स्याद्वर्षशतस्थितम् ॥
दृष्टं स्पृष्टमथा घ्रातं तद्धि सर्वग्रहापहम् ।
अपस्मारग्रहोन्मादवतां शस्तं विशेषतः ॥
एतैरौषधवर्गैर्वा विधेयत्वं स गच्छति ।
अञ्जनोत्सादनालेपप्रधावनादींश्च योजयेत् ।
शिरीषो मधुकं हिङ्गु लशुनं तगरं वचाम् ॥
कुष्ठञ्च वस्तमूत्रेण पिष्टं स्यात्प्रावनाञ्जनम् ।
तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठा हिङ्गुसर्षपाः ॥
शिरीषबीजञ्चोन्मादग्रहापस्मारनाशनम् ।

पिष्ट्वा तुलग्रमपामार्गं हिङ्गुलं हिङ्गुपत्रिकाम् ॥
वर्त्तिः स्यान्मरिचार्द्धांशा पित्ताभ्यां गोशृगालयोः।
तथा जयेदपस्मार भूतोन्मादज्वरार्दितान् ॥
भूतार्त्तानमरात्तांश्च नरार्त्तांश्चैव गोमये।
मरिचञ्चातपे मांसं सपित्तं स्थितमञ्जनम् ॥
वैकृतं पश्यतः कार्य्यं दोषभूतहत स्मृतेः ॥
सबार्थको वचा हिङ्गुकरञ्जो देवदारु च।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक्कट्फलकम् ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम्।
नस्य मालेपनञ्चैव स्यानमुद्वर्त्तनं तथा।
अपस्मारविषोन्माद कृत्या लक्ष्मी ज्वरापहः ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥
शमेके पीनसे गन्धैधूमवर्त्तिं कृतां पिवेत्।
वैरोचनिकधूमोक्तैः श्वेताद्यैर्वा सहिङ्गुभिः ॥
शलाकोलूकमार्जारजम्बुकवृकवस्तजैः।
मूत्रपित्तशकृल्लोमनखचर्मभिरेव च ॥
सेकाञ्जनं प्रधमनं नस्यं धूपञ्च कारयेत्।
वातश्लेष्मात्मके प्रायः पैत्तिके च प्रशस्यते ॥
तिक्तकं जीवनीयञ्च सर्पिः स्नेहश्च मिश्रकः।
शीतानि चान्नपानानि मधुराणि मृदूनि च ॥
शङ्खकेशान्तसन्धौ वा मोचयेत् ज्ञोभिषक् शिराम्।
उन्मादे विषमे चैव ज्वरेऽपस्मार एव च ॥

श्रुतमांसविह्वलं वा निवाते स्थापयेत् सुखम् ।
त्यक्ता मतिस्मृतिभ्रंशं संज्ञां लब्धा प्रबुध्यते ।
आश्वासयेत् सुहृद्वा तं वाक्यैर्धर्मार्थसंहितैः ॥
ब्रूयादिष्टं विनाशं वा दर्शयेदद्भुतानि वा ।
बद्धा सर्षपतैलाक्तं न्यसेद्वोत्तानमातपे ॥
कपिकच्छाथवा तप्तैर्लौहतैलजलैः स्पृशेत् ।
कशाभिस्ताड़यित्वा वा सुबद्धं विजने गृहे ॥
रुन्ध्याच्चेतो हि विभ्रान्तं व्रजत्यस्य यथा शमम् ।
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम् ॥
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा ।
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम् ॥
त्रासयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया ।
देहदुःखभयेभ्यो हि परं प्राणभयं महत् ॥
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ।
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ॥
तस्य तत् सदृशप्राप्तिशान्त्या श्वासैः शमं नयेत् ।
कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ॥
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ।
बुद्धा देशं वयः सात्म्यं दोषं कालं बलाबलम् ॥
चिकित्सितमिदं कुर्य्यादुन्मादे भूतदोषजे ।
देवर्षिपितृगन्धर्वैरुन्मत्तस्य तु बुद्धिमान् ॥
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च ।
सर्पिष्पानादि तस्येह मृदुभेषज्यमाचरेत् ॥
पूजाबल्युपहारांश्च मन्त्राञ्जनविधींस्तथा ।

शान्तिकर्मेष्टिहोमांश्च जपस्वस्त्ययनानि च ॥
वेदोक्तान्नियमांश्चापि प्रायश्चित्तानि चाचरेत् ।
भूतानामधिपं देवमीश्वरं जगतः प्रभुम् ॥
पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ।
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये ॥
तेषां पूजाञ्च कुर्वाण उन्मादेभ्यो विमुच्यते ।
बलिभिर्मङ्गलैर्होमैरौषध्यगदधारणैः ॥
सत्याचारतपोज्ञानप्रदाननियमव्रतैः ।
देवगोब्राह्मणविप्राणां गुरूणां पूजनेन च ॥
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा ।
तच्चोपदेक्ष्यते किञ्चिदपस्मारे चिकित्सितम् ॥
उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतु दूष्ययोः ।
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ॥
निजागन्तुभिरुन्मादैः सत्त्ववान्न स युज्यते ।
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ॥
निजागन्तु निमित्तानामुक्तवान् भिषगुत्तमः ।

इति उन्मादचिकित्सितम् ।

---

## पञ्चदशोऽध्यायः।

अथातोऽपस्मारचिकित्सितं व्याख्यास्यामः।

स्मृतेरपगमं प्राहुरपस्मारं भिषग्विदः।
तमःप्रवेशबीभत्सचेष्टं धीसत्त्वसंप्लवात्॥
विभ्रान्तबहुदोषाणामहिताशुचिभोजिनाम्।
रजस्तमोभ्यां विहते सत्त्वे दोषावृते हृदि॥
चिन्ताकामभयक्रोधशोकोद्वेगादिभिस्तथा।
मनस्यभ्याहते नृणामपस्मारः प्रवर्तते॥
धमनीभिः श्रिता दोषा हृदयं पीडयन्ति हि।
संपीड्यमानो व्यथते मूढो भ्रान्तेन चेतसा॥
पश्यत्यसन्ति रूपाणि पतति प्रस्फुरत्यपि।
जिह्माक्षिभ्रुः स्रवल्लालो हस्तौ पादौ च विक्षिपन्॥
दोषवेगे च विगते स्वस्थवत्प्रति बुध्यते।
पृथग्दोषैः समस्तैश्च वक्ष्यते स चतुर्विधः॥
कम्पते दशते दन्तान् फेनोद्वामी श्वसित्यपि।
परुषाणि च कृष्णानि पश्येद्रूपाणि चानिलात्॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः।
सतृष्णोष्णो नरस्तप्तलोकदर्शी च पैत्तिकः॥
शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः।

पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥
सर्वैरेतैः समस्तैस्तु लिङ्गैर्ज्ञेयस्त्रिदोषजः ।
अपस्मारः सचासाध्यो यः क्षीणस्यानवश्च यः ॥
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः ।
अपस्माराय कुर्वन्ति वेगं किञ्चिदिहान्तरम् ॥
तैरावृतानां हृत्स्रोतो मनसां संप्रमोधनम् ।
तीक्ष्णैरादौ भिषक् कुर्यात्कर्मभिर्वमनादिभिः ॥
वातिकं वस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायैरपस्मारं समाचरेत् ॥
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं पिबेदपस्मारकामलाज्वरनाशनम् ॥
द्वे पञ्चमूले त्रिफला रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥
सम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥
भार्गीं पाठां त्रिकटुकां त्रिवृतां निचुलानि च ।
श्रेयसीमाढकीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥
द्वे शारिवे रोहिषं च भूतीकं मदयन्तिकाम् ।
क्षिपेत् पिष्ट्वा समात्राणि तेन प्रस्थं घृतात् पचेत् ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिति ख्यातं महत्तदमृतोपमम् ॥
अपस्मारे तथोन्मादे श्वयथावुदरेषु च ।

गुल्मार्शः पाण्डुरोगेषु कामलासु भगन्दरे ॥
अलक्ष्मी ग्रहरोगघ्नं चातुर्थिकविनाशनम् ।
ब्राह्मी रसवचा कुष्ठशङ्खपुष्पीभिरेव च ॥
पुराणं मेध्यमुन्मादा लक्ष्म्यपस्मारपाप्मजित् ।
घृतं सैन्धवहिङ्गुभ्यां वार्षीयाम्ले चतुर्गुणे ॥
मूत्रे सिद्धमपस्मार हृद्ग्रहामय नाशनम् ।
वचा सम्याकर्कैडर्यवयः स्था हिङ्गुरोचकैः ॥
सिद्धं पलं कषायुत्तं वातश्लेष्मात्मके घृतम् ।
तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ॥
क्षीरद्रोणे पचेत्सिद्धमपस्मार विनाशनम् ।
कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ॥
कार्षिकैर्जीवनीयैश्च घृतप्रस्थं विपाचयेत् ।
वातपित्तोद्भवं क्षिप्रं अपस्मारं नियच्छति ॥
तद्वत्काशविदारीक्षुकुशक्काथ शृतं पयः ।
मधुकद्विपले कल्के द्रोणे चामलकी रसात् ।
तद्वत्सिद्धो घृतप्रस्थः पित्तापस्मार भेषजम् ॥
अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे ।
सिद्धं स्याद्गोशकृन्मूत्रे स्नानोत्सादनमेव च ॥
कटभी निम्बकट्वङ्गमधुशिग्रुत्वचां रसे ।
सिद्धं मूलसमं तैलमभ्यङ्गार्थं प्रशस्यते ॥
पलङ्कषावचापथ्या वृश्चिकाल्यर्क सर्षपैः ।
जटिला पूतना केशीनाकुली हिङ्गुरोचकैः ॥
लशुनातिरसा चित्राकुष्ठैर्विड्भिश्च पक्षिणाम् ।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥

सिद्धमभ्यञ्जनं तैलमपस्मार विनाशनम्।
एतैश्चैवौषधैः कार्यं धूपनं सप्रलेपनम्॥
पिप्पलीं लवणं शिग्रुं हिङ्गु हिङ्गु शिवाटिकाम्।
काकोलीं सर्षपान् काकनासां कैडर्यचन्दने॥
शुनः स्कन्धाक्षि नखरान् पशुकांश्चेति पेषयेत्।
बस्तमूत्रेण पुष्येत् तत् प्रदेहः स्यात् सधूपनः॥
अपेत राक्षसी कुष्ठ पूतनाकेश रोचकैः॥
तत्साधनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम्।
धातुका शकृता तद्दग्धैर्वा वस्तलोमभिः॥
कपिलानां गवां पित्तं नावनं परमं हितम्।
श्वसृगालविड़ालानां सिंहादीनां च शस्यते॥
भार्गी वचा नागदन्ती श्वेताश्वेता विषाणिका।
ज्योतिष्मती नागदन्ती पादोत्था मूत्रपेषिताः॥
योगास्त्रयोऽतः षड् विन्दून् पञ्च वा नावयेद्भिषक्।
त्रिफला व्योषपीतद्रु यवक्षारफणिज्जकैः॥
श्यामापामार्गकारञ्जफलैर्मूत्रेऽथ वस्तजे।
साधितं नाऽनं तैलमपस्मारविनाशनम्॥
पिप्पली हस्तिकाली च कुष्ठं च लवणानि च।
भार्गी च चूर्णितं नस्तः कार्य्यं प्रधमनं परम्॥
कायस्थान् शारदान् मुद्गान् मुस्तोशीर यवांस्तथा।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत्॥
अपस्मारे तथोन्मादे सर्पदष्टे तथार्दिते।
विषपीते जलमृते चैताः स्युरमृतोपमाः॥

मुस्तं वयस्थां त्रिफलां कायस्थां हिङ्गुशाद्वलम् ।
व्योषं माषान् यवान् मूत्रैर्वस्तिमेषर्षभैस्त्रिभिः ॥
पिष्ट्वा कृत्वा च तां वर्त्तिमपस्मारे प्रयोजयेत् ।
किलासेषु तथोन्मादे ज्वरेषु विषमेषु च ॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषा युक्तं धूपनं परमं मतम् ॥
नकुलोलूकमार्ज्जार गृध्रकीटाहि काकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥
आभिः क्रियाभिः सिद्धाभिर्हृदयं संप्रबुध्यते ।
स्रोतांसि चापि शुद्ध्यन्ति ततः संज्ञां स विन्दति ॥
यस्यानुबन्धमागन्तु दोषं लिङ्गाधिकाकृतिम् ।
पश्येत्तस्य भिषक् कुर्य्यादागन्तून्मादभेषजम् ॥
अनन्तरमुवाचेदमग्निवेशः कृताञ्जलिः ।
भगवन् ! प्राक् समुद्दिष्टः श्लोकस्थाने महागदः ॥
अतत्त्वाभिनिवेशश्च तस्य व्यक्तिरिहोच्यताम् ।
शुश्रूषवे वचः श्रुत्वा शिष्यायाथ पुनर्वसुः ॥
महागदं सौम्य ! शृणु सहेत्वाकृतिभेषजम् ।
मलिनाहारशीलस्य वेगान् प्राप्तान्निगृह्णतः ॥
शीतोष्णस्निग्धचिन्ताद्यैर्हेतुभिश्चातिसेवितैः ।
हृदयं समुपाश्रित्य मनो बुद्धिवहाः शिराः ।
दोषाः संदूष्य तिष्ठन्ति रजो मोहावृतात्मनः ॥
रजस्तमोभ्यां वृद्धाभ्यां बुद्धौ मनसि चावृते ।
हृदये व्याकुले दोषैरथ मूढोऽल्पचेतनः ॥
करोति विषमां वृत्तिं बिनित्यानित्ये हिताहिते ।

अतत्त्वाभिनिवेशस्य मासुरासा महागदम् ॥
स्नेहस्वेदोपपन्नस्तं संशोध्य वमनादिभिः।
कृतसंसर्ज्जनं मेध्यैरन्नपानैरुपाचरेद् ॥
ब्राह्मी स्वरससंयुक्तं पथ्यं गव्यमुदाहृतम्।
तत् सेव्यं शङ्खपुष्पी च यच्च सेव्यं रसायनम् ॥
सुहृदश्चानुकूलास्तं स्वाप्तधर्म्मार्थवादिनः।
संयोजयेयुर्विज्ञानधैर्य्यस्मृतिसमाधिभिः ॥
प्रयुञ्ज्यात्तैललशुनं पयसा वा शतावरीम्।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम् ॥
दुश्चिकित्स्योह्यपस्मारः चिरकारी कृतास्पदः।
तस्माद्रसायनैरेनं प्रायशः समुपाचरेत् ॥
जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा।
रक्षेदुन्मादिनं चैव सद्यः प्राणहरा हि ते ॥

इति तत्र श्लोकौ।

हेतुं कुर्वन्त्यपस्मारं दोषाः प्रकुपिता यथा।
सामान्यतः पृथक् त्वाच्च लिङ्गं तेषां च भेषजम्।
महागद समुत्थानं लिङ्गं चोवाचसौषधम् ॥
मुनिर्व्यासममासाभ्यामपस्मार चिकित्सिते।

इत्यपस्मार चिकित्सितम्।



## षोड़शोऽध्यायः ।

अथातः क्षतक्षीणचिकित्सितं व्याख्यास्यामः ।

उदारकीर्त्तिर्ब्रह्मर्षिरात्रेयः परमार्थवित् ॥
क्षतक्षीणचिकित्सार्थमिदमाह चिकित्सितम् ।
धनुषा यस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ॥
पततो विषमोच्चेभ्यो युध्यमानस्य चाधिकैः ।
वृषं हयं वा धावन्तं दम्यं वान्यं निगृह्णतः ॥
शिला काष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ।
अधीयमानस्यात्युच्चैर्दूरं वा व्रजतो द्रुतम् ॥
महा नदीं वा तरतो गजैर्वा सह धावतः ।
सहसोत्पततो दूरं तूर्णं चाति प्रनृत्यतः ॥
तथान्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा ।
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्य्यते ॥
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ।
उरो निरुज्यते तस्य भिद्यतेऽथ विदह्यते ॥
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ।
क्रमाद्वीर्य्यं बलं वर्णो रुचिरग्निश्च हीयते ॥
ज्वरो व्यथा मनो दैन्यं विड्भेदोऽग्निवधादपि ।
ष्ठीवः श्यावः सदुर्गन्धः पीतो विग्रथितो बहुः ।

कासमानस्य च श्लेष्मा सरक्तः संप्रवर्त्तते ॥
सक्षतः चोणितश्छर्दिः कासो वै शोषिकः क्षते।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नरः।
गते सम्वत्सरे याप्यः सर्वलिङ्गं तु वर्ज्जयेत् ॥
उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम्।
सद्य एव पिवेज्जीर्णे पयसाद्यात् सशर्करम् ॥
पार्श्वे वस्ति रुजश्चाल्पे पित्ताग्निस्तां सुरा युताम्।
भिन्न विट् कः स मुस्ताति विषां पाठां सवत्सकाम् ॥
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम्।
त्वक् क्षीरी समितं क्षीरे पक्का दीप्तानलः पिवेत् ॥
इक्ष्वालिक विसग्रन्थि पद्मकेसरचन्दनैः।
शृतं पयो मधुयुतं सन्धानार्थं पिवेत् क्षती ॥
यवानां चूर्णमादाय क्षीरसिद्धं घृताप्लुतम्।
ज्वरदाहे सिता क्षौद्र शक्तून् वा पयसा पिवेत् ॥
कासी पर्वास्थि शूलीच लिह्यात् सघृत माक्षिकाः।
मधूक मधुक द्राक्षा त्वक् क्षीरी पिप्पली बलाः ॥
एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा।
सिता मधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः ॥
संचूर्ण्य मधुना युक्ता गुलिकाः संप्रकल्पयेत्।
अक्षतुल्यास्ततश्चैकां भक्षयेन्ना दिने दिने।
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम् ॥
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम्।
शोषप्लीहाढ्य वातांश्च स्वरभेदं क्षतं क्षयम् ॥

गुलिका तर्पणी वृथा रक्तपित्तञ्च नाशयेत् ।
रक्तेऽतिवृद्धे दद्याच्छ यूषैस्तोयेन वा पिवेत् ॥
चटकाण्डरसं वापि रक्तं वा छागजाङ्गलम् ।
चूर्णं पौननवं रक्तशालितण्डुलशार्करम् ॥
रक्तष्ठीवी पिवेत् सिद्धं द्राक्षारस पयो घृतैः ।
मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ॥
मूढ़वातस्त्वजामेदः सुरा भृष्टं ससैन्धवम् ।
क्षामः क्षीणः क्षतोरस्कस्त्व निद्रःसवलेऽनले ॥
शृतक्षीरसेनाद्यात् सक्षौद्र घृतशर्करम् ।
शर्कराश्च यवक्षौद्रजीवकर्षभकौ मधु ॥
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षतः कृशः ।
क्रव्यादमांस निर्यूहं घृतभृष्टं पिवेच सः ।
पिप्पली क्षौद्रसंयुक्तं मांसशोणितवर्द्धनम् ॥
न्यग्रोधोदुम्बराश्वत्थ प्लक्षशाल प्रियङ्गुभिः ।
तालमस्तकजम्बूत्वक्-पियालैश्च सगुस्तकैः ॥
साश्वकर्णैः शृतात् क्षीरा दद्याज्जातेन सर्पिषा ।
शाल्योदनं क्षती रक्तः क्षीणशुक्रश्च मानवः ।
यष्ट्याह्वा नागवलयोः क्वाथे क्षीरसमे घृतम् ॥
पयसा पिप्पली वाशीं कल्कं सद्धं क्षते शुभम् ।
कोलक्षाक्षारसे तद्वत् क्षीराष्टगुणसाधितम् ।
कल्कैः कटुङ्क दार्वीत्वग्वत्सकत्वक्-फलैर्घृतम् ।
जीवकर्षभकौ वीरां जीवन्तीं नागरं शठीम् ॥
चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके ।
पुनर्नवे द्वे मधुकं आत्मगुप्तां शतावरीम् ॥

ऋद्धिं पकषकं भार्गीं मृद्वीकां बृहतीं तथा।
शृङ्गाटकीं तामलकीं पयस्यां पिप्पलीं बलाम्॥
बदराक्षोटखर्ज्जूरवातामाभिषुकाण्यपि।
फलानि चैव माद्यानि कल्कान् कुर्वीत कार्षिकान्।
धात्रीरसविदारीक्षु च्छागमांसरसं पयः।
कुर्य्यात् प्रस्थोन्मितं तेन घृतप्रस्थं विपाचयेत्॥
प्रस्थार्द्धं मधुनः शीते शर्कराद्धंतुलां तथा।
द्विकार्षिकाणि पत्रैलाहेमत्वङ्मरिचानि च॥
चूर्णितानि विनीयास्माल्लिह्यान्मात्रां सदा नरः।
अमृतप्राशमित्येतन्नराणाममृतं घृतम्॥
सुधामृतरसं प्राश्य क्षीरमांसरसाशिना।
नष्टनिद्राक्षतक्षीणदुर्बलव्याधिकर्षिताम्॥
स्त्रीप्रसक्तान् कृशान् वर्णस्वरक्षीनांश्च बृंहयेत्।
कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत्॥
पुत्रदं वमिमूर्च्छाहृद्योनिमूत्रामयापहम्।
स्वदंष्ट्रोशीरमञ्जिष्ठा बला काश्मर्य्यकत्तृणम्॥
दर्भमूलं पृथक् पर्णीं पलाशर्षभकौ स्थिराम्।
पालिकं साधयेत्तेषां रसे क्षीरचतुर्गुणे॥
कल्कैः स्वगुप्ता जीवन्ती मेदकर्षभजीवकैः।
शतावर्य्यृद्धि मृद्वीका शर्करा श्रावणीबिसैः॥
प्रस्थः सिद्धो घृताद्वातपित्तहृद्द्रवशूलनुत्।
मत्रकृच्छ्रप्रमेहार्शः कासशोषक्षयापहः॥
धनुः स्त्रीमद्यभाराध्वखिन्नानां बलमांसदः।
मधुकाष्टपलं द्राक्षाप्रस्थक्वाथे घृतं पचेत्॥

पिप्पल्यष्टगुणे कल्के प्रस्थं सिद्धे च शीतले ।
पृथगष्टपलं क्षौद्रं शर्कराभ्यां विमिश्रयेत् ॥
समं शक्तुं क्षतक्षीणे रक्तगुल्मिषु तद्धितम् ।
धात्रीफलविदारीक्षुजीवनीयरसाद्‌ घृतात् ॥
छागमोपयसोश्चैव सप्तप्रस्थान् पचेद्भिषक् ।
सिद्धशीतसिता क्षौद्रद्विप्रस्थं विनयेत्ततः ॥
यक्ष्मापस्मारपित्तासृक्कासमोहक्षयापहम् ।
वयः स्थापनमायुष्यं मांसशुक्रबलप्रदम् ॥
घृतं तु पित्तेऽभ्यधिके लिह्यात् वातेऽधिके पिबेत् ।
लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानिलम् ॥
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ।
क्षामक्षीण कृशाङ्गानामेतान्येव घृतानि च ॥
त्वक्‌क्षीरी शर्करालाजचूर्णैः पानानि योजयेत् ।
सर्पिर्गुडान् समध्वंशान् जग्ध्वा दद्यात् पयोनु च ॥
रेतो वीर्य्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ।
बलां विदारीं ह्रस्वाञ्च पञ्चमूलीं पुनर्नवाम् ।
पञ्चानां क्षीरिवृक्षाणां शुङ्गां पुष्टं शकामपि ॥
एषां कषाये द्विक्षीरे विदार्य्याजरसांशिके ॥
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढ़कम् ।
सिता पलानि पूतेऽस्मिन् शीते द्वात्रिंशतं क्षिपेद् ॥
गोधूम पिप्पली वांशी चूर्णं शृङ्गाटकस्य च ।
सक्षौद्रं कुड़वांशेन तत् सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुड़ान् कृत्वा भूर्जपत्रेण वेष्टयेत् ।
तान् जग्ध्वा पलिकान् क्षीरं मद्यं वानुपिबेत् कफे

शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्षिते।
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते॥
शस्ताः पार्श्वशिरःशूले भिन्ने स्वरवर्णयोः।
त्वक्क्षीरी श्रावणी द्राक्षा मूर्वर्षभकजीवकैः॥
वीरर्द्धि क्षीरकाकोली बृहती कपिकच्छुभिः।
खर्जूरविसमेदाभिः क्षीरपिष्टैः पलोन्मितैः॥
धात्री विदारीक्षुरसप्रस्थैः प्रस्थं घृतात् पचेत्।
शर्करार्द्धतुलां शीते क्षौद्रार्द्धप्रस्थमेव च।
क्षिप्त्वा सर्पिर्गुडान् कुर्य्यात् कासहिक्काज्वरापहान्।
यक्ष्मागान्तमकं श्वासं रक्तपित्तं हलीमकम्॥
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलाम्।
द्राक्षां नवामामलकीमात्मगुप्तां पुनर्नवाम्।
शतावरीं विदारीञ्च श्वमांशां पिप्पलीं तथा।
पृथग्दश पलान् भागान् पलान्यष्टौ च नागरात्॥
यष्ट्याह्व सौवर्चलयोर्द्विपलं मरिचस्य च।
क्षीरतैलघृतानाञ्च त्र्याढ़के शर्करा शते॥
क्वथिते तानि चूर्णानि मत्वा विल्वसमान् गुड़ान्।
विदार्य्याः स्वरसात् प्रस्थं रसान् प्रस्थञ्च तैत्तिरात्॥
दद्यात् सिद्धति तस्मिंस्तु पिष्टानि सुरसेन वा।
मधूकपुष्पं कुड़वं पियालकुड़वं तथा।
तुकाक्षीर्य्यर्द्धकुड़वां खर्ज्जूराणि च विंशतिम्॥
पृथग्बिभीतकान् मज्जा पिप्पल्याश्च चतुर्थिकाम्।
पलानि विंशतिं खण्डान् मधुकात् कर्षमेव च॥
तयार्द्धपत्रिकान्यत्र जीवनीयानि चावपेत्।

सिद्धेऽस्मिन् कुडवं चौद्रात्शीते चिप्त्वाथ मोदकान् ॥
कारयेन्मरिचाजाजी पलचूर्णावचूर्णितान् ।
वातासृक्पित्तरोगेषु चतकासचयेषु च ।
शुष्यतां चीणशुक्रानां रक्ते चोरसि संस्थिते ॥
कृशदुर्बलदेहानां पुष्टिवर्णबलार्थिनाम् ।
योनिदोषचतस्राव स्रुतानां चापि योषिताम् ॥
गर्भार्थिनीनां गर्भश्च स्रवेद्यासां म्रियेत वा ।
धन्या वल्या हितास्ताभ्यः शुक्रशोणितवर्द्धनाः ॥
वस्तिदोषे विकुर्वाणे स्त्रीप्रसक्तस्य मारुते ।
वातघ्नान् वृंहणान् वृष्यान् योगान् प्रयोजयेत् ॥
शर्करा पिप्पली चूर्णैः सर्पिषा माक्षिकेण वा ।
संयुक्तं वा शृतं चीरं पिवेत् कास ज्वरापहम् ॥
फलाम्लं सर्पिषा भृष्टं विदारीचुरसे शृतम् ।
चीणु चीणः पिवेद्यूषं जीवनं वृंहणं परम् ॥
शक्तूनां वस्त्रपूतानां मन्थं चौद्रघृतान्वितम् ।
यवाग्नं सात्म्यो दीप्ताग्निः चतचीणः पिवेन्नरः ॥
जीवनीयोपसिद्धं वा घृतभृष्टं तु जाङ्गलम् ।
रसं प्रयोजयेत् चीणे व्यञ्जनार्थे सशर्करम् ॥
गोमहिष्यश्वनागाजैः चीरैर्मांसरसैस्तथा ।
यथाग्नि भोजयेद्यूषैः फलाम्लैर्वा घृतान्वितैः ।
दीप्तेऽग्नौ विधिरेषः स्यान्मन्दे दीपनपाचनः ॥
यक्ष्मिणां विहितो ग्राही भिन्ने शकृति चोच्यते ।
पलिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले ॥
कुड़वांशानि वृचाम्लं दाड़िमं पत्रसर्ज्जकान् ।

एकैका मरिचा जाज्योर्धान्यकाद् द्वे चतुर्थिके॥
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत्।
कृत्वा चूर्णमतो मात्रामन्नपाने प्रयोजयेत्॥
रोचनं दीपनं बल्यं पार्श्वार्त्तिश्वासकासनुत्।
एषा षोड़शिकाधान्याद् द्विरंशो जाज्यमोदयोः॥
ताभ्यां दाड़िमवृक्षाम्ल द्विर्द्विः सौवर्चलात् पलम्।
शुण्ठ्याः कर्षं दधित्थस्य धान्यपञ्च पलानि च।
तच्चूर्णं षोड़शपले शर्करायां विमिश्रयेत्।
खण्डवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत्॥
पिबेन्नागवला मूलस्यार्द्धकर्षाद्विवर्द्धितम्।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक्॥
एष प्रयोगः पुष्ट्यायुर्बलारोग्यकरः परः।
मण्डूकपर्ण्याः कल्पोऽयं मधुरे नागरे तथा॥
यद्यत् सन्तर्पणं शीतमविदाहि हितं लघु।
अन्नपानं निषेव्यं तत्क्षतक्षणैः सुखार्थिभिः॥
यच्चोक्तं यक्ष्मिणां पथ्यं कासिनां रक्तपित्तिनाम्।
तच्च कुर्य्यादपेक्ष्याग्निं व्याधिं मात्राबलं तथा॥
उपेक्षितो भवेत् तस्मिन् अनुबन्धो हि यक्ष्मिणाम्।
प्रागेवागमनात् तस्य तस्मात् तं त्वरया जयेत्॥

इति तत्र श्लोकौ।

क्षतक्षयसमुत्थानं सामान्यं पृथगाकृतिम्।
असाध्यं याप्यसाध्यत्वं साध्यानां सिद्धिमेव च॥

उक्तवान् ज्येष्ठमिथ्याय क्षतक्षीण चिकित्सिते ।
तत्त्वार्थविद्वीत रजस्तमो दोषः पुनर्वसुः ॥

इति क्षतक्षीण चिकित्सितम् ।

---

सप्तदशोऽध्यायः ।

अथातः श्वयथु चिकित्सितं व्याख्यास्यामः ।

भिषग्वरिष्ठं सुरसिद्धजुष्टं मुनीन्द्रमत्रात्मजमग्निवेशः ।
महागदस्य श्वयथोर्यथावत् प्रकोपरूप प्रशमानपृच्छत् ॥
तस्मिन् जगादागदवेदसिन्धु प्रवर्त्तनाद्रि प्रवरोऽत्रिजस्तान् ।
वातादिभेदा त्रिविधस्य सम्यङ् निजानिजैकाङ्गजसर्वजस्य ॥
शुद्धया मया भक्तकृशावलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्यामसृच्छाकविरोधि दुष्टगरोपसृष्टान्न निषेवणं च ॥
अर्शांस्य चेष्टा न च देहशुद्धिर्मर्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्मणाञ्च निजस्य हेतुः श्वयथौ प्रदिष्टः ॥
बाह्यास्त्वचो दूषयिताभिघातः काष्ठाश्मशस्त्राग्न्यशनी विषाद्यैः ।
आगन्तुहेतुः त्रिविधो निजश्च सर्वाङ्गगात्रावयवेश्रितत्वात् ॥
बाह्याः सिराः प्राप्य यदा कफासृक्पित्तानि संदूषयतीह वायुः
तैर्बद्धमार्गः स तदा विसर्पन्नुत्सेधलिङ्गं श्वयथुङ्करोति ॥

उरः स्थितैरूर्ध्वमधस्तु वायोः स्थानस्थितैर्मध्यगतैस्तु मध्ये।
सर्वाङ्गगैः सर्वगतैः क्वचित्स्थैर्दोषैः क्वचित् स्यात् श्वयथुस्तदाख्यः॥
ऊष्मा तथा स्याद्दवथुः शिराणामायाम इत्येव च पूर्वरूपं।
सर्वस्त्रिदोषोऽधिकदोषलिङ्गैः स्याच्छ्वयथुमभ्येति भिषक्जितञ्च
चलस्तनुत्वक् परुषोऽरुणोऽसितः सुप्तिहर्षार्तियुतो निमित्ततः॥
प्रशाम्यति प्रोन्नमति प्रपीडितो दिवा बली च श्वयथुः समीरणात्
मृदुः सगन्धो सितपीतरागवान् भ्रमज्वरस्वेदतृषामदान्वितः॥
य उष्यते स्पर्शसहोऽक्षिरागकृत्सपित्तशोथो भृशदाहपाकवान्।

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत्।
सुकृच्छ्रजन्म प्रशमो निपीडितो
न चोन्नमेद्रात्रिबली कफान्वितः॥
कृशस्य रोगैरबलस्य यो भवे-
दुपद्रवैर्वा वमि पूर्वकैर्युतः।
महार्तिमर्मानुगतोऽथ वाजिमान्
परिस्रवन् भीमबलश्च सर्वगः॥

अहीनमांसस्य य एकदोषजे नवो बलस्थस्य सुखः ससाधने।
निदानदोषर्तु विपर्ययक्रमैर्विशोधनैर्लङ्घनदोषमादितः॥
शिरो गतं शीर्षविरेचनैरधोविरेचनैरूर्ध्वहरैस्तथोर्ध्वजम्।
उपाचरेत् स्नेहविधिं च रूक्षजे विबद्धविट्केऽनिलजे निरूहणं॥
घृतं तु पित्तानिलजे सतिक्तकम् पयश्च मूर्च्छारतिदाहतर्षिते
विशोधनीये तु समूत्रमिष्यते कफोत्थिते चारकटूष्णसंयुतैः
समूत्रतक्रासवयुक्तिभिर्जयेत्।



56

ग्राम्यानूपं पिशितमबलं शुष्कशाकं नवान्नम् ।
गौड़ं पिष्टान्नं दधितिलकृतं पिच्छलं मद्यमम्लम् ॥
धानावल्लूरं समशनमथो गुर्वसात्म्यं विदाहि ।
स्वप्नञ्च रात्रौ श्वयथु गदवान् वर्ज्जयेन्मैथुनं च ॥
व्योषं त्रिवृच्चित्रककरोहिणी च सायोरजस्का त्रिफलारसेन ।
पीत कफोत्थं शमयेत्तु शोफं मूत्रेण गव्येन हरीतकी वा ॥
हरीतकी नागरदेवदारुमुस्ताम्बुयुक्तं सपुनर्नवं वा ।
सर्वं पिबेच्चिप्पिमूत्रयुक्तं स्नातश्च जीर्णे पयसान्न मद्यात् ॥
पुनर्नवा नागरमुस्तकल्कान् प्रस्थेन क्षीरः पयसोऽसमानान् ।
मयूरकं मागधिकां समूर्वां सनागरां वा प्रपिबेत् सवाते ॥
दन्ती त्रिवृत्त्र्यूषणचित्रकैर्वा पयः शृतं दोषहरं पिबेन्ना ।
द्विप्रस्थमात्रञ्च पलाह्निकैस्तैर्द्दर्शावशिष्टं पवने सपित्ते ॥
सशुण्ठिपीतद्रुरसं प्रयोज्यं श्यामोरुबूकोषणसाधितं वा ।
मुस्तारुवर्षांत्समहौषधैर्वा गुडूचिका नागरदन्तिभिर्वा ॥
सप्ताहमोष्ट्रं यदि वापि मासं पयः पिबेन्नोजनवारिवर्जी ।
गव्यं समूत्रं महिषी पयो वा क्षीराशनं मूत्रमथो गवां वा ॥
तक्रं पिबेद्वा गुरुभिन्नवर्चाः सव्योषसौवर्च्चलमाक्षिकं वा ।
गुडाभयां वा गुड़नागरां वा सदोषभिन्नामविबद्धवर्चाः ॥
विड्वातसक्ते पयसा रसैर्वा प्राग् भक्तमद्यादुरुबूकतैलम् ।
स्रोतोविबन्धेऽग्निरुचिप्रणाशे मद्यान्यरिष्टांश्च पिबेत्सुजातान्
कण्डीरभल्लातकचित्रकांश्च व्योषं विडङ्गं बृहती बलञ्च ।
द्विप्रस्थिकं गोमयपावकेन द्रोणे पचेत्क्वाथिकमस्तुनश्च ॥
त्रिभागशेषञ्च सपूत शीतं द्रोणे न तत्प्राक्तनमस्तुनश्च ।
सितोपलायाश्च शतेन युक्तं लिप्ते घटे चित्रकपिप्पलीनाम् ॥

शतं शतं जीर्णगुडात्तुलाश्च संसृज्य कुम्भे मधुना प्रलिप्ते ।
सप्ताह मुष्णे द्विगुणान्तु शीते स्थितं जलद्रोणयुतं पिबेत्ता ॥
शोफान्विबन्धान् कफवातजांश्च सद्यस्त्वरिष्टोऽष्टशताग्निकृच्च ।
पुनर्नवे द्वे च बले सपाठे दन्तीं गुडूचीमथ चित्रकञ्च ।
निदिग्धिकाञ्च त्रिपलानि पक्त्वा द्रोणावशेषे सलिले ततस्तम् ।
पूत्वा रसं द्वे च गुडात् पुराणात्तुले मधुप्रस्थयुतं सुशीतम् ॥
मासं निदध्याद् घृतभाजनस्थं पक्षे यवानां परितस्तु मासात् ॥
चूर्णीकृतै रर्द्धपलांशिकैस्तं पत्रत्वगेला मरिचाम्बुलोध्रैः ॥
गन्धान्वितं क्षौद्रघृतप्रदिग्धे जीर्णे पिबेद्व्याधिबलं समीक्ष्य ।
हृत्पाण्डुरोगं श्वयथुं प्रवृद्धं प्लीहभ्रमारोचकमेहगुल्मान् ॥
भगन्दरं षट्जठराणि कासं श्वासं ग्रहण्यामय कुष्ठकण्डूः ।
शाखानिलं बद्धपुरीषताञ्च हिक्कां किलासञ्च हलीमकञ्च ।
क्षिप्रं जयेद्वर्णबलायुरोजस्तेजोन्वितो मांसरसान्नभोक्ता ॥
फलत्रिकं दीप्यकचित्रकौ च सपिप्पली लोहरजो विडङ्गम् ।
चूर्णीकृतं कौडविकं डिरंगं क्षौद्रं पुराणस्य तुलाङ्गुडस्य ॥
मासं निदध्याद् घृतभाजनस्थं यवेषु तानेव निहन्ति रोगान्
ये चार्शसां पाण्डुविकारिणाञ्च प्रोक्ताः शुभाः शोफिषु तेऽप्यरिष्टाः
कृष्णा सपाठा गजपिप्पली च निदिग्धिका चित्रकनागरे च ।
सपिप्पलीमूलरजन्यजाजी मुस्तञ्च चूर्णं सुखतोयपीतम् ॥
हन्यात्त्रिदोषं चिरजञ्च शोफं कल्कश्च भूनिम्बमहौषधस्य ।
अयो रजस्त्र्यूषणयावशूकं चूर्णञ्च पीतं त्रिफलारसेन ।
क्षारद्वयं स्याल्लवणानि चत्वार्ययोरजो व्योषफलत्रिकं च ॥
सपिप्पलीमूलविडङ्गसारं मुस्ताजमोदामरदारुबिल्वम् ।
कलिङ्गकाः चित्रकमूलपाठं यष्टिकञ्चातिविषं पलाशम् ॥

यच्छिग्रुकर्षं त्वनुसूक्ष्मचूर्णं द्रोणं यथा मूलकशुण्ठिकानाम्।
स्यात्क्षारनस्तत् सलिलेन साध्यमालोड्य यावद्घनमप्रदग्धम्॥
स्त्यानं ततः कोलसमान्तु मात्रां कृत्वा सुशुष्कां विधिना भजेत
प्लीहोदरश्वित्रहलीमकांस्तु पाण्ड्वामयारोचकशोषशोफान्।
विसूचिका गुल्मगराश्मरीश्च सश्वासकासाः प्रणुदेत्सकुष्ठाः।
प्रयोजयेद्वार्द्रकनागरं वा तुल्यं गुडेनार्द्धपलाभिवृद्धया।
मात्रापलं पञ्चपलानि मासं जीर्णे पयो यूषरसाश्च भोक्ता॥
गुल्मोदरार्शः श्वयथुप्रमेहान् श्वासप्रतिश्यालसकाविपाकान्
सकामलां शोषमनोविकारान् कासं कफञ्चैव जयेत् प्रयोगः
रसस्तथैवार्द्रकनागरस्य पेयोऽथ जीर्णे पयसान्नमद्यात्।
जत्वश्मजञ्च त्रिफलारसेन हन्यात्त्रिदोषं श्वयथुं प्रसह्य॥
द्विपञ्चमूलस्य तुलाकषाये कंसे भयानाञ्च शतं गुडस्य।
लेहे प्रसिद्धे च विनीयचूर्णं व्योषंत्रिसौगन्ध्यमुपांश्चिते च॥
प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।
एकांशिकां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम्॥
श्वासज्वरारोचकमेहहिक्का प्लीहत्रिदोषोदरपाण्डुरोगान्।
कार्श्यामवातानसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान्॥
पटोलमूलासुरदारुदन्ती त्रायन्ति पिप्पल्यभया विशालाः।
यष्ट्याह्विकातिक्तकरोहिणी च सचन्दना स्याच्चितुलाभि दार्वी॥
कर्षोन्मितैस्तैः क्वथितः कषायो घृतस्य पेयः कुडवेन युक्तः।
वीसर्पदाहज्वरसन्निपातांस्तृष्णां विषाणि श्वयथुं निहन्ति॥
सचित्रकं धान्ययवान्यजाजी सौवर्चलं त्र्यूषणवेतसाम्लम्।
बिल्वात्फलं दाडिमयावशूकौ सपिप्पलीमूलमथोऽपि चव्यम्॥
पिष्ट्वाक्षमात्राणि जलाढकेन पक्त्वा घृतप्रस्थमथो विदध्यात्।

अर्शांसि गुल्मं श्वयथुञ्च दुःखं तथन्ति वह्निञ्च करोति दीप्तम्।
पिबेद्घृतं षाडगुणाम्बुसिद्धं सचित्रकक्षारमुदारवर्य्यम्॥
कल्याणकं वापि सपञ्चगव्यं तिक्तं महद्वाप्यथ तिक्तकं वा।
चीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्यते च॥
तज्जं घृतं चित्रकमूलगर्भं तक्रेण सिद्धं श्वयथुघ्नमग्र्यम्।
अर्शोऽतिसारामलगुल्ममेहांश्चै तन्निहन्त्यग्निबलप्रदञ्च॥
तक्रेण वाद्यात् सघृतेन तेन भोज्यानि सिद्धामथवा यवागूम्।
जीवन्त्य जाजी शटिपुष्कराह्वैः सकारवी चित्रकबिल्वमध्यैः॥
सयावशूकैर्बदरप्रमाणैर्द्व चाम्लयुक्ता घृततैलभृष्टाः।
अर्शोऽतिसारानिलगुल्मशोफहृद्रोगमन्दाग्निहिता यवागूः॥
या पञ्चकोलैर्विधिनेव तेन सिद्धा भवेत्सा च समा तथैव।
कुलत्थयूषश्च सपिप्पलीको मौद्गश्च सव्यूषणयावशूकः॥
रसस्तथा विष्किरजाङ्गलानां यकृच्च गोधाशिखिशल्यकानां।
शाकार्थिनां शाकमतिप्रशस्तं भोज्यं पुराणश्च यवः सशालिः॥
सुवर्चिका रञ्जनकं पटोलं सवायसी मूलकनेत्रनिम्बम्॥
आभ्यन्तरं भेषजमुक्तमेतद्बहिर्हितं यच्छृणु तद्यथावत्॥
स्नेहान् प्रदेहान् परिषेचनानि स्वेदांश्च वातप्रबलाश्च कुर्य्यात्
शैलेय कुष्ठागुरुदारुकौन्तीत्वक्पद्मकैलाम्बुपलाशमुस्तैः॥
प्रियङ्गुथौणेयकहेममांसीतालीसपत्रप्लवपत्रधान्यैः।
श्रीवेष्टकध्यामकपिप्पलीभिः स्पृक्कानखैश्चैव यथोपलाभम्।
वातान्वितेऽभ्यङ्गमुपन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम्॥
जले च वा शाकिकाञ्जिकाम्लेपगुरालमपेषपत्राजकजेच सिद्धे।
स्विन्नोमृदूणोरवितानीय स्नातयगन्धैरनुलेपनीयः॥
सवेतसाः चीरवनान्तमाणाल्वचः समञ्जिष्ठबलाविगष्ठाः।

सचन्दनाः पद्मकवालकौ च पैत्ते प्रदेहस्तु सतैलपाकः ॥
शक्तस्य तेनाम्बुरविप्रतप्तं सचन्दनं साभयपद्मकञ्च ।
स्नानेमतं चीरवतां कषायः चीरोदकं चन्दनलेपनं च ॥
कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः ।
कुलत्थशुण्ठी जलमूत्रसेकः चण्डागुरुभ्यामनुलेपनं च ॥
विभीतकानां फलमध्यलेपः सर्वेषु दाहार्तिहरः प्रलेपः ।
यष्ट्याह्वमुस्तैः सकपित्थपत्रैः सचन्दनैस्तत्पिडकासु लेपः ॥
रास्नाहृषाकं त्रिफलाविडङ्गा शिग्रुत्वचोमूषिककर्णिका च ।
निम्बार्जकौ व्याघ्रनखः सदूर्वासुवर्चलास्यात्कटुरोहिणी च ॥
स काकमाची बृहती सकुष्ठा पुनर्नवाचित्रकनागरे च ।
उन्मर्दनं शोफिषु मूत्रपिष्टं शस्तस्तथा मूलकतोयसेकः ॥
शोफास्तु गात्रावयवाश्रिता ये ते स्थानदूष्याकृतिनामभेदात्
अनेकसंख्याः कतिचिच्च तेषां निदर्शनार्थं शृणुचोच्यमानान् ।
दोषास्त्रयःस्वैः कुपितानिदानैः कुर्वन्तिशोफान् शिरसः सुघोरान्
अन्तर्गलेघुर्घुरिकान्वितं च शालूकमुच्छ्वासनिरोधनानि ॥
गलस्य सन्धौ चिबुके गले च सदाह रागश्वसनासुतोग्रः ।
शोफोभ्रशार्तिस्तु विडालिकास्याद्धन्यान्गले चेद्गलशोकृता स्यात्
स्यात्तालुविद्रध्यपि दाहरोगैर्युताभवेत्तालुनि सा त्रिदोषात्
जिह्वोपरिष्टादुपजिह्विकास्यात्कफादधस्तादधिजिह्विकाच ॥
यो दन्तमांसेषु तु रक्तपित्तात् पाको भवेत्सोपकुशः प्रदिष्टः ।
स्याद्दन्तविद्रध्यपि दन्तमांसे शोफः कफाच्छोणित संश्रयोत्थः॥
गलस्य पार्श्वे गलगण्ड एकः स्याद्गण्डमाला बहुभिस्तु गण्डैः
साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्याः
तेषां सिराकायशिरोविरेको धमः पुराणस्य घृतस्य पानम् ।

सलक्षणं वक्ष्य भवेषु चापि प्रहर्षणं स्यात्क्वचनग्रहस्य ॥
अङ्के कदेशैर्ष्वानिलादिभिः स्यात् स्वरूपधारी स्फुरणः शिराभिः
ग्रन्थिर्महान्मांस भवस्त्वनतिर्मन्दो भवः स्निग्धतमश्चलश्च ।
तं शोधितं स्वेदितमश्मकाष्ठैः साङ्गुष्ठदण्डैर्विनयेदपक्वम् ॥
विपाट्य चोद्धृत्य भिषक्समोशं शस्त्रेण दग्ध्वा व्रणवच्चिकित्सेत्
अदग्ध ईषत्परिशोषितश्च प्रयाति भूयोऽपि शनैर्विवृद्धिम् ॥
तस्मादशेषः कुशलैः समन्तात् छेद्यो भवेद्दोष्य शरीरदेशान् ।
शेषे कृते पाकवशेन शोथ्यं ततः चतोत्थः प्रसरेद्विसर्पः ॥
उपद्रवं तं प्रतिवारयेज्ज्ञः स्वैर्भेषजैः पूर्वतरैर्यथोक्तैः ।
ततः क्रमेणास्य यथाविधानं व्रणं व्रणाश्रस्त्वरया चिकित्सेत् ॥
विवर्ज्जयेत् कुक्ष्युदराश्रितञ्च तथा गले मर्म्मणि संश्रितञ्च ।
स्थूलः खरश्चापि भवेद्विवर्ज्यो यश्चापि बालस्थविरा बलानां
ग्रन्थ्यर्बुदानाञ्च यतो विशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः ।
ततः चिकित्सेद्भिषगर्बुदानि विधानविद्ग्रन्थिचिकित्सितेन
ताम्रा सशूला पिड़का भवेद्या सात्वालजीनामपरिस्रुताग्रा
शोफः कृतश्चर्मनखान्तरे स्यात् मांसात्मरूपो भृशशीघ्रपाकः।
ज्वरान्विता वंक्षणकक्षजा या वर्त्तिर्निरर्त्तिः कठिनायता च ।
विदारिका सा कफमारुताभ्यां तेषां यथादोषमुपक्रमः स्यात्
विस्रावणं पिण्डिकशोपनाहः पक्वेषु चैव व्रणवच्चिकित्सा ॥
विस्फोटकाः सर्वशरीरजाः स्युः स्फोटास्तु रागज्वरतर्षयुक्ताः॥
यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाञ्जनिभास्तु कक्षाः ।
याश्चापराः स्युः पिड़काः प्रकीर्णाःस्थूलाणुमध्या अपि पित्तजास्ताः
सर्वत्र गात्रेषु मसूरमात्रो मसूरिकाः पित्तकफात् प्रदिष्टाः ॥
विसर्पशान्त्यै विहिताक्रिया या तां तासु कुष्ठे च हितं विदध्यात

अथानिलाद्यैर्व्रणे स्वलिङ्गैरान्वं निरेति प्रविशेन् गुह्यं ॥
मूत्रेण पीतं मृदुमेहसा तु स्निग्धञ्च विद्यात्कठिनञ्च शोथम्।
विरेचना भ्यङ्गनिरूहलेपाः पक्वेषु चैव व्रणवच्चिकित्सा ॥
स्यान्मूत्रसेचः कफजं विपाट्य विशोध्य सीव्येदुव्रणवच्च पक्वम्।
क्रिम्यस्थिसूक्ष्मच्यवनव्यवाय प्रवाहनान्युत्कुटनाश्वपृष्ठैः ॥
गुदस्य पार्श्वे पिड़काभ्यार्त्तिः पक्वप्रभिन्ना तु भगन्दरः स्यात्
विरेचनं चैषणपाटनञ्च विशुद्धमार्गस्य च तैलदाहः ॥
स्यात् क्षारसूत्रेण सुपाचितेन छिन्नस्य चास्य व्रणवच्चिकित्सा।
जङ्घासु पिण्डी प्रपदोपरिष्टात्स्याच्छ्लीपदं मांसकफास्रदोषात्॥
सिराकफघ्नश्च विधिः समग्रस्तत्रेष्यते सर्षपलेपनं च।
मन्यास्वतीव प्रबलाः प्रदिष्टा दोषाः सुतीव्रं तनुरक्तपाकं ॥
कुर्वन्ति शोथं ज्वरतर्षयुक्तं विसर्पणं जालकगर्दभाख्यम्।
विलङ्घनं रक्तविमोक्षणञ्च विरूक्षणं काय विरेचनञ्च ॥
धात्री प्रयोगान् शिशिरान् प्रदेहान् कुर्य्यात् सदा जालकगर्दभस्य
एवंविधांश्चाप्यपरांश्च गम्य शोथप्रकारानिलादिलिङ्गैः।
शान्तिं नयेद्दोषहरैर्यथा स्वमालेपनच्छेदनभेददाहैः॥
प्रायोऽभिघातादनिलः सरक्तः शोथं सरागं प्रकरोति तत्र ॥
वीसर्पमुक्ताकृतरक्तनुच्च कार्य्यं विषघ्नं विषजञ्च कर्म ॥
भवति चात्र।
त्रिविधस्य दोषभेदात् सर्वाङ्गावयवगात्रभेदाच्च
श्वयथोर्द्विविधस्य तथा लिङ्गानि चिकित्सितं चोक्तम्।
इति श्वयथुचिकित्सितम्।

## अष्टादशोऽध्यायः।

अथातः उदरचिकित्सितं व्याख्यास्यामः।

सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे।
तपमानं तपस्तीव्रं साक्षाद्धर्ममिव स्थितम्॥
आयुर्वेदविदां श्रेष्ठं भिषग्विद्याप्रवर्त्तकम्।
पुनर्वसुं जितात्मानं अग्निवेशोऽब्रवीद्वचः॥
भगवन्नुदरैर्दुःखैर्दृश्यन्ते ह्यर्दिता नराः।
शुष्कवक्त्राः कृशैर्गात्रैराध्मातोदरकुक्षयः॥
प्रणष्टाग्निबलाहाराः सर्वचेष्टास्वनीश्वराः।
दीनाः प्रतिक्रियाभावाज्जहतोऽसूननाथवत्॥
तेषामायतनं संख्यां प्राग्रूपाकृतिभेषजान्।
यथावच्छ्रोतुमिच्छामि गुरुणा सम्यगीरितम्॥
सर्वभूतहितायर्षिः शिष्येणैवं प्रचोदितः।
सर्वभूतहितं वाक्यं व्याहर्तुमुपचक्रमे॥
अग्निदोषान् मनुष्याणां रोगसङ्घाः पृथग्विधाः।
मलवृद्ध्या प्रवर्त्तन्ते विशेषेणोदराणि तु॥
मन्देऽग्नौ मलिनैर्भुक्तैरपाकाद्दोषसञ्चयः।
प्राणापानान् हि संदूष्यमार्गान् बद्ध्वोत्तरोत्तरान्॥
त्वङ्मांसान्तरमागम्य कुक्षिमाध्मापयन् भृशम्।
जनयत्युदरं तस्य हेतुं शृणु सलक्षणम्॥
अत्युष्णलवणक्षारविदाह्यम्लरसाशनात्।

मिथ्यासंसर्जनाद्रूक्षविरुद्धाशुचिभोजनात् ॥
प्लीहार्शोग्रहणीदोषकर्षणात् कर्मविभ्रमात् ।
क्लिष्टानामप्रतीकाराद्रौक्ष्याद्वेगविधारणात् ॥
स्रोतसां दूषणादामात् संक्षोभादतिपूरणात् ।
अर्शोबालशकृद्रोधादन्त्रस्फुटनवेदनात् ॥
अतिसञ्चितदोषाणां पापं कर्म च कुर्वताम् ।
उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः ।
क्षुन्नाशः स्वादति स्निग्ध गुर्वन्नं पच्यते चिरात् ॥
भुक्तं विदाह्यते सर्वं जीर्णाजीर्णं न वेत्ति च ।
सहते नातिसौहित्यं शोफशोषश्च पादयोः ॥
शश्वद्बलक्षयोऽल्पेऽपि व्यायामे श्वासमृच्छति ।
पुरीष निचये ह्यविवृद्धावर्त्तं क्षता च रुक् ॥
वस्ति सन्धौ रुगाध्मानं वर्द्धते पाठ्यतेऽपि च ।
आतन्यते च जठरमपि लघ्वल्पभोजनात् ॥
राजी जन्मवती नाम इति लिङ्गं भविष्यताम् ।
रुद्ध्वा स्वेदाम्बुवाहानि दोषाः स्रोतांसि सञ्चिताः ।
प्राणापानान् हि संदूष्य जनयन्त्युदरं नृणाम् ।
कुक्षेराध्मानमाटोपः शोफः पादकरस्य च ॥
मन्दोऽग्निः श्लक्ष्णगण्डत्वं कार्श्यञ्चोदरलक्षणम् ।
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥
संभवन्त्युदराण्यष्ट तेषां लिङ्गं पृथक् शृणु ।
रूक्षाल्पभोजनायासवेगोदावर्त्तकर्षणैः ॥
वायुः प्रकुपितः कुक्षिहृद्वस्ति गुदमार्गगः ।
हत्वाग्निं कफमुद्धूय तेन रुद्धगतिस्तथा ॥

आचिनोत्युदरं जन्तोः त्वङ्मांसान्तरमाश्रितः।

तस्य रूपाणि

कुक्षिपाणिपादशोफपरुषत्वमुदरविपाटनमनियतौ च वृद्धिह्रासौ कुक्षिपार्श्वशूलोदावर्त्ताङ्गमर्दपर्वभेदशुष्ककासकार्श्यदौर्बल्यारोचकाविपाकाः अधो गुरुत्वं वातवर्चोमूत्रसङ्गः श्यावारुणत्वं नखनयनवदनत्वङ्मूत्रवर्चसामपि चोदरं तन्वसितराजी शिरासन्ततमाहतमाध्मातदृतिशब्दवद्भवति। वायुश्चोर्ध्वमधस्तिर्य्यक् च सशूलशब्दश्चरत्येतद्वातोदरं विद्यात्।

कट्वम्ललवणात्युष्णतीक्ष्णाग्न्यातपसेवनैः।
विदाह्यध्यशनाजीर्णैः चाशु पित्तं समाचितम्॥
प्राप्यानिलकफौ रुद्धा मार्गमुन्मार्गमास्थितम्।
निहन्त्यामाशये वह्निं जनयत्युदरं ततः॥

इति तस्य रूपाणि।

दाहज्वरतृष्णामूर्च्छातीसारभ्रमः कटुकास्यत्वं हरितहारिद्रत्वं नखनयनवदनत्वङ्मूत्रवर्चसामपि चोदरं नीलपीतहारिद्रहरितताम्रराजी शिरावनद्धं दह्यात् दूयते धूप्यते रूपायते स्विद्यते क्लिद्यते मृदुस्पर्शं क्षिप्रपाकञ्च भवत्येतत्पित्तोदरं विद्यात्।

अव्यायामदिवास्वप्नस्वाद्वतिस्निग्धपिच्छिलैः।
दधिदुग्धोदकानूपमांसैश्चात्युपसेवितैः॥
क्रुद्धेन श्लेष्मणः स्रोतः स्वाहतेष्वाहतोऽनिलः।
तमेव पीड़यन् कुर्य्यादुदरं बहिरात्मनः॥

तस्य रूपाणि

गौरवारोचका विपाकाङ्गसुप्तिपादमुष्कोरुशोफोत्क्लेश-निद्राकासश्वासाः शुक्लत्वनखनयनवदनत्वङ्मूत्रवर्चसामपि चोदरं शुक्लराजी सिरासन्ततं गुरुस्तिमितं स्थिरं कठिनञ्च भवत्येतत् श्लेष्मोदरं विद्यात्।

दुर्बलाग्नेरपथ्यामविरोधिगुरुभोजनात्।
सभुक्तैश्च रजो रोम विण्मूत्रास्थिनखादिभिः॥
विषैश्च मन्दैर्वाताद्याः कुपिताः सञ्चितं त्रयः।
शनैः कुष्ठे प्रकुर्वन्तो जनयन्त्युदरं नृणाम्।
तस्य रूपाणि

सर्वेषामेव दोषाणां समस्तानि लिङ्गान्युपलभ्यन्ते वर्णाश्च नखादिषूदरमपि नानावर्णं राजी सिरासन्ततं भवत्येतत् सन्निपातोदरं विद्यात्।

अशितस्यातिसंक्षोभाद्यानयानाभिचेष्टितैः।
अतिव्यवाय भाराध्ववमनव्याधिकर्षणैः॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानात् प्रवर्द्धते।
शोणितं वा रसादिभ्यो विवृद्धन्तं विवर्द्धयेत्॥

इति तस्य प्लीहा कठिनोऽष्ठीलेवादौ वर्द्धमानः कच्छपसंस्थान उपलभ्यते स चोपेक्षितः क्रमेण जठरमग्न्यधिष्ठानञ्च परिक्षिपन्नुदरमभिनिवर्त्तयति।

तस्य रूपाणि।

दौर्बल्यारोचकाविपाकवर्चोमूत्रग्रहतमःप्रवेशपिपासाङ्गमर्दच्छर्दिमूर्च्छाङ्गसादकासश्वासमृदुज्वरानाहाग्निनाशकार्श्यास्यवैरस्य पर्वभेदकोष्ठवातशूलान्यपि चोदरमरुणवर्णं विवर्णं वानीलहरितहारिद्रराजिमच्चवत्यं वमेव यकृ-

दपि दक्षिणपार्श्वस्थं कुर्य्यात्तुल्यहेतुलिङ्गौषधत्वात्तस्य प्लीहज एवावरोध इत्येतत् प्लीहोदरं विद्यात्।

पक्ष्मबालैः सहान्नेन भुक्तैर्बद्धायने गुदे।
उदावर्त्तैस्तथार्शोभिरान्त्रसंमूर्च्छनेन वा॥
अपानो मार्गसंरोधाद्धत्वाग्निं कुपितोऽनलः।
वर्चः पित्तकफान् रुद्धा जनयत्युदरं ततः॥
इति तस्य रूपाणि

तृष्णादाहज्वरमुखतालुशोषोरुसादकासश्वासदौर्बल्यारोचका विपाकवर्चो मूत्रसङ्गाध्मानच्छर्दिः क्षवथु शिरोहृन्नाभिगुदशूलान्यपि चोदरं मूढवातं स्थिरमरुणं नीलराजि सिरावनद्धं सराजिकं वा प्रायो नाभ्युपरिगोपुच्छवदभिनिवर्त्तत इत्येतद्बद्धगुदोदरं विद्यात्।

शर्करा तृणकाष्ठास्थि कण्टकैरन्नसंयुतैः।
भिद्येतान्त्रं यदा तुर्य्यैर्जृम्भं यात्याशितस्य च॥
इयान् पाकरसस्तेभ्यः छिद्रेभ्यः प्रस्रवद्बहिः।
पूरयन् गुदमातश्च जनयत्युदरं ततः॥

इति तदधो नाभ्याः प्रायोऽभिनिवर्त्तमानमुदकोदरस्य च यथाबलं च दोषाणां रूपाणि दर्शयत्यपि चातुरः स लोहितनीलपीतपिच्छिलकुणपगन्धामवर्च्च उपवेशी हिक्काश्वासकासतृष्णाप्रमेहारोचका विपाकदौर्बल्यपरीतश्च भवत्येतच्छिद्रोदरं विद्यात्।

स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य वा।
अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्निसंस्थितः॥

स्रोतःसु रुद्धमार्गेषु कफस्वेदकमूर्च्छितः ।
वर्द्धयेतां तदेवाम्बु तत्स्थानादुदरायतौ ॥

तस्य रूपाण्यनवकाङ्क्षापिपासा गुदस्रावशूलश्वासका-सदौर्बल्यान्यपि चोदरं नानावर्णराजिभिरासन्ततमुदक-पूर्णदृतिक्षोभसंस्पर्शं भवत्येतदुदकोदरं विद्यात् । तत्र चि-रोत्पन्नमनुपद्रवमनुदकप्राप्तमुदरं त्वरमाणः चिकित्सेदुपे-क्षितानां ह्येषां दोषाः स्वस्थानादपावृत्ताः परिपाकाद् द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन् स्वेदश्च बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्य्यगवतिष्ठमानस्तदेवोदकमाप्याय-यति । तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरुस्तिमितमाको-टितमशब्दं मृदुस्पर्शमपगतराजीकमाक्रान्तं नाभ्यां सर्प-तीति । ततोऽनन्तरं दृतिसमक्षोभस्पर्शत्वञ्च तदा तुरमुप-द्रवाः स्पृशन्ति छर्द्दतीसारतमकतृष्णा श्वासकास हिक्का दौर्बल्य पार्श्वशूलरुचिस्वरभेदमूत्रसङ्गादयः तथाविधम-चिकित्स्यं विद्यादिति ।

भवति चात्र

वातात् पित्तात् कफात् प्लीह्नः सन्निपातात्तथोदकात् ।
परम्परं कृच्छ्रतरं उदरं भिषगादिशेत् ॥
पक्षादवद्धगुदं तूर्ध्वं सर्वं जातोदकं यथा ।
प्रायो भवत्य भावाय छिद्रान्त्रं चोदरं नृणाम् ॥
शूनाक्षं कुटिलोपस्थमपक्लिन्न तनुत्वचम् ।
बलशोणितमांसाग्नि परिक्षीणञ्च संत्यजेत् ॥
श्वयथुः सर्वमर्मोत्थः श्वासो हिक्का ऽरुचिः सतृट् ।
मूर्च्छाछर्द्यतीसारो च निहन्त्युदरिणं नरम् ॥

जन्म नैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्।
अशोथमरुणाभासं सशब्दं नातिभारिकम्॥
सदा गुडगुड़ायान्तं शिराजाल गवाचितम्।
नाभिं विष्टभ्य पायौ तु वेगं कृत्वा प्रणश्यति॥
हृन्नाभिवङ्क्षणकटीगुदप्रत्येकशूलिनः।
कर्कशं सृजते वातं नातिमन्दे च पावके॥
मूत्रेऽल्पे संहते दोषे लोलस्या विरसे मुखे।
अजातोदकमित्येतैर्लिङ्गैर्विज्ञाय तत्त्वतः॥
उपक्रामेत्भिषग्दोष बलकाल विशेषवित्।
वातोदरे बलवतः पूर्वं स्नेहैरुपाचरेत्॥
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेह विरेचनम्।
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम्॥
तथास्या नावकाशत्वाद्वायुराध्मापयेत् पुनः।
दोषातिमात्रोपचयात् स्रोतसां सन्निरोधनात्॥
सम्भवन्त्युदराण्येवं अतो नित्यं विशोधयेत्।
शुद्धं संसृजर च क्षीरं बलार्थं पाययेत तम्॥
प्रागुत्क्लेशान्निवर्त्यं च बले लब्धे क्रमात् पयः।
यूषे रसै र्वा मन्दाम्ललवणै रेधितानलम्॥
सोदावर्त्तं पुनः स्निग्धं स्विन्नमास्थापयेन्नरम्॥
स्फुरणाक्षेपसन्ध्यस्थि पार्श्वपृष्ठ त्रिकार्तिषु।
दीप्ताग्निं बद्धविड्वातं रूक्षमप्यनुवासयेत्॥
तीक्ष्णाधोभागयुक्तः स्यान्निरूहो दाशमूलिकः।
वातघ्नाम्लशृतैरण्डतिलतैलानुवासनः॥

अविरेच्यं तु यं विद्याद् दुर्ब्बलं स्थविरं शिशुम् ॥
सुकुमारं प्रकृत्याल्पदोषं वातोल्बणानलम् ।
तं भिषक्शमनैः सर्पिर्यूषमांसरसौदनैः ।
बस्त्यभ्यङ्गानुवास्यैश्च क्षीरैश्चोपाचरेद् बुधः ।
पित्तोदरे तु बलिनं पूर्व्वमेव विरेचयेत् ।
दुर्ब्बलन्त्वनुवास्यादौ शोधयेत् क्षीरवस्तिना ॥
संजात बलकायाग्निं पुनः स्निग्धं विरेचयेत् ।
पयसा सत्रिवृत्कल्केनोरुवूकशृतेन वा ॥
सातलात्रायमाणाभ्यां शृते नारग्वधेन वा ।
सकफे वा स मूत्रेण स वाते तिक्तसर्पिषा ॥
पुनः क्षीरप्रयोगं च वस्तिकर्म्मविरेचनम् ।
क्रमेण ध्रुवमातिष्ठन् युक्तः पित्तोदरं जयेत् ॥
स्निग्धं स्विन्नं विशुद्धं तु कफोदरिणमातुरं ।
संसर्जयेत् कटुक्षारयुक्तैरन्नैः कफापहैः ॥
गोमूत्रारिष्टपानैश्च शमयेत्तु कफोदरम् ।
सन्निपातोदरे सर्व्वा यथोक्ताः कारयेत् क्रियाः ॥
सोपद्रवन्तु निर्वृत्तं प्रत्याख्येयं विजानता ।
उदावर्त्तरुगानाहैर्दाहमोहतृषाज्वरैः ॥
गौरवारुचिकाठिन्यैः चानिलादीन्यथाक्रमम् ॥
लिङ्गैः प्लीहोदरान् दृष्ट्वा रक्तं वापि स्वलक्षणैः ।
चिकित्सां संप्रकुर्व्वीत यथादोषं यथाबलं ॥
स्नेहं स्वेदं विरेकञ्च निरूहमनुवासनम् ।
समीक्ष्य कारयेद्बाहौ वामे वा व्यधयेत्शिराम् ॥
षट्पलं वा पिवेत्सर्पिः पिप्पलीर्वा प्रयोजयेत् ।

सगुडामभयां वापि चारारिष्टगणांस्तथा ॥
पिप्पलीनागरं दन्तीं चित्रकं द्विगुणाभयम्।
विडङ्गांशयुतं चूर्णमेतदुष्णाम्बुना पिबेत् ॥
त्रिवृतं चित्रकं शक्तून् सघृतान् सैन्धवं वचाम्।
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं भवेत् ॥
रोहीतकलताकान्तु गण्डिका साभया जले।
मूत्रे वा सुतमेतच्च सप्तरात्रस्थितं पिबेत् ॥
कामला गुल्ममेहार्शः प्लीहसर्वोदरक्रिमीन्।
तद्धन्याज्जाङ्गलरसैर्जीर्णे स्याच्चात्र भोजनम् ॥
रोहीतकत्वचः कृत्वा पलानां पञ्चविंशतिम्।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥
पालिकैः पञ्चकोलैस्तु तैः सर्वैश्चापि तुल्यया।
रोहीतकत्वचापिष्टैः घृतप्रस्थं विपाचयेत् ॥
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम्।
अग्निकर्म च कुर्वीत भिषग्वातकफोल्बणे ॥
पैत्तिके जीवनीयानि सर्पींषि क्षीरवस्तयः।
रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ॥
यूषैर्मांसरसैश्चापि दीपनीयसमायुतैः।
लघून्यन्नानि संसृज्य भजेत् प्लीहोदरी नरः ॥
स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम्।
सतैललवणं दद्यान्निरूहं सानुवासनम् ॥
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम्।
उदावर्त्तहरं कर्म कार्य्यं वातघ्नमेव च ॥
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत्।

जातं जातं जलं स्राव्यमेवं तद्व्यापयेद्भिषक् ॥
तृष्णाकासज्वरार्त्तं तु क्षीणमांसाग्निभोजनम् ।
वर्जयेत् श्वासिनं तद्वत् शूलिनं दुर्बलेन्द्रियम् ॥
अपां दोषे ग्रहण्यादौ विदध्यादुदकोदरे ।
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ॥
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ।
द्रवेभ्यश्चोदकादिभ्यो नियच्छेदनुपूर्वशः ॥
सर्वमेवोदरं प्रायो दोषसंघातजं मतम् ।
तस्मात्त्रिदोषशमनीं क्रियां सर्वेषु कारयेत् ॥
दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति ।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च ।
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान् ॥
पयोमूत्रासवारिष्टान्मधुशीधूंस्तथासुरान् ।
यवागूमोदनं वापि यूषैरद्याद्रसैरपि ॥
मन्दाम्लस्नेहकटुभिः पञ्चमूलोपसाधितैः ।
औदकानूपजं मांसं शाकं पिष्टकृतं तिलान् ॥
व्यायामाध्वदिवास्वप्नं यानयानञ्च वर्ज्जयेत् ।
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च ।
नाद्यादन्नानि जठरी तोयपानं च वर्ज्जयेत् ॥
नातिसान्द्रं मतं पाने स्वादु तक्रमपेलवम् ।
त्र्यूषणक्षारलवणैर्युक्तं तु निचयोदरी ॥
वातोदरी पिबेत्तक्रं पिप्पली लवणान्वितम् ।
शर्करा मरिचोपेतं स्वादुपित्तोदरी पिबेत् ॥
यवानी सैन्धवा जाजी सैन्धवैर्मिश्रितोदरी ।

पिबेच्छिद्रोदरी तक्रं पिप्पली क्षौद्रसंयुतम् ॥
गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम् ।
तक्रं वातकफार्त्तानां अमृतत्वाय कल्पते ॥
दाहाशोकार्त्तितृण्मूर्च्छापीड़िते कारभं पयः ।
शुद्धानां क्षामदेहानां गव्यं छागं समाहिषम् ॥
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ॥
वृश्चिकालीं वर्षां कुष्ठं पञ्चमूलीं पुनर्नवाम् ।
भूतीकं नागरं धान्यं जले पक्वावसेचयेत् ॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।
रूक्षाणां बहुवातानां तथा संशोधनार्थिनाम् ॥
स्नेहनीयानि सर्पींषि जठरघ्नानि वक्ष्यते ।
पिप्पली पिप्पलीमूलचव्यचित्रकनागरैः ॥
सक्षारैरर्द्धपलिकैस्तैः प्रस्थं सर्पिषः पचेत् ।
कल्कैर्द्विपञ्चमूलस्य तुलार्द्धस्य रसेन च ।
दधिमण्डाढकोपेतं तत्सर्पिर्जठरापहम् ॥
श्वयथुं वातविष्टम्भं गुल्मार्शांसि च नाशयेत् ।
नागरत्रिपलं प्रस्थं घृततैलात्तथाढ़कम् ।
मस्तुनः साधयित्वैतत् पिबेत् सर्वोदरापहम् ॥
कफमारुतसम्भूते गुल्मे चैतत् प्रशस्यते ।
चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ॥
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ।
यवकोलकुलत्थानां पञ्चमूलरसेन च ।
सुरासौवीरकाभ्यां च सिद्धं वापि पिबेद् घृतम् ।

एभिः स्निग्धाय संजाते बले शान्ते च मारुते ॥
स्रस्ते दोषाशये दद्यात् कल्प दृष्टं विरेचनम् ।
पटोलमूलरजनी विड़ङ्गत्रिफला त्वचम् ।
काम्पिल्लको नीलिनी च त्रिवृता चेति चूर्णयेत् ॥
षड़ाद्याः कार्षिकानन्त्यां स्त्रींश्च द्वित्रिचतुर्गुणान् ।
कृत्वा चूर्णमतो मुष्टिं गवां मूत्रेण वा पिबेत् ॥
विरिक्तो मृदुभुञ्जीत भोजनं जाङ्गलैरसैः ।
मण्डपेयाञ्च पीत्वा वा सव्योषं षड़हं पयः ।
शृतं पिबेत्ततः चूर्णं पिबेदेव पुनः पुनः ।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥
कामलां पाण्डुरोगञ्च श्वयथुं चापकर्षति ।
गवाक्षीं शङ्खिनीं दन्तीं बिल्वकस्य त्वचं वचाम् ।
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका ॥
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ।
विड़ङ्गञ्च समांशानि दन्त्याभागास्त्रयस्तथा ॥
त्रिवृद्विशालयोर्द्वौ द्वौ सातला स्याच्चतुर्गुणा ।
एतन्नाराचकं नाम चूर्णं रोगगणापहम् ॥
नैतत् प्राप्यातिवर्त्तन्ते रोगा विष्णुमिवा सुराः ।
तक्रेणोदरिभिः पेयं गुल्मिभिर्बदराम्बुना ॥
आनद्ध वाते सुरया वातरोगे प्रसन्नया ।
दधिमण्डेन विट्‌सङ्गे दाड़िमाम्बुभिरर्शसैः ॥
परिकर्त्ते सवृक्षाम्लमुष्णाम्बुभिरजीर्णके ।
भगन्दरे पाण्डुरोगे श्वासे कासे गलग्रहे ॥
हृद्रोगे ग्रहणी दोषे कुष्ठे मन्देऽग्नले ज्वरे ॥

दंष्ट्रा विषे मूलविषे सगरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेत द्विरेचनम्।
ह्रपुषा काञ्चना चीरी त्रिफला कटु रोहिणी।
नीलिनी त्रायमाणा च सातला त्रिवृता वचा॥
सैन्धवं काललवणं पिप्पली चेति चूर्णयेत्।
दाड़िमत्रिफला मांसरसमूत्रसुखोदकैः।
पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च
कुष्ठे श्विले सरुजके सवाते विषमाग्निषु॥
शोथार्शःपाण्डुरोगेषु कामलासु हलीमके।
वातं पित्तं कफञ्चाशु विरेकात् संप्रसाधयेत्॥
नीलिनीं निचुलं व्योषं द्वौ चारौ लवणानि च।
चित्रकञ्च पिवेच्चूर्णं सर्पिषोदरगुल्मनुत्॥
चीरद्रोणं सुधा चीर प्रस्थार्द्ध सहितं दधि।
एतं विमथ्य तद्युक्त्या त्रिवृत् सिद्धं पिवेद् घृतम्॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिवेत्।
स्नुक् चीरपलकल्केन त्रिवृता षट् पलेन च।
गुल्मानां गरदोषाणां उदराणाञ्च शान्तये॥
दधिमण्डाढ़के सिद्धात् स्नुक् चीर पलकल्कितात्।
घृतप्रस्थात् पिवेन् मात्रां तद्वज्जठरशान्तये॥
एषाञ्चानुपिवेत् पेयां पयो वा स्वादु वा रसम्।
घृते जीर्णे विरिक्तस्तु सुष्णमम्बु शृतं जलम्॥
सुग्गठ्याः पिवेत्ततः पेयां यूषं कौलत्थकं ततः।
पिवेद्रूचस्त्र्यहं त्वेवं भूयो वा प्रतियोजितः॥
पुनः पुनः पिवेत् सर्पिः स्नेहं वामिश्रकं पिवेत्।

घृतान्येतानि सिद्धानि विदध्यात् कुशलो भिषक्
गुल्मा नागरदोषाणामुदराणाञ्च शान्तये ।
क्रमान्निर्हृतदोषाणां जाङ्गलप्रतिभोजिनाम् ॥
दोषशेषनिवृत्त्यर्थं योगान् वक्ष्याम्यतः परम् ।
चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत् ॥
मासं युक्तस्तथा हस्तिपिप्पली विश्वभेषजात् ।
विडङ्गं चित्रको दन्ती चव्यं व्योषञ्च तैः पयः ॥
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ।
पिबेत् कषायं त्रिफला दन्ती रोहीतकैः शृतम् ॥
व्योषक्षारयुतं जीर्णे रसैरद्यात् सजाङ्गलैः ।
मांसं वा योजनं भोज्यं सुधाक्षीरघृतान्वितम् ॥
क्षीरानुपानं गोमूत्रमभयां वा प्रयोजयेत् ।
सप्ताहं माहिषं मूत्रं क्षीरं चानन्नभुक् पिबेत् ।
मासमौष्ट्रं पयः छागं त्रीन् मासान् व्योषसंयुतम् ॥
हरीतकीसहस्रं वा क्षीराशी वा शिलाजतु ।
शिलाजतुविधानेन गुग्गुलुं वा प्रयोजयेत् ॥
शृङ्गवेरार्द्रकरसः पाने क्षीरसमो मतः ।
तैलं रसेन तेनैव सिद्धं दशगुणेन वा ॥
दन्तीद्रवन्तीफलजं तैलं दोषोदरे मतम् ।
शूलानाह विबन्धेषु सक्तुयूषरसादिभिः ।
सरलामरशिग्रूणां बीजेभ्यो मूलकस्य च ॥
तैलान्यभ्यङ्गपानार्थं शूलघ्नान्यनिलोदरे ।
स्तैमित्या रुचिहृल्लासेष्वल्पाग्निर्मद्यपस्तथा ॥
अरिष्टान् वा पिबेत् क्षारान् कफस्त्यानस्थिरोदरः ।

पिप्पलीं विल्वकं हिङ्गु नागरं हस्तिपिप्पलीम्॥
भल्लातकं शिग्रुफलं त्रिफलां कटुरोहिणीम्।
देवदारु हरिद्रे द्वे सरलातिविषे वचाम्।
कुष्ठं मुस्तं तथा पञ्चलवणानि प्रकल्पयेत्॥
दधिसर्पिर्वसा तैलमज्जायुक्तानि दाहयेत्।
अन्तर्धूमं तथा क्षारान् बिडालकपदं पिबेत्॥
मदिरा दधिमण्डोष्णजलारिष्टसुरासवैः।
हृद्रोगं श्वयथुं गुल्मं प्लीहार्शो जठराणि च॥
विसूचिका मुदावर्त्तं वाताष्ठीलाश्च नाशयेत्।
क्षारं चाजकरीषाणां स्रुतं मूत्रैर्विपाचयेत्॥
श्वयथावविपाके च प्रवृद्धे चोदकोदरे।
भावितानां गवां मूत्रे षष्टिकानां तु तण्डुलैः॥
यवागूं पयसा सिद्धं प्रकामं भोजयेन्नरम्।
पिबेदिक्षुरसञ्चानु जठराणां निवृत्तये॥
स्वं स्वं स्थानं व्रजन्त्येषां तथा पित्तकफानिलाः॥
शङ्खिनी स्नुक्त्रिवृद्दन्ती चिरिविल्वादिपल्लवैः।
शाकं गाढ़पुरीषाय प्राग्भक्तं दापयेद्भिषक्॥
ततोऽस्मै शिथिलीभूत वर्च्चो दोषाय शास्त्रवित्।
दद्यान् मूत्रयुतं क्षीरं दोषशेषहरं शिवम्॥
पार्श्वशूलमुपस्तम्भं हृदग्रहञ्चापि मारुतः।
जनयेद्यस्य तैलं स बिल्वक्षारेण ना पिबेत्॥
तथाग्निमन्थश्योनाकपलाशतिलनालजैः।
बलाकदल्यपामार्गक्षारैः प्रत्येकशः स्रुतैः॥
तैलं पक्का भिषग् दद्यादुदराणां प्रशान्तये।

कफे वाते न पित्ते वा ताभ्यां वाप्यावृतेऽनिले ॥
वलिनः क्षीरयुतं तैलमैरण्डजं हितम् ।
सुविरिक्तो नरो यस्तु पुनराध्मतीव्रतम् ॥
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ।
सोपस्तम्भोऽपि वा वायुराध्मापयति यं नरं ॥
तीक्ष्णैः सक्षारगोमूत्रैर्वस्तिभिस्तमुपाचरेत् ।
क्रियातीते त्रिदोषे च जठरेण प्रशाम्यति ॥
ज्ञातीन् ससुहृदो दारान् ब्राह्मणान् नृपतीन् गुरून् ।
अनुज्ञाप्य भिषक् कर्म विदध्यात् संशयं ध्रुवम् ।
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥
एवमाख्याय तस्येदमनुज्ञातः प्रयोजयेत् ।
पानभोजनसंयुक्तं विषमस्मै प्रदापयेत् ॥
यस्मिन् वा कुपितः सर्पो विसृजेद्धि फले विषम् ।
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः ॥
विषेणाशु प्रमाथित्वादाशु भिन्नः प्रवर्त्तते ।
विषेण हृतदोषन्तं शीताम्बुपरिषेचितम् ।
पाययेत भिषग्दुग्धं यवागूं वा यथाबलम् ॥
त्रिवृन्माण्डूकपर्ण्योश्च शाकं सयववास्तुकम् ।
भक्षयेत् कालशाकं वा स्वरसोदकसाधितम् ॥
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक् ।
मासमेकं ततश्चैव तृषितः स्वरसं पिबेत् ॥
एवं विनिर्हृते दोषे शाकैर्मासात् परं ततः ।
दुर्बलाय प्रयुञ्जीत प्राणभृत्कारभं पयः ।
उदरन्तु शल्यहर्तॄणां कर्म स्याद् दृष्टकर्मणाम् ॥

वामं कुक्षिं मापयित्वा नाभ्यधश्चतुरङ्गुलम्।
मात्रायुक्तेन शस्त्रेण पाटयेन्मतिमान् भिषक्॥
विपाट्यान्त्रन्ततः पश्चाद्वीक्ष्य बद्धक्षतान्त्रयोः।
सर्पिषाभ्यज्य केशादीनवमृद्य विमोचयेत्॥
छिद्राण्यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकैः।
बहुशः संगृहीतानि मत्वा छित्त्वा पिपीलिकान्॥
प्रतियोगैः प्रवेश्यान्त्रं व्रणैः सीव्येद्व्रणं ततः।
तथा जातोदकं सर्वमुदरं व्यधयेद्भिषक्॥
वामपार्श्वे त्वधो नाभेर्नाडीं दत्त्वा च गालयेत्।
निःस्राव्य च विमृज्यं तद्वेष्टयेद्वा ससोदरम्॥
तथा वस्ति विरेकाद्यैर्म्लानं सर्वं च वेष्टयेत्।
निःसृते लङ्घितः पेयामस्नेहलवणां पिबेत्॥
अतः परञ्च षण्मासान् क्षीरवृत्तिर्भवेन्नरः।
त्रीन्मासान् पयसा पेयां पिबेत् त्रींश्चापि भोजयेत्।
श्यामाकङ्कोरदूषं वा क्षीरेण लघुभोजनः॥
नरः संवत्सरेणैवं जयेत्प्राप्तं जलोदरम्।
प्रयोगेणान्तु सर्वेषा मनु क्षीरं प्रयोजयेत्॥
दोषानुबन्ध रक्षार्थं बलस्थैर्यार्थमेव च।
प्रयोगापचिताङ्गानां हितं ह्युदरिणां पयः॥
सर्वधातुक्षयार्तानां देवानाममृतं यथा।
तत्र श्लोकौ। हेतुं प्राग्रूपमष्टानां लिङ्गं व्याससमासतः॥
उपद्रवान् गरीयस्त्वं साध्यासाध्यत्वमेव च।
जाताजाताम्बुलिङ्गानि चिकित्सां चोक्तवानृषिः॥

समासव्यासनिर्देशैरुदराणां चिकित्सितम् ।

इति उदरचिकित्सितम् ।

अथातो ग्रहणीरोगचिकित्सितं व्याख्यास्यामः ॥

आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा ।
ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुषु ॥
शान्तेऽग्नौ म्रियते दीनः चिरञ्जीवत्यनामयः ॥
रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यते ।
यदन्नं देहधात्वोजोबलवर्णादि पोषकम् ॥
तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ।
अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति ॥
तद्द्रवैर्भिन्नसङ्घातं स्नेहेन मृदुतां गतम् ।
समानेनावधूतोऽग्निरुदर्यः पवनेन तु ॥
काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये ।
एवं रसमलायान्नमाशयस्थमवस्थितः ॥
पचत्यग्निर्यथा स्थाल्या मोदनायाम्बु तण्डुलम् ।
अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः ॥
मधुरात्प्राक्कफोद्भावात् फेनभूत उदीर्यते ।
पक्वाशयं तु प्राप्तस्य शोष्यमाणस्य वह्निना ॥
परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः ।
अन्नमिष्टं ह्युपहृतमिष्टैर्गन्धादिभिः पृथक् ॥
देहो प्रीणाति गन्धादीन् घ्राणादीनिन्द्रियाणि च ।
भौमाप्याग्नेय वायव्याः पञ्चोष्माणः सनाभसाः ॥

पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि ।
यथास्वं स्वञ्च पुष्यन्ति देहद्रव्यगुणाः पृथक् ॥
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च कृत्स्नशः ।
सप्तभिर्देहधातारो द्विविधाश्च पुनः पुनः ॥
यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत् ।
रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ॥
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते ।
रसात् स्तन्यं ततो रक्तं असृजः कण्डराः शिराः ॥
मांसाद्वसात्वचः षट् च मेदसः स्नायुसन्धयः ।
इत्युक्तवन्तमाचार्यं शिष्यस्त्विदमचोदयत् ॥
रसाद्रक्तं विसदृशात् कथं देहेऽभिजायते ।
रसस्य च न रङ्गोऽस्ति स कथं याति रक्तताम् ॥
रसाद्रक्तात् स्थिरं मासं कथं तज्जायते नृणाम् ।
रसाद्रक्तात्तथा मांसान्मेदसः श्वेतमा कथम् ॥
स्नत्ताभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु ।
खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा ॥
मज्जश्च परिणामेन यदि शुक्रं प्रवर्तते ।
सर्वं सर्वगतं शुक्रं प्रवदन्ति मनीषिणः ॥
अथापि मध्ये मज्जश्च शुक्रं भवति देहिनाम् ।
छिद्रं न दृश्यतेऽस्थ्नाञ्च तन्निःसरति तुः कथम् ॥
एवमुक्तस्तु शिष्येण गुरुः प्राहेदमुत्तरम् ।
तेजो रसानां सर्वेषामम्बुजानां यदुच्यते ॥
पित्तोष्मणः सरागेण रसो रक्तत्वमृच्छति ।
वाय्वग्नि तेजसा रक्तमूष्मणा चाभिसंयुतम् ॥

स्थिरतां प्राप्य शौक्लाश्च मेदो देहेऽभिजायते।
पृथिव्यम्ब्वनिलादीनां सङ्घातः स्नेषणावृतः॥
खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम्।
करोति तत्र सौषिर्यमस्थ्नां मध्ये समीरणः॥
मेदसस्तानि पूर्यन्ते स्नेहो मज्जा ततः स्मृतः।
तस्मान्मज्ज्ञस्तु यः स्नेहः शुक्रं सञ्जायते ततः॥
वाय्वाकाशादिभिर्भावैः सौषिर्यं जायतेऽस्थिषु।
तेन स्रवति तत् शुक्रं नवात् कुम्भादिवोदकम्॥
स्रोतोभिः स्यन्दते देहात् समन्तात् शुक्रवाहिभिः।
हर्षेणोदीरितं रागात् सङ्कल्पाच्च मनो भवात्॥
वस्तौ संभृत्य निर्याति स्थलाचिन्नादिवोदकम्!
किट्टमन्नस्य विण्मूत्रं रसस्य च कफोऽसृजः॥
पित्तं मांसस्य च मलो मलः स्वेदस्तु मेदसः।
स्यात् किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट् त्वचम्
प्रसादकिट्टे धातूनां पाकादेवम्बिधः स्मृतः।
परस्परोपसंस्तम्भाद्धातु स्नेहपरम्परा॥
वृष्यादीनां प्रभावस्तु पुष्णाति बलमाशु हि।
षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्तनम्॥
सन्तत्याभोज्य धातूनां परिवृत्तिस्तु चक्रवत्।
व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा॥
युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा।
क्षिप्यमाणस्तु वैगुण्याद्रसः सज्जति यत्र सः॥
करोति विकृतिं चात्र खे वर्षमिव तोयदः।
दोषाणामपि चैवं स्यादेकदेशप्रकोपनम्॥

इति भौतिकधात्वन्नपक्तॄणां कर्मभाषितम्।
अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः॥
तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः।
तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः॥
पालयेत् प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः।
यो हि भुंक्ते विधिं मुक्त्वा ग्रहणीदोषजान् गदान्।
स लौल्याल्लभते शीघ्रं वक्ष्यन्तेऽतः परन्तु ये॥
अभोजनादजीर्णातिभोजनाद्विषमाशनात्।
असात्म्यगुरु शीतातिरूक्षसन्दुष्टभोजनात्॥
विरेकवमनस्नेहविभ्रमाद्व्याधिकर्षणात्।
देशकालर्तुवैषम्याद्वेगानाञ्च विधारणात्॥
दुष्यत्यग्निः सदुष्टोऽन्नं न तत् पचति लघ्वपि।
अपच्यमानं शुक्तत्वं यात्यन्नं विषताञ्च तत्॥
तस्य लिङ्गमजीर्णस्य विष्टम्भोऽङ्गञ्च सीदति।
शिरसो रुक् च मूर्च्छा च भ्रमः पृष्ठकटिग्रहः॥
जृम्भाङ्गमर्दस्तृष्णा च ज्वरश्छर्दिः प्रवाहणम्।
अरोचको विपाकश्च घोरमन्नविषञ्च तत्॥
संसृज्यमानेन पित्तेन दाहं तृष्णां मुखामयान्।
जनयत्यम्लपित्तं च पित्तजांश्च परान् गदान्॥
यक्ष्मपीनसमेहादीन् कफजान् कफसङ्गतः।
करोति वातसंसृष्टं वातजांश्च गदान् बहून्॥
मूत्ररोगांश्च मूत्रस्थं कुक्षिरोगान् शकृद्गतान्।
रसादिभिश्च संसृष्टं कुर्याद्रोगान् रसादिजान्॥
विषमो धातुवैषम्यं करोति विषमं पचन्।

दुर्बलो विदहत्यन्नं तद्यात्यूर्द्ध्वमधोऽपि वा ॥
अधश्च पक्वमामं वा प्रवृत्तं ग्रहणीगदः ।
उच्यते सर्वमेवान्नं प्रायो ह्यस्य विदह्यते ॥
अतिसृष्टं विबद्धं वा द्रवं तदुपवेश्यते ।
तृष्णारोचकवैरस्य प्रसेकतमकान्वितः ॥
शूनपादकरः सास्थिपर्वरुक् छर्दनं ज्वरः ।
लोहामगन्धिस्तिक्ताम्ल उद्गारश्चास्य जायते ॥
पूर्वरूपं तु तस्येदं तृष्णालस्यं बलं क्षयः ।
विदाहोऽन्नस्य पाकश्च चिरात्कायस्य गौरवम् ॥
अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता ।
नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता ॥
अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः ।
दुर्बलाग्निबलाद्दुष्टाह्यासमेव विमुञ्चति ॥
वातात् पित्तात् कफात् सर्वैर्ग्रहणीदोष उच्यते ।
हेतुं लिङ्गं चिकित्सांञ्च शृणु तस्य पृथक् पृथक् ॥
कटुतिक्तकषायातिरूक्षशीतलभोजनैः ।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥
करोति कुपितो मन्दमग्निं संच्छाद्य मारुतः ।
तस्यान्नं पच्यते दुःखं शुक्तपाकः खराङ्गता ॥
कण्ठास्य शोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ।
पार्श्वोरु वंक्षणग्रीवारुजोऽभीक्ष्णं विसूचिका ॥
हृत्पीडाकार्श्यं दौर्बल्यं वैरस्यं परिकर्तिका ।
गृद्धिः सर्वरसानां च मनसः सदनं तथा ॥
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ।

स वातगुल्महृद्रोगप्लीहा शङ्की च मानवः॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत्।
पुनः पुनः सृजेद्वर्चः कासश्वासान्वितोऽनिलात्॥
कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम्।
अग्निमाप्लावयद्धन्ति जलं तप्तमिवानलम्॥
सोऽजीर्णं नीलपीताभम्पीताभः सार्यते द्रवम्।
प्रत्यम्लोद्गार हृत्कण्ठदाहारुचितृडर्दितः॥
गुर्वति स्निग्धशीतान्नभोजनादतिभोजनात्।
भुक्तमात्रस्य चास्वप्ताद्धन्त्यग्निं कुपितः कफः॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु।
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम्॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चः प्रवर्तनम्।
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके॥
यथाग्निः पूर्वमुद्दिष्टो रोगानीके चतुर्विधः।
तं चापि ग्रहणीदोषं समवर्जं प्रचक्ष्महे॥
पृथग्वातादि निर्दिष्टहेतुलिङ्गसमागमे।
त्रिदोषं निर्दिशेत्तेषां भेषजं शृणुतः परम्॥
ग्रहणीमाश्रितं दोषं विदग्धाहारमूर्च्छितः।
सविष्टम्भप्रसेकार्ति विदाहारुचि गौरवम्॥
आमलिङ्गान्वितं दृष्ट्वा सुखोष्णेनाम्बुनोद्धरेत्।
फलानां वा कषायेण पिप्पली सर्षपैस्तथा॥
लीनं पक्वाशयस्थं वा स्राव्यमांसप्रदीपनैः।
शरीरानुगते सामे रसे लङ्घनपाचनम्॥
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम्।

दद्यात् पेयादिलघ्वन्नं पुनर्योगांश्च दीपनान् ॥
ज्ञात्वा तु परिपक्वामं मारुतग्रहणीगदम् ।
दीपनीययुतं सर्पिः पाययेताल्पशो भिषक् ॥
किञ्चित्सन्धुक्षितेऽग्नौ स्रस्तविण्मूत्र मारुतम् ।
द्विशाण्यहानि सस्नेहं स्वेदाभ्यक्तं निरूहयेत् ॥
तत एरण्डतैलेन सर्पिषा तैल्वकेन वा ।
सक्षारेणानिले शान्ते स्रस्तदोषं विरेचयेत् ॥
शुद्धरूक्षाशयं बद्धवर्चसञ्चानुवासयेत् ।
दीपनीयाम्लवातघ्नसिद्धतैलेन मात्रया ॥
निरूढश्च विरिक्तश्च सम्यक् चैवानुवासितः ।
लघ्वन्नप्रति सम्भुक्तः सर्पिरेवाचरेत् पुनः ॥
द्वे पञ्चमूले सरलं देवदारु सनागरम् ।
पिप्पलीं पिप्पलीमूलं चित्रकं हस्ति पिप्पलीम् ॥
शणबीजं यवान् कोलान् कुलत्थान् सुरभीं तथा ।
पाचयेदारनालेन दध्ना सौवीरकेण वा ॥
चतुर्भागावशेषेण पचेत्तेन घृताढकम् ।
स्वर्जिका यावशूकाख्यौ क्षारौ दत्त्वा च युक्तितः ॥
सैन्धवोद्भिदसामुद्रविडानां रोमकस्य च ।
स सौवर्चलपाठानां भागान् द्विपलिकान् पृथक् ॥
विनीय चूर्णितान् सिद्धात्ततो द्वे द्वे पले पिबेत् ।
करोत्यग्निं बलं वर्ण्यं वातघ्नं भुक्तपाचनम् ॥
त्र्यूषण त्रिफला कल्के बिल्वमात्रे गुडात् पले ।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानिलः पिबेत् ॥
पञ्चमूलाभयाव्योषविडङ्गशठिभिर्घृतम् ।

शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च ॥
शुष्कमूलककोलाम्बुचुक्रिका दाडिमस्य च ।
तक्रमस्तु सुरामण्डसौवीरकतुषोदकैः ॥
काञ्जिकेन च तत्पक्वमग्निदीप्तिकरं परम् ।
शूलगुल्मोदरश्वासकासानिलकफापहम् ॥
सबीजपूरकरसं सिद्धं वा पाययेद्घृतम् ।
सिद्धमभ्यञ्जनार्थञ्च तैलमेतैः प्रयोजयेत् ॥
एतेषामौषधानां वा पिबेत् चूर्णं सुखाम्बुना ।
वाते श्लेष्माहृते सामे कफे वा वायुनोद्धृते ॥
मज्जत्यामा गुरुत्वाद्विट्पक्वा तु प्लवते जले ।
विनातिद्रवसङ्घातशैत्यश्लेष्मप्रदूषणात् ॥
परीक्ष्यैवं पुरा सामं निरामं वा सदोषिणाम् ।
विधिनोपाचरेत् सम्यक् पाचनेनेतरेण वा ॥
चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।
व्योषं हिङ्ग्वजमोदञ्च चव्यं चैकत्र चूर्णयेत् ॥
गुडिका मातुलुङ्गस्य दाडिमस्य रसेन वा ।
कृता विपाचयत्यामन्दीपयत्याशु चानलम् ॥
नागरातिविषा मुस्तक्वाथः स्यादामपाचनः ।
मुस्तात्वक्कल्कः पथ्या वा नागरं चोष्णवारिणा ॥
देवदारुवचामुस्तनागरातिविषाभयाः ।
वारुण्यामासुतास्तोये कोष्णे वा लवणैः पिबेत् ॥
पिबेत् सपरिकर्ता मे मले वा दाडिमाम्बुना ।
विडेन लवणं पिष्टा विल्वं चित्रकनागरम् ॥
सामे वा सकफे वाते कोष्ठशूलकरे पिबेत् ।

कलिङ्गहिङ्ग्वतिविषावचा सौवर्चलाभयाः ॥
हृद्यर्शो ग्रन्थिशूलेषु पिबेदुष्णेन वारिणा ।
पथ्या सौवर्चलाजाजीचूर्णं मरिच संयुतम् ॥
अभयां पिप्पली मूलं वचां कटुकरोहिणीम् ।
पाठां वत्सकबीजानि चित्रकं विश्वभेषजम् ॥
पिबेन्निष्क्वाथ्य चूर्णानि पिष्ट्वा कोष्णेन वारिणा ।
पित्तश्लेष्मावृते वाते ग्रहण्यां मरुतो तथा ॥
आमे सातिविषा व्योषलवणक्षारहिङ्गुवत् ।
पिप्पली नागरं पाठां सारिवां बृहतीद्वयम् ॥
चित्रकं कौटजं बीजं लवणान्यथ पञ्च च ।
तच्चूर्णं सयवक्षारं दध्युष्णाम्बु सुरादिभिः ॥
पिबेदग्नि विवृद्ध्यर्थं कोष्ठवातहरं नरः ।
मरिचः कुञ्चिकाम्बष्ठा हृद्याम्लकुडवाः पृथक् ॥
पलानि दश चाम्लस्य वेतसस्य पलार्द्धिकम् ।
सौवर्चलं विडम्भाक्षं यवक्षारः ससैन्धवः ॥
शटी पुष्करमूलानि हिङ्गु हिङ्गुशिवाटिका ।
ततसर्वमेकतः सूक्ष्मं चूर्णं कृत्वा प्रयोजयेत् ॥
सुस्तं वाताभिभूतायां ग्रहण्यां मरुतो तथा ।
चतुर्णां प्रस्थमम्लानां त्र्यूषणाच्च पलत्रयम् ॥
लवणानां च चत्वारि शर्करायाः पलाष्टकम् ।
संचूर्ण्य शाकसूपान्नरागादिष्ववचारयेत् ॥
कासा जीर्णा रुचिश्वासहृत्पाण्ड्वामय गुल्मनुत् ।
चव्यत्वक् पिप्पलीमूलधातकी व्योष चित्रकम् ।
कपित्थं बिल्वमम्बष्ठां शाल्मलं हस्ति पिप्पलीम् ॥

शिलोद्भेदं तथा जाजी पिष्टा वदरभागिकम्।
परिभर्ज्य घृते दध्ना यवागूं साधयेद्भिषक्॥
रसैः कपित्थचुक्रीका वृक्षाम्लैर्दाडिमस्य च।
सर्वातिसारमन्दाग्नि गुल्मार्शःप्लीहनाशिनी॥
पञ्चकोलकयूषश्च मूलकानां च शोषणः।
स्निग्धो दाडिमतक्राम्लो जाङ्गलः संस्कृतो रसः॥
क्रव्यादस्वरसः शस्तो भोजनार्थं सदीपनः।
तक्रारनालमद्यानि पानार्थैरिष्ट एव च॥
तक्रन्तु ग्रहणीदोषे दीपनग्राहि लाघवात्।
श्रेष्ठं मधुरपाकित्वाच्च च पित्तं प्रकोपयेत्॥
कषायोष्णविकासित्वाद्रौक्ष्याच्चैव कफे मतम्।
वाते स्वाद्वम्ल सान्द्रत्वात्सद्यस्कामविदा हि तत्॥
तस्मात्तक्र प्रयोगा ये जठराणां तथार्शसाम्।
विहिता ग्रहणीदोषे सर्वशस्तान् प्रयोजयेत्॥
यवान्यामलके पथ्या मरिचं त्रिपलांशिकम्।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत्॥
तक्रकंसासुतं तक्रं तक्रारिष्टं पिवेन्नरः।
दीपनं शोथ गुल्मार्शः क्रिमि मेदोदरापहम्॥
स्वस्थानगतमुत्क्लिष्टमग्नि निर्वापकं भिषक्।
पित्तं ज्ञात्वा विरेकेण निर्हरेद्वमनेन वा॥
अविदाहिभिरन्नैश्च लघुभिस्तिक्तसंयुतैः।
जाङ्गलानां रसैर्यूषैर्मुद्गादीनां खडैरपि॥
दाडिमाम्लैः ससर्पिष्कैर्दीपनग्राहि संयुतैः।
तस्याग्निं दीपयेच्चूर्णैः सर्पिर्भि वा सतिक्तकैः॥

चन्दनं पद्मको शीरं पाठां मूर्वां कुटन्नटम् ।
षड्ग्रन्था शारिवास्फोता सप्तपर्णाटरूषकान् ॥
पटोलोदुम्बराश्वत्थवटप्लक्षकपीतनान् ।
कटुकारोहिणीं मुस्तं निम्बञ्च द्विपलांशिकम् ॥
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत् ।
किराततिक्तेन्द्रयववीरा मागधिकोत्पलैः ॥
कल्कैः रक्षसमैः पेयं तत्पित्तग्रहणीगदे ।
तिक्तकं यद्घृतं चोक्तं कौष्ठिके तच्च दापयेत् ॥
नागरातिविषे मुस्तं धातकीं सरसाञ्जनम् ।
वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम् ॥
पिबेत्समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपविश्यते ॥
अर्शांसि च गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेन पूजितम् ॥
भूनिम्बं कटुकं व्योषं मुस्तं इन्द्रयवान् समान् ।
द्वौ चित्रकाद्वत्सकत्वग्भागान् षोडश चूर्णयेत् ॥
गुडशीताम्बुपीतं तद्ग्रहणीदोषगुल्मनुत् ।
कामलाज्वर पाण्डुत्वमेहारुच्यति सारनुत् ॥
वचामतिविषां पाठां सप्तपर्णरसाञ्जनम् ।
श्योणाकोदीच्यकट्वङ्गतुम्बुरुत्वग्दुरालभाः ॥
दार्वीं पर्पटकं मूर्वां यवानीं मधु शिग्रुकम् ।
पटोलपत्रं सिद्धार्थान् यूथिकाजाति पल्लवान् ॥
जाम्बाम्रविल्वमध्यानि निम्बमालफलानि च ।
तद्रोगशमनान्विच्छन् भूनिम्बाद्येन योजयेत् ॥

किराततिक्तकं पद्मवन्या त्रायमाणा कटुत्रिकम्।
चन्दनं पद्मकोशीरं दार्वीत्वक्कटुरोहिणी॥
कुटजत्वक्फलं मुस्तं यवानी देवदारु च।
पटोलनिम्बपत्रैलासौराष्ट्रातिविषात्वचः॥
मधु शिग्रोश्च बीजानि मूर्वा पर्पटकस्तथा।
तच्चूर्णं मधुना लेह्यं पेयं मद्यैर्जलेन वा॥
हृत्पाण्डुग्रहणीरोगगुल्मशूलारुचिज्वरान्।
कामलां सन्निपातं च मुखरोगांश्च नाशयेत्॥
ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि।
कट्वम्ललवणक्षारैस्तिक्तैश्चाग्निं विवर्द्धयेत्॥
पलाशं चित्रकं चव्यं मातुलुङ्गं हरीतकीम्।
पिप्पलीं पिप्पलीमूलं पाठां नागरधान्यकम्॥
कार्षिकाण्युदकप्रस्थे पक्त्वा पादावशेषितम्।
पानीयार्थं प्रयुञ्जीत यवागूं तैश्च साधिताम्॥
शुष्कमूलकयूषेण कौलत्थेनाथवा पुनः।
कट्वम्लक्षारतीक्ष्णेन लघून्यन्नानि चाप्नुयात्॥
अम्लं चानुपिबेत्तक्रं तक्रारिष्टमथापि वा।
मदिरां मध्वरिष्टान् वा निगदं शीधुमेव वा॥
द्रोणं मधुकपुष्पाणां विडङ्गानां ततोऽर्द्धतः।
चित्रकस्य ततोऽर्द्धं स्यात्तथा भल्लातकाढकम्॥
मञ्जिष्ठार्द्धपलं चैव त्रिद्रोणेऽपां विपाचयेत्।
द्रोणशेषे तु तच्छीतं मध्वर्द्धाढकसंयुतम्॥
एला मृणाला गुरुभिश्चन्दनेन च रूषिते।



८५

कुम्भे मासस्थिते जातमासवन्तं प्रयोजयेत् ॥
ग्रहणीं दीपयत्येष बृंहणः कफपित्तजित् ।
शोषं कुष्ठं किलासञ्च प्रमेहांश्च प्रणाशयेत् ॥
मधूकपुष्पस्वरसं शृतमर्द्धक्षयीकृतम् ।
क्षौद्रपादयुतं शीतं पूर्ववत्सन्निधापयेत् ॥
तं पिबन् ग्रहणीदोषान् जयेत्सर्वान् हिताशनः ।
तद्वद्द्राक्षेक्षुखर्जूरस्वरसानां सुतान् पिबेत् ॥
प्रस्थौ दुरालभाया द्वौ प्रस्थमामलकस्य च ।
मुष्टी चित्रकदन्त्योर्द्वे प्रत्यग्रं चाभयाशतम् ॥
चतुर्द्रोणेऽम्भसः पक्त्वा साकं द्रोणावशेषितम् ।
सगुडद्विशतं पूतं मधुनः कुडवायुतम् ॥
सहत्प्रियङ्गोः पिप्पल्याः विडङ्गानां च चूर्णितैः ।
कुडवैर्घृतकुम्भस्थं पक्षाज्जातं ततः पिबेत् ॥
ग्रहणीपाण्डुरोगार्शःकुष्ठवीसर्पमेहनुत् ।
स्वरवर्णकरश्चैव गरपित्तकफापहः ॥
हरिद्रा पञ्चमूले द्वे वीरर्षभकजीवकम् ।
एषां पञ्चपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥
द्रोणशेषे रसे पूते गुडस्य द्विशतं भिषक् ।
चूर्णितान् कुडवार्द्धांशान् प्रक्षिपेच्च समाक्षिकान् ॥
प्रियङ्गुमुस्तमञ्जिष्ठा विडङ्गमधुकप्लवान् ।
रोध्रं शावरकं चैव मासार्द्धं स्थापयेत्ततः ॥
एष मूलासवः सिद्धो दीपनो रक्तपित्तजित् ।
आनाहकफहृद्रोगपाण्डुरोगाङ्गसादनुत् ॥
प्रास्थिकं पिप्पलीं पिष्ट्वा गुडं मध्यं विभीतकात् ।

उदकप्रस्थसंयुक्तं यवपल्ले निधापयेत् ॥
तस्माज्जातात्तुपलं सलिलाञ्जलिसंयुतम्।
पिबेत्पिण्डासवो ह्येष रोगानीकविनाशनः ॥
इत्यं ह्येषामनुत्पत्तिं रोगाणां ये प्रकीर्तिताः।
समूलां पिप्पलीं क्षारौ द्वौ पञ्चलवणानि च ॥
मातुलुङ्गाभया रास्ना शठीमरिच नागरम्।
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना ॥
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम्।
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते ॥
गौल्मिके षट्पलं प्रोक्तं भल्लातकघृतञ्च यत्।
स्वर्जिका विडका लेप लवणं यवशूकजम् ॥
सप्तला कण्टकारी च चित्रकश्चेति दाहयेत्।
सप्तकृत्वः स्रुतस्यास्य क्षारस्य ह्याढकेन तु ॥
आढकं सर्पिषः पक्वा पिबेदग्नि विवर्द्धनम्।
समूलां पिप्पलीं पाठां चव्येन्द्रयवनागरम् ॥
चित्रकातिविषे हिङ्गुश्वदंष्ट्रां कटुरोहिणीम्।
वचां च कार्षिकं पञ्च लवणानां पलानि च ॥
दध्नः प्रस्थद्वये तैलसर्पिषोः कुडवद्वये।
कण्डोकृतानि निष्काथ्य शनैरनुगते रवौ ॥
अन्तर्धूमं ततो दग्ध्वा चूर्णं कृत्वा घृताप्लुतम्।
पिबेत् पाणितलं तस्मिन् जीर्णे स्यान्मधुराशनः ॥
वातश्लेष्मामयान् सर्वान् हन्याद्विषगरांश्च सः।
भल्लातकं त्रिकटुकं त्रिफलां लवणत्रिकम् ॥
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत्।

क्षारः सर्पिषा पीतो भोज्यो वाप्यवचूर्णितः ॥
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्त शोषनुत् ।
दुरालभाङ्करञ्जौ द्वौ सप्तपर्णं सवत्सकम् ॥
षड्ग्रन्थां मदनं मूर्वां पाठामारग्वधं तथा ।
गोमूत्रेण समांशानि कृत्वा चूर्णानि दाहयेत् ॥
दग्ध्वा च तं पिवेत् क्षारं ग्रहणीं बलवर्द्धनम् ।
भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम् ॥
दहेन्माहिषमूत्रेण क्षार एषोऽग्निवर्द्धनः ।
द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी ॥
मुस्तं च वस्तमूत्रेण सिद्धः क्षारोऽग्निवर्द्धनः ।
चतुष्पलं सुधा काण्डं त्रिपलं लवणत्रयात् ॥
वार्ताकीकुडवं चार्कादष्टौ द्वे चित्रकात् पले ।
दग्धानि वार्ताकुरसे गुलिका भोजनोत्तराः ॥
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ।
विसूचिका प्रतिश्याय हृद्रोगशमनाश्च ताः ॥
वत्सकातिविषे पाठां दुःस्पर्शं हिङ्गु चित्रकम् ।
चूर्णीकृत्य पलांशांश्च क्षारे मूत्रस्रुते पचेत् ॥
आयसे भाजने सान्द्रात्तस्मात्कोलं सुखाम्बुना ।
मद्यैर्वा ग्रहणीदोषशोथार्शः पाण्डुमान् पिवेत् ॥
त्रिफलां कटभीं चव्यं विल्वमध्यमयो रजः ।
रोहिणीं कटुकां मुस्तं कुष्ठं पाठाञ्च हिङ्गु च ॥
यवमुष्ककयोः क्षारमधुकं लूषणां वचाम् ।
विडङ्गं पिप्पलीमूलं स्वर्जिकां निम्बचित्रकौ ॥
मूर्वाजमेदेन्द्र यवान् गुडूचीं देवदारु च ।

कार्षिकं लवणानाञ्च पञ्चानां पालिकान् पृथक् ॥
भागान् दधि त्रिकुडवे घृततैलेन मूर्च्छितान् ।
अन्तर्धूमं शनैर्दग्ध्वा तस्मात् पाणितलं पिबेत् ॥
सर्पिषा कफवातार्शो ग्रहणी पाण्डुरोगवान् ।
प्लीहमूत्रग्रहश्वासहिक्का कासक्रिमिज्वरान् ॥
शोषातिसारौ यक्ष्माणं प्रमेहानाहहृद्ग्रहान् ।
हन्यात्सर्वविषाणाञ्च क्षारोऽग्नि जननो वरः ॥
जीर्णे रसैर्वा मधुरैरन्नं स्यात् पयसापि वा ।
त्रिदोषविधिविद्वैद्यः पञ्चकर्माणि कारयेत् ॥
घृतक्षारा सवारिष्टान् दद्याच्चाग्नि विवर्धनान् ।
क्रिया या यानिलादीनां निर्दिष्टा ग्रहणीं प्रति ॥
व्यत्यासात्तां समस्ताञ्च कुर्याद्दोषविशेषवित् ।
स्नेहनं स्वेदनं शुद्धिर्लङ्घनं दीपनञ्च यत् ॥
चूर्णानि लवणक्षारमध्वरिष्टसुरासवाः ।
विविधास्तत्र योगाश्च दीपनानाञ्च सर्पिषाम् ॥
ग्रहणीरोगिभिः सेव्या क्रियां चावस्थिकीं शृणु ।
ष्ठीवने श्लैष्मिके रूक्षं दीपनं पित्तसंयुतम् ॥
बहुवातस्य सस्नेहलवणाम्लयुतं हितम् ।
सन्धुक्षति तदा वह्निरेषां विविधदिन्धितः ॥
स्नेहमेव परं विद्याद् दुर्बला नलदीपनम् ।
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि ।
मन्दाग्निरपि पक्वन्तु पुरीषं योऽतिसार्य्यते ॥
दीपनीयौषधैर्युक्तां घृतमात्रां पिबेत्तु सः ।
तया समानः पवनः प्रसन्नो मार्गमास्थितः ॥

अग्नेः समीपचारित्वादाशु प्रक्रमते बलम् ।
काठिन्याद्यः पुरीषन्तु कृच्छ्रान् मुञ्चति मानवः ॥
सघृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत् ।
रौक्ष्यान् मन्देऽनले चैव सर्पिर्वा दीपनैर्युतम् ॥
अतिस्नेहात्तु मन्देऽग्नौ चूर्णारिष्टासवा हिताः ।
भिन्ने गुदोपले पात्तु मले तैलसुरासवाः ॥
उदावर्त्तात्तु मन्देऽग्नौ निरूहाः स्नेहवस्तयः ।
दोषवृद्ध्या तु मन्देऽग्नौ शुद्धो दोषविधिं चरेत् ॥
व्याधिमुक्तस्य मन्दे तु सर्पिरेवाग्निदीपनम् ।
उपवासाध्वखेदात्तु क्षामक्षीणकृशाचरान् ॥
प्रसहानां रसैः साम्लैः भोजयेत् पिशिताशिनाम् ।
लघुतीक्ष्णोष्णशोधित्वाद्दीपयन्त्याशु तेऽनलम् ॥
मांसोपचितमांसत्वात्तथाशुतरबृंहणाः ।
नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ॥
यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ।
स्नेहान्नविधिभिश्चित्रैश्चूर्णारिष्टसुरासवैः ॥
प्रयुक्तैर्भिषजा सम्यग् बलमग्नेः प्रवर्द्धते ।
यथाहि सारदार्वग्निः स्थिरः सन्तिष्ठते चिरम् ॥
स्नेहान्नविधिभिस्तद्वदन्तरग्निर्भवेत् स्थिरः ।
हितं जीर्णे मितञ्चाश्नंश्चिरमारोग्यमश्नुते ॥
अवैषम्येण दोषाणामग्निवृद्धौ यतेत वा ।
समैर्दोषैः समो मध्ये देहस्योष्माग्निसंश्रितः ॥
पचत्यन्नं तदारोग्यपुष्ट्यायुर्बलवृद्धये ।
दोषैर्मन्दोऽतिवृद्धो वा विषमैर्जनयेद्गदान् ॥

वाच्यं मन्दस्य तत्त्रोक्तमतितीक्ष्णस्य वक्ष्यते।
नरे क्षीणकफे पित्तं कुपितं मारुतानुगम्॥
स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति।
तथा लब्धबलो देहे विरूक्षे सानिलोऽनलः॥
परिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः।
पक्वान्नं सततं धातून् शोणितादीन् पचत्यपि॥
ततो दौर्बल्यमातङ्कान् मृत्युञ्चोपनयेन्नरम्।
भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति॥
तृट्श्वासदाहमूर्च्छाद्या व्याधयोऽत्यग्निसम्भवाः।
तमत्यग्निं गुरुस्निग्धमन्दसान्द्रहिमस्थिरैः॥
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः।
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत्॥
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत्।
पायसं कृशरं स्निग्धं पैष्टिकं गुडवैकृतम्॥
अद्यात्तथौदकानूपपिशितानि घृतानि च।
मत्स्यान् विशेषतः श्लक्ष्णान् स्थिरतोयचरांस्तथा॥
आविकं सघृतं मांसमद्यादत्यग्निनाशनम्।
यवागूं समधूच्छिष्टां घृतं वा क्षुधितः पिबेत्॥
पयो वा शर्करासर्पिर्जीवनीयौषधैः शृतम्।
फलानां तैलयोनीनां उत्क्राथाश्च सशर्कराः॥
मार्दवं जनयत्यग्नेः स्निग्धाम्मांसरसांस्तथा।
पिबेत् शीताम्बुना सर्पिर्मधूच्छिष्टेन वा युतम्॥
आनूपरससिद्धान् वा चीन् स्नेहांस्तैलवर्जितान्।
गोधूमचूर्णमन्थं वा व्यधयित्वा शिरां पिबेत्॥

पयसा सम्मिताश्चापि घनं त्रिः स्नेहसंयुतम् ।
नारीस्तन्येन संयुक्तां पिबेदौदुम्बरीं त्वचाम् ॥
आभ्यां वा पयसा सिद्धमथादत्यग्निशान्तये ।
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ॥
असकृत् पित्तशान्त्यर्थं पायसप्रतिभोजनम् ।
यत्किञ्चित् मधुरं मेध्यं श्लेष्मलं गुरुभोजनम् ।
तदत्यग्निहितं सर्वं भुक्त्वा प्रस्वपनं दिवा ॥
मेध्यान्यन्नानि योऽत्यग्नावश्नतान्तः समश्नुते ।
न तन्निमित्तमाप्नोति व्यसनं पुष्टिमेति सः ॥
कफे वृद्धे जिते पित्ते मारुते चानलः समः ।
समधातोः पचत्यन्नं पुष्ट्यायुर्बलवृद्धये ॥ इति ।
भवति चात्र । पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम् ।
विषमं बहुवाल्पं वाप्यप्राप्तातीतकालयोः ॥
भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतम् ।
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा ॥
प्रातराशेत्वजीर्णेऽपि सायमाशो न दुष्यति ।
दिवा प्रबुध्यतोऽर्केण हृदयं पुण्डरीकवत् ॥
तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः ।
व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः ॥
स्वक्लेदमपगच्छन्ति दिवा तेनास्य धातवः ।
अक्लिन्ने क्षिप्तमाषिक्तमन्यत्तेषु न दुष्यति ॥
अविदग्ध इव क्षीरे क्षीरमन्यद्विमिश्रितम् ।
रात्रौ तु हृदये म्लाने संवृत्ते स्वयनेषु च ॥
यान्ति कोष्ठे च विक्लेदं संवृत्ते देहधातवः ।

क्लिन्नेष्वन्यदपक्केषु तेष्वासक्तं प्रदुष्यति ॥
विदग्धेषु पयः स्वन्यत् पयस्तस्मिंश्चिवार्पितम्।
नैशेष्वाहारजातेषु नाविपक्केषु बुद्धिमान् ॥
तस्मादन्यत् समश्नीयात्तं पालयिष्यन् बलायुषी। इति तत्र श्लोकाः। अन्तरग्निगुणादेहं यथा धारयते च सः ॥
यथान्नं पच्यते यांश्च यथाहारः करोत्यपि ॥
येऽग्नयो यांश्च पुष्यन्ति यावन्तो ये पचन्ति यान्।
रसादीनां क्रमोत्पत्तिर्मलानां तेभ्य एव च ॥
वृष्याणामाशु कर्त्ते तु धातुकालोद्भवः क्रमः।
रोगैकदेशकर्त्ते तु रन्तरग्निर्यथाधिकः ॥
सन्दुष्यति यथा दुष्टो यान् रोगान् जनयत्यपि।
ग्रहणीया यथायश्च ग्रहणी दोषलक्षणम् ॥
पूर्व्वरूपं पृथक् चैव व्यञ्जनं सचिकित्सितम्।
चतुर्विधस्य निर्दिष्टं तथा चावस्थिकी क्रिया ॥
जायते च यथात्यग्निर्यश्च तस्य चिकित्सितम्।
उक्तवानिह तत् सर्वं ग्रहणी दोषके मुनिः ॥
इति ग्रहणीदोषचिकित्सितम्।

---

अष्टादशोऽध्यायः।

अथातः पाण्डुरोगचिकित्सितं व्याख्यास्यामः।

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः।
चतुर्थः सन्निपातेन पञ्चमो भक्षणात् मृदः ॥

दोषाः पित्तप्रधानास्तु यस्य कुप्यन्ति धातुषु ।
शैथिल्यं तस्य धातूनां गौरवञ्चोपजायते ॥
ततो वर्णबलस्नेहा ये चान्येऽप्योजसो गुणाः ।
व्रजन्ति क्षयमत्यर्थं दोषदूष्यप्रदूषणात् ॥
सोऽल्परक्तोऽल्पमेदस्को निःसारः शिथिलेन्द्रियः ।
वैवर्ण्यं भजते तस्य हेतुं शृणु सलक्षणम् ॥
क्षाराम्ललवणात्युष्णविरुद्धा सात्म्यभोजनात् ।
निष्पावमाषपिण्याकतिलतैलनिषेवणात् ॥
विदग्धेऽन्ने दिवास्वप्नाद्व्यायामान्मैथुनात्तथा ।
प्रतिकर्मर्त्तुवैषम्याद्वेगानाञ्च विधारणात् ॥
कामचिन्ताभयक्रोधशोकोपहतचेतसः ।
समुदीर्णं यथापित्तं हृदये समवस्थितम् ॥
वायुना बलिना क्षिप्तं स्रोतोभिर्दशभिः सृतम् ।
प्रपन्नं केवलं देहं त्वङ्मांसान्तरमाश्रितम् ॥
प्रदूष्य कफवातासृक् त्वङ्मांसानि करोति तत् ।
वर्णान् हरितहारिद्रान् पाण्डून् बहुविधांस्त्वचि ॥
स पाण्डुरोग इत्युक्तस्तस्य लिङ्गं भविष्यतः ।
हृदयस्पन्दनं रौक्ष्यं स्वेदाभावः श्रमस्तथा ॥
सम्भूतेऽस्मिन् भवेत्सर्वः कर्णक्ष्वेडो हतानलः ।
दुर्बलः सदनोऽन्निद्रश्रमभ्रमनिपीडितः ॥
गात्रशूलज्वरश्वासगौरवारुचिमान्नरः ।
मृदितैरिव गात्रैश्च पीडितोन्मथितैरिव ॥
शूनाक्षिकूटो हरितः शीर्णलोमा हतप्रभः ।
कोपनः शिशिरद्वेषी निद्रालुष्ठीवनोऽल्पवाक् ॥

पिण्डिकोद्वेष्टकटूरु पादरुक्-सदनानि च ।
भवन्त्यारोहणायासैर्विशेषश्चात्र वक्ष्यते ॥
आहारैरुपचारैश्च वातलैः कुपितोऽनिलः ।
जनयेत् कृष्णपाण्डुत्वं तथा रूक्षारुणाङ्गताम् ॥
अङ्गमर्दं रुजन्तोदङ्कम्पं पार्श्वं शिरोरुजम् ।
शकृच्छोषास्य वैरस्य शोफानाहबलक्षयान् ॥
पित्तलस्याचितं पित्तं यथोक्तैः स्वैः प्रकोपनैः ।
दूषयित्वाऽऽरक्तादीन् पाण्डुरोगाय कल्पते ॥
सपीतो हरिताभो वा ज्वरदाहसमन्वितः ।
तृष्णा मूर्च्छा परीतस्तु पीतमूत्रशकृन्नरः ।
स्वेदनः शीतकामश्च नचान्नमभिनन्दति ॥
कटुकास्यो न चास्योष्णमुपशेतेऽम्लमेव वा ।
उद्गारोऽम्लो विदाहश्च विदग्धेऽन्ने ऽस्य जायते ॥
दौर्गन्ध्यं भिन्नवर्चस्त्वं दौर्बल्यं तम एव च ।
विवृद्धैः श्लेष्मलैः श्लेष्मा पाण्डुरोगं स पूर्ववत् ॥
करोति गौरवं तन्द्रां छर्दिं श्वेतावभासताम् ।
प्रसेकं लोमहर्षञ्च सादं मूर्च्छां भ्रमं क्लमम् ॥
श्वासकासौ तथालस्यं अरुचिं वाक् स्वरग्रहम् ।
शुक्लमूत्राक्षिवर्चस्त्वं कटुरूक्षोष्णकामता ॥
श्वयथुं मधुरास्यत्वमिति पाण्ड्वामयः कफात् ।
सर्वान्नसेविनः सर्वे दुष्टा दोषा त्रिदोषजम् ॥
त्रिलिङ्गं सम्प्रकुर्वन्ति पाण्डुरोगं सुदुःसहम् ।
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ॥
कषाया मारुतं पित्तं ऊषरा मधुरा कफम् ।

कोपयेन् मृद्रसादींश्च रौक्ष्यात् भक्तं विरूक्षयेत् ॥
पूरयत्यविपक्वैव स्रोतांसि निरुणद्धि च ।
इन्द्रियाणां बलं तेज ओजो वीर्यं निहत्य च ॥
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ।
शूनगण्डाक्षि कूटभ्रूनाभिपादाग्रमेहनः ॥
क्रिमिकोष्ठोऽतिसार्येत मलं सासृक्कफान्वितम् ।
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ॥
कालप्रकर्षात् पीतर्षो यश्च पीतानि पश्यति ।
बद्धाल्पविट्कं सकफं हरितं योऽतिसार्यते ॥
दीनः श्वेतानुदिग्धाङ्गश्छर्दि मूर्च्छा तृषार्दितः ।
सनास्य स्तक् चयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात् ॥
इति पञ्चविधस्योक्तं पाण्डुरोगस्य लक्षणम् ।
पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते ॥
तस्य पित्तमसृक् मांसं दग्ध्वा रोगाय कल्पते ।
हारिद्रनेत्रः सहस्रं हारिद्रत्वङ्नखाननः ॥
रक्तपीतशकृन् मूत्रो भेकवर्णो हतेन्द्रियः ।
दाहा विपाकदौर्बल्य सदनारुचि कर्षितः ॥
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ।
कालान्तरात् खरीभूतात् कृच्छ्रास्यात् कुम्भकामला ॥
कृष्णपीतशकृन् मूत्रो भृशं शूनश्च मानवः ।
संरक्ताक्षमुखच्छर्दि विण्मूत्रो यश्च ताम्यति ॥
दाहारुचि तृषानाहतन्द्रा मोहसमन्वितः ।
प्रनष्टाग्निविसंज्ञश्च निर्यात्याशु स कामली ॥
साध्यानामितरेषां तु भेषजं सम्प्रवक्ष्यते ।

तत्र पाण्डामयी स्निग्धस्तीक्ष्णैरूर्ध्वानुलोमिकैः॥
संशोध्यो मृदुभिस्तिक्तैः कामली तु विरेचनैः।
ताभ्यां संशुद्धकायाभ्यां पथ्यान्यन्नानि दापयेत्॥
शालयो यवगोधूमपुराणाः सूपसंस्कृताः।
मुद्गाढक मसूरैश्च जाङ्गलैश्च रसैर्हिताः॥
यथा दोषं विशिष्टञ्च तयोर्भैषज्यमाचरेत्।
पञ्चगव्यं महातिक्तं कल्याणकमथापि वा॥
स्नेहनार्थं घृतं दद्यात् कामला पाण्डुरोगिणे।
दाड़िमात् कुड़वो धान्यात् कुड़वार्द्धं पलं पलम्॥
चित्रकात् शृङ्गवेराच्च पिप्पल्यष्टमिकाम्तथा।
तैः कल्कैर्विंशतिपलं घृतस्य सलिलाढके॥
सिद्धं हृत्पाण्डुरोगार्शः प्लीहवातकफार्तिनुत्।
दीपनं श्वासकासघ्नं मूढवाते च शस्यते॥
दुःखप्रसविनीनां च वन्ध्यानां चैव गर्भदम्।
कटुकारोहिणी मुस्तं हरिद्रे वत्सकात् पलम्॥
पटोलं चन्दनं दूर्वा त्रायमाणा दुरालभा।
कृष्णा पर्पटको निम्बो भूनिम्बो देवदारु च॥
तैः कार्षिकैर्घृतप्रस्थः सिद्धः क्षीरचतुर्गुणः।
रक्तं पित्तं ज्वरं दाहं श्वयथुं सभगन्दरम्॥
अर्शांस्य सृक्दरं चैव हन्ति विस्फोटकांस्तथा।
पथ्याशतरसे पथ्यावृन्तार्द्धशतकल्कवान्॥
प्रस्थः सिद्धो घृतात्पेयः सपाण्डामय गुल्मनुत्।
दन्त्याश्चतुष्पलरसे पिष्टैर्दन्तीशलाटुभिः॥

तद्वत्प्रस्थो घृताद् गुल्मसोथपाण्ड्वर्त्तिदोषनुत् ।
पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः ॥
कामला गुल्मपाण्ड्वर्त्तिज्वरमेहोदरापहः ।
हरिद्रा त्रिफला निम्बबला मधुकसाधितम् ॥
सचीरं माहिषं सर्पिः कामला हरमुत्तमम् ।
गोमूत्रे द्विगुणे दार्व्याः कल्काचद्वयसाधितः ॥
दार्व्याः पञ्चफलक्वाथे कल्के कालीयके परः ।
माहिषात् सर्पिषः प्रस्थः पूर्वः पूर्वे परे परः ॥
स्नेहैरेभिरुपक्रम्य स्निग्धं मत्वा विरेचयेत् ।
पयसा मूत्रयुक्तेन बहुशः केवलेन वा ॥
दन्ती फलरसे कोष्णे काश्मर्य्याञ्जलिमाश्रुतम् ।
द्राक्षाञ्जलिं विदित्वा वा दद्यात् पाण्ड्वामयापहम्
द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिकः पिबेत् ।
कफपाण्डुस्तु गोमूत्रक्लिन्नयुक्तां हरीतकीम् ॥
आरग्वधं रसेनेक्षोर्विदार्य्यामलकस्य च ।
सत्र्यूषणं बिल्वमात्रं पिबेद्वा कामलापहम् ॥
दन्त्यर्द्धपलकल्कं वा द्विगुणं शीतवारिणा ।
कामली त्रिवृतां वापि त्रिफलाया रसैः पिबेत् ॥
विशाला कटुकामुस्तकुष्ठदारुकलिङ्गकान् ।
कार्षिकानर्द्धकर्षांशान् कुर्य्याद्दतिविषां तथा ॥
कर्षौ मधुरसाया द्वौ सर्वं चूर्णं सुखाम्बुना ।
मद्वीयाश्च रसं पूतं पीत्वा लिह्याच्च मध्वनु ॥
कासं श्वासं ज्वरं दाहं पाण्डुरोगमरोचकम् ।
गुल्मानाहामवातांश्च रक्तपित्तञ्च नाशयेत् ॥

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम्।
शीतं मधुयुतं प्रातः कामलार्त्तः पिबेन्नरः॥
क्षीरमत्रं पिबेत्तच्च मध्यं माहिषमेव वा।
पाण्डुर्गोमूत्रसिद्धं वा सप्ताहं त्रिफलारसम्॥
भल्लाज्वलितान् मूत्रे निर्वाप्य मृद्य चाङ्कुरान्।
मातुलुङ्गस्य तत्पूतं पाण्डुशोथहरं पिबेत्॥
स्वर्णक्षीरीं त्रिवृच्छ्यामे भद्रदारु सनागरम्।
गोमूत्राञ्जलिना पिष्टं मूत्रे वा क्वथितं पिबेत्॥
क्षीरमेभिः शृतं वापि पिबेद्दोषानुलोमनम्।
हरीतकीं प्रयोगेण गोमूत्रेणाथवा पिबेत्॥
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा।
सप्तरात्रं गवां मूत्रे भावितं वाप्ययो रजः॥
पाण्डुरोगप्रशान्त्यर्थं पयसा पाययेत च।
त्र्यूषणं त्रिफला मुस्तं विडङ्गं चित्रकं समा॥
नवायोरजसो भागास्तच्चूर्णं क्षौद्रसर्पिषा।
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शः कामलापहम्॥
गुडनागरमण्डूरतिलांशान् मानतः समान्।
पिप्पली द्विगुणां कुर्य्यात् गुटिकां पाण्डुरोगिणे॥
त्रिफला त्र्यूषणं मुस्तं विडङ्गं चव्यचित्रकौ।
दार्वी त्वङ्माक्षिकौ धातुर्ग्रन्थिको देवदारु च॥
एतान् द्विपलिकान् भागांश्चूर्णम् कुर्य्यात् पृथक् तथा।
मण्डूरं द्विगुणं चूर्णाद् शुद्धमञ्जनसन्निभम्॥
मूत्रमष्टगुणं पक्त्वा तस्मिंस्तत् प्रक्षिपेत्ततः।
उदुम्बरसमान् कृत्वा वटकांस्तान् यथाग्नि च॥

उपयुञ्जीत तक्रेण साम्रं जीर्णे च भोजनम् ।
मण्डुरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥
कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च ॥
ताप्याद्रिजतु रूप्याणां मलाः पञ्चमलाः पृथक् ।
चित्रकत्रिफलाव्योषविडङ्गैः पालिकैः सह ॥
शर्कराष्टपलोन्मिश्राः चूर्णिता मधुनाप्लुताः ।
अभ्यस्यास्त्वक्षमात्राहि जीर्णे नियमिताग्निना ॥
कुलत्थकाकमाच्यादि कपोतपरिहारिणा ।
त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ॥
भागश्चित्रकमूलस्य विड़ङ्गानां तथैव च ।
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ॥
माक्षिकस्य च शुद्धस्य लोहस्य रजतस्य च ।
अष्टौ भागाः सितायाश्च तत्सर्वं सूक्ष्मचूर्णितम् ॥
माक्षिकेण प्लुतं स्थाप्य मायसे भाजने शुभे ।
उदुम्बरसमां मात्रां ततः खादेद्यथाग्निना ॥
दिने दिने प्रयुञ्जीत जीर्णे भोज्यं यदीप्सितम् ।
स्थापयित्वा कुलत्थानि काकमाची कपोतकम् ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं शिवम् ॥
पाण्डुरोगं विषङ्कासं यक्ष्माणं विषमज्वरम् ।
कुष्ठान्यजरकं मेहं शोषं श्वासमरोचकम् ॥
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ।
कौटजत्रिफला निम्ब पटोल घननागरैः ॥

भावितानि दशाहानि रसैर्द्विस्त्रिगुणानि च ।
शिलाजतु पलान्यष्टौ तावतीं सितशर्कराम् ॥
त्वक्क्षीरी पिप्पली धात्री कर्कटाख्या पलोन्मिता ।
निदिग्धिकाः फलमूलाभ्यां पलं युक्त्या त्रिगन्धिकम् ॥
चूर्णितं मधुरं कुर्य्यात्त्रिपलेनाक्षिकान् गुड़ान् ।
दाड़िमाम्बुपयः पक्षिरसतोयसुरासवान् ॥
भक्षयित्वा पिबेच्चानु तान् भुंक्ते भक्त एव वा ।
पाण्डुकुष्ठज्वरप्लीहा तमकार्शो भगन्दरम् ॥
पूति हृच्छुक्रमूत्राग्निदोषशोषगरोदरम् ।
कासासृग्दरपित्तासृक् शोथगुल्मगरामयान् ॥
ते सर्व्वे विभ्रमान् हन्युः सर्व्वरोगहराः शिवाः ।
दार्व्वीत्वक् त्रिफला व्योषं विडङ्गमयसोरजः ॥
मधुसर्पिर्युतं लिह्याद्गुडक्षौद्रे च वा भयाम् ।
त्रिफला द्वे हरिद्रे च कटुरोहिण्ययो रजः ॥
चूर्णितं क्षौद्रसर्पिर्भ्यां स लेहः कामलापहः ।
द्विपलांशन्तु गाक्षीरीं नागरं मधुयष्टिकाम् ॥
प्रास्थिकीं पिप्पलीं द्राक्षां शर्करार्द्धतुलां शुभाम् ।
धात्रीफलरसद्रोणे सुपिष्टं लेहवत् पचेत् ॥
शीतां मधु प्रस्थयुतां लिह्यात् पाणितलं ततः ।
हन्त्येव कामलां पित्तं पाण्डुं कासं हलीमकम् ॥
त्र्यूषणं त्रिफला चव्यं चित्रको देवदारु च ।
विडङ्गान्यथ मुस्तानि वत्सकं चेति चूर्णयेत् ॥
मण्डूरतुल्यं तच्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ।
शनैः सिद्धास्तथा शीताः कार्य्याः कर्षसमा गुडाः ॥

यथाग्नि भक्षणीया स्ते प्रोक्तपाण्ड्वामयापहाः ।
ग्रहण्यर्शोगुरः शीते तक्रवाटग्शिनः स्मृताः ॥
मञ्जिष्ठा रजनी द्राक्षा बला मूलान्ययोरजः ।
रोध्रं चैतेषु गोडः स्यादरिष्टः पाण्डुरोगिणाम् ।
द्विबीजकपलान्यष्टौ त्रिफलायाश्च विंशतिः ।
द्राक्षायाः पञ्च लाक्षायाः सप्त द्रोणे पलस्य तत् ॥
साध्यं पादावशेषे तु पूतशेषे समावपेत् ।
शर्करायास्तुलां प्रस्थं माक्षिकस्य च कार्षिकम् ॥
व्योषं व्याघ्रनखोशीरं क्रमुकं सैलवालुकम् ।
मधूकं कुष्ठमित्येतच्चूर्णितं घृतभाजने ॥
यवेषु दशरात्रं तदुशीर्षे हिः शिशिरे स्थितम् ।
पिबेत् तद्ग्रहणी पाण्डुरोगार्शः कामलारुची ॥
मूत्रकृच्छ्राश्मरी कुष्ठसन्निपातांश्च नाशयेत् ।
धात्रीफलसहस्रे द्वे पीडयित्वा रसन्तु तं ।
क्षौद्राष्टांशेन संयुक्तं कृष्णार्द्धकुडवेन च ॥
शर्करार्द्धं तुलोन्मिश्रं पक्वं स्निग्धे घटे स्थितं ।
प्रपिबेत् मात्रया प्रातर्जीर्णेमितहिताशनः ॥
कामलापाण्डुहृद्रोग वातासृग्विषमज्वरान् ।
कासं हिक्कां रुचिं श्वासांश्चैषोऽरिष्टः प्रणाशयेत् ॥
स्थिरादिभिः शृतं तोयं पानाहारे प्रशस्यते ।
पाण्डूनां कामलार्तानां मृद्वीकामलकीरसः ॥
पाण्डुरोगप्रशान्त्यर्थमिति प्रोक्तं महर्षिणा ।
विकल्प्यमेतद्भिषजा पृथग्दोष बलं प्रति ॥
वातिके स्नेहभूयिष्ठं पैत्तिके तिक्तशीतलं ।

श्लैष्मिके कटुतिक्तोष्णं विमिश्रं सान्निपातिके ॥
निर्घातयेत् शरीरात्तु मृत्तिकां भक्षितां भिषक् ।
युक्तितः शोधनैस्तीक्ष्णैः प्रसमीक्ष्य बलाबलम् ॥
शुद्धकायस्य सर्पींषि बलाधानानि योजयेत् ।
व्योषं विल्वं हरिद्रे द्वे त्रिफला द्वे पुनर्नवे ॥
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ।
वृश्चिकाली च भार्गी च सक्षीरैस्तैः समैः शृतम् ॥
साधयित्वा पिबेद्युक्त्या नरो मृद्दोषपीडितः ।
तद्वत् केशरयष्ट्याह्व पिप्पलीमूल शाद्वलैः ॥
मृदो निवर्तमानाय लौल्यान्मल्लाय भक्षणात् ।
द्वेष्यार्थं भावितां कामं दद्यात्तद्दोषनाशनैः ॥
शुक्लाति विषया निम्बैर्विडङ्गैः कुटजेन च ।
वार्त्ताकैः कटुरोहिण्या पाठया मूर्वयापि वा ॥
यथा दोषञ्च कुर्वीत भेषज्यं पाण्डुरोगिणाम् ।
क्रियाविशेष एषोऽस्य मतो हेतु विशेषतः ॥
तिलपिष्टनिभं यस्तु वर्चः सृजति कामलो ।
श्लेष्मणा रुद्धमार्गं तत्पित्तं कफहरैर्जयेत् ॥
रूक्षशीत गुरुस्वादुव्यायामैर्वेगनिग्रहैः ।
कफसंमूर्च्छितो वायुः स्थानात्पित्तं क्षिपेद्बहिः ॥
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः ।
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ॥
दौर्बल्याल्पाग्निपार्श्वार्तिहिक्काश्वासारुचिज्वरैः ।
क्रमेणाल्पेऽनुषज्येत पित्ते शाखा समाश्रिते ।
बर्हितित्तिरिदक्षाणां रूक्षाम्लैः कटुकैः रसैः ।

शुष्कमूलककौलत्थैर्यूषैश्चान्नानि भोजयेत् ॥
मातुलुङ्गरसं क्षौद्रं पिप्पली मरिचान्वितम् ।
सनागरं पिबेत्पित्तं तथास्येति समाश्रयम् ॥
तथाम्लैः कटुरूक्षोष्णैर्लवणैश्चाप्युपक्रमः ।
आपित्तरागाच्छकृतो वायोश्चाप्रशमाद्भवेत् ॥
स्वस्थानमागते पित्ते पुरीषे पित्तरञ्जिते ।
निवृत्तोपद्रवस्यास्य पूर्वः कामलिको विधिः ॥
यदा तु पाण्डोर्वर्णः स्याद्धरितश्यावपीतकः ।
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुर्ज्वरः ॥
स्त्रीष्वहर्षोऽङ्गमर्दश्च सादस्तृष्णा रुचिभ्रमः ।
हलीमकं तदा तस्य विद्यादनिलपित्ततः ॥
गुडूचीस्वरसक्षीरसाधितं माहिषं घृतम् ।
स पिबेत्त्रिवृतां स्निग्धो रसेनामलकस्य तु ॥
विरिक्तो मधुरप्रायं सेवितोऽनिलपित्तनुत् ।
द्राक्षालेहं स पूर्वोक्तं सर्पींषि मधुराणि च ॥
यापनान् क्षीरवस्तींश्च शीलयेत्सानुवासनान् ।
मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याग्निवृद्धये ॥
कामिकश्चाभया लेहं पिप्पलीं मधु कम्बलाम् ।
पयसा वा प्रयुञ्जीत यथादोषं यथाबलम् ॥
तत्र श्लोकौ । पाण्डोः पञ्चविधस्योक्तं हेतुलक्षणभेषजम् ॥
कामला द्विविधा चैव साध्यासाध्यत्वमेव च ।
तेषां विकल्पो यथान्यो महाव्याधिर्हलीमकः ॥
तस्य चोक्तं समासेन व्यञ्जनं सचिकित्सितम् ।
इति पाण्डुरोगचिकित्सितम् ।

## ऊनविंशोऽध्यायः

अथातो हिक्काश्वासचिकित्सितं व्याख्यास्यामः ।

वेदलोकार्थतत्त्वज्ञमात्रेयमृषिभिः स्तुतम् ॥
अपृच्छत् संशयं धीमानग्निवेशः कृताञ्जलिः ।
य इमे द्विविधाः प्रोक्ताः त्रिदोषाश्च प्रकोपनाः ॥
रोगा नानात्मकास्तेषां कः को भवति दुर्जयः ।
अग्निवेशस्य तद्वाक्यं श्रुत्वा मतिमताम्बरः ॥
उवाच परमप्रीतः परमार्थे विनिश्चयः ।
कामं प्राणहरा रोगा बहवो नतु ते तथा ॥
यथा श्वासश्च हिक्का च प्राणानाशु निरस्य तः ।
अन्यैरप्युपसृष्टस्य रोगैर्जन्तोः पृथग्विधैः ॥
अन्ते सञ्जायते हिक्का श्वासो वा तीव्रवेदनः ।
कफवातात्मका वेतौ पित्तस्थानसमुद्भवौ ॥
हृदयस्य रसादीनां धातूनां चोपशोषणौ ।
तस्मात् साधारणावेतौ मतौ सम सुदुर्जयौ ॥
मिथ्योपचरितौ क्रुद्धौ हतावाशीविषाविव ।
पृथक् पञ्चविधा वेतौ निर्दिष्टौ रोगसंग्रहे ॥
तयोः शृणु समुत्थानं लिङ्गान्येकैकशस्तथा ।
रजसो धूमवाताभ्यां शीतस्थानाम्बुसेवनात् ॥
व्यायामाद्ग्राम्यधर्माध्वरूक्षान्नविषमाशनात् ॥

आमप्रदोषादानाहाद्रौक्ष्यादत्यपतर्पणात् ।
दौर्बल्यान्मर्मणोघाताद्द्वन्द्वात् शुद्ध्यति योगतः ॥
अतीसारज्वरच्छर्दि प्रतिश्याय क्षयक्षतात् ।
रक्तपित्तादुदावर्ताद्विसूच्यलसकादपि ॥
पाण्डुरोगाद्विषाच्चैव प्रवर्त्तेते गदाविमौ ।
निष्पावपाकपिण्याकतिलतैलनिषेवणात् ॥
पिष्टशालूकविष्टम्भि विदाहि गुरुभोजनात् ।
जलजानूपपिशित दध्यामक्षीरसेवनात् ॥
अभिष्यन्द्युपचाराच्च श्लेष्मलानाञ्च सेवनात् ।
कण्ठोरसः प्रतीघाताद्विबन्धैश्च पृथग्विधैः ॥
मारुतः प्राणवाहीनि स्रोतांस्याविश्य कुप्यति ।
उरःस्थः कफमुद्धूय हिक्काश्वासान् करोति सः ॥
घोरान् प्राणोपरोधाय प्राणिनां पञ्चपञ्च च ।
कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता ॥
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ।
आनाहः पार्श्वशूलञ्च पीडनं हृदयस्य च ॥
प्राणस्य च विलोमत्वं श्वासानां पूर्वलक्षणम् ।
प्राणोदकान्नवाहानि स्रोतांसि सकफोऽनिलः ॥
हिक्काः करोति संरुद्ध तासां लिङ्गं पृथक् शृणु ।
क्षीणमांसबलप्राणतेजसः सकफोऽनिलः ॥
गृहीत्वा सहसा कण्ठमुच्चैर्घोषवतीं भृशम् ।
करोति सततं हिक्कामेकहि त्रिगुणां तथा ॥
प्राणःस्रोतांसि मर्माणि संरुद्ध्योष्माणमेव च ।
संज्ञामुष्णाति गात्राणि स्तम्भं सञ्जनयत्यपि ॥

मार्गं चैवान्नपानानां कण्ठश्लेष्महतस्मृतेः।
सास्तु विप्लुतनेत्रस्य स्तब्धशङ्खच्युत भ्रुवः॥
शक्तिजल्पप्रलापस्य निर्वृतिं नाधिगच्छतः।
महाशूला महावेगा महाशब्दा महाबला॥
महाहिक्केति सा नृणां सद्यः प्राणहरा मता।
हिक्कते यः प्रवृद्धस्तु कृशो दीनमना नरः।
जर्जरेणोरसा सर्वं गम्भीर मनुनादयन्।
संजृम्भन् संक्षिपंश्चैव तथाङ्गानि प्रसारयन्॥
पार्श्वे चोभे समा यस्य कूजनस्तम्भन गर्दितः।
नाभेः पक्वाशयाद्वापि हिक्काचास्योपजायते॥
क्षोभयन्ती भृशं देहं रमयन्ती च ताम्यतः।
कण्ठुश्छ्वासमार्गं तु प्रणष्ट बलचेतसः।
गम्भीर नाम्ना सा तस्य हिक्का प्राणान्तिकी मता॥
व्यपेते जायते हिक्का यान्नपाने चतुर्विधे।
आहार परिणामान्ते भूयश्च लभते बलम्।
प्रलापवम्यतीसार तृष्णार्तस्य विचेतसः॥
सजृम्भस्य प्लुताक्षस्य शुष्कास्यस्य विनाशिनः।
पर्शाध्मातस्य हिक्काया जत्रुमूलादसन्तता॥
सा व्यपेतेति विज्ञेया हिक्का प्राणोपरोधिनी।
क्षुद्रवातो यदा कोष्ठा द्व्यायामपरिवर्द्धितः॥
कण्ठे प्रपद्यते हिक्कां तदा क्षुद्रां करोति सः।
अतिदुःखा न सारोरःशिरोमर्मप्रबाधिनी॥
सर्वोच्छ्वासान्नपानानां मार्गमाहत्य तिष्ठति।
त्रुत्रिसाशास्यतो याति भुक्तमात्रे च मार्दवम्॥

यतः प्रवर्तते पूर्वं तत एव निवर्तते।
हृदयं क्लोमकण्ठञ्च तालुकञ्च समाश्रिता ॥
मृद्वी सा क्षुद्रहिक्केति नृणां साध्या प्रकीर्तिता।
सहसात्यम्बुव ह्रतैः पानान्नैः पीड़ितोऽग्निलः ॥
ऊर्द्ध्वं प्रपद्यते कोष्ठात् मद्यैर्वाति मदप्रदैः।
तथातिरोष भाष्याध्व भारात्ति परिवर्तनैः ॥
वायुः कोष्ठगतो धावन् पानभोज्य प्रपीड़ितः।
उरः स्रोतः समाविश्य कुर्याद्धिक्कां ततोऽन्नजां ॥
तथाश्नन् रसम्बद्धं क्षुवन् चार्त्तिं स हिक्कते।
न मर्मबाधाजननी नेन्द्रियाणां प्रबाधिनी ॥
हिक्का पीते तथा भुक्ते शमं याति च सानुगा।
आमसञ्चित दोषस्य भक्तच्छेद् च्रतस्य च ॥
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः।
आमाशयात् समुत्पन्ना हिक्का हन्त्याशु जीवितम् ॥
यमिका च प्रलापार्त्ति तृष्णामोह समन्विता।
अक्षीणस्याप्यदीनस्य स्थिरधात्विन्द्रियस्य यः।
तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥
यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः।
विष्वग्व्रजति संरुद्धः तदा श्वासान् करोति सः ॥
उद्धूयमान वातो यः शब्दवद्दुःखितो नरः।
उच्चैःश्वसिति संरुद्धो मत्तर्षभ इवा निशम् ॥
प्रणष्ट ज्ञान विज्ञान स्तथा विभ्रान्त लोचनः।
विवृता आननो बद्ध मूत्रवर्चो विशीर्णवाक् ॥
दीनः प्रश्वसितं चास्य दूराद्विज्ञायते भृशम

महाश्वासोपसृष्टः स क्षिप्रमेव प्रपद्यते॥
दीर्घं श्वसिति यस्तूर्ध्वं न च प्रत्याहरत्यधः।
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः॥
ऊर्ध्वदृष्टिर्विपश्यंश्च विभ्रान्ताक्षस्ततस्ततः।
प्रमुह्यन् वेदनार्तश्च शुष्कास्योऽतिनिपीडितः॥
ऊर्ध्वश्वासे प्रवृत्ते च यस्याधःश्वासरोध भाक्।
ताम्यतो भ्राम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून्॥
यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः।
न वा श्वसिति दुःखार्तो मर्मच्छेदरुगर्दितः।
आनाह स्वेदमूर्च्छार्तो दह्यमानेन वस्तिना।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैक लोचनः॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः।
छिन्नश्वासेन संच्छिन्नः स शीघ्रं प्रजहात्यसून्॥
प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च॥
करोति पीनसं तेन रुद्धोघुर्घुरकं तथा।
अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीडकम्॥
प्रताम्यत्यति वेगाच्च कासते सन्निरुध्यते।
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः॥
श्लेष्मण्यमुच्यमाने च भृशं भवति दुःखितः।
तस्यैव च विमोक्षान्ते मुहूर्त्तं विन्दते सुखं॥
अथास्योद्ध्वंसते कण्ठः कृच्छ्रात् शक्नोति बाषितुं।
न चापि निद्रां लभते शयानः श्वासपीडितः॥

पार्श्वं तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्य मुष्णं चैवाभि नन्दति ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्तिमान् ।
विशुष्कास्यो मुहुः श्वासो मुहुश्चैवाधमत्यपि ।
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्चाभिवर्धते ॥
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ।
ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकन्तु तम् ॥
उदावर्त्त रजो जीर्ण क्लिन्नकाय निरोधजः ।
तमसा वर्द्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति ॥
मज्जतस्तमसो वास्य विद्यात् प्रतमकन्तु तत् ।
कर्षायासोद्भवः कोष्ठे क्षुद्रवात उदीरयेत् ॥
क्षुद्रवातेन सोऽत्यर्थं दुःखेनाङ्ग प्रबाधकः ॥
हिनस्ति न स गात्राणि न च दुःखा यथेतरे ।
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥
नेन्द्रियाणां व्यथां नापि काञ्चिदुत्पादयेद्रुजम् ।
असाध्य उक्तो वलिनः सर्वे चा व्यक्तलक्षणाः ॥
इति श्वासाः समुद्दिष्टा हिक्काश्चैव स्वलक्षणैः ।
एतां प्राणहरा वर्ज्या घोरास्ते ह्याशुकारिणः ॥
भेषजैः साध्ययाप्यांस्तु क्षिप्रं भिषगुपाचरेत् ।
उपेक्षिता दहेयुर्हि शुष्कं कक्षमिवानलाः ॥
कारणस्थानमूलैक्यादेकमेव चिकित्सितम् ।
द्वयोरपि यथा दृष्ट मृषिभिस्तन्निबोधत ॥
हिक्का श्वासार्दितं स्निग्धैरादौस्वेदैरुपाचरेत् ।
युक्तं लवणतैलेन नाडी प्रस्तरसङ्करैः ॥

तैरस्य ग्रथितः श्लेष्मा स्रोतःस्वभिविलीयते ।
खानि मार्दवमायान्ति ततो वातानुलोमता ॥
यथाद्रिकुञ्जेष्वर्कांशुतप्तं विष्यन्दते हिमम् ।
स्थिरः श्लेष्मा शरीरस्थः स्वेदैर्विष्यन्दते तथा ॥
स्विन्नं ज्ञात्वा ततस्तूर्णं भोजयेत् स्निग्धमोदनम् ।
मत्स्यानां शूकराणां वा रसैर्दध्युत्तरेण वा ॥
ततः श्लेष्मणि संवृद्धे वमनं पाययेत्तु तम् ।
पिप्पलीसैन्धवक्षौद्रैर्युक्तं वाताविरोधि यत् ॥
निर्हृते सुखमाप्नोति सकफे दुष्टविग्रहे ।
स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ॥
लीनश्चेद्दोषशेषः स्यात्तं धूपैर्निर्हरेद्बुधः ।
हरिद्रापत्रमेरण्डमूलं लाक्षां मनःशिलाम् ।
सदेवदार्वलं मांसीं पिष्ट्वा वर्त्तिं प्रकल्पयेत् ।
तां घृताक्तां पिबेद्धूमं यवैर्वा घृतसंयुतैः ॥
मधूच्छिष्टं सर्जरसं घृतं मल्लकसंपुटे ।
कृत्वा धूमं पिबेत् शृङ्गं वालं वा स्नायु वा गवाम् ॥
श्योनाकवर्धमानानां नाडीं शुष्कां कुशस्य वा ।
पद्मकं गुग्गुलुं लोहं शल्लकीं वा घृताप्लुताम् ॥
क्षतक्षीणातिसारासृक्पित्तदाहानुबन्धजान् ।
मधुरस्निग्धशीताद्यैर्हिक्काश्वासानुपाचरेत् ॥
न स्वेद्याः पित्तदाहार्त्ता रक्तस्वेदातिवर्त्तिनः ।
क्षीणधातुबला रूक्षा गर्भिण्यश्चापि पित्तलाः ॥
कोष्णैः कासमुरःकण्ठं स्नेहसेकैः सशर्करैः ।
उत्कारिकोपनाहैश्च तेषां मृदुभिराचरेत् ॥

तिलोमामाषगोधूमचूर्णैर्वातहरैः सह ।
स्नेहस्वेदोत्कारिकासाम्लैः सक्षीरैर्वाहृता हिता ॥
नवज्वरामदोषेषु रूक्षस्वेदं विलङ्घनम् ।
समीक्ष्योल्लेखनं वापि कारयेल्लवणाम्बुना ॥
अभियोगोद्भवं वापि दृष्ट्वा वातहरैर्भिषक् ।
रसाद्यैर्नातिशीतोष्णैरभ्यङ्गैश्च शमं नयेत् ॥
उदावर्त्ते तथाध्माने मातुलुङ्गाम्लवेतसैः ।
हिङ्गु पीलुविडैश्चात्रं युक्तं स्यादनुलोमनम् ॥
हिक्का श्वासामयोह्येको बलवान् दुर्बलोऽपरः ।
कफाधिके बलस्थे च वमनं सविरेचनम् ॥
कुर्य्यात् पथ्याशिने धूमलेहादिशमनं ततः ।
वाह्लिकान् दुर्बलान् वालान् वृद्धांश्चानिलसूदनैः ॥
तर्पयेदेव शमनैः स्नेहयूषरसादिभिः ।
अनुत्क्लिष्टकफास्विन्न दुर्बलानां विशोधनात् ॥
वायुर्लब्धास्पदो मर्मसंशोष्याशु हरेदसून् ।
दृढ़ान् बहुकफांस्तस्माद्रसैरानूपवारिजैः ॥
तृप्तान् विशोधयेत् स्विन्नान् वृंहयेदितरान् भिषक् ।
वर्हितित्तिरिदक्षाश्च जाङ्गलाश्च मृगद्विजाः ॥
दशमूलरसे सिद्धाः कौलत्थे वा रसे हिताः ।
निदिग्धिकां विल्वमध्यं कर्कटाख्यां दुरालभां ॥
शिकण्ठकां गुडूचीञ्च कुलत्थांश्च सचनकान् ।
जले पक्वा रसः पूतो घृतभृष्टः सनागरः ॥
सञ्चोषलवणस्नेहः स्याद्यूषो भोजने हितः ।
रास्नामूलं पञ्चमूलं फलं मुद्गान् सचिनकान् ॥

पक्वाम्भसि रसे तस्मिन् यूषः साध्यश्च पूर्ववत् ।
पल्लवान् मातुलुङ्गस्य निम्बस्य कुटजस्य च ॥
पक्वा मुद्गांश्च सव्योषान् क्षारयूषान् विपाचयेत् ।
दत्त्वा सलवणं क्षारं शिग्रूणि मरिचानि च ॥
युक्त्या स साधितो यूषो हिक्का श्वासविकारनुत् ।
कासमर्दाग्र पत्राणां यूषः सौभाञ्जनस्य च ।
शुष्कमूलकयूषश्च हिक्काश्वासनिवारणः ॥
सदधि व्योष सर्पिष्को यूषो वार्ताकजो हितः ।
शालिषष्टिकगोधूमयवान्नयवनामि च ॥
हिङ्गु सौवर्चला जाजी जीवन्ती व्योष दाडिमैः ।
स कर्कटाह्वये सिद्धा यवागूः श्वासहिक्किनाम् ॥
दशमूलशटी रास्ना पिप्पलीमूलपौष्करैः ।
शृङ्गी तामलकी भार्गी गुडूची नागरङ्घ्रिभिः ॥
यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः ।
कासहृद्ग्रहपार्श्वार्ति हिक्का श्वासप्रशान्तये ॥
पुष्कराह्वशटी व्योष मातुलुङ्गाम्लवेतसैः ।
योजयेदन्नपानानि ससर्पिर्विडहिङ्गुभिः ॥
दशमूलस्य वा क्वाथमथवा देवदारुणः ।
तृषितो मदिरां वापि हिक्का श्वासी पिबेन्नरः ॥
पाठां मधुरसां रास्नां सरलं देवदारु च ।
प्रक्षाल्य जर्जरीकृत्य सुरामण्डेन वासयेत् ॥
तं मन्दलवणं कृत्वा भिषक् प्रसृतसम्मितम् ।
पाययेत ततो हिक्का श्वासश्चैवोपशाम्यति ॥
हिङ्गु सौवर्चलं कोलं समुद्रं पिप्पलीं बलाम् ।

मातुलुङ्गरसे पिष्टमारनालेन वा पिवेत् ॥
सौवर्चलं नागरञ्च भार्गीं द्विः शर्करायुतम् ।
उष्णाम्बुना पिवेदेतद्धिक्का श्वासविकारनुत् ॥
भार्गीं नागरयोः कल्कं मरिचक्षारयोस्तथा ।
पीतद्रु चित्रका स्फोता मूर्वाणां चाम्बुना पिवेत् ॥
मधूलिकातु गाचौरी शर्करा पिप्पली तथा ।
उत्कारिके घृते सिद्धा श्वासे पित्तानुवन्धजे ॥
श्वाविधः शशमांसञ्च शशकस्य च शोणितम् !
पिप्पली घृतसिद्धानि श्वासे वातानुवन्धजे ॥
सुवर्चला रसो दुग्धं घृतं त्रिकटुकायुतम् ।
शाल्योदनस्यानुपानं वातपित्तानुगे परम् ॥
शिरीषपुष्पस्वरसः सप्तपर्णस्य वा पुनः ।
पिप्पली मधुसंयुक्तः कफपित्तानुगे मतः ॥
मधुकं पिप्पलीमूलं गुड़ोगोऽश्व शकृद्रसः ।
घृतं चौद्रञ्च तच्छ्वासे रौच्याभिष्यन्दजे शुभम् ॥
खराश्वोष्ट्रवराहाणां मेषस्य च गजस्य च ।
शकृद्रसं बहुकपि चैकैकं मधुना पिवेत् ॥
चारञ्चाप्यश्वगन्धाया लेहयेत् चौद्रसर्पिषा ।
मयूरपादं नालं वा शकलं शल्लकस्य वा ॥
श्वाविच्छाण्डकचाषाणां रोमाणि कुररस्य वा ।
शृङ्गिरकदिशफानां वा चर्माश्वीनि खुरांस्तथा ॥
सर्वाण्येकैकशो वापि दग्ध्वा चौद्रघृतान्वितान् ।
चूर्णं लीढ्वा जयेत् कासं हिक्कां श्वासञ्च दारुणम् ॥
एते हि कफसंरुद्ध गतिप्राणप्रकोपजाः ।

तस्मात्तन्मार्गशुद्ध्यर्थं लेह्या योज्या न निष्कफे ॥
सुतरां मार्गसंरोधाद्धिक्का समुदीर्य्यते।
यथा तथा निलस्तस्य मार्गसिद्धौ यतेत ना ॥
पुष्कराह्वं शठीं मुस्तं जीवन्तीं सुरसं त्वचम्।
एलां तामलकीं शुण्ठीं चण्डामगुरुपिप्पलीम् ॥
वालकञ्च समं चूर्णं कृत्वाष्टगुणशर्करम्।
सर्वथा तमके श्वासे हिक्कायाञ्च प्रयोजयेत् ॥
छर्द्दनं काससमानस्य स्वरभेदे प्रताम्यतः।
वातश्लेष्महरैर्योज्यं तमके तु विरेचनम् ॥
मुक्ताप्रवालवैदूर्य्य शङ्खस्फटिकमञ्जनम्।
सुसारगल्लकाचानि सूक्ष्मैला लवणद्वयम् ॥
ताम्रायो रजसौरूपत्रं ससौगन्धिकमेव वा।
ज्योतीरसः शणाद्बीजमपामार्गाश्च तण्डुलाः ॥
एषां पाणितलाच्चूर्णात्तुल्यानां चौद्रसर्पिषा।
हिक्कां श्वासञ्च कासञ्च लीढ़माशु नियच्छति।
अञ्जनात्तित्तिरं काचं नीलिकं पुष्पकं तमः ॥
पैल्लं कण्डूमभिष्यन्दं मन्दञ्च तत् प्रणाशयेत्।
शठी पुष्करमूलानां चूर्णमामलकस्य च।
मधुना संयुतं लेह्यं चूर्णं वायो रजोमयम् ॥
सशर्करां तामलकीं द्राक्षां गोश्व शक्रद्रसम्।
तुल्यं गुडं नागरञ्च नाशयेत् पाययेत वा ॥
लशुनस्य पलाण्डोर्वा रसं गृञ्जनकस्य वा।
नावयेच्चन्दनं वापि नारी चीरेण संयुतम् ॥
सुखोष्णं घृतमण्डं वा सैन्धवेनावचूर्णितम्।

नावयेन्मक्षिका विष्ठामलक्तकरसेन वा ॥
स्त्रियाः स्तन्येन सिद्धं वा सर्पिर्मधुरकैरपि ।
पीतं नस्तो निषिक्तं वा सद्यो हिक्कां नियच्छति ॥
पिप्पली मधुयुक्ता वा रसो धात्री कपित्थयोः ।
लाजा लाक्षा मधु द्राक्षा पिप्पल्यश्च शकृद्रसान् ॥
लिह्यात्कोलं मधु द्राक्षा पिप्पली नागराणि वा ।
शीताम्बुसेकः सहसा त्रासो विस्मापनं भयम् ॥
क्रोधहर्षप्रियोद्वेगा हिक्का प्रच्यवना मताः ।
हिक्का श्वासविकाराणां निदानं यत्प्रकीर्तितम् ॥
वर्ज्यमारोग्य कामैस्तद्धिक्का श्वासविकारिभिः ।
हिक्का श्वासानुबन्धा ये शुष्कोरः कण्ठतालुकाः ॥
प्रकृत्या रूक्षदेहाश्च सर्पिर्भिस्तानुपाचरेत् ।
दशमूलरसे सर्पिर्दधिमण्डे च साधयेत् ॥
कृष्णासौवर्चलक्षारवयःस्थ हिङ्गुचोरकैः ।
कायस्थया च तत्पानाद्धिक्का श्वासौ प्रणाशयेत् ॥
तेजोवत्य भया कुष्ठं पिप्पली कटुरोहिणी ।
भूतीकं पौष्करं मूलं पलाशश्चित्रकः शठी ॥
सौवर्चलं तामलकी सैन्धवं विल्वपेशिका ।
तालीसपत्रं जीवन्ती वचा तैरक्षसम्मितैः ॥
हिङ्गुपादैर्घृतप्रस्थं पचेत्तोये चतुर्गुणे ।
एतद्यथाबलं पीत्वा हिक्का श्वासौ जयेन्नरः ॥
शाखा निलार्शो ग्रहणी हृत्पार्श्वरुज एव वा ।
मनःशिला सर्जरसलाक्षारजनि पद्मकैः ॥
मञ्जिष्ठैलैश्च कर्षांशैः प्रस्थः सिद्धो घृताद्धितः ।

जीवनीयोपसिद्धं वा सक्षौद्रं लेहयेद्घृतम्॥
चूर्णपर्णी चाधिकं वापि पिबेद्वृषघृतं तथा।
यत्किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम्॥
भेषजं पानमन्नं वा तद्धितं श्वासहिक्किने।
वातकृद्वा कफहरं कफकृद्वा निलापहम्॥
कार्यं नैकान्तिकं ताभ्यां प्रायः श्रेयोऽनिलापहम्।
सर्वेषां बृंहणो ह्यल्पः शक्यश्च प्रायशो भवेत्॥
नात्यर्थं शमनोपायो भृशः शक्यश्च कर्शने।
तस्मात् शुद्धानशुद्धांश्च शमनैर्बृंहणैरपि॥
हिक्काश्वासार्दितान् जन्तून् प्रायशः समुपाचरेदिति।
तत्र श्लोकः। दुर्जयत्वे समुत्पत्तौ क्रियैकत्वे च कारणम्॥
लिङ्गं पथ्यञ्च हिक्कानां श्वासानां चेह दर्शितम्।
इति हिक्काश्वासचिकित्सितम्॥

---

विंशोऽध्यायः।

अथातः कासचिकित्सितं व्याख्यास्यामः।

तपसा यशसा धृत्या श्रिया च परयान्वितः॥
आत्रेयः कासशान्त्यर्थं सिद्धं प्राह चिकित्सितम्।
वातादिभ्यस्त्रयो ये च क्षतजः क्षयजस्तथा॥

पञ्चैते स्युर्नृणां कासा वर्द्धमानाः क्षयप्रदाः ।
पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ॥
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ।
अधः प्रतिहतो वायुरूर्द्धस्रोतः समाश्रितः ॥
उदानभावमापन्नः कण्ठे सक्तस्तथोरसि ।
आविश्य शिरसः खानि सर्वाणि प्रतिपूरयन् ॥
आभञ्जन्नाक्षिपन् देहं हनुमन्ये तथाक्षिणी ।
नेत्रे पृष्ठमुरः पार्श्वे निर्भञ्जन्स्तम्भयन् ततः ॥
शुष्को वा सकफो वापि कसनात् कास उच्यते ।
प्रतिघातविशेषेण तस्य वायोः सरंहसः ॥
वेदनाशब्दवैषम्यं कासानामुपजायते ।
रूक्षशीत कषायाल्प प्रमितानशनस्त्रियः ॥
वेगधारणमायासो वातकासप्रवर्त्तकाः ।
हृत्पार्श्वोरः शिरः शूलस्वरभेदकरो भृशम् ॥
शुष्कोरः कण्ठवक्त्रस्य हृष्टलोम्नः प्रताम्यतः ।
निर्घोषोऽस्तनतो दैन्यदौर्बल्यक्षय मोहकृत ॥
शुष्ककासः कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत् ।
स्निग्धाम्ललवणोष्णैश्च भुक्तमात्रे प्रशाम्यति ॥
ऊर्द्ध्ववातस्य जीर्णेऽन्ने वेगवान् मारुतो भवेत्।
कट्वौष्ण्यविदाह्यम्लक्षाराणामति सेवनम् ॥
पित्तकासकरं क्रोधः सन्तापश्चाग्निसूर्यजः ॥
पीतनिष्ठीवनाक्षित्वं तिक्तास्यत्वं स्वरामयः ।
उरो धूमायनं तृष्णा दाहो मोहो रुचिर्भ्रमः ॥
प्रततं कासमानश्च ज्योतींषीव च पश्यति ।

श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिके ॥
गुर्व्वभिष्यन्दि मधुरस्निग्धस्वप्नाविचेष्टनैः।
वृद्धः श्लेष्मानिलं रुद्ध्वा कफकासं करोति हि ॥
मन्दाग्नित्वारुचिच्छर्द्दि पीनसोत्क्लेशगौरवैः।
लोमहर्षास्य माधुर्य्यक्लेदसं सदनैर्युतम् ॥
बहलं मधुरं स्निग्धं निष्ठीवति घनं कफम्।
कासमानोऽतिरुग्वचः सम्पूर्णमिव मन्यते ॥
अतिव्यवाय भाराध्व युद्धाश्व गजविग्रहैः।
रूक्षस्योरः क्षतं वायुः गृहीत्वा कासमावहेत् ॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्।
रुजग्मानेन कण्ठेन भिन्नेनेव चोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना।
दुःखस्पर्शेन शूलेन भेदपीड़ाभितापिना ॥
पर्व्वभेदं ज्वरश्वास तृष्णा वैस्वर्य्यपीड़ितः।
पारावत इवा कूजन् कासवेगात् क्षतोद्भवात् ॥
विषमा सात्म्यभोज्याति व्यवायाद्वेगनिग्रहात्।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥
कुपिताः क्षयजं कासं कुर्युर्द्देहक्षयप्रदम्।
दुर्गन्धं हरितं रक्तं ग्रथितं कफमस्यति ॥
स्थानादुत्कासमानस्य हृदयं मन्यते च्युतम्।
अकस्मादुष्णशीतार्त्तो बह्वाशी दुर्ब्बलः कृशः ॥
स्निग्धाच्छमुखवर्णत्वक् श्रीमद्दर्शनलोचनैः।
पाणिपादतलैः श्लक्ष्णैः सततं सूयको घृणी ॥
ज्वरो मिश्राकृतिस्तस्य पार्श्वरुक्पीनसोऽरुचिः।

स्वरभेदो निमित्तञ्च भिन्नं हृत्तपुरीषता ॥
इत्येष क्षयजः कासः क्षीणानां देहनाशनः ।
याप्यो वलवतां वा स्यात्याप्यस्त्वेवं क्षतोत्थितः ॥
कदाचिदपि सिद्ध्येतामेतौ पादगुणात्त्वितौ ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्त्तितः ॥
त्रीन् साध्यान् साधयेत् पूर्वान् पथ्यैर्याप्यांश्च यापयेत् ।
चिकित्सामत ऊर्द्धन्तु शृणु कासनिवर्हिणीम् ॥
रूक्षस्यानिलजं कासं आदौ स्नेहैरुपाचरेत् ।
सर्पिर्भिर्वस्तिभिः पेया यूषक्षीररसादिभिः ॥
वातघ्नैः संस्कृतैः स्निग्धैः धूमैर्लेहैश्च युक्तितः ।
अभ्यङ्गैः परिषेकैश्च स्निग्धैः स्वेदैश्च बुद्धिमान् ॥
वस्तिभिर्बद्धविड्वातं शुष्कोर्ध्वञ्चोर्ध्वभक्तिकैः ।
घृतैः सपित्तं सकफं जयेत् स्नेहविरेचनैः ॥
कण्टकारी गुडूचीभ्यां पृथक् त्रिंशत्फलाद्रसे ।
प्रस्थः सिद्धो घृताद्वात कासनुद्वह्निदीपनः ॥
पिप्पली पिप्पली मूले तव्यचित्रकनागरैः ।
धान्यपाठा वचा रास्ना यष्ट्याह्व क्षारहिङ्गुभिः ॥
कोलमात्रैर्घृतप्रस्थाद्दशमूलीरसाढके ।
सिद्धां चतुर्थिकां पीत्वा पेयां मण्डं पिवेदनु ॥
तत्कासकामहृत्पार्श्व ग्रहणी दोषगुल्मनुत् ।
तूषणं त्रिफलां द्राक्षां काश्मर्याणि परूषकम् ॥
द्वे पाठे सरलं व्याघ्रीं स्वगन्धां चित्रकं शठीम् ।
ऋद्धिं तामलकीं मेदां काकनासां शतावरीम् ॥
त्रिकण्टकां विदारीञ्च पिष्ट्वा कर्षसमं घृतात् ।

प्रस्थं चतुर्गुणक्षीरं सिद्धं कासहरं पिबेत् ॥
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वरोगनुत् ।
कामलार्शोऽनिलाष्ठीलाक्षतशोषक्षयापहम् ॥
त्र्यूषणं नाम विख्यातमेतद्‌ घृतमनुत्तमम् ।
द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम् ॥
पलिकां मालिकां शांस्तु कुलत्थान् बदरं यवान् ।
तुलार्धं चाजमांसस्य पादशेषेण तेन च ॥
घृताढकं समक्षीरं जीवनीयैः पलोन्मितैः ।
सिद्धं तद्दशभिः कल्कैः तस्य पानानुवासनैः ॥
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ।
पञ्चकासान् शिरःकम्पं शूलं वंक्षणयोनिजम् ॥
सर्वांश्चाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत् ।
विडङ्गं नागरं रास्नां पिप्पली हिङ्गुसैन्धवैः ॥
भार्गीं क्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ।
सकफेऽनिलजे कासे श्वासहिक्काहताग्निषु ॥
द्वौ क्षारौ पञ्चकोलानि पञ्चैव लवणानि च ।
शठी नागरकोदीच्यं कल्कं वा वस्त्रगालितम् ॥
पाययेत घृतोन्मिश्रं वातकासनिवर्हणम् ।
दुरालभां शठीं द्राक्षां शृङ्गवेरां सितोपलाम् ॥
लिह्यात् कर्कटशृङ्गीश्च कासे तैलेन वातजे ।
दुःस्पर्शां पिप्पलीं मुस्तं भार्गीं कर्कटकीं शठीम् ॥
पुराणगुडतैलाभ्यां चूर्णितं वापि लेहयेत् ।
विडङ्गं सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिलाम् ॥

मधुसर्पियुतं कासं हिक्का श्वासं जयेल्लिहन्।
चित्रकं पिप्पलीमूलं व्योषं हिङ्गु दुरालभाम्॥
शठीं पुष्करमूलञ्च श्वेयसीं सुरसां वचाम्।
भार्गीं छिन्नरुहां रास्नां शृङ्गीं द्राक्षाञ्च कार्षिकान्॥
कल्कानर्द्धतुला क्वाथे निदिग्धिकाः पलविंशतिम्।
दत्त्वा मत्स्यण्डिकायाश्च घृताच्च कुड़वं पचेत्॥
सिद्धं शीतं पृथक् क्षौद्रपिप्पली कुड़वान्वितम्।
लेहयेत् कासहृद्रोग श्वासगुल्मनिवारणम्॥
दशमूलीं स्वयं गुप्तां शङ्खपुष्पीं शठीं बलाम्।
हस्तिपिप्पल्यपामार्ग पिप्पलीमूलचित्रकान्॥
भार्गीं पुष्करमूलञ्च द्विपलांश यवाढ़कम्।
हरीतकी शतञ्चैकं जलपञ्चाढ़के पचेत्॥
यवे स्विन्ने कषायन्तं पूतं तच्चाभयाशतम्।
पचेत् गुड़तुलां दत्त्वा कुड़वञ्च पृथक् घृतात्॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लेह्यं द्वे चाभये नित्यमतः खादेद्रसायनात्॥
तद्वली पलितं हन्ति वर्णायुर्बलवर्द्धनम्।
पञ्चकासान् क्षयं कासं हिक्कां सविषमज्वराम्॥
हन्यात्तथार्शो ग्रहणी हृद्रोगा रुचिपीनसान्।
अगस्त्यविहितं श्रेष्ठं रसायनमिदं शुभम्॥
सैन्धवं पिप्पलीं भार्गीं शृङ्गवेरं दुरालभाम्।
दाड़िमाम्ल तथोष्णेन भार्गी नागरमम्बुना॥
पिवेत् बदरसारं वा मदिरा दधिमस्तुभिः।
अथवा पिप्पलीकल्कं घृतभृष्टं स सैन्धवम्॥

शिरसः सदने स्रावे नासाया हृदि ताम्यति।
कासप्रतिश्याय रुषे धूमं वैद्यः प्रयोजयेत्॥
दशाङ्गुलोन्मितां नाडीं अथवाष्टाङ्गुलोन्मिताम्।
शरावसंपुटच्छिद्रे कृत्वा जिह्मां विचक्षणः॥
वैरेचनं मुखेनैव कासवान् धूममापिबेत्।
तमुरः केवलं प्राप्तं मुखेनैवोद्वमेत् पुनः॥
सन्नस्य तेनाग्रादिजिष्यश्लेष्माणमुरसि स्थितम्।
निष्कृष्य शमयेत् कासं वातश्लेष्मो भयोद्भवम्॥
मनःशिलासयष्ट्याह्व मांसी मुस्तेङ्गुदैः पिबेत्।
धूमं तस्यानु च क्षीरं सुखोष्णं सगुडं पिबेत्॥
एष कासान् पृथग्दोषसन्निपातोद्भवान् जयेत्।
प्रसह्य परिसंसिद्धा नन्यैर्योगशतैरपि॥
प्रपुण्डरीकं मधुकं शार्ङ्गष्टाले मनःशिलाम्।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम्॥
कृत्वा वर्त्तिं पिबेद्धूमं क्षौमश्चैलानुवर्त्तिताम्।
घृताक्ता मनु च क्षीरं गुडोदकमथापि वा॥
मनःशिलैलामरिचसाराञ्जनकुटन्नटैः।
वंशलोचनशैवालक्षौमनक्तकरोहिषैः॥
पूर्वकल्पेन धूमोऽयं सानुपानो विधीयते।
अलं मनःशिला तद्वत् पिप्पली नागरैः सह॥
त्वगेङ्गुदी दृहत्यौ द्वे तालमूलं मनःशिला।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः॥
ग्राम्या नूपौदकैः शालियवगोधूमषष्टिकान्।
रसैर्मांसात्मगुप्तानां यूषैर्वा दापयेद्धितान्॥

यवानी पिप्पलीबिल्वमध्य नागरचित्रकैः ।
रास्ना जाजी पृथक् पर्णी पलाशशटिपौष्करैः ॥
स्निग्धाम्ललवणां सिद्धां पेयामनिलजे पिबेत् ।
कटी हृत्पार्श्वकोष्ठार्त्ति श्वासहिक्काप्रणाशनीम् ॥
दशमूलरसे तद्वत् पञ्च कोलगुड़ान्विताम् ।
पिबेत् समतिलां पेयां क्षीरे वापि ससैन्धवाम् ॥
मत्स्यकौक्कुटवाराहैरामिषैर्वा घृतान्वितैः ।
सिद्धां ससैन्धवां पेयां वातकासी पिबेन्नरः ॥
वास्तुकं वायसी शाकं मूलकं सुनिषण्णकम् ।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षु रसगौड़िकाः ॥
दध्यारनालाम्लकफलप्रसन्नाः पानमेव च ।
शस्यते वातकासे तु स्वाद्वम्ललवणानि च ॥
पैत्तिके सकफे कासे वमनं सर्पिषा हितम् ।
तथा मदनकाश्मर्य्यमधूक क्वथितैर्जलैः ॥
यष्ट्याह्वफलकल्कैर्वा विदारीक्षुरसायुतैः ।
हृतदोषस्ततः शीतं मधुरञ्च क्रमं भजेत् ॥
पैत्ते तनुकफे कासे त्रिवृतां मधुरैर्युताम् ।
दद्याद् घनकफे तिक्तैर्विरेकार्थं युतां भिषक् ॥
स्निग्धशीतस्तनुकफे रूक्षशीतः कफे घने ।
क्रमः कार्य्यः परं भोज्यैः स्नेहैर्लेहैश्च शस्यते ॥
शृङ्गाटकं पद्मबीजं नीली साराणि पिप्पली ।
पिप्पली मुस्तयष्ट्याह्व द्राक्षामूर्वा महौषधम् ॥
लाक्षामृतफला द्राक्षा त्वक् क्षीरी पिप्पलीसिताः ।
पिप्पली पद्मको द्राक्षा बृहत्याश्च फलाद्रसः ॥

खर्जूरं पिप्पली द्राक्षा श्वदंष्ट्रा चेति पञ्च ते ।
घृतक्षौद्रयुता लेह्याः श्लोकार्द्धैः पित्तकासिनाम् ॥
शर्करा चन्दनद्राक्षा पथ्या धात्री फलोत्पलैः ।
पैत्ते समुस्तमरिच सकफे सघृतेऽनले ॥
मृद्वीकार्द्धशतं त्रिंशत् पिप्पलीशर्करा पलम् ।
लेहयेन् मधुना गोर्वा क्षीरपस्य शकृद्रसम् ॥
त्वगेला व्योषमृद्वीका पिप्पली मूलपौष्करैः ।
लाजा मुस्तशटी रास्ना धात्री फलविभीतकैः ॥
शर्करा क्षौद्रसर्पिर्भिर्लेहः कासविनाशनः ।
श्वासं हिक्कां क्षतञ्चैव हृद्रोगञ्च प्रणाशयेत् ॥
पिप्पल्यामलकं द्राक्षां लाक्षां लाजान् सितोपलाम् ।
पिबेद्वा मधुसंयुक्तं पित्तकास हरं परम् ॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥
घनश्लेष्मणि लेहास्तु तिक्तका मधुसंयुताः ।
शालयः स्युस्तनुकफे षष्टिकश्च रसादिभिः ॥
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षूणां रसान् पयः ।
सर्वञ्च मधुरं शीतमविदाहि प्रशस्यते ॥
काकोडी बृंहणी मेदा युग्मैः सवृषनागरैः ।
पित्तकासे रसान् क्षीरं यूषांश्चाप्युपकल्पयेत् ॥
शरादिपञ्चमूलस्य पिप्पली द्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥
स्थिरा सिता पृश्निपर्णी श्रावणी बृहती युगैः ।
जीवकर्षभ काकोडी तामलाषष्टिजीरकैः ॥

शृतं पयः पिवेत् कासी ज्वरोदाही चतचयी ।
तज्जं वा साधयेत् सर्पिः सचीरेचुरसं भिषक् ॥
जीवकाद्यैर्मधुरकैः फलैश्चाभिषुकादिभिः ।
कल्कैस्त्रिकार्षिकैः सिद्धे पूतशीते च सर्पिषि ॥
शर्करा पिप्पलीचूर्णं स्त्वक्चीर्यां मरिचस्य च ।
शृङ्गाटकस्य चावाप्य चौद्रगर्भान् पलोन्मितान् ॥
गुड़ान् गोधूमचूर्णैन कृत्वा खादेद्धिताशनः ।
शुक्रासृग्दोषशोषेषु कासे चीणचतेषु च ॥
शर्करा नागरोदीच्यं कण्टकारीं शठीं समाम् ।
पिष्ट्वा रसं पिवेत् पूतं वस्त्रेण घृतमूर्च्छितम् ॥
महिष्यजाविगो चीर धात्री फलरसैः समैः ।
सर्पिः सिद्धं पिवेद्युक्त्या पित्तकासनिवर्हणम् ॥
बलिनं वमनै रादौ शोधयेत् कफकासिनम् ।
यवान्नैः कटुरूचोष्णैः कफघ्नैश्चाप्युपाहरेत् ॥
पिप्पली चारिकैर्यूषैः कौलत्थं मूलकस्य च ।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥
धान्वतैलैस्तथा स्नेहैः तिलसर्षपबिल्वजैः ।
मध्वम्लोष्णाम्बु तक्रं वा मद्यं वा निगदं पिवेत् ॥
पौष्करारग्वधं मूलं पटोलान्तं निशां स्थितम् ।
जलं मधुयुतं पेयं कालेष्वनस्य वा त्रिषु ॥
कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचा भयाम् ।
शण्ठी पर्पटकः शृङ्गी सुराह्वञ्च शृतं जले ॥
मधुहिङ्गु युतं पेयं कासे वातकफात्मके ।
कण्ठरोगे मुखे शूले श्वासहिक्का ज्वरेषु च ॥

पाठां शुण्ठीं शटीं मूर्वां गवाचीं मुस्तपिप्पलीम्।
पिष्ट्वा घर्माम्बुना हिङ्गु सैन्धवाभ्यां युतं पिवेत्॥
नागरातिविषा मुस्तं शृङ्गी कर्कटकस्य च।
हरीतकीं शटीं चैव तेनैव विधिना पिवेत्॥
तैलभृष्टं च पिप्पल्याः कल्काचं ससितोत्पलम्।
पिवेद्वा श्लेषकासघ्नं कुलत्थरससंयुतम्॥
कासमर्दाश्वविट्भृङ्गरजो वार्ताकजा रसाः।
सक्षौद्राः कफकासघ्नाः सुरसस्यासितस्य च॥
देवदारु शटी रास्ना कर्कटाख्या दुरालभा।
पिप्पली नागरं मुस्तं पथ्या धात्री सितोपलाः॥
मधुतैलयुता वेतौ लेह्यौ वातानुगे कफे।
पिप्पली पिप्पलीमूलं चित्रकोहस्ति पिप्पली।
पथ्या तामलकी धात्री भद्रमुस्तानि पिप्पली॥
देवदार्वभया मुस्तं पिप्पली विश्वभेषजम्।
विशाला पिप्पली मुस्तं त्रिवृता चेति लेहयेत्॥
चतुरो मधुरान् वैद्यः कफकासहरान्नरम्।
सौवर्चलाभया धात्री पिप्पली क्षारनागरम्॥
चूर्णितं सर्पिषा वातकफकासहरं पिवेत्।
दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत्॥
पुष्कराह्व शटी विल्व सुरसैर्व्योषहिङ्गुभिः।
पेयं पेयानुपानं तत्कासे वातकफात्मके॥
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च।
समूलफलपत्रायाः कण्टकार्या रसाढके॥
घृतप्रस्थं वला व्योष विडङ्गशटि चित्रकैः।

सौवर्चल यवक्षारपिप्पलीमूल पौष्करैः ॥
वृश्चीक वृहती पथ्या यवानी दाडिमर्द्धिभिः ।
द्राक्षा पुनर्नवा चव्य दुरालभाम्लवेतसैः ॥
शृङ्गी तामलकी भार्गी रास्ना गोक्षुरकैः पचेत् ।
कल्कैः तत्पूर्वकासेषु हिक्का श्वासेषु शस्यते ॥
कण्ठकारी घृतं ह्येतत्कफव्याधि निसूदनम् ।
कुलत्थरसयुक्तं वा पञ्चकोलशृतं घृतम् ॥
धूमांस्तानेव दद्याच्च ये प्रोक्ता वातकासिनाम् ।
कोशातकी फलान् मध्यं पिबेद्वा समनः शिरेः ॥
समकः कफवाते तु स्याच्चेत् पित्तानुबन्धजः ।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥
वाते कफानुबन्धे तु कुर्यात्कफहरां क्रियाम् ।
पित्तानुबन्धयोर्वातकफयोः पित्तनाशनीम् ॥
आर्द्रे विरूक्षणं शुष्के स्निग्धं वातकफात्मके ।
कासे कार्दमपित्ते तु काफजे तिक्तसंयुतम् ॥
कासमत्ययिकं मत्वा क्षतजं त्वरया जयेत् ।
मधुरैर्जीवनीयैश्च बलमांसविवर्द्धनैः ॥
पिप्पली मधुकं पिष्टं कार्षिकं शर्करोपलम् ।
प्रास्थिकं गव्यमाजन्तु क्षीरमिक्षुरसस्तथा ॥
यवगोधूमम्दीका चूर्णमामलकी रसः ।
तैलञ्च प्रसृतांशानि तत्सर्वं मृदुनाग्निना ॥
पचेल्लेहं घृतक्षौद्रयुक्तः सक्षतकासजुत् ।
श्वासहृद्रोगकाशेषु हितो वृद्धाल्परेतसे ॥
पित्तकासक्षतानां च वृत्तिः स्यात् क्षतकारिनाम् ।

क्षीरसर्पिर्मधुप्रायो संसर्गे तु विशेषणम् ॥
वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्हितः ।
तैलैर्मारुतरोगघ्नैः पीड्यमाने च वायुना ॥
क्षत्याश्वातिषु पानं स्याज्जत्रूर्ध्वे यस्य सर्पिषः ।
मद्याहं कासिनां रक्तं ष्ठीवतः सबलेऽनिले ॥
मांसो चितेभ्यः क्षामेभ्यो लावादीनां रसा हिताः ।
तृष्णार्तानां पयश्छागं शरमूलादिभिः शृतम् ॥
रक्ते स्रोतोभ्य आस्याद्वा गते क्षीरघृतं हितम् ।
नस्यं पानं यवागूर्वा श्रान्ते क्षामे हतानले ॥
स्तम्भायामेषु महतीं मात्रां वा सर्पिषः पिबेत् ।
कुर्याद्वा वातरोगघ्नं पित्तरक्ता विरोधि यत् ॥
निवृत्ते क्षतदोषे तु कफे वृद्धतरः शिरः ।
दाल्यते कासिनो यस्य सधूमान्वा पिबेदिमान् ॥
द्वे मेदे मधुकं द्वे च बलेतैः क्षौमलक्तकैः ।
वर्तितैर्धूममापीय जीवनीय घृतं पिबेत् ॥
मनःशिला पलाशाजगन्धात्वक्क्षीरिनागरैः ।
भावयित्वा पिबेत् धूमं शर्करेक्षु गुडोदकम् ॥
पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया ।
ससर्पिष्कं पिबेद्धूमं तित्तिरि प्रतिभोजनम् ॥
भावितं जीवनीयैर्वा कुलिङ्गाण्डरसायुतैः ।
क्षौमं धूमं पिबेत् क्षीरं शृतं चायो गुडैः पिबेत् ॥
सम्पूर्णरूपं क्षयजं दुर्बलस्य विवर्जयेत् ।
नवोत्थितं बलवतः प्रत्याख्यायाचरेत् क्रियाम् ॥
तस्मै बृंहणमेवादौ कुर्यादग्नेश्च वर्धनम् ।

बहुदोषाय सस्नेहं मृदु दद्याच्च शोधनम् ॥
शम्याकेन त्रिवृतया मृद्वीका रसयुक्तया ।
तिल्वकस्य कषायेण विदारी स्वरसेन च ॥
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम् ।
पित्ते कफे च संक्षीणे परिक्षीणेषु धातुषु ॥
घृतं कर्कटकी क्षीरद्विपला साधितं पिबेत् ।
विदारीभिः कदम्बैर्वा तालसस्यैस्तथा श्रृतम् ॥
घृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्र एव च ।
शूले सवेदने मेढ्रे पायौ सश्रोणि वंक्षणे ॥
अन्वास्यो घृतमण्डेन लघुना मिश्रकेण वा ।
जाङ्गलैः प्रति भुक्तस्य वर्तकाद्या विलेशयाः ॥
क्रमशः प्रसहाश्चैव प्रयोज्याः पिशिताशिनः ।
औष्ण्यात् प्रमाथि भावाच्च स्रोतोभ्यः च्यावयन्ति ते ।
कफं शुद्धैश्च तैः पुष्टिं कुर्यात् सम्यग्वहन् रसः ॥
चविका त्रिफला भार्गी दशमूलैः सचित्रकैः ।
कुलत्थ पिप्पलीमूलपाठा कोलयवैर्जले ॥
श्रृतैर्नागरदुःस्पर्शा पिप्पली शटि पौष्करैः ।
कल्कैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ॥
सिद्धेऽस्मिंश्चूर्णिते क्षारौ द्वौ पञ्चलवणानि च ।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः ॥
गुडूचीं पिप्लीं मूर्वां हरिद्रां श्रेयसीं वचाम् ।
निदिग्धिकां कासमर्दं पाठां चित्रकनागरम् ॥
जले चतुर्गुणे पक्त्वा पादशेषेण तत्समम् ।
सिद्धं सर्पिः पिबेद्गुल्मश्वासार्तिक्षयकासनुत् ॥

कासमर्द्दाभया मुस्तपाठा कट्फलनागरैः।
पिप्पल्या कटुरोहिण्या काश्मर्य्याः सुरसेन च॥
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके।
पचेत् शोषज्वरप्लीहसर्व्वकासहरं शिवम्॥
धात्रीफलैः क्षीरसिद्धैः सर्पिर्वाप्यवचूर्णितम्।
द्विगुणे दाड़िमरसे विपक्वं व्योषसंयुतम्॥
पिबेदुपरि भक्तं वा यवक्षारघृतं नरः।
पिप्पली गुड़सिद्धं वा छागक्षीरयुतं घृतम्॥
एतान्यग्नि विवृद्ध्यर्थं सर्पींषि क्षयकासिनाम्।
स्युर्दोषबद्धकण्ठोरःस्रोतसां च विशुद्धये॥
हरीतकीयवक्वाथद्व्याढके विंशतिं पचेत्।
स्विन्ना मृदित्वा तास्मिन् पुराणं गुड़षट्पलम्॥
दद्यान्मनःशिलाकर्षं कर्षार्द्धं च रसाञ्जनात्।
कुड़वार्द्धञ्च पिप्पल्याः सलेहः श्वासकासनुत्॥
श्वाविधः सूचयोदग्धाः सघृतक्षौद्रशर्कराः।
श्वासकासहरा बर्हि पादौ वा क्षौद्र सर्पिषा॥
एरण्डपत्रक्षारं वा व्योषतैलगुड़ान्वितम्।
सुरसैरण्डपत्राणां विधिनानेन लेहयेत्॥
द्राक्षा पद्मकवार्ताकपिप्पलीः क्षौद्रसर्पिषा।
लिह्याद्वा त्रूषणचूर्णं वा पुराणं गुड़सर्पिषा॥
चित्रकं त्रिफला जाजी कर्कटाख्यं कटुत्रिकम्।
द्राक्षाञ्च क्षौद्रसर्पिर्भ्यां लिह्याद्वा गुड़ेन वा।
पद्मकं त्रिफला व्योषं विड़ङ्गं सुरदारु च॥
बला रास्ना युतं सूक्ष्मं शर्करा क्षौद्रसर्पिषा।

विमथ्य लेहयेल्लेहं सर्वकासहरं शिवम् ॥
जीवन्तीं मधुकं पाठां त्वक्क्षीरीं त्रिफलां शटीम् ।
मुस्तैले पद्मकं द्राक्षा द्वे बृहत्यौ वितुन्नकम् ॥
शारिवा पौष्करं मूलं कर्कटाख्यां रसाञ्जनम् ।
पुनर्नवां रजो लौहं त्रायमाणां यवानिकाम् ॥
भार्गीं तामलकीं ऋद्धिं विडङ्गं धन्वयावकम् ।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥
चूर्णीकृत्य समांशानि लेहयेत् क्षौद्रसर्पिषा ।
चूर्णात्पाणितलं पञ्च कासानेष व्यपोहति ॥
लिह्याद्वार्शारिवचूर्णं वा सघृतक्षौद्रशर्करम् ।
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ॥
स्वरभेदे च कासे च लेहमेतत्प्रयोजयेत् ।
पत्रकल्कं घृतैर्भृष्टं तिल्वकस्य सशर्करम् ॥
पेयाचोत्कारिका छर्दितृट्कासामातिसारजित् ।
गौरसर्षपगण्डीरविडङ्गव्योषचित्रकान् ॥
साभयान् साधयेत्तोये यवागूं तेन चाम्भसा ।
ससर्पिर्लवणां कासे हिक्का श्वासे सपीनसे ॥
पाण्ड्वामये क्षये शोषे कर्णशूले च शस्यते ।
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ॥
सगौरामलकः साम्लः सर्वकासभिषग्जितम् ।
वातघ्नौषधनिष्क्वाथे क्षीरं यूषान् रसानपि ।
विष्किरान् प्रतुदान्बैलान् दापयेत् क्षयकासिने ॥
क्षतकासे च ये धूमाः सानुपाना निदर्शिताः ।
क्षयकासेऽपि तानेव यथावस्थं प्रयोजयेत् ॥

दीपनं बृंहणञ्चैव स्रोतसाञ्च विशोधनम्।
अत्यासात् क्षयकासिभ्यो वस्य सर्वं मितं हितम्॥
सन्निपातभवोऽप्येष क्षयकासः सुदारुणः।
सन्निपातहितं तस्मात् सदा कार्य्यं भिषक्जितम्॥
दोषानुबलयोगाच्च हरेद्रोगबलाबलम्।
कासेष्वेषु गरीयांसं जानीयादुत्तरोत्तरम्॥ इति
तत्र श्लोकौ। भोज्यं पानानि सर्पींषि लेहाः पाचनकानि च।
क्षीरं सर्पिर्गुड़ा धूमाः कासभैषज्यसंग्रहः॥
संख्यानिमित्तं रूपाणि साध्या साध्यत्वमेव च।
कासानां भेषजं प्रोक्तं गरीयस्त्वञ्च कासिनः॥
इति कासचिकित्सितम्।

---

## एकविंशोऽध्यायः।

अथातः छर्दिचिकित्सितं व्याख्यास्यामः।

यशस्विनं ब्रह्मतपो द्युतिभ्यां ज्वलन्तमन्यर्कसमप्रभावम्।
पुनर्वसुं भूतहिते निविष्टं पप्रच्छ शिष्योऽग्निजमग्निवेशः॥
छर्दींषि मे यानि पुरोदितानि रोगाधिकारे भिषजां वरिष्ठ!
तेषां चिकित्सां सनिदानलिङ्गां यथावदाचक्ष्व नृणां यथार्थम्॥
तदग्निवेशस्य वचो निशम्य प्रीतो भिषक्श्रेष्ठ इदं जगाद।

छर्द्दींषि यानि पुरोदितानि विस्तारतस्तानि निबोध सम्यक्
विद्यात् पृथक्त्रिप्रभवाणि दोषैर्द्विष्टार्थयोगेन च पञ्च तानि ।
तेषां हृदुत्क्लेशकफप्रसेकौ द्वेषस्तथान्नस्य हि पूर्वरूपम् ॥
व्यायामतीक्ष्णौषधशोकरोगभयोपवासाद्यतिकर्षितस्य ।
क्रुद्धो महास्रोतसि मातरिश्वा दोषानमुत्क्लिश्य तदूर्द्ध्वमस्यन्
आमाशयोद्रेककृतश्च मर्म्म प्रपीडयेच्छर्द्दिमुदीरयेच्च ।
हृत्पार्श्वपीडामुखशोषमूर्द्धनाभ्यर्त्तिकासस्वरभेदतोदैः ॥
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्टं तनुकं कषायम् ।
कृच्छ्रेण चाल्पं महता च वेगेनार्त्तोऽनिलाच्छर्द्दयतीह दुःखम्
अजीर्णकट्वम्लविदाहिमद्यैरामाशये पित्तमुदीर्णवेगम् ।
रसायनीभिर्विसृतं प्रपीड्य मन्दोर्द्ध्वमागम्य वमिं करोति ॥
मूर्च्छापिपासामुखमूर्द्धकण्ठताल्वक्षिसन्तापतमो भ्रमार्त्तः ।
पित्तं भृशोष्णं हरितं सतिक्तं धूम्रञ्च पित्तेन वमेत् सदाहम्।
स्निग्धातिगुर्वामविदाहि भोज्यैः स्वप्नादिभिश्चैव कफोऽतिवृद्धः॥
उरःशिरो मर्म्मरसायनीश्च सर्वाः समावृत्य वमिं करोति ।
तन्द्रास्यमाधुर्य्यकफप्रसेकसन्तोषनिद्रारुचिगौरवार्त्तः ॥
स्निग्धं घनं स्वादुकफं विशुद्धं सलोमहर्षोऽल्परुजं वमेत्तु ।
समश्नतः सर्व्वरसान् प्रसक्तमामप्रदोषर्त्तु विपर्य्ययैश्च ॥
सर्व्वे प्रकोपं युगपत् प्रपन्नाश्छर्द्दिं त्रिदोषं जनयन्ति दोषाः ।
शूला विपाका रुचिदाहतृष्णाश्वासप्रमोहप्रबलं प्रसक्तम् ।
छर्द्दिस्त्रिदोषं लवणाम्लनीलसान्द्रोष्णरक्तं वमतां नृणां स्यात्
विट्स्वेदमूत्राम्बुवहानि वायुः स्रोतांसि संरुध्य यदोर्द्ध्वमेति
उत्सन्नदोषस्य तदा चितन्तं दोषं समुद्धूय नरस्य कोष्ठात् ।
विण्मूत्रयोस्तत्समवर्णगन्धं तृट्श्वासहिक्कार्त्तियुतः प्रसक्तम्॥

दुष्टं नरश्छर्दयतीह वेगास्तेनार्दितश्चाशु विनाशमेति।
दिष्टप्रतीपा शुचिपूतमेध्यबीभत्सगन्धाः शुचिवर्णनैस्तु॥
यस्मा वमेत्तत्प्रमनामनोघ्नैर्हि ष्टस्यसंयोगभवं मतं तत्।
क्षीणस्य यच्छर्दिरतिप्रवृत्तं सोपद्रवं शोणितपूययुक्तम्॥
सचन्द्रकं तत्प्रवदन्त्यसाध्यं साध्यं चिकित्सेदनुपद्रवञ्च।
आमाशयोत्क्लेशभवं हि सर्वं छर्दिर्मतं लङ्घनमेव तस्मात्।
प्राक्कारयेन्मारुतजां विमुच्य संशोधनं वा कफपित्तहारि।
चूर्णानि लिह्यान्मधुनाभयानां हृद्यानि वा यानि विरेचनानि
मद्यैः पयोभिश्च युतानि युक्त्या नयन्त्यधो दोषमुदीर्णमूर्द्ध्वम्
वल्लीफलाद्यैर्वमनं पिबेद्वा यो दुर्बलस्तं शमनैश्चिकित्सेत्॥
रसैर्मनोज्ञैर्लघुभिर्विशुष्कैर्भक्ष्यैः सभोज्यैर्विविधैः सपानैः।
सुसंस्कृता तित्तिरिबर्हिलावा रसा व्यपोहन्त्यनिलप्रवृत्तम्॥
छर्दिस्तथा कोलकुलत्थमाषबिल्वादिमूलाम्बुयवैश्च यूषाः।
वातात्मके हृद्द्रवकासयुक्तो नरः पिबेत् सैन्धववद् घृतन्तु॥
सिद्धं तथा धान्यकनागराभ्यां दध्ना च तोयेन च दाड़िमस्य।
व्योषेण युक्तां लवणैस्त्रिभिश्च घृतस्य मात्रामथवा पिबेद्वा ...
स्निग्धानि हृद्यानि च भोजनानि रसैः सयूषैर्दधिदाड़िमाम्लैः
पित्तात्मिकायामनुलोमनार्थं द्राक्षा विदारी क्षुरसैस्त्रिवृत्स्यात्
कफाशयस्थन्त्वतिमात्र वृद्धं पित्तं हरेत् स्वादुभिरूर्द्ध्वमेव।
शुद्धाय काले मधु शर्कराभ्यां लाजैश्च मन्थं यदि वापि पेयाम्
प्रदापयेन्मुद्गरसेन वापि शाल्योदनं जाङ्गलजै रसैर्वा।
सितोपला माक्षिकपिप्पलीभिः कुल्माषलाजा यवसक्तु शष्कान्
खर्जूरमांसान्यथ नारिकेलं द्राक्षामथोवा बदराणि लिह्यात्
स्रोतोजलाजोत्पलकोलमज्जचूर्णानि लिह्यान्मधुना भयाश्च

कोलास्थिमज्जाञ्जनमक्षिकाविड्लाजासितामागधिकं कणान्वा।

द्राक्षारसं वापि पिवेत्सुशीतं
मृद्भृष्टलोष्टप्रभवं जलं वा।
जम्बाम्रयोः पल्लवजं कषायं
पिवेत्सुशीतं मधुसंयुतं वा॥
निशिस्थितं वारि समुद्गकृष्णं
सौवीरधान्यस्वणकोदकं वा।
गवेधुका मूलजलं गुडूच्या
जलं पिवेदिक्षुरसं पयो वा॥
सेव्यं पिवेत्काञ्चनगैरिकं वा
सवालकं तण्डुलधावनेन।
धात्रीरसेनोत्तमचन्दनं वा
तृष्णा वमिघ्नानि समाक्षिकाणि॥
कफाश्रिकायां वमनं प्रशस्तं
सपिप्पली सर्षपनिम्बतोयैः।
पिण्डीतकैः सैन्धवसम्प्रयुक्तै
र्वम्यां कफामाशय शोधनार्थम्॥
गोधूमशालीन् सयवान् पुराणान्
यूषैः पटोला मृतचित्रकाणाम्।
व्योषस्य निम्बस्य च तक्रसिद्धै-
र्य्योषैः फलाम्लैः कटुभिस्तु वाद्यात्॥
रसांश्च शुष्काणि च जाङ्गलानां
मांसानि जीर्णाम्मधु शीध्वरिष्टान्।
रागांस्तथा खाडवपानकानि

द्राक्षा कपित्थैः फलपूरकैश्च ॥
मुद्गान् सगोधूमयवान् कडायान्
भृष्टान् घृताभागरमाक्षिकाभ्याम् ।
मद्यास्तथैव त्रिफला त्रिडङ्ग-
चूर्णं विडङ्गप्लवयो रथो वा ॥
सजाम्बवं वा वदराम्बु चूर्णं
मुस्तायुतां कर्कटकस्य शृङ्गीम् ।
दुरालभां वा मधु सम्प्रयुक्तां
लिह्यात्कफच्छर्दिविनिग्रहार्थम् ॥
मनःशिलायाः फलपूरकस्य
रसैः कपित्थस्य च पिप्पलीनाम् ।
क्षौद्रेण चूर्णं मरिचैश्च युक्तं
लिहन् जयेत् छर्दिमुदीर्णवेगम् ॥
यैषा पृथक्त्वेन मया क्रियोक्ता
तां सन्निपातेऽपि समीक्ष्य बुद्ध्या ।
दोषर्तुदेहाग्निबलान्यवेक्ष्य
प्रयोजयेत् शास्त्रविदप्रमत्तः ॥
मनोभिघाते तु मनोनुकूला
वाचः समाश्वासनहर्षणानि ।
लोकप्रसादाः श्रुतयो वयस्याः
शृङ्गारिकाश्चैव हिता विहाराः ॥
गन्धा विचित्रा मनसोऽनुकूला
मृत्पुष्पशुक्ताम्लफलादिकानाम् ।
शाकानि भोज्यान्यथ पानकानि

सुसंस्कृताः खाण्डवरागलेह्याः ॥
यूषा रसाः काम्बलिकाः खडाश्च
मांसानि धाना विविधाश्च भक्ष्याः ॥
फलानि मूलानि च गन्धवर्णौ
रसैरुपेतानि वमिघ्नयन्ति ॥
गन्धं रसं स्पर्शमथापि शब्दं
रूपञ्च यद्यत्प्रियमप्रसात्म्यम् ।
सदैव कुर्यात् प्रशमाय तस्या
स्तेजोहि दोषः सुख एव जेतुम् ॥
वम्युत्थितानां च चिकित्सितं स्यात्
चिकित्सितं कार्यमुपद्रवाणाम् ।
अति प्रवृत्ता सुविरेचनस्य
कर्मातियोगे विहितं विधेयम् ॥
वमि प्रसङ्गात् पवनोऽप्यवश्यं
धातुक्षयाद्वृद्धिमुपैति तस्मात् ।
चिरप्रवृत्ता स्वनिलापहानि
कार्याण्युपस्तम्भनबृंहणानि ॥

सर्पिगुडाः क्षीरविधिघृतानि कल्याणकत्र्यूषणजीवनानि ।
वृष्यांस्तथा मांसरसाः सलेह्याः चिरप्रसक्ताश्च वमिं जयन्ति ॥

इति तत्र श्लोकः ।

संख्यां हेतुं लक्षणमुपद्रवान् साध्यतां न योगांश्च छर्दीनाम् ।
प्रशमार्थं प्राह चिकित्सितं मुनिवर्य इति छर्दिचिकित्सितम्



द्वाविंशोऽध्यायः ।

अथातस्तृष्णा चिकित्सितं व्याख्यास्यामः ।

ज्ञानप्रशमतपोभिः ख्यातोऽत्रिसुतो जगद्धितैरभिरतः ।
तृष्णानां प्रशमार्थं चिकित्सितं प्राह पञ्चानाम् ॥
क्षोभाद्भयाच्छ्रमादपि शोकात् क्रोधाद्विलङ्घनान्मद्यात् ।
क्षाराम्ललवणकटुकोष्णरूक्षशुष्कान्नसेवाभिः ॥
धातुक्षयगदकर्षणवमनाद्यति योगसूर्य्यसन्तापैः ।
पित्तानिलौ प्रवृद्धौ सौम्यान् धातूंश्च शोषयतः ॥
रसवाहिनीश्च नाडीर्जिह्वामूलगलतालुक्लोम्नः ।
संशोष्य नृणां देहे कुरुतस्तृष्णां महाबलावेतौ ॥
पीतं पीतं हि जलं शोषयतस्तमतो न याति शमम् ।
घोरव्याधि कृशानां प्रभवत्युपसर्गभूता सा ॥
प्राग्रूपं मुखशोषं स्वलक्षणं सर्वदाम्बुकामित्वम् ।
तृष्णानां सर्वासां लिङ्गानां लाघवमुपायः ॥
मुखशोषस्वरभेदभ्रमसन्तापप्रलापसंस्तम्भान् ।
तालोष्ठकण्ठजिह्वाकर्कशतां चित्तनाशञ्च ॥
जिह्वा निर्गममरुचिं बाधिर्यं मर्मणान्दवं सादम् ।
तृष्णोद्भूतान् जयेत्पञ्चविधां लिङ्गतः शृणुतम् ॥
अब्धातुं देहस्थं कुपितः पवनो यदा विशोषयति ।
तस्मिन् शुष्के शुष्यत्यबलस्तृष्यत्यथ विदह्यनाम् ॥
निद्रानाशः शिरसो भ्रमस्तथा शुष्कविरसमुखता ।
स्रोतोपरोध इति च स्याल्लिङ्गं वाततृष्णायाः ॥

पित्तं मतं कुपितमाग्नेयं कुपितं चेत्तापयत्यपां धातुम् ।
सन्तप्तः सहिजनयेत्तृष्णां दाहोल्वणां नृणाम् ॥
तिक्तास्य त्वं शिरसो दाहः शीताभिनन्दिता मूर्च्छा ।
पीताक्षि मूत्रवर्चस्त्वमाकृतिः पित्ततृष्णायाः ॥
तृष्णाया सम्भवा साप्याग्नेय्यामपित्तजनितत्वम् ।
लिङ्गं तस्यास्तारुचिराध्मानप्रसेकौ च ॥
देहो रजसोऽम्बुभवो रसाश्च तस्य क्षयाच्च ।
तृष्येत्तु दीनस्वरः प्रताम्यन् दीनः संशुष्कगलतालुः ॥
भवति खलु सोपसर्गात् तृष्णा सा भवति शोषणी कष्टा ।
ज्वरमेहक्षय शोषश्वासाद्युपसृष्टदेहानाम् ॥
सर्वास्त्वति प्रसक्ता रोगकृशानां वमि प्रसक्तानाम् ।
घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेया ॥
नाग्निं विनाहि तर्षः पवनाद्वातौ हि शोषणे हेतू ।
अब्धातोरति वृद्धावपां क्षये तृष्यति ॥
नरस्तु गुर्वन्नपयः स्नेहैः संमूर्च्छितैर्विदाहकाले च ।
यस्तृष्येद्तमार्गो तत्रापत्र निला नलौ हेतू ॥
तीक्ष्णोष्णरूक्षभावान्मद्यं पित्तानिलौ प्रकोपयति ।
शोषयतोऽपां धातुं वाताशुमद्यशीलानाम् ॥
तप्ता स्विव सिकतासु हि तदा शुमद्यं विशुष्यति ।
क्षिप्रं तेषां सन्तप्तानां हिमजलपानाद्भवति ॥
मर्मशिशिरस्नातस्योष्माद्भः कष्टं प्रपद्य तर्षयति ।
तस्मान्नोष्णा क्लान्तो भजेत सहसा जलं शीतम् ॥
लिङ्गं सर्वास्वेता स्वनिलक्षयात् पित्तजम् ।
भवत्यथ तु पृथगागमाच्चिकित्सितमतः प्रवक्ष्यामि तृष्णानां

अपां क्षयाद्धि तृष्णा संशोष्य नरं प्रणाशयेदाशु।
तस्मादैन्द्रं तोयं समधु पिबेत्तद्गुणं वान्यत्॥
किञ्चित्तुवराम्लरसं तत्र लघुशीतं सुगन्धिरसम्।
अनभिष्यन्दि च यत्तत् क्षितिगतमप्यैन्द्रवज्ज्ञेयम्॥
शृतं शीतं सक्षितोपलमथवा शरपूर्वपञ्चमूलेन।
लाजा सक्तु सिताक्तान् मधु युतमैन्द्रेण वा मन्थं॥
वाट्यं वामयवानां शीतं मधु शर्करायुतं दद्यात्।
पेयां वा शालीनां दद्याद्वा कोरदूषाणाम्॥
पयसा शृतेन भोजनमथवा मधु शर्करायुतं भोज्यम्।
पारावतादिकरसैर्घृतभृष्टैर्वापत्र लवणाम्लैः॥
तृणपञ्चमूलमुस्तातकैः पियालैश्च जाङ्गलाः।
सुशृताः शस्ताः रसाः पयो वातैः सिद्धं शर्करा मधुमत्॥
शतधौतघृतेनाक्तः पयः पिबेत् शीततोयमवगाह्य।
मुद्गमसूरचणकजा रसास्तु भृष्टा घृते देया॥
मधुरैः सजीवनीयैः शीतैश्च सतिक्तकैः शृतं क्षीरं।
पानाभ्यञ्जनसेकेष्विष्टं मधुशर्करायुक्तं तज्जं॥
वा घृतमिष्टं पानाभ्यङ्गेषु नस्यमपि च स्यात्।
नारीपयः सशर्करमुष्या अपि नस्यमिक्षुरसः॥
क्षीरेक्षुरसगुड़ोदकसितोपलाद्यैः क्षौद्रसीधुमार्द्वीकैः।
वृक्षाम्लमातुलुङ्गैर्गण्डूषास्तालुशोषघ्नाः॥
जम्ब्वाम्रातकबदरीनड़वेतसपञ्चकल्कपञ्चाम्लैः।
हृन्मुखशिरः प्रलेपाः सघृता मूर्च्छा भ्रमतृषां स्युः॥
दाड़िमदधित्थलोध्रैः सविदारीबीजपूरकैः।
शरसः प्रलेपो गौरामलकैर्घृतारनालायुतैश्च हितः॥

॥ शैवलपद्मकउत्पलैः मात्रैः मघृतैश्च सक्तुभिर्लेपः ।
मस्त्वारनालकमलाद्र्ववसनमणिहारसंस्पर्शाः ॥
शिशिराम्बुचन्दनार्द्राः स्तनतटपाणितलसंस्पर्शाः ।
क्षौमार्द्रवसनानां वराङ्गनानां प्रियाणाञ्च ॥
हिमवद्दरीवनेसरित्सरोम्बुजवनेन्दुपादशिशिराणाम्
रम्यशिशिरोदकानां स्मरणञ्च कथाश्च तृष्णाघ्नः ॥
वातघ्नमन्नपानं मृदुलघुशीतञ्च वाततृष्णायाः ।
क्षतकासनुत् घृतक्षीरमूर्ध्वं वातक्षयतृषां स्यात् ।
स्याज्जीवनीयसिद्धं क्षीरघृतं वातपित्तजे तर्षे ॥
पैत्ते द्राक्षाचन्दनखर्जूरो शीरमधुयुतं तोयम् ।
लोहितकशालितण्डुलखर्जूरपरूषकोत्पलद्राक्षाः ॥
मधुपक्कलोष्टमेव च जले शृतं शीतलं पेयं ।
लोहितशालिप्रस्थः सलोध्रमधुकाञ्जनोत्पलः ॥
पक्वामलोष्टमधु जलसमायुतोमृण्मये पेयः ।
वटमातुलुङ्गवेतसपल्लवकुशकाशमूलयष्ट्याह्वैः ॥
सिद्धेऽभ्यग्निनिभाः कृष्णमृदः कृष्णसिकता वा ।
तप्तानि नवकपालान्यथवा निर्वाप्य पाययेताच्छम् ॥
सपाकशर्करं वा शृतवल्गुरदकं तृषं हन्ति ।
क्षीरवतां मधुरार्णां शीतानां शर्करा मधुविमिश्राः ॥
शीतकषायामृद्भृष्टसंयुताः पित्ततृष्णाघ्नः ।
व्योषवचाभल्लातकतिक्तकषायास्तथा कफतृष्णायाम् ॥
यच्चोक्तं कफजायां वम्यां तच्चैव कार्य्यं स्यात् ।
स्तम्भारुच्यविपाकालस्य छर्दिषु कफानुगां तृष्णाम् ॥
ज्ञात्वा दधिमधुतर्पणलवणोष्णजलैर्वमनमिष्टम् ।

स कषाय लोहलवणं दाडिममम्लं फलञ्च लेह्यं वा॥
पेयमथवा हरिद्राम्बु शर्करा क्षौद्रसंयुक्तम्।
क्षयकासेन तु तुल्या क्षयतृष्णा गरीयसी या नृणाम्॥
क्षीणक्षतशोषहितैः तस्मात्तां भेषजैः शमयेत्।
पानं तृषार्तः पानन्त्वर्धोदकमम्ललवणगन्धाढ्यम्॥
शिशिरस्नातः पानं मद्याम्बु गुडाम्बु वा तृषितः।
भक्तोपराध तृषितः स्नेहतृषार्तोऽथवा तनु यवागूम्॥
प्रपिवेद् गुरुणा तृषितो भुक्ते नोद्धरेद्भुक्तम्।
मद्यार्धाम्बु क्षौणं बलवांस्तृषितः समुल्लिखेत्॥
प्रोत्वा मागधिका विपदसुखः सशर्करं वा पिवेन्मन्थम्।
बलवांस्तु तालुशोषे पिवेद्घृतं हव्यमवमयाच्च॥
सर्पिर्भृष्टं क्षीरं मांसरसांश्चाबली स्निग्धान्।
अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः॥
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः।
स्निग्धेऽन्ने भुक्ते या तृष्णास्यास्तां गुडाम्बुना शमयेत्॥
तर्षं मूर्च्छाभिहतस्य रक्तपित्तापहैर्हन्यात्।
वम्युष्णादाह मूर्छा तमः क्लममदात्यया स्नविषपित्तः शस्तम्
स्वभावशीतं शृतशीतं सन्निपातेऽम्भः।
हिक्का श्वासनवज्वरपीनसघृतपीतपार्श्वगलरोगे॥
कफवातकृतेस्त्याने सद्यः शुद्धे च हितमुष्णम्।
पाण्डूदरपीनसमेह गुल्ममन्दानिलातिसारेषु॥
प्लीहनिचय तोयमशुभं कासत्वमहः पिवेदल्पम्।
पूर्वामया तुरः संदीनस्तृष्णार्दितो जलं कांचन॥
न लभेत् सचेन्मरणमाश्ववाप्नुयाद्दीर्घरोगं वा।

तस्माद्धान्याम्बु पिबेत्तृष्यन् रोगी सशर्करा चौद्रम्॥
यद्वा तस्यान्यतमात् सात्म्यं रोगस्य तच्चेष्टम्।
तस्यां विनिवृत्तायां तज्जन्योपद्रवः सुखङ्जेतुं॥
तस्मात्तृष्णां पूर्वं जयेद्बहुभ्योऽपि रोगेभ्यः इति।

तत्र श्लोकः।

हेतू यथाग्नि पवनौ कुरुतः सोपद्रवां च पञ्चानां तृष्णानां
पुनरवाकृति रसाध्यता साध्यता साधनं चोक्तं।

इति तृष्णाचिकित्सितम्।

---

## त्रयविंशोऽध्यायः।

अथातो विषचिकित्सितं व्याख्यास्यामः।

प्रागुत्पत्तिं गुणान् योनिं वेगां लिङ्गान्युपक्रमान्॥
विषस्य ब्रुवतः सम्यगग्निवेश न विरोध मे॥
अमृतार्थं समुद्रे तु मथ्यमाने सुरासुरैः।
जज्ञे प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः॥
दीप्ततेजाश्चतुर्दंष्ट्रो हरि केशोऽनलेक्षणः।
जगद्दृष्ट्वा विषण्णं विषं सतु विषादनात्॥
जङ्गमस्थावरायां तद्योनौ ब्रह्मा न्ययोजयेत्।
तदम्बुसम्भवं तस्माद्द्विविधं पावकोपमम्॥
अष्टवेगं दशगुणं चतुर्विंशत्युपक्रमम्।

तद्वर्षा ह्यम्बुयोनित्वात् सक्लेदं गुडवन्नतम् ॥
सर्पत्यम्बु धरा पाये तदगस्त्यो हिनस्ति च ।
प्रयाति मन्दवीर्यत्वं विषं तस्माद्घनात्यये ।
सर्पाः कीटोन्दुरा लूता वृश्चिका गलगोधिकाः ॥
जलौका मत्स्यमण्डूकाः कणभाः सकृकण्ठकाः ।
श्वसिंहव्याघ्रगोमायुतरक्षु नकुलादयः ॥
दंष्ट्रिणो ये विषं तेषां दंष्ट्रोत्थं जङ्गमं मतम् ।
मुस्तकं पौष्करं क्रौञ्चं वत्सनाभं बलाहकम् ॥
कर्कटं कालकूटेन्द्र करवीरकसंज्ञकम् ।
पालवेन्द्रायुधं तैलं मेघकं कुशपुष्पकम् ॥
रोहिषं पुण्डरीकाख्यं लाङ्गलव्यञ्जनाभकम् ।
सङ्कोच मर्कटं शृङ्गि विषं हालाहलं तथा ॥
एवमादीनि चान्यानि मूलजानि स्थिराणि च ।
गरसंयोगजं चान्यद्गरसंज्ञकम् ॥
कालान्तर विपाकित्वान्न तदाशु हरत्यसून् ।
निद्रां तन्द्रां क्लमं दाहं सपाकं लोमहर्षणम् ॥
शोफं चैवातिसारञ्च जनयेज्जङ्गमं विषम् ।
स्थावरं तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ॥
फेनवम्यरुचि श्वासमूर्च्छाश्च जनयेद्विषम् ।
जङ्गमं स्यादधोभागमूर्द्धभागं तु मूलजम् ॥
तस्माद्दंष्ट्रि विषं मौलं हन्ति मौलं च दंष्ट्रिजम् ।
तृण्मोहदन्तहर्षप्रसेकवमथु क्लमा भवन्त्यादौ ।
वेगे रसप्रदोषादसृक्प्रदोषात् द्वितीये च ॥



64

वैवर्ण्य भ्रमवेपथु मूर्च्छा जृम्भाङ्गचिमिचिमातमकाः ॥
दुष्टपिशिताततृतीय मण्डलकण्डू श्वयथुकोठाः ।
वातादिजाश्चतुर्थे छर्दिर्दाहाङ्गशूलमूर्च्छाद्याः
नीलादीनां तमसश्च दर्शनं पञ्चवेगेन ।
षष्ठे हिक्का भङ्गः स्कन्दस्य तु सप्तमेऽष्टमे मरणं ॥
नृणां चतुष्पदादीनां स्याच्चतुर्विधः पक्षिणां त्रिविधाः ।
सीदत्याद्ये भ्रमति च चतुष्पादो वेपते ततः शूनः ॥
मन्दाहारश्च ततो म्रियते श्वासे न हि चतुर्थे ।
ध्यायति विहगः प्रथमे वेगे प्रभ्राम्यति द्वितीये तु ॥
स्रस्ताङ्गश्च तृतीये विषवेगे याति पञ्चत्वं ।
लघु रूक्षमाशु विशदं व्यवायि तीक्ष्णं विकाशि सूक्ष्मञ्च ॥
उष्णमनिर्देश्यरसं दश गुणमुक्तं विषं तज्ज्ञैः ।
रौक्ष्याद् वातमशैत्यात् पित्तं सौक्ष्म्यादसृक् प्रकोपयति ॥
कफमव्यक्तरसत्वादन्नरसांश्चानुवर्त्तते शीघ्रम् ।
शीघ्रं व्यवायिभावादाशुव्याप्नोति केवलं देहं ।
तीक्ष्णत्वात् मर्मघ्नं प्राणघ्नं तद्विकासित्वात् ॥
दुरुपक्रमं लघुत्वाद्वैशद्यात् स्यादसक्तगतिदोषं ।
दोषस्थानप्रकृतीः प्राप्यान्यतमं ह्युदीरयति ॥
स्याद्वातिकस्य वातस्थाने कफपित्तलिङ्गमीषत्तु ।
तृण्मूर्च्छारुचिमोहगलग्रहच्छर्दिफेनादिपित्ताशयस्थितम् ।
पैत्तिकस्य कफवातयोर्विषं तद्वत् ।
हृट्कासज्वरवमथुक्लमदाहतमोऽतिसारादि ॥
कफदेशगतञ्च कफस्य दर्शयेद्वातपित्तयोश्च तत् ।
लिङ्गं श्वासगलग्रहकण्डूलालावमथ्वादि ॥

दूषीविषं तु शोणितदुष्टिकिटिभकोठादिरक्तलिङ्गञ्च।
विषमेकैकं लिङ्गं सन्दूष्य हरत्यसूनेवम्॥
सरति विषतेजसा स्रक्त तत् खानिनिरुध्य मारयति जन्तून्
पीतं मृतस्य हृदि दृष्टविद्धयोर्दंशदेशे स्यात्॥
नीलौष्ठदन्तशैथिल्यकेशपतनाङ्गभङ्गविक्षेपाः।
शिशिरैर्न लोमहर्षो नाभिहते दण्डराजी च॥
क्षतजं क्षताच्च नायात्युक्तान्येतानि मरणलिङ्गानि।
एभ्योऽन्यथा चिकित्स्यास्तेषांश्चोपक्रमान् शृणु मे॥
मन्त्रारिष्टोत्कर्त्तननिष्पीड़नचूषणाग्निपरिषेचकाः।
अवगाहनरक्तमोक्षणवमनविरेकोपधानानि॥
हृदयावरणाञ्जननस्य धूमलेहौषधप्रशमनानि।
प्रतिसारणं प्रतिविषं संज्ञा संस्थापनं लेपः॥
मृतसञ्जीवनमेव च विंशतिरेते चतुर्भिरभ्यधिकाः।
स्युरुपक्रमा यथा यत्र योज्याः शृणु तथा तान्॥
दंशात्तु विषं दृष्टस्या निसृतं वेणिकाभिषक् बद्धा
निष्पीडयेद्भृशं दंशमुद्धरेन्मर्म वर्ज्जं वातं दंशं वा॥
दूषेन्मुखेन यवचूर्णं पांशुचूर्णेन प्रच्छन्नवेधजलौकः।
शृङ्गैः स्राव्यं ततो रक्तम्॥
रक्ते विषप्रदुष्टे दुष्येत्प्रकृतिः ततस्त्यजेत्प्राणान्॥
तस्मात् प्रघर्षणैरसृगवर्तमानं प्रवर्त्यं स्यात्।
त्रिकटु गृहधूमरजनी पञ्च लवणचोरणा: सवार्ताका:॥
घर्षणमति प्रवृत्ते वटादिभिः शीतलैर्लेपः।
रक्तं हि विषाधानं वायुरिवाग्नेः प्रदिह्यमेकेस्तत्॥
शीतैः स्कन्दति तस्मिन् स्कन्ने व्यग्रं याति विषवेगः।

विषवेगान्मदमूर्च्छा विषाद हृदयद्रवाः प्रवर्तन्ते ॥
शीतैर्निवर्तयेत्तान् वीज्यश्च लोमहर्षः स्यात्।
तरुरिव मूलच्छेदाद्दंशच्छेदान्न वृद्धिमुपयाति विषम्
आदूषणमानयनञ्जलस्य सेतुर्यथारिष्टः।
त्वङ्मांसगतो दाहो दहति विषं स्रावणं हरति रक्तात्
पीतं वमनैः सद्यो हरेद्धिरेकैर्द्वितीये तु।
आदौ हृदयं रक्ष्यं तस्यावरणं पिबेद्यथा लाभम् ॥
अम्भः पयो मधु घृतगैरिकमथ गोमयरसं वा।
तद्धंसपद्ममथवा काकं निष्पीड्य तद्रसं वमनम् ॥
छागादीनां वा सृक्भस्ममृदं वा पिबेदाशु ॥
क्षारोगदस्तृतीये शोफहरैर्लेखनं समध्वम्बु ॥
गोमयरसश्चतुर्थे वेगे सकपित्थ मधु सर्पिः।
काकाण्डशिरीषाभ्यां स्वरसेनाश्चोतनमञ्जने नस्यम् ॥
स्यात्पञ्चमेऽथ षष्ठे संज्ञा यः स्थापनं कार्यम्।
गोपित्तयुता रजनी मञ्जिष्ठा मरिचपिप्पलीपानम् ॥
विषमाणां दष्टानां विषपीते दंशनं वास्ते।
शिखि पित्तार्द्रयुतं स्यात्पलाशबीजमगदे मृतेषु मतः ॥
वार्ताकुफाणि तागारधूमगोपित्तनिम्बं वा।
गोपित्तयुतैर्गुलिकाः सुरसाग्रन्थि द्विरजनी मधुककुष्ठैः ॥
शस्ता मूत्रेण तु शिरीषपुष्पकाकाण्डकरसैर्वा।
काकाण्डसुरसगवाक्षी पुनर्नवा वायसी शिरीषफलैः
उद्धृतविषजलमृते लेपौषधनस्य पानानि।
स्पृक्का प्लवथौणेयककाञ्ची शैलेय रोचनास्तगरम् ॥
ध्यामककुङ्कुममांसी सुरसाग्रेलालकुष्ठघनाः।
बृहती शिरीषपुष्पं श्रीरजनीद्वय हिङ्गु पिप्पली लाक्षाः ॥

जलमुद्गपर्णी चन्दनमधुकमदनसिन्धुवाराश्च।
शम्याक लोध्र मयूरकगन्धफलीनाकुली विडङ्गञ्च ॥
पुष्यैः संभृत्य समं पिष्ट्वा गुलिका विधेयाः स्युः।
सर्वविषघ्नो जयकृद्विषमृतसञ्जीवनो ज्वरनिहन्ता ॥
घ्रेय विलेपनधारणधूमग्रहणैर्गृहस्थश्च।
भूतविषजन्त्वलक्ष्मी कार्मणमन्त्राग्न्यशन्यरीन् दोषान् ॥
दुःस्वप्नस्त्रीदोषानकालमरणाम्बु चौरभयम्।
धनधान्यकार्यसिद्धिः श्रीपुष्ट्यायुर्विवर्द्धनो धन्यः ॥
मृतसञ्जीवन एष प्रागमृताद् ब्रह्मणा विहितः।
मन्त्रैर्धरणी बन्धावमार्जनं कार्य्यमात्मरक्षा च ॥
दोषस्य विषं यस्य स्थाने स्यात्तं जयेत् पूर्वम्।
वातस्थाने स्वेदो दध्ना नतकुष्ठे कल्कपानञ्च ॥
घृतमधुपयोऽम्बुपानावगाहसेकाश्च पित्तस्थे।
क्षारागदः कफस्थानगते स्वेदस्तथा शिरावेधः ॥
दूषीविषेऽथ रक्तस्थिते शिरा कर्म पञ्चविधम्।
भेषजम् एवं कल्प्यं भिषग्विदा सर्वदा लक्ष्यं सर्वम् ॥
स्थानजयेन च पूर्वं स्थानस्थस्याविरुद्धञ्च।
विषदूषितकफमार्गैः स्रोतः संरोधरुद्धवायुश्च ॥
मृत इव चेन्मर्त्यः स्यादसाध्यलिङ्गैर्विहीनश्च।
चर्मकषायाः कल्कं बिल्वसमं मूर्ध्नि काकपदमस्य ॥
कृत्वा कुर्य्यात्कटभीं कटुकोटफला प्रधमनञ्च।
घ्राणाक्षिकर्णजिह्वा कण्ठनिरोधेषु कर्म नस्तः ॥
स्यात् वार्त्ताकुबीजपूर ज्योतिष्मत्यादिभिः पुष्टैः।
दार्व्व्योषहरिद्राकरवीरकरञ्जसुरसैस्तु ॥

श्वेतां वचां विडङ्गं हिङ्गुं नतां कुष्ठसैन्धवे लशुनम् ।
सर्षपकपित्थमध्यं टुण्टूककरञ्जवीजानि ॥
वृहती शिरीषपुष्पं द्वे रजनी वंशलेखञ्च समम् ।
पिष्ट्वा छागस्य मूत्रेण गोऽश्वपित्तेन सप्तकृत्वः ॥
अत्यासभावितोऽयं निहन्ति शिरसि स्थितं विषम् क्षिप्रं ।
सर्वज्वरभूतग्रहविसूचिकाजीर्णमूर्च्छार्त्तीः ॥
उन्मादापस्मारौ काचपटलनीलिका शिरोदोषान् ।
चयदौर्बल्यमदात्ययपाण्डुगदांश्चाञ्जनात्तथा मेहान् ॥
लेपाद्विग्धक्षतलीढ़दष्टविषपीतविषघाती ।
अर्शःस्वारुद्धेषु च गुदलेपो योनिलेपनम् स्त्रीणाम् ॥
मूढ़े गर्भे दुष्टे ललाटलेपः प्रतिश्याये ।
दद्रुकण्डूकिटिभे कुष्ठे श्वित्रेषु च विचर्चिकादिषु लेपः ॥
गज इव तरून्विषदान् निहन्त्ययं गदगन्धहस्तिरयः ।
पत्रागुरुमुस्तैलानिर्यासाः पद्मचन्दनं सूक्ष्मा ॥
त्वङ्नलदोत्पलवालकहरेणुकौशीरवन्यनखाः ।
सुरदारुकनककुङ्कुममध्यामककुष्ठप्रियङ्गवस्तगरम् ॥
पञ्चाङ्गानि शिरीषादद्योपैलामनःशिला जात्यः ।
श्वेतकटभीकरञ्जौ रचोघ्नी सिन्धुवारिका रजनी ॥
सुरसरसाञ्जनगैरिकमांस्यश्वानिम्बनिर्यासाः ।
वंशत्वगश्वगन्धाहिङ्गुदधित्थाम्लवेतसं लाक्षा ॥
मधु मधुकसोमराजीवचारुहारोचना च गवाम् ।
अगदोऽयं वैश्रवणायाख्यातः त्र्यम्बकेण महाङ्गः ॥
अप्रतिहतप्रभावः ख्यातो महागन्धहस्तीति ।
पित्तेन गवां पोष्ये गुलिकाः कार्य्यास्तु पुष्ययोगेन ॥

पानाञ्जनप्रलेपैः प्रसाधयेत् सर्व्वकर्म्माणि ।
पैल्लं कण्डूं तिमिरं रात्र्यन्धं काचमर्बुदं पटलम् ॥
हन्ति सततं प्रयोगाद्धितमितपथ्याशिनां पुंसाम् ।
विषमज्वरानजीर्णां दद्रूं सविसूचिकां पामाम् ॥
कुष्ठं किटिभं श्वित्रं विचर्च्चिकां चोपहन्ति नृणाम् ।
विषं मूषिकलूतानां सर्वेषां पन्नगानाञ्च ॥
आशु विषं नाशयति सशूलमथकर्म्मजं सर्व्वम् ।
एतेन लिप्तगात्रः सर्पात् गृह्णीत भक्षयेच्च विषम् ॥
कालातीतोऽपि नरो जीवति किञ्चिन्निरातङ्कः ।
आरूढे गुदलेपो योनिलेपश्च मूढगर्भाणाम् ॥
मूर्द्धातिषु च ललाटे प्रलेपमाहुः प्रधानतमम् ।
भेरीमृदङ्गपटहाश्छत्राण्यमुना तथा ध्वजपताकाः ॥
लिप्तानि विषनिरस्तैः प्रध्वनयेद्दर्शयेन्नातिमान् ।
यत्र च सन्निहितोऽयं न तत्र बालग्रहा नचाखोटाः ॥
न च कार्म्मणवेताला वहन्ति नाथर्व्वणा मन्त्राः ।
सर्व्वग्रहा न तत्र प्रभवन्ति न चाग्निशस्त्रनृपचौराः ॥
लक्ष्मीश्च तत्र भजते यत्र महागन्धहस्त्यस्ति ।
पिष्यमाणे इमञ्चात्र सिद्धं मन्त्रमुदीरयेत् ॥
मम माता जया नाम विजयो नाम मे पिता ।
सोऽहं जयो जयापुत्रो विजयोऽथ जयामि च ॥
नमः पुरुषसिंहाय विष्णवे विश्वकर्म्मणे ।
सनातनाय कृष्णाय भवाय विभवाय च ॥
तेजो वृषाकपेः साक्षात्तेजो ब्रह्मेन्द्रयोर्यमे ।
यथाहं नाभिजानामि वासुदेवपराजयम् ॥

मा तुष पाणिग्रहणं समुद्रस्य च शोषणम् ।
अनेन सत्यवाक्येन सिद्ध्यता मगदो ह्ययम् ॥
हिलिमिलिसंस्पृष्टे रक्ष सर्वभेषजे तु मे स्वाहा ।
ऋषभकजीवकभार्गी मधुकोत्पलधान्यकेसरा जाजग्रः ॥
ससितगिरिकोलमध्याः पेयाः श्वासज्वरादिहराः ।
हिङ्गु च कृष्णायुक्तं कपित्थरसमयग्र लवणं च ।
स मधुघृते पातव्यो ज्वरहिक्का श्वासकासघ्नैर्लेहः ॥
कोलास्थ्यञ्जनलाजोत्पल मधुघृतैर्वम्याम् ।
ह्रतोइयाढ़की पत्रधूमवर्त्तिस्तु हिक्काघ्नी ॥
शिखिबर्ह बलाकास्थीनि सर्षपायन्दने च घृतयुक्तः ।
धूमो गृहशयनासन वस्त्रादिषु शस्यते विषनुत ॥
घृतयुक्तेन तु कुष्ठे भुजगपतिशिरः शिरीषपुष्पं च ।
धूमागदः स्मृतोऽयं सर्वविषघ्नः श्वयथुघ्नश्च ।
जतु सेव्यपत्र गुग्गुलु भल्लातक ककुभपुष्प सर्जरसाः ।
श्वेता एव धूम उरगाखु कीटयस्त्वक्रमिनुदश्च ।
तरुणपलाशक्षारस्रुतं पचेच्चूर्णितैः सह सस्यांशैः ।
लोहितमृद्रजनीद्वय शुक्लस्वरसमञ्जरी मधुकैः ॥
लाक्षा सैन्धवमांसीहरेणु हिङ्गु हिंशारिवाकुष्ठैः ।
स व्योषवाह्लिकैर्दर्विं विलेपनाद्द्रवेद् यावत् ॥
सर्पविषशोफ गुल्मत्वग्दोषार्शो भगन्दरघ्नोऽङ्गः ।
शोषापस्मार क्रिमिभूतस्वरभेदपाण्डुगदान् ॥
मन्दाग्नित्वं कासं सोन्मादं नाशयेत् नृणामाशु ।
गुलिकाच्छाया शुष्ककोलसमातः समुपयुक्ता ।
विषपीतदष्टविद्धे श्वेतदिग्धे च वाच्यमुद्दिष्टम् ॥

सामान्यतः पृथक्त्वान्निर्देक्ष्यामतः शृणु यथावत्।
रिपुयुक्तेभ्यो नृभ्यः स्वेभ्यः स्त्रीभ्योऽथवा भयं नृपतेः॥
आहारविहारगतः तस्मात् प्रेष्यान् परीक्षेत।
अत्यर्थशङ्कितः स्याद्बहुशोऽपि अस्त्रवाग्विगतलज्जो॥
प्रायः प्रकृतिर्विकारं विषप्रदाता नरो ज्ञेयः।
दृष्ट्वैवं न तु सहसा भोज्यं कुर्य्यात् तदग्रमग्नौ तु॥
स विषं हि प्रायशायं बहून् विकारान् भजत्यग्निः।
शिखिवर्हविचित्रार्चिस्तीक्ष्णा चमक्त्वक्कुणपधूमश्च॥
स्फुटति च सशब्दमशब्दमेकावर्तो विहितार्चिषि स्यात्।
पात्रस्थं च विवर्णं भोज्यं स्यान्मक्षिकाश्च मारयति।
क्षामस्वरांश्च काकान् कुर्य्याद्विरजेचकोरादि पाने॥
नीलाराजी वैवर्ण्यं स्याश्च नेक्षते छायां पश्यति।
विकृतामथवा लवणाक्तैः फेनमाला स्यात्॥
पानान्नयोः सविषयोः शिरसो गन्धेन रुक् हृदि च मूर्च्छा
स्पर्शेन पाणिशोथः सुप्तत्वङ्गुलिदाह नखभेदाः॥
मुखताल्वोष्ठचिमिचिमा जिह्वा शूलवती जडा विवर्णा स्यात्
द्विजहर्षहनुस्तम्भास्यदाहलालागलविकाराः।
आमाशयं प्रविष्टे वैवर्ण्यं स्वेदसदनमुत्क्लेदः॥
दृष्टिहृदयविरोधो बिन्दुशतैश्चीयते चाङ्गम्।
पक्वाशयं तु याते मूर्च्छा मदमोहदाहबलनाशाः॥
तन्द्राकार्श्यं च विषे पाण्डुलत्वोदरं वा स्यात्।
दन्तपवनस्य कूर्चः पतति हि दन्तोष्ठमांसशोथश्च॥
केशच्युतिः शिरोऽभ्यङ्गयोर्धूसरश्च कूर्चः स्यात्।
दुष्टेऽञ्जनेऽक्षिदाहः स्रावाद्युपदेह शोथरोगाश्च॥

आद्यैरादौ कोष्ठः स्पृश्यैस्त्वग्दुष्यते दुष्टैः
स्नानाभ्यङ्गाच्छादनवस्त्रालङ्कारकैर्दुष्टैः ॥
कण्डूराशि लोमहर्षाः कोठपिडकाश्चिचिमा शोथाः ।
एते कर चरणदाहतोदक्लमविकाराश्च ॥
भूपादुकाश्च गजकेतुचर्मशयनासनैर्दुष्टैः ।
माल्यमगन्धं म्लायति शिरसो रुक्चाथ लोमहर्षकरम् ॥
स्तम्भयति खानिदर्शनमुपहन्ति च नासिकां धूमः ।
कूपतड़ाकादिजलं दुर्गन्धं सकलुषं विवर्णञ्च ॥
पीतं श्वयथुं कोठान् पिड़कांश्च करोति मरणञ्च ।
आदावामाशयगे वमनं त्वक्स्थे विदेहसेकादि ॥
इति मूलविषविशेषाः प्रोक्ताः शृणु जङ्गमस्यातः ।
इह दर्वीकरः सर्पोमण्डली राजिमानिति ॥
त्रयो यथाक्रमं वातपित्तश्लेष्म प्रकोपणाः ।
दर्वीकरः फणी ज्ञेयो मण्डलीमण्डला फणः ॥
विन्दुलेखो विचित्राङ्गः पन्नगः स्यात्तु राजिमान् ।
विशेषाद्रूक्षकटुकमम्लोष्णं स्वादु शीतलम् ॥
विषं यथाक्रमं तेषां तस्माद्वातादिकोपनम् ।
दर्वीकरकृतो दंशः सूक्ष्मदंष्ट्रापदोपितः ॥
विरुद्धरक्तः कूर्म्माभो वातव्याधि करोमतः ॥
पृथ्वर्पितः स शोफश्च दंशोमण्डलिना कृतः ।
पीताभः पीतरक्तश्च सर्वपित्तविकारकृत् ॥
कृतोराजिमता दंशः पिच्छिलः स्थिरशोफकृत् ।
स्निग्धः पाण्डुश्च सान्द्रासृक्श्लेष्मव्याधि समीरणः ॥
वृत्तभोगो महाकायः फण उर्द्ध्वं चणः पुमान् ।

स्थूलमूर्धा ... समाङ्गश्च स्त्रो ततः स्यादिवल्लातृथ ॥
स्त्रीवस्त्रस्थलाधोदृष्टिः स्वरहीनः प्रकम्पते ।
स्त्रिया दृष्टो विपर्यस्तैरेतैः पुंसा नरो मतः ॥
व्यामिश्रलिङ्गैरेतैस्तु पण्डदृष्टं नरं वदेत् ।
पाण्डुवक्त्रास्तु गर्भिण्या शुनोष्ठोच्छ्वसितस्ततः ॥
जरया क्रोधापजिह्वार्ता: सूतया रक्तसूत्रवान् ।
सर्पौ गोधेरको नाम गोधाख्याः स्याच्चतुष्पदः ॥
कृष्णसर्पेण तुल्यः स्यान्नानास्युर्मिश्रकादयः ।
भाजसम्पादितोद्धृतं पीडितं लम्बितार्पितम् ॥
सर्पि तच्च भृशा बाधं दंशायेत्येन तौ भृशाः ।
तरुणाः कृष्णसर्पास्तु गोनसाः स्थविरास्तथा ॥
दर्वि अन्तो वयो मध्ये भवन्त्याशी विषोपमाः ।
सर्पदंष्ट्राश्चतस्रस्तु तासां वामधरासिताः ॥
पीता वामोत्तरा दंष्ट्रे रक्तश्यावे तथापरे ।
यस्मात्तः पतति विन्दुर्गो वालात् सलिलोद्धृतात् ॥
वामाधरायां दंष्ट्रायां तस्मात् स्यादल्पैर्विषम् ।
एक द्वि त्रिचतुर्ह्रद्विविषभागोत्तरोत्तरा ॥
सवर्णास्तत् कृता दंशा यथा वक्तुप्रकराहयः ।
सर्पाणामेव विण्मूत्राः कीटाः स्युः किट्टजा इति ॥
दूषीविषाः प्राणहरा इति संक्षेपतो मताः ।
गात्रं रक्तं सितं कृष्णं श्यामं वा पिडकान्वितम् ॥
सकण्डूदाहवीसर्पपाकि स्यात् कोथनं तथा ।
कीटैर्दूषीविषैर्दृष्टे लिङ्गं प्राणहरं शृणु ॥
सर्पदृष्टे यथा शोफे वर्धते सोऽग्रगम्य स्तक ।

दंशोऽक्षि गौरवं मूर्च्छा वरुगार्तः श्वसित्यपि ॥
दंशस्य मध्ये यत्कृष्णं श्यावं वा जालकावृतम्।
दग्धाकृति भृशं पाकि क्लेदशोफज्वरान्वितम् ॥
तृष्णारुचिपरीतस्य भवेत् दूषीविषार्दितः।
दूषी विषाभिर्लूताभिस्तं दुष्टमिति निर्दिशेत्।
शोफाः श्वेता सिता रक्ताः पीता वा पिडका ज्वरः ॥
प्राणान्तिकौ भवेत् श्वासो दाह हिक्का शिरोग्रहः।
आदंशात् शोणितं पाण्डु मण्डलानि ज्वरोऽरुचिः ॥
लोमहर्षश्च दाहश्चाप्याखु दूषी विषार्दिते।
मूर्च्छाङ्गशोफवैवर्ण्य क्लेदशब्दा श्रुतिज्वराः ॥
शिरो गुरुत्वं लाला सृक् छर्दि श्वासाद्य दूषिकैः।
श्यावत्वमथ काषाय वा नानावर्णत्वमेव वा ॥
मोहः पुरीषभेदो वा दष्टस्याप्य कृकलासकः।
दहत्यग्निरिवादौ तु भिन्दती वोर्द्धमाशु च ॥
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति।
दष्टो साध्यस्तु हृग्घ्राणरसनोपहतो नरः ॥
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्।
विसर्पः श्वयथुः शूलो ज्वरश्छर्दिरथापि वा ॥
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्य्यते।
हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्त्तिमान् ॥
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते।
एकदंष्ट्रार्दितः शूनः सरुक् स्यात्पीतकः सलट् ॥
छर्दिर्निद्रा च मण्डूकैः सविषैर्दष्टलक्षणम्।
मत्स्यास्तु सविषाः कुर्युर्दाहं शोफरुजं तथा ॥

कण्डूं शोफं ज्वरं मूर्च्छां सविषास्तु जलौकसः ।
दाहतोदस्वेदशोफकरी तु गलगोडिका ॥
दंशे स्वेदं रुजं दाहङ्करोति च शतपदी ।
कण्डूमान्मशकैरेतच्छोफः स्यान्समवेदनः ॥
असाध्यकीटसदृशमसाध्यमशकार्दितम् ।
सद्यः प्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ॥
पीड़का मक्षिकादंशे तासान्तु स्थगिका सुहृत् ।
श्मशानचैत्यवल्मीकयज्ञाश्रय सुरालये ॥
पक्षसन्धिषु मध्याह्नेष्वर्द्धरात्राष्टमीषु ।
न सिध्यन्ति नरा दष्टाः पाषण्डायतनेषु च ॥
दृष्टिश्वासमनःस्पर्श विषैराशीविषैस्तथा ।
विनश्यन्त्याशु सम्प्राप्ता दष्टाः सर्व्वेश्च मर्म्मसु ॥
शीतमत्तावलीस्वतुल्यषार्त्तौ वर्धते विषम् ।
विषं प्रकृतिकालौ च तुल्यौ प्राप्याल्पमन्यथा ॥
वारिविप्रहृताः क्षीणा भीता नकुलनिर्जिताः ।
वृद्धा बालास्त्वचोन्मुक्ताः सर्पा मन्दविषाः स्मृताः ॥
सर्वदेहाश्रितं क्रोधाद्विषं सर्पो विमुञ्चति ।
तदेवाहारहेतोर्वा भयाद्वा न प्रमुञ्चति ॥
वातोल्बणविषाः प्राय उच्चिटिङ्गाः सवृश्चिकाः ।
वातपित्तोल्बणाः कीटाः श्लैष्मिकाः कणभादयः ॥
यस्य यस्य हि दोषस्य लिङ्गाधिक्यानि लक्षयेत् ।
तस्य तस्यौषधैः कुर्य्याद्विपरीतगुणैः क्रियाम् ॥
हृत्पीड़ोर्द्ध्वानिलस्तम्भः शिरायामोऽस्थिपर्व्वरुक ।

घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥
संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता ।
मांसावदारणं शोफो रक्तपीतश्च पैत्तिके ॥
वम्यरोचकहृल्लास प्रसेकोत्क्लेशगौरवैः ।
सशैत्यमुखमाधुर्य्यैर्विद्यात् श्लेष्माधिकं विषम् ॥
खण्डेन च व्रणालेपस्तैलाभ्यङ्गश्च वातिके ।
स्वेदो नाड़ीपुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥
सुशीतैः स्तम्भयेत् सेकैः प्रदेहैश्चापि पैत्तिकम् ।
लेखनच्छेदनस्वेद वमनैः श्लैष्मिकं जयेत् ॥
विषेष्वपि च सर्व्वेषु सर्वस्थानगतेषु च ।
सवृश्चिकोच्चिटिङ्गेषु प्रायः शीतोविधिर्हितः ॥
वृश्चिके स्वेदमभ्यङ्गं घृतेन लवणेन च ।
सेकांश्चोष्णान् प्रयुञ्जीत भोज्यं पानञ्च सर्पिषः ॥
एतदेवोच्चिटिङ्गेऽपि प्रतिलोमञ्च पांशुभिः ।
उद्वर्त्तनं सुखाम्बूष्णैस्तथावच्छादनं घनैः ॥
स्याच्चिद्दोषप्रकोपाच्च तथा धातुविपर्य्ययात् ।
शिरोऽभितापो लाला स्राव्यधो वक्त्रस्तथा भवेत् ॥
अन्येऽप्येवंविधा व्यालाः कफवातप्रकोपनाः ।
हृच्छिरोरुग् ज्वरस्तम्भ तृषा मूर्च्छाकरा मताः ॥
कण्डूनिस्तोद वैवर्ण्य सुप्तिक्लेदोपदूषणम् ।
विदाहरागरुक्पाकाः शोफो ग्रन्थिर्विकुञ्चनम् ॥
दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ।
ज्वरश्च सविषे लिङ्गं विपरीतन्तु निर्विषे ॥
तत्र सर्वं यथावस्थं प्रयोज्याः सुरुपक्रमाः ।

पूर्वोक्तं विधिमन्यञ्च यथावद् ब्रुवतः शृणु ॥
हृद्दाहे प्रसेके वा विरेके वमनं भृशम्।
यथावस्थं प्रयोक्तव्यं घृते संसर्जनक्रमः ॥
शिरोगते विषे नस्तः कुर्य्यान्मूलानि बुद्धिमान्।
बन्धुजीवस्य भार्ग्याश्च सुरसस्यासितस्य च ॥
दक्षकाकमयूराणां मांसासृक् मस्तके क्षते।
मूर्द्ध्नि देयमधो दष्टस्योर्द्ध्वं दष्टस्य पादयोः ॥
पिप्पली मरिचक्षारवचा सैन्धवशिग्रुकाः।
पिष्टा रोहितपित्तेन घ्नन्त्यक्षिगतमञ्जनात् ॥
विषे कण्ठगते मांसं कपित्थं सक्षिता मधु।
आमाशयगते लिह्यात्ताभ्यां चूर्णपलं नरः ॥
विषे पक्वाशय प्राप्ते पिप्पली रजनीद्वयम्।
मञ्जिष्ठा च समं पिष्टा गोपित्तेन नरः पिवेत् ॥
मांसं रक्तञ्च गोधायाः शुष्कं चूर्णीकृतं हितम्।
विषे रसगते पानं कापित्थ्य रससंयुतम् ॥
शेलुमूलत्वगग्राणि वादरौदुम्बराणि च।
कटभ्याश्च पिवेद्रक्तगते मांसगते पिवेत् ॥
सक्षौद्रं खदिरारिष्टं कौटजं मूलमम्भसा।
सर्व्वेषु च बले द्वे तु मधुकं मधूकं नतम् ॥
पिप्पलीं नागरं क्षारं नवनीतेन मूर्च्छितम्।
कफे भिषगुदीर्णे तु विदध्यात् प्रति सारणम् ॥
चन्दनं तगरं कुष्ठं हरिद्रे द्वे त्वगेव च।
मनःशिला तमालश्च रसः केसर एव च ॥
शार्दूलस्य नखश्चैव सुपिष्टं तण्डुलाम्बुना।

हन्ति सर्वविषाण्येव वज्रि वज्रमिवासुरान् ॥
रसे शिरीषपुष्पस्य सप्ताहं मरिचं सितम् ।
भावितं सर्पदष्टानां नस्य पानाञ्जने हितम् ॥
गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिवेद्दधि घृतायुतम् ॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुष्पलम् ।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ॥
सिन्धुवारस्य मूलञ्च श्वेता च गिरिकर्णिका ।
पानं दर्वीकरैर्दष्टे नस्यं मधु सपाकलम् ॥
मञ्जिष्ठा मधु यष्ट्याह्वा जीवकर्षभकौ सिता ।
काश्मर्यं वटशुङ्गानि पानं मण्डलिनां विषे ॥
व्योषं प्रति विषां कुष्ठं गृहधूमो हरेणुका ।
तगरं कटुका क्षौद्रं हन्ति राजीमतां विषम् ॥
क्षीरि वृक्षत्वगा लेपः शुद्ध कीटविषापहः ।
मुक्तालेपो वरः शोफदाहतोदज्वरापहः ॥
चन्दनं पद्मको शीरं पाटलिः सिन्धुवारिका ।
क्षीरकुष्ठानतं कुष्ठं शिरीषोदीच्यशारिवाः ।
श्लेलु स्वरसपिष्टोऽयं लूतानां सार्वकार्मिकः ।
सर्वा गदा यथा दोषं प्रयोज्याः स्युः कणगणके ॥
कुसुम्भपुष्पं गोदन्ताः स्वर्णक्षीरीकपोतविट् ।
शङ्खिन्यार्कम्बयः शुण्ठीकरञ्च मधु वार्श्चिके ॥
शिरीषस्य फलं पिष्टं स्नुही क्षीरेण दार्दुरे ।
मूलानि श्वेतभिण्डाया व्योष सर्पिश्च मत्स्यजे ॥
कीटदष्टक्रिया सर्वा समाना स्याज्जलौकसाम् ।

वार्षिकस्तु चिटिङ्गस्य वाणभस्योन्दुरोगदः ॥
वचां वंशत्वचं पाठां नतं सुरसमञ्जरीम् ।
द्वे बले नाकुलं कुष्ठं शिरीषं रजनीद्वयम् ॥
गुहामति गुहां श्वेतामजगन्धां शिलाजतु ।
कत्तृणं कटभीं चारं गृहधूमं मनःशिलाम् ॥
रोहीतकञ्च पित्तेन पिष्टा तु परमो गदः ।
नस्याञ्जनाद्यलेपेषु हितो विश्वभरादिषु ॥
स्वर्जिकाजगन्धात् चारः सुरसोथाश्मपोडकः ।
मदिरा मण्डसंयुक्तो हितः शतपदी विषे ॥
कपित्थमश्मपीडोऽर्कबीजं त्रिकटुकं तथा ।
करञ्जो द्वे हरिद्रे च गलगोध्या विषं जयेत् ॥
काकाण्डरससंयुक्तो विषाणां तण्डुलीयकः ।
सर्वेषां वर्हिणाण्डेन तद्वद्वायसपीलुकः ॥
शिरीषफलमूलत्वक् पुष्पपत्रैः समैर्घृतैः ।
श्रेष्ठः पञ्चशिरीषोऽयं विषाणां प्रवरो वधे ॥
चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्ताघतं तु यत् ॥
शूयते पच्यते वापि स्रवति ज्वरयत्यपि ।
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि ॥
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ।
दुर्गान्धकारे विद्धस्य केनचिद्दृष्टशङ्कया ॥
विषोद्वेगा ज्वरच्छर्दिर्मूर्च्छा दाहोऽपि वा भवेत् ।
ग्लानिर्मोहोऽतिसारो वाप्येतच्छङ्का विषं मतम् ॥
चिकित्सितं इदं तस्य कुर्यादाश्वासयन् बुधः ।
सितां वैगन्धिकां द्राक्षां पयस्यां मधुकं मधु ॥

पानं समन्त्रपूताम्बु प्रोक्षणं सान्त्वहर्षणम् ।
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः ॥
भोजनार्थे प्रशस्यन्ते लवणार्थे च सैन्धवम् ।
तण्डुलीयकजीवन्ती वार्ताकुसुनिषण्णकाः ॥
चुचुमण्डूकपर्णी च शाकश्चकुलकं हितम् ।
धात्री दाडिममम्लार्थे यूषा मुद्गहरेणुभिः ॥
रसार्थेण शिखिशाविलावतैत्तिरि पार्षताः ।
विषघ्नौषधसंयुक्ता रसा यूषाश्च संस्कृताः ॥
अविदाहीनि चान्नानि विषार्तानां भिषग्जितम् ।
विरुद्धाध्यशनक्रोधक्षुद्भयायासमैथुनम् ॥
वर्जयेद्विषमुक्तोऽपि दिवा स्वप्नं विशेषतः ।
मुहुर्मुहुः शिरोन्यासः शोफः स्रस्तौष्ठकर्णता ॥
ज्वरस्तथास्थि गात्रत्वं हनुकम्पोऽङ्गमर्दनम् ।
रोमापगमनं ग्लानिररतिर्वेपथुर्थ हः ॥
चतुष्पदां भवत्येतद्दष्टानामिह लक्षणम् ।
देवदारु हरिद्रे द्वे सरलं चन्दनागुरु ॥
रास्ना गोरोचना जाती गुग्गुल्विश्च क्षुरकोनताम् ।
चूर्णं ससैन्धवामन्तगोपित्तमधुसंयुतम् ।
चतुष्पदां हि दष्टानामगदः सार्वकामिकः ॥
सौभाग्यार्थं स्त्रियः स्वेदरजो नानाङ्गजान्मलान् ।
प्रचुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्य मिश्रितान् ॥
तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्ज्वरश्चास्योपजायते ।
मर्म प्रधमनाध्मान हस्तपादशोफलक्षणाः ॥
जठरं ग्रहणीदोषं यक्ष्माणं श्वयथुं ज्वरम् ।

एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत्॥
स्वप्ने मार्जारगोमायु व्यालान् सनकुलान् कपीन्।
प्रायः पश्यति नद्यादीन् शुष्कांश्च सवनस्पतीन्॥
कालश्च गौरमात्मानं स्वप्ने गौरश्च कालकम्।
विकर्णनासिकं वापि पश्येत्तद्विहतेन्द्रियः॥
तमनिच्य भिषक् प्राज्ञः पृच्छेत् किञ्चैः कदा सह।
जग्धमित्यवगम्याशु प्रदद्याद्वमनं भिषक्।
सूक्ष्मताम्ररजस्तस्मै सक्षौद्रं हृद्विशोधनम्॥
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत्।
हेमसर्वविषाण्याशु गरांश्च विनियच्छति॥
हेमपस्य सजत्यङ्गे न हि पद्मेऽम्बुवद्विषम्।
नागदन्ती विषदन्ती द्रवन्ती सुक्पयः फलैः॥
साधितं साद्विषं सर्पिः सगोमूत्राढकं हितम्।
सर्पकीटविषार्तानाञ्च रातानाञ्च शान्तये॥
शिरीषत्वङ्त्रिकटुकं त्रिफला चन्दनोत्पले।
द्वे बले शारिवास्फोता सुरभी निम्बपाटलाः॥
बन्धुजीवाढकी मूर्वा वासासुरसवत्सकान्।
पाठा कोलाग्रगन्धाकं मूलयष्ट्याह्वपद्मकान्॥
विशालां बृहतीं लाक्षां कोविदारं शतावरीम्।
कटभी दन्त्यपामार्गान् पृश्निपर्णीं रसाञ्जनम्॥
श्वेतभिण्डाश्वखुरकौ कुन्दाकशियकुकाम्।
विदारीं मधुकात् सारं करञ्जस्य फलत्वचाम्।
रजन्यौ लोध्रमञ्जिष्ठे पिष्ट्वा साध्यं घृताढकम्॥
तुल्याम्बुभागगोमूत्राढके तद्विषापहम्।

अपस्मारज्वरोन्माद भूतपद्मगरोदरम् ॥
पाण्डुरोगान् क्रिमीन् गुल्मान् प्लीहोदस्तम्भकामलाः
हनुस्कन्धग्रहादींश्च पानाभ्यञ्जनलावनैः ॥
हन्यात् सञ्जीवयेच्चापि विषोद्वस्मृतान्नरान् ।
नाम्नेदममृतं सर्वविषाणां स्यादष्टतोत्तममिति ॥
तत्र श्लोकाः छत्रीजर्जरपाणिश्च चरेत्रात्रौ तथा दिवा ।
तच्छाया शब्दवित्रस्ताः प्रणश्यन्त्याशु पन्नगाः ॥
दष्टमात्रो दशेदाशु तं सर्पं लोष्टमेव वा ।
उपर्य्यरिष्टां बध्नीयाद्दंशं छिन्द्याद्दहेत्तथा ॥
वज्रं मरकतं सारं पिचुका विषमूषिका ।
कर्केण तं मणिः सर्पाद्दूर्गगजमौक्तिकम् ॥
धार्य्यङ्गरमणिर्य्याश्च वरौषध्यो विषापहाः ।
खगाश्च शारिका क्रौञ्च शिखिहंस शुकादयः ॥
इतीदमुक्तं द्विविधस्य विस्तरैर्बहुप्रकारं विषरोगभेषजम् ।
अधीत्य विज्ञाय तथा प्रयोजयेत् व्रजेद्भिषाणामवि पद्यतां बुधः।

इति विषचिकित्सितं

## चतुर्विंशोऽध्यायः।

---

अथातस्त्रिमर्मीयं चिकित्सितं व्याख्यास्यामः।

सप्तोत्तरं मर्मशतं यदुक्तं शरीरसंख्यामधिकृत्य तस्मात्।
मर्माणि वस्तिं हृदयं शिरश्च प्रधानभूतानि वदन्ति तज्ज्ञाः॥
प्राणाश्रयात्तानिह पीड़यन्तो वातादयोऽसूनपि पीड़यन्ति।
तत्संश्रितानां अनुपालनार्थं महागदेभ्यः शृणु सौम्य! रक्षाम्॥
कषायतिक्तोषणरूक्षभोज्यैः सन्धारणा भोजनमैथुनैश्च।
वायुर्विवृद्धः प्रकरोति तीव्रं विण्मूत्र वातग्रहमेत्य वस्तिम्॥
स्रोतांस्यधोवर्त्तमधोगमानि बद्ध्वाह्युपावृत्य करोत्यपानः।
रुग्वस्तिहृत्कुक्षि उदरेष्वभीक्ष्णं स पृष्ठपार्श्वेष्वति दारुणा स्यात्॥
आध्मानहृल्लास विकर्त्तिकाश्च तोदोऽविपाकश्च सवस्तिशोथः।
दोषाःप्रवृद्धा जठरे च गण्डाग्न ऊर्द्धश्च वायुर्विहितो गुदे स्यात्॥
कृच्छ्रेण शुष्कस्य चिरात्प्रवृत्तिः स्याद्वा तनुः स्यात्खररूक्षशीता।
ततश्च रोगा ज्वरमूत्रकृच्छ्र प्रवाहिका हृद्ग्रहणी प्रदोषाः॥
वम्यान्ध्यबाधिर्य्यशिरोऽभितापवातोदराष्ठीलमनो विकाराः।
तृष्णास्रपित्तारुचि गुल्मकासश्वास प्रतिश्यार्दित पार्श्व रोगाः।
अन्ये च रोगा बहवोऽनिलोत्था भवन्त्युदावर्त्तकृताःसघोराः
तं तैलशीतज्वरनाशनोक्तं स्वेदैर्यथोक्तैः प्रविलीन दोषम्।
उपाचरेद्वर्त्ति नि रूहवस्तिस्नेहैर्विरेकैरनुलोमनार्थैः॥
श्यामात्रिवृन्मागधिकाग्निचूर्णं गोमूत्रपीतं दशभागमाषम्।
स नीलिकं द्विलवणं गुड़ेन वर्त्तिं कराङ्गुष्ठनिभां विदध्यात्॥

पिण्याकसौवर्चल हिङ्गुभिर्वा समर्षपवृच्धणा यावशूकैः ।
क्रिमिघ्नकम्पिल्लकशङ्खिनोभिः सुधार्कजक्षीरगुड़ायुताभिः ॥
स्यात्पिप्पली सर्षपराठवेश्मधूमैः स गोमूत्रगुडैश्च वर्त्तिः ।
श्यामाबलालाबुकपिप्पलोनां नाड्याथवा च प्रधमेत् चूर्णम् ॥
रक्षोघ्नतुम्बीकरघाट कृष्णाचूर्णं स जोमूतक सैन्धवं वा ।
स्निग्धे गुदे तान्यनुलोमयन्ति नरस्य वर्चोऽनिल मूत्रसङ्गम् ॥
तेषां विघाते तु भिषग्विदध्यात्स्वभ्यक्त सुस्विन्नतनो र्निरूहम्
ऊर्ध्वानुलोमौषध मूत्रतैलक्षाराम्ल वातघ्नयुतं सतीक्ष्णम् ॥
वातेऽधिकेऽम्लं लवणं सतैलं क्षीरेण पित्ते तु कफे समूत्रम् ।
स मूत्रवर्चोऽनिलसङ्गसंस्थ शिरा गुदस्य प्रगुणी करोति ॥
त्रिवृत्सुधापत्रतिलादि शाकं ग्राम्योदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टा निलमूत्रविड्भिरद्यात्प्रसन्ना गुड़ शीधुपायी ॥
भूयोऽनुबन्धे तु भवेद्विरेच्यो मूत्र प्रसन्ना दधिमण्ड युक्तैः ।
गुल्मोदवर्धार्गः प्लीहोदावर्तयोनि शुक्रगदे ॥
भेदः कफसंसृष्ट मारुतरक्तेऽवगाढे च ।
हृद्रुसि पक्षवधादिषु विरेचना ह्येषु वातरोगेषु ॥
वाते निरुद्धमार्गे भेदः कफपित्तरक्तेन ।
पयसा मांसरसैर्वा त्रिफलारस यूष मूत्रमदिराभिः ॥
दोषानुबन्ध योगात् प्रशस्त मेरण्डजं तैलम् ।
तद्वातनुत्स्वभावात् संयोगवशाद्विरेचनाच्च जयते ॥
भेदोऽसृक्पित्तकफान्मिश्रानिलवर्चसोः स्यात् ।
हिङ्गुसरा हिङ्गु वचा सकुष्ठा सुवर्चिका चैव विडङ्गचूर्णम् ।
सुखाम्बु नानाहविषूचिकार्ति हृद्रोगगुल्मोर्द्ध समीरणघ्नम् ॥
वचा भया चित्रकयावशूकान् सपिप्पलोकातिविषान् सकुष्ठान्

उष्णाम्बुनानाह विमूढवातान् पीत्वा जयेदाशु रसौदनाशी
स्थिरादिवर्गस्य पुनर्नवायाः शम्याकपूतीककरञ्जयोश्च।
सिद्धः कषाये द्विपलांशिकानां प्रस्थो घृतात् स्यात्प्रतिरुद्धगते
कफञ्च मूलञ्च विरेचनोक्तं हिङ्ग्वर्कमूलं दशमूलमग्र्यम्।
स्नुक्चित्रकौ चैव पुनर्नवा च तुल्यानि सर्वैर्लवणानि पञ्च॥
स्नेहैः समूत्रैः सहजर्जराणि शरावसन्धौ विपचेत्तु लिप्ते।
पक्वं सुपिष्टं लवणं तदन्नैः पानैस्तथा नाहरुजघ्नमग्र्यम्॥
हृत्स्तम्भमूर्द्धामय गौरवाभ्यां चोद्गारसङ्गेन सपीनसेन।
आनाह मामप्रभवञ्जयेत्तं प्रच्छर्दनैर्लङ्घनपाचनैश्च॥
व्यायामतीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात्।
आनूपमत्स्याध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणामिहाष्टौ
पृथङ्मलाः स्वैः कुपिता निदानैः सर्वेऽथवा कोपमुपेत्य वस्तौ
मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात्॥
तीव्रा हि रुग्वङ्क्षण वस्ति मेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात्।
पीतास्र कृष्णं हि सरुक्सदाहं कृच्छ्रान् मुहुर्मूत्रयतीह पित्तात्
वस्तेः सलिङ्गस्य गुरुत्वशोफौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे।
सर्वाणि रूपाणि तु सन्निपातात् भवन्ति तत्कृच्छ्रतमन्तु कृच्छ्रम्

इति मूत्रकृच्छ्रम्।

विशोषयेद्वस्तिगतन्तु शुक्रं मूत्रं सपित्तं पवनः कफं वा।
यदा तदा श्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः॥
कदम्बपुष्पाकृतिरश्मतुल्या श्लक्ष्णा त्रिपुट्याप्यथवापि मृद्वी।
मलस्य चेन्मार्गमुपैति रुद्ध्वा मूत्रं रुजां तस्य करोति वस्तौ॥
ससेवनी मेहन वस्ति शूलं विशीर्णधारञ्च करोति मूत्रम्।
मृद्नाति मेढ्रं स तु वेदनार्त्तो मुहुः शकृन् मुञ्चति मेहते च॥

क्षोभात्क्षते मूत्रयतीह सा सृक्स्याः सुखं मेहति च व्यपायात् ।
एषा श्मरी मारुतभिन्नमूर्त्तिः स्याच्छर्करा मूत्रपथात् क्षरन्ती
शुक्रं मलायेह पृथक् पृथग्वा मूत्रायनस्याः प्रतिवारयन्ति ।
तद्वयाहतं मेहन वस्ति शूले मूत्रं सशुक्रं हि करोति बद्धम् ॥
स्तब्धश्च शूनो भृशवेदनश्च तुद्येत वस्तिवृषणौ च तस्य ।
क्षताभिघातात् क्षतजक्षयाद्वा प्रकोपितं वस्तिगतं विबद्धम् ॥
तीव्रार्त्तिं शूलेन महाल्पमल्पमायाति तस्मिन्नति सञ्चिते च ।
आध्मातं विन्दति गौरवश्च वस्तेर्लघुत्वञ्च विनिःसृतेऽस्मिन् ॥

कृच्छ्राश्मरीनिदानम् ।

अभ्यञ्जन स्नेह निरूह वस्ति स्नेहोपनाहोत्तर वस्ति सेकान्
स्थिरादिभिर्वातहरैश्च सिद्धान् युञ्ज्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥
पुनर्नवैरण्डशतावरीभिः पत्तूरवृश्चीवबलाश्मभिद्भिः ।
द्विपञ्चमूलेन कुलत्थकोलयवैश्च तोयात् क्वथिते कषाये ॥
तैलं वराहर्क्षवसा घृतञ्च तैरेव कल्कैर्लवणैश्च साध्यम् ।
तन्मात्रयाशु प्रतिहन्ति पीतं शूलान्वितं मारुतमूत्रकृच्छ्रम् ॥
एतानि चान्यानि वरौषधानि शस्तानि शस्तान्यपि चोपनाहे
स्युर्लाभतस्तैलफलानि चैव स्नेहाम्लयुक्तानि सुखोष्णवन्ति ।
सेकावगाहाः शिशिराः प्रदेहा ग्रैष्मो विधिर्वस्ति पयो विरेकाः
द्राक्षा विदारी क्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्याः ।
शतावरी काशकुशाश्वदंष्ट्रा विदारि शालीक्षुकशेरुकाणाम्
क्वाथं सुशीतं मधु शर्कराभ्यां युक्तं पिबेत् पैत्तिकमूत्रकृच्छ्री ।
पिबेत्कषायं कमलोत्पलानां शृङ्गाटकानामथवा विदार्याः ॥
दण्डैरकाणामथवापि मूलं पूर्वेण कल्केन तथा सुशीतम् ।
एर्वारुबीजन्त्रपुषात् कुसुम्भान् सकुङ्कुमं स्याद्वृषकस्य पेयः ॥

द्राक्षा रसेनाश्मरि शर्करासु सर्वेषु कृच्छ्रेषु प्रशस्त एषः।
एर्वारुबीजं मधुकं सदार्वि पैत्ते पिवेत्तण्डुलधावनेन॥
दार्वीं तथैवामलकीरसेन समाक्षिकां पित्तकृते तु कृच्छ्रे।
क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः॥
तक्रं सतिक्तौषध सिद्धतैलमभ्यङ्गपानं कफमूत्रकृच्छ्रे।
व्योषं श्वदंष्ट्रा त्रुटिसारसास्थि कोलप्रमाणो मधु मूत्रयुक्तम्॥
पिवेत् त्रुटिं चौद्रयुतां कदल्या रसेन कैटुर्य्य रसेन वापि।
तक्रेण युक्तं सितमारकस्य बीजं पिवेत् कृच्छ्र विनाशहेतोः॥
पिवेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे।
सप्तच्छदारग्वधकेम्वुकैलाधवं करञ्जं कुटजं गुडूचीम्॥
पक्त्वा जले तेन पिवेद्यवागूं सिद्धं कषायं मधुसंयुतं वा।
सर्वं त्रिदोष प्रभवे तु वायोः स्थानानुपूर्व्या प्रसमीक्ष्य कार्यम्॥
त्रिभ्योऽधिके प्राग्वमनं कफे तु पित्ते विरेकः पवने तु वस्तिः
क्रिया हिता त्वश्मरि शर्कराभ्यां कृच्छ्रे यथैवेह कफानिलाभ्याम्
कफाश्मनां भेदनिपातनाय विशेषयुक्तं शृणु कर्मसिद्धम्।
पाषाणभेदं वृषकं श्वदंष्ट्रा पाठा भया व्योषशटीनि कुम्भाः॥
हिंस्री खराश्वासितिमारकाभ्यामेर्वारुकाणां त्रपुषस्य बीजम्
उत्कुञ्चिका हिङ्गु सवेतसाम्लं स्याद्द्वे बृहत्यौ हपुषावचा च
चूर्णं पिवेदश्मभिदा विपक्वं सर्पिश्च गोमूत्र चतुर्गुणान्तैः।
मूलं श्वदंष्ट्रे क्षुरको रुबूकात् क्षीरेण पिष्टं बृहतीद्वयञ्च॥
आलोड्य दध्ना मधुरेण पेयं दिनानि सप्ताश्मरि भेदनाय।
पुनर्नवायो रजसो श्वदंष्ट्रा फल्गु प्रवालाश्च सदर्भपुष्पाः॥
क्षीराम्बु मद्येक्षुरसैः सुपिष्टं पेयं भवेदश्मरि शर्करासु।

त्रुटिं सुराह्वं लवणानि पञ्च यवाग्रजं कुन्दुरुकाश्मभेदौ ॥
कम्पिल्लकं गोक्षुरकस्य बीजं सर्वारु बीजं त्रपुसस्य बीजम् ।
चूर्णीकृतं चित्रक हिङ्गु मांसी यमानि तुल्यं त्रिफला द्विभागम् ॥
अम्लैरशुक्तैः रसमद्ययूषैः पेयं हि गुल्माश्मरिभेदनार्थम् ।
शिग्रोस्तु यूषो मृदुमूलकल्काद्बिल्वप्रमाणाद्घृततैलभृष्टात् ॥
शीतोष्णभिः स्याद्दधिमण्डसिद्धः पेयः प्रकामं लवणेन युक्तः ।
जलेन शोभाञ्जनमूलकल्कः शृतो हितश्चाश्मरि शर्कराभ्याम् ।
सितोपलावासमयावशूकाः कृच्छ्रेषु सर्वेष्वपि भेषजं स्यात् ।
पीत्वा च मद्यं निगदं रथेन हयेन वा शीघ्रजवेन यायात् ॥
तैः शर्करा प्रच्यवतेऽश्मरी तु शाम्येन्न चेच्छल्यविदुद्धरेत्तम् ।
रेतो विघात प्रभवे तु कृच्छ्रे दोषातिरेकं प्रतिकर्म कुर्य्यात् ॥
कर्पासमूलं वृषकाश्मभेदौ बलास्थिरादीनि गवेधुका च ।
वृश्चीव ऐन्द्री च पुनर्नवा च शतावरी मध्वशनाखुपर्ण्यौ ॥
तत्क्वाथसिद्धे पवने रसः स्यात्तिक्तोऽधिकं क्षीरमथापि सर्पिः ।
कफे च यूषादिकमन्नपानं संसर्गजे सर्वहितः क्रमः स्यात् ॥
एवं न चेच्छाम्यति तस्य युञ्ज्यात् सुरां पुराणां मधुकासवं वा
विहङ्गमांसानि च बृंहणाय वस्तींश्च शुक्राशयशोधनार्थम् ॥
शुद्धस्य तृप्तस्य च वृष्ययोगैः प्रियानुकूलाः प्रमदा विधेयाः ।
दर्भोत्कटेक्षूत्पलनालतालशाकेक्षु बालेक्षु कुशोदकानि ॥
पिबेत्सिता क्षौद्रयुतानि खादेदिक्षुं विदारीं त्रपुषाणि चैव ।
घृतं श्वदंष्ट्रास्वरसेन सिद्धं क्षीरेण चैवाष्टगुणेन पेयम् ॥
स्थिरादिकानां कतकादिकानामेकैकशो वा विधिनैव तेन ।
क्षीरेण बस्तिर्मधुरौषधैः स्यात्तैलेन वा स्वादुफलोत्थितेन ।
यन्मूत्रकृच्छ्रे विहितं तु पैत्ते कार्यं तु तच्छोणितमूत्रकृच्छ्रे ॥

व्यायामसन्धारणशुष्क रूक्षपिष्टान्नवातार्क करव्यवायान्।
खर्जूरभालूक कपित्थ जम्बु बिषं कषायं च रसभजेत्ना।

इति मूत्रकृच्छ्राश्मरी चिकित्सा।

हृद्रोगकारीणि तथाभिघातः चिन्ताभयत्रासमदाभिचाराः।
वैवर्ण्यं मूर्च्छा ज्वरकासहिक्का श्वासास्य वैरस्य तृषाः प्रमोहाः
छर्दिः कफोत्क्लेशरुजो रुचिश्च हृद्रोगजाः स्युर्विविधास्तथान्य
हृच्छून्य भावद्रवशोषभेदस्तम्भः समोहः पवनाद्विशेषः।
पित्तात्तमो दूयनदाहमोहसन्त्रासतापज्वरपीतभावाः॥
स्तब्धं गुरु स्यात् स्तिमितञ्च मर्म कफात् प्रसेकज्वरकासतन्द्राः।
त्रियास्त्रिदोषन्त्वपि सर्वलिङ्गं तीव्रार्त्ति भेदं क्रमिजं सकण्डूम्॥
तैलंससौवीरकमस्तु तक्रं वाते प्रपेयं लवणं सुखोष्णम्।
मूत्राम्बु सिद्धं लवणैश्च तैलमानाहगुल्मार्त्ति हृदामयघ्नम्॥
पुनर्नवां दारु सपञ्चमूलां रास्नां यवान् विल्वकुलत्थकोलम्,
पक्त्वा जले तेन विपाच्य तैलमभ्यङ्गपानेऽनिलहृद्गदघ्नम्॥
हरीतकी नागरपुष्कराह्वैर्वयः कयस्थालवणैश्च कल्कैः।
स हिङ्गुभिः साधितमग्र्य सर्पिर्गुल्मे सहृत्पार्श्व गदेऽनिलोत्थे॥
सपुष्कराह्वं फलमूलपूरं महौषधं शठ्याभया च कल्काः।
क्षाराम्लसर्पिः लवणैर्विमिश्राः स्युर्वातहृद्रोगविकर्त्तिकाघ्नाः॥
क्वाथः कृतः पौष्कर मातुलुङ्गपलाशभूतीकशटी सुराह्वैः।
सनागराजाजी हिवचायवानिः सक्षार उष्णो लवणश्च पेयः॥
पथ्या शटी पुष्कर पञ्चकोलात् समातुलुङ्गायमकेन कल्कः।
गुडप्रसन्ना लवणैश्च भृष्टो हृत्पार्श्व गुल्मोदरयोनिशूले॥
स्यात्तु चूर्णं द्वे त्रिफले सपाठे निदिग्धिका गोक्षुरकौ बले द्वि
श्चद्विखटिस्त्वामलकी स्वगुप्ता मेदे मधूकं मधुकं स्थिराच्च॥

शतावरी जीवकपृश्निपर्ण्यौ द्रव्यैरिमै रक्षसमैः सुपिष्टैः।
प्रस्थं घृतस्येह पचेद्विधिज्ञः प्रस्थेन दध्न स्तथ माहिषस्य॥
मात्रां पलं चार्द्धपलं पिबुर्वा प्रयोजयेन्माचिकसंप्रयुक्तम्।
श्वासे सकासे त्वथ पाण्डुरोगे हलीमके हृद्ग्रहणी प्रदोषे॥
शीताः प्रदेहाः परिषेचनञ्च तथा विरेको हृदि पित्तदुष्टे।
द्राक्षा सिता चौद्रपरूषकैः स्यात् शुद्धे तु पित्तापहमन्नपानम्
यष्ट्याह्विका तिक्तकरोहिणीभ्यां कल्कं पिबेच्चापि सिता जलेन
चतेषु सर्पींषि च तद्गुडाश्च ये ते च शस्ता हृदि पित्तदुष्टे॥
द्राक्षा बला श्रेयसि शर्कराभिः खर्जूरसस्यर्षभकोत्पलैश्च।
काकोलि मेदा युगजीवकैश्च क्षीरे च सिद्धं महिषी घृतं स्यात्
कशेरुकाशैवलशृङ्गवेरप्रपुण्डरीकं मधुकं बिसस्य।
ग्रन्थिश्च सर्पिः पयसा पचेत्तैः चौद्रान्वितं पित्तहृदामयघ्नम्॥
स्थिरादिकल्कैः पयसा च सिद्धं द्राक्षारसेनेक्षुरसेन वापि।
सर्पिर्हितं स्वादुफलेक्षुजाश्च रसाः सुशीताः हृदि पित्तदुष्टे॥
स्विन्नस्य वान्तस्य विलङ्घितस्य क्रिया कफघ्नी कफमर्मरोगे।
कौलत्थ धान्यैश्च रसैर्यवान्नैः पानानि तीक्ष्णानि च शर्कराणि
मूत्रे श्रिताः कटफलशृङ्गवेरपीतद्रु पथ्यातिविषाः प्रदेयाः।
कृष्णा शटी पुष्करमूलरास्ना वचा भया नागरचूर्णकञ्च॥
उदुम्बराश्वत्थवटार्जुनाख्ये पलाशरोहीतकखादिरे च।
क्वाथे त्रिवृत्त्र्यूषणचूर्णसिद्धो लेहः कफघ्नः शिशिराम्बुयुक्तः॥
त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्वत्र हितं विधेयम्।
हीनादिमध्यत्वमवेक्ष्य चैव कार्यं त्रयाणामपि कर्म शस्तम्॥
कुष्ठेऽधिकश्चोर्ध्यति शूलमल्पं जीर्णस्थितं चेत्सुरदारु कुष्ठम्,
स बिल्वकं द्वे लवणे विडङ्गं उष्णाम्बु ना सातिशयं पिबेत्सः॥

जत्वश्मजं वा भिषग प्रमत्तः प्रयोजयेत् कल्पविधान दृष्टम्।
प्राश्नं स्तथा गस्त्यमथापि लेहं रसायनं ब्राह्ममथामलक्याः॥
जीर्णेऽधिके स्नेह विरेचनं स्यात् कर्कैर्विरेच्यो यदि जीर्य्यमाणे।
त्रिष्वेव कालेष्वधिके तु भुक्ते तीक्ष्णं हितं मूत्रविरेचनं स्यात्।
प्रायोऽनिलोऽह्यगतिः प्रकुप्यत्यामाशये शोधनमेव तस्मात्॥
कार्यं तथा लङ्घन पाचनञ्च सर्वं क्रिमिघ्नं क्रिमिहृद्गदे च।
सन्धारणा जीर्णरजोऽति भाष्य क्रोधार्तिवैषम्य शिरोऽभितापैः।
प्रजागरातिस्वपनाम्बु शीतैरवश्यया मैथुनवाष्पधूमैः।
संशीनदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेत्तु॥
प्राणार्तितोदौ श्लथशुष्कलाभः स्रावोऽनिलात्तच्छ्वनमूर्द्धरोगः।
नासाग्रपाकज्वर वक्त्रशोष तृष्णोष्णपित्तस्रवणा निमित्तात्॥
कासारुचिस्रावघनप्रसेकात् कफाद्गुरुः स्रोतसि चापि कण्डूः।
सर्वाणि रूपाणि तु सन्निपातात्स्युः पीनसे तीव्ररुजेऽति दुःख॥
सर्वोऽतिवृद्धो हितभोजनात्तु दुष्टप्रतिश्याय उपेक्षितः स्यात्
ततश्च रोगाः क्षवथुः सनासाशोषः प्रतीनाह परिस्रवौ च॥
घ्राणास्य पूतित्वसपीनसश्च सपाकशोथार्बुदपूयरक्ताः।
अरूंषि मूर्द्धश्रवणाक्षिरोगखालित्यहर्यर्जुनलोमभावाः॥
तृट्श्वासकासज्वर रक्तपित्तवैस्वर्यशोषाश्च ततो भवन्ति।
रोधाभिघातस्रवशोषपाकैर्घ्राणं युतं यश्च न वेत्ति गन्धम्॥
दुर्गन्धिवास्यं बहुशः प्रकोपि दुष्टप्रतिश्यायमुदाहरेत्तम्।
संस्पृश्य मर्माण्यनिलस्तु मूर्द्धि विश्वक्पथस्थः क्षवथुं करोति॥
बली तु संशोष्य कफं मनस्तः शृङ्गाटके घ्राणविशोषणं च।
उच्छ्वासमार्गन्तु कफस्य वातोरुध्यात्प्रतीनाह मुदाहरेत्तम्
घ्राणाद्घनः पीत सितस्तनुर्वा दोषः स्रवेत्स्रावमुदाहरेत्तम्।

यो मस्तु लिङ्गाङ्कन पीत पक्वः कफः स्रवेद्गाढ़मपीनसः सः ॥
वैवर्ण्यदौर्गन्ध्यमुपेक्षयात्तु स्यात्पूतिनाम्नं श्वयथुभ्रमश्च ।
घ्राणाश्रितासृक्प्रभृतीन् प्रदूष्य कुर्वन्तिनस्तःश्वयथुं मलाश्च ॥
घ्राणे तथोच्छ्वासगतिं निरुद्ध्य मांसास्रदोषादपि चार्बुदानि।
घ्राणात्स्रवेद्वा श्रवणान्मुखाद्वा पित्तात्क्रमस्रन्त्वपि पूयरक्तम्॥
कुर्यात् स पित्तः पवनस्त्वगादीन् सन्दूष्य चारूंषि सपाकवन्ति
भृशार्तिशून्यं स्फुरतीह वातात्पित्तात्सदाहार्तिकफाद्गुरु स्यात्
सर्वैस्त्रिदोषं क्रिमिभिस्तु कण्डूदौर्गन्ध्यतोदार्तियुतं शिरःस्यात्
मुखामये मारुतजेतु शोषकार्कश्यरौक्ष्याणि चलारुजश्च ।
कृष्णारुणं निष्पतनं सुशीतं प्रस्रंसन स्यन्दनतोदभेदाः ॥
तृष्णाज्वरस्फोटकपाद दाहाधूमायनं चाप्यवदीर्णता च ।
पित्तात्समूर्च्छा विविधारुजश्च वर्णांश्च शुक्लारुण वर्णवर्ज्याः ॥
कण्डूर्गुरुत्वं सितविज्जलत्वं स्नेहोऽरुचिर्जाड्यकफप्रसेकौ ।
उत्क्लेशमन्दानिलताथ तन्द्रारुजश्च मन्दाः कफवक्त्ररोगे ॥
सर्वाणि रूपाणितु वक्त्ररोगे भवन्ति यस्मिन् स तु सर्वजः स्यात्
संस्थानदूष्याकृतिनामभेदाच्चैते चतुःषष्टिविधा भवन्ति ॥
शालाक्यतन्त्रे विहितानि तेषां निमित्तरूपाकृति भेषजानि।
अशून्यतार्थं तु चतुर्विधस्य क्रियां प्रवक्ष्यामि शुखामयस्य ॥
वातादिभिः शोकभयाति लोभक्रोधाद्यहृद्याशनगन्धरूपैः ।
अरोचकः कर्कश शीतदन्तकषायवक्त्रस्य मतोऽनिलेन ॥
कट्वम्लमुष्णं विरसं च पूतिपित्तेन विद्याल्लवणाश्च वक्त्रम् ।
माधुर्यपैच्छिल्य गुरुत्वशैत्ये विवन्धसंस्तम्भयुतं कफेन ॥
अरोचके शोकभयाति लोभक्रोधाद्य हृद्याशन गन्धजे स्यात्
स्वाभाविकञ्चास्य रसोऽरुचिश्च त्रिदोषजेनैकरसम्भवेत्तु ॥

नादोऽति रुक्कर्णमलस्य शोषः स्रावस्तनुश्चा श्रवणश्च वातात्।
शोफः सरागोदरणं विदाहः स पीत पित्तस्रवणश्च पित्तात्॥
वैश्रुत्य कण्डू स्थिर शोफ शुक्लस्निग्धा स्रुतिश्च श्रवणस्य खेदात्॥
सर्वाणि रूपाणि तु सन्निपातात् स्रावश्च तत्राधिकदोष वर्णः
अल्पाश्रु रागानुप देहता च प्रस्यन्दतोदातिरुजश्च वातात्।
पित्तात्तु दाहार्तिरुजोऽति रागाः पीतोऽतिदेहः सुभृशोष्णमस्रु
शुक्लोपदेहो बहुपिच्छलास्रु नेत्रस्य खेटादगुरुता स कण्डूः।
सर्वाणि रूपाणि तु सन्निपाताच्चेत्रामयाष्षरस्रवतिस्र भेदात्॥
तेषामभि व्यक्तिरभिप्रदिष्टा शालाक्य तन्त्रेषु चिकित्सितञ्च।
पराधिकारे तु न विस्तरोक्तिः शस्तेति तेनात्र नानः प्रयासः॥
तेजोऽनिलाद्यैःसहकेशभूमिं दग्ध्वाशु कुर्य्यात् खलतिन्नरस्य।
किञ्चित्तु दग्ध्वापलितानि कुर्य्याद्धरि प्रभत्वं च शिरोरुहाणाम्
इत्यूर्ध्वजत्र्वामयदेकदेशः प्रोक्तश्चिकित्सान्तु परां निबोध।
विस्तारतः संग्रहतश्च सम्यग्यथाक्रमं सौम्य! मयोच्यमानाम्॥

वातात्मकास वैस्वर्थ्यं सत्वारं पौनरं घृतम्।
पिवेद्रसं पयोवोष्णैः स्नैहिकं धूममेव वा॥
शताह्वा त्वश्वलामूलं श्योभाकेरण्डविल्वजम्।
व्याघातं च पिवेद्वर्त्तिं मधूच्छिष्टवसाघृतैः॥
अथवा सघृतान् शक्तून् कृत्वा मल्लकसम्पुटे।
नवप्रतिश्यायवतां धूमं वैद्यः प्रकल्पयेत्॥
शङ्खमूर्धललाटार्त्तौ पाणिस्वेदोपनाहनम्।
स्वभ्यक्ते च वथुस्रावरोधादौ शङ्करादयः॥
घ्रेयाश्चरोहिषाजाजीवचातर्कारिचोरकाः।
त्वक्पत्रमरिचैलानां चूर्णा वा सोपकुञ्चिकः॥

स्रोतः शृङ्गाटनासार्ति शोषे तैलं सनावनम् ॥
प्रभाश्याजि तिलान् चीरे तेन पिष्टांस्तदूषणा ।
मन्दखिन्नान् सयष्ट्याह्व चूर्णांस्तेनैव पीडयेत् ॥
दशमूलस्य निष्काथे रास्ना मधुककल्कवत् ।
सिद्धं ससैन्धवं तैलं दशकृत्योऽणु तत् स्मृतम् ॥
स्निग्धस्यास्थापनैर्दोषं निर्हरेद्वातपीनसे ।
स्निग्धाम्लोष्णैश्च लघुन्नं ग्राम्यादीनां रसैर्हितम् ॥
उष्णाम्बु स्नानपानञ्च निवातोष्ण प्रतिश्रयः ।
चिन्ताव्यायामवाक्चेष्टा व्यवायविरतो भवेत् ॥
पैत्ते सर्पिः पिवेत्सिद्धं शृङ्गवेर शृतम्पयः ।
पाचनार्थं पिवेत्पक्के कार्यं मूत्रं विरेचनम् ॥
पाठाद्विरजनी मूर्वा पिप्पलीजाति पल्लवैः ।
दन्त्या च साधितं तैलं नस्यं सम्यक्क पीनसे ॥
पूयास्रे रक्तपित्तघ्नाः कषायोल्लवणानि च ।
पाकदाहाद्य रूक्षेषु शीतालेपाः ससेचनाः ॥
शेयनस्योपचारश्च कषाय स्वादु तिक्तकाः ।
मन्दे पित्त प्रतिश्यायें स्निग्धे कुर्याद्विरेचनम् ॥
घृतं चीरं यवाः शालि गोधूमा जाङ्गला रसाः ।
शीताम्बा स्तिक्तशाकानि यूषा मुद्गादिभिर्हिताः ॥
गौरवा रोचकेष्वादौ लङ्घनं कफपीनसे ।
मनः शिलावचाव्योषं विडङ्गं हिङ्गुगुग्गुलुः ॥
चूर्णं प्रधमनं घ्रेयं कटुभिश्च फलैः कफे ।
भार्गीमदन तर्कारी सुरसादि विपाचितैः ॥
मूलेलाचावचा लम्बा कुष्ठलम्बघ्न पिप्पली ॥

कल्कं कृत्वा करञ्जं च तैस्तैलं सार्षपं पचेत् ।
पाकात् मुक्ते घने नस्य मेतच्छ्लेष्मनिभे कफे ॥
स्निग्धस्य व्याहते वेगे छर्दनं कफपीनसे ।
वमनीयश्रृत चीर तिलमाष यवागुना ॥
वार्त्ताक कुलक व्योष कुलत्थाढकिमुद्गजाः ।
यूषाः कफघ्न मन्नञ्च शस्तमुष्णाम्बु सेचनम् ॥
सर्वजित् पीनसे दुष्टे कार्यं शोफे च शोफजित् ।
क्षारोर्बुधादि मांसेषु क्रिया शेषेष्व वेक्ष्यते ॥

इति नासारोगचिकित्सा ।

वातिके शिरसोरोगे स्नेहान् स्वेदान्सलावनान् ।
पानान्नमुपनाहांश्च कुर्य्याद्वाताम यापहान् ॥
तैलभृष्टैरगुर्वाद्यैः सुखोष्णैश्चोपनाहनम् ।
जीवनीयैश्च पुष्यैश्च मत्स्यैर्मांसैश्च शस्यते ॥
रास्ना स्थिरादिभिः सिद्धं सक्षीरं नस्य मर्तिनुत् ।
तैलं रास्नादिका कोडी शर्कराभिरथापिवा ॥
वला मधूकयष्ट्याह्व विदारी चन्दनोत्पलैः ।
जीवकर्षभक द्राक्षा शर्कराभिश्च साधितः ॥
प्रस्थस्तैलस्य स क्षीरोजाङ्गलार्धं तुलारसे ।
नस्यं सर्वोर्ध्वजत्रुत्थ वातपित्ता मयापहम् ॥
दशमूल फला रास्ना त्रिफला मधुकैः सह ।
मयूरपक्ष पित्तान्त्र शकृत्तुण्डाङ्घ्रि वर्जितम् ॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितैः पिवेत् ॥
कर्णाक्षि नासिका जिह्वा ताल्वास्य गलरोगनुत् ।

मायूरमिति विख्यात मर्ध्वजत्रु गदापहम् ॥
एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन दुग्धेन कल्कैरेभिश्च कार्षिकैः॥
जीवन्ती त्रिफलामेदा मधुकर्द्धि पवकषकैः ।
समङ्गा चविका भार्गी काश्मरी सुरदारुभिः ॥
आत्मगुप्ता महामेदा तालखर्जूरमस्तकैः ।
मृणाल बिसखर्जूर शृङ्गीजीवक पद्मकैः ॥
शतावरी विदारीक्षु बृहतीशारिवा युगैः ।
मूर्वाश्वदंष्ट्रर्षभक शृङ्गाटक कशेरुकैः ॥
रास्ना स्थिरा तामलकी सूक्ष्मैलाशटि पुष्करैः ।
पुनर्नवा तु गाचोरी काकोडीधन्वयासकैः ॥
मधूकाचोट वाताममुञ्जाताभिषु कैरपि ।
द्रव्यैरेभिर्यथालाभं पूर्वकल्केन साधितम् ॥
तत्पक्कं नावनेऽभ्यङ्गे पाने वस्तौ प्रयोजयेत् ।
शिरोरोगेषु सर्वेषु कासे श्वासे च दारुणे ॥
मन्या पृष्टग्रहे शोषे स्वरभेदे तथार्दिते ।
योन्यसृक् शुक्रदोषेषु शस्तं वन्ध्या सुतप्रदम् ॥
ऋतु स्नाता तथा नारी पीत्वा पुत्रं प्रजायते ।
महामायूरमित्येतद् घृतमात्रेय पूजितम् ॥
आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान् ।
कल्केनानेन विपचेत् सर्पिरूर्द्ध्व गदापहम् ॥
पैत्ते घृतं पयः सेकाः शीता लेपाः सनावनाः ।
जीवनीयानि सर्पींषि पानान्नं चापि पित्तनुत् ॥
चन्दनो शीर यष्ट्याह्वबला व्याघ्रनखोत्पलैः ।

क्षीरपिष्टैः प्रदेहः स्यात् शृतैर्वा परिषेचनम्॥
त्वक्पत्र शर्करा कल्कः सुपिष्टस्तण्डुलाम्बुना।
कार्य्योऽवपीड़ः सर्पिश्च नस्यं तत् स्यात्तु पैत्तिके॥
यष्ट्याह्व चन्दनानन्ता क्षीरसिद्धं घृतं शुभम्।
नावनं शर्करा द्राक्षा मधुकं वापि पित्तजे॥
कफजे स्वेदितं धूमनस्य प्रधमनादिभिः।
शुद्धं प्रलेपपानान्नैः कफघ्नैः समुपाचरेत्॥
पुराणसर्पिषः पानैस्तीक्ष्णैर्वस्तिभिरेव च।
कफानिलोत्थिते दाहः शोषयोरक्तमोक्षणम्॥
एरण्डनलदक्षौमगुग्गुलु गुरुचन्दनैः।
धूमवर्त्तिः पिबेद्गन्धैः सकुष्ठतगरैस्तथा॥
सन्निपातभवे कार्य्या सन्निपातहिता क्रिया।
क्रिमिजे चैव कर्त्तव्यं तीक्ष्णं मूर्द्ध विरेचनम्॥
व्यक्तधूको नख्यो दन्ती विडङ्गं नवमालिका॥
अपामार्गं फलं वीजं नक्तमालशिरीषयोः।
क्षवथोश्मको विल्वं दरिद्रा हिङ्गुयूथिका॥
फणिज्जकयुतैस्तैलमविमूत्रे चतुर्गुणे।
सिद्धं स्यान्नावनं चूर्णं चैषां प्रधमनं भवेत्॥
फलं शिग्रुकरञ्जाभ्यां सव्योषं चावपीडकम्।
कषाया रुग्घराः धारयूर्णो कल्कोऽवपीडकः॥

इति शिरोरोगचिकित्सा।

शस्तातिक्तकटु क्षौद्रं घर्षणं कवलग्रहः।
धूमः प्रधमनं षट्क्षिरधम्थ्यदेन लङ्घनम्॥
भोज्यं च मुखरोगेषु यथास्वन्दोषमुद्दितम्।

पिप्पल्यगुरु दार्वीत्वग्यवक्षारो रसाञ्जनम् ॥
पाठां तेजोवतीं पथ्यां समभागं सुचूर्णितम् ।
मुखरोगेषु सर्वेषु सक्षौद्रं तद्विधारयेत् ॥
शीधु माधवमाध्वीकैः श्रेष्ठोऽयं कवलग्रहः ।
तेजोह्वामभया मेलां समङ्गां कटुकाञ्जनम् ॥
पाठां रसाञ्जनं मूर्वां तेजोह्वेति च चूर्णितम् ।
क्षौद्रयुक्तं विधातव्यङ्गलरोगभिषग्जितम् ॥
योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः ।
रसः स्वः क्वथितो दार्व्यां घनीभूतो रसक्रिया ॥
सक्षौद्रमुखरोगासृग्दोषनाडी व्रणापहा ।
तालुशोषत्वष्णास्य सर्पिरौत्तरभक्तिकम् ॥
नावनं मधुराः स्निग्धाः शीताश्चैव रसाहिताः ।
मुखपाके शिराकर्म शिरःकायविरेचनम् ॥
मूत्रतैलघृतक्षौद्रक्षीरैश्च कवलग्रहः ।
सक्षौद्रास्त्रिफलापाठा मृद्वीका जातिपल्लवाः ॥
कषायतिक्तकाः शीताः क्वाथाश्च मुखधावनाः ।
तुलां खदिरसारस्य द्विगुणामरिमेदसः ॥
प्रक्षाल्य जर्जरीकृत्य चतुर्द्रोणेऽम्भसः पचेत् ।
द्रोणशेषं कषायन्तं पूत्वा भूयः पचेच्छनैः ॥
ततस्तस्मिन् घनीभूते चूर्णीकृत्याक्षभागिकम् ।
चन्दनं पद्मकं शीरं मञ्जिष्ठा धातकी घनम् ॥
प्रपुण्डरीकं यष्ट्याह्वं त्वगेला पत्रकेशरम् ।
लाक्षा रसाञ्जनं मांसी त्रिफला लोध्रवालकम् ॥
रजन्यौ फलिनी मेलेयं समङ्गा कटफलं वचाम् ।

यवाषागुरु पत्तङ्गगैरिकाञ्जनमावपेत् ॥
लवङ्गनखकक्कोलजाति कोशान् पलोन्मितान् ।
कर्पूरकुडवं चापि पुनः शीतेऽवतारिते ॥
ततस्तु गुलिकाः कार्याः शुष्काश्चास्ये न धारयेत् ।
तैलं चानेन कल्केन कषायेण च साधयेत् ॥
दन्तस्य गलरोगेषु सर्वेषां तत्परायणम् ।

इति मुखरोग चिकित्सा ।

अरुचौ कवलग्राहा धूमाः समुखधावनाः ॥
मनोज्ञमन्नपानञ्च हर्षणाश्वासनानि च ।
कुष्ठसौवर्चला जाजी शर्करा मरिचं विडम् ॥
धात्र्येला पद्मकोशीरपिप्पल्युत्पलचन्दनम् ।
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् ॥
आर्द्रा दाडिमनिर्यासाश्चा जाजी शर्करायुतः ।
सतैलमाक्षिकास्त्वेते चत्वारः कवलग्रहाः ॥
चतुरो रोचकान् हन्युर्वाताद्येकजसर्वजान् ।
कारवी मरिचा जाजी द्राक्षा वृक्षाम्लदाडिमम् ॥
सौवर्चलं गुडं क्षौद्रं सर्वा रोचकनाशनम् ।

इति अरुचि चिकित्सा ।

वस्तिं समीरणे पित्ते विरेकं वमनं कफे ॥
कुर्याद्धृद्यानुकूलानि हर्षणं च मनोघ्नजे ।
सर्पीष्युपरि भक्तानि स्वरभेदेऽनिलात्मके ॥
तैलैश्चतुष्प्रयोगस्य बला रास्ना मृताह्वयैः ।
वर्हि तित्तिरि दक्षाणां पञ्चमूलशृतान् रसान् ॥
मायरं क्षीरसर्पिर्वा पिबेत्त्र्यूषणमेव वा ।

पैत्तिके तु विरेकः स्यात्पयोभिश्च मधुरैः शृतम् ॥
सर्पिर्गुडाह्वतं तिक्तं जीवनीयं हृषस्य च ।
कफजे स्वरभेदे तु तीक्ष्णं मूर्द्धविरेचनम् ॥
विरेको वमनं धूमो यवान्नकटुसेवनम् ।
चव्य भार्ग्यभया व्योषक्षारमाक्षिकचित्रकान् ॥
लिह्याद्वा पिप्पली पथ्ये तीक्ष्णं मद्यं पिवेच्च सः ।
रक्तजे स्वरभेदे तु सघृता जाङ्गला रसाः ॥
द्राक्षा विदारीस्वरसाः सघृतक्षौद्रशर्कराः ।
यथोक्तं क्षयकासघ्नं तच्च सर्वं चिकित्सितम् ॥
पित्तजस्वरभेदघ्नं शिरा वेधश्च रक्तजे ।
सन्निपाते हिताः सर्वाः क्रिया न तु शिरा विधिः ॥
इति स्वरभेद चिकित्सा ।
कर्णशूले तु वातघ्नी हिता पीनसवत् क्रिया ।
प्रदेहः पूरणं नस्यं पाकस्रावे व्रण क्रियाः ॥
भोज्यानि च यथादोषं कुर्यात् स्नेहांश्च पूरणान् ।
हिङ्गु तुम्बुरु शुण्ठीभिस्तैस्तैलं सार्षपं पचेत् ॥
एतद्धि पूरणं श्रेष्ठं कर्णशूलनिवारणम् ।
वराटकान् समाहृत्य दहेन् मृद्भाजने नवे ॥
तद्भस्म श्च्योतयेत्तेन गन्धतैलं विपाचयेत् ।
रसाञ्जनस्य शुण्ठ्याश्च कल्काभ्यां कर्णशूलनुत् ॥
शुष्कमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम् ।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्चलयवक्षारसर्जिकोद्भिदसैन्धवम् ।
भूर्जग्रन्थि विडं मुस्तं मधु शुक्तं चतुर्गुणम् ॥

पत्रिणां मातुलुङ्गस्य कदल्या रस एव च।
सर्वैरेतैर्यथोद्दिष्टैः क्षारतैलं विपाचयेत्॥
बाधिर्य्यं कर्णनादञ्च पूयस्रावञ्च दारुणः।
क्रिमयः कर्णशूलञ्च पूरणादस्य नश्यति॥
मुखकर्णशिरोरोगेषु यथोक्तं पीनसे विधिम्।
कुर्य्याद्भिषक् समीक्ष्यादौ दोषकालबलाबलम्॥

इति कर्णरोग चिकित्सा।

नेत्ररोगे समुत्पन्ने तरुणे तु बिडालकः।
कार्य्यो दाहोपदेहास्रु शोफरागनिवारणः॥
नागरं सैन्धवं सर्पिर्मण्डेन च रसक्रिया।
निर्द्दिष्टं वातिके तद्वन्मुस्तसैन्धवगैरिकम्॥
तथा शावरकं रोध्रं घृतयुक्तं बिडालकः।
कार्य्यः पद्मक यष्ट्याह्व मांसी कालीयकैस्तथा॥
गैरिकं सैन्धवं मुस्तं रोचना सा रसक्रिया।
कफे कार्य्यस्तथा क्षौद्रप्रियङ्गु समनःशिलम्॥
सन्निपाते तु सर्वैः स्याद्बहि रक्षि प्रलेपनम्।
पक्ष्मण्यस्पृशता कार्य्यं सम्यक् लक्ष्मनं च यत्नात्॥
आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिः शुभः।
कोष्णः सैरण्डतर्क्कारी बृहती मधु शिग्रुभिः॥
द्राक्षा दार्व्वी समञ्जिष्ठा लाक्षा हिमधुकोत्पलैः।
क्वाथः सशर्करः शीतः पूरणं रक्तपित्तनुत्॥
नागरं त्रिफला मुस्तनिम्ब वासारसः कफे।
कोष्ण आश्च्योतनं मिश्रैरौषधैः सान्निपातिके॥
बृहत्येरण्डमूलत्वक् शिग्रोः पुष्पं ससैन्धवम्।

अजा क्षीरेण पिष्टं स्यादर्त्तिर्वाताक्षिरोगनुत् ॥
सुमनः क्षारकाः शङ्खाः त्रिफला मधुकं बला ।
पित्तरक्तापहा वर्त्तिः पिष्टा दिव्येन वारिणा ॥
सैन्धवं त्रिफला व्योषं शङ्खनाभिः समुद्रजः ।
फेनं शैलेयकं सर्ज्जो वर्त्तिः श्लेष्मा क्षिरोगनुत् ॥
प्रपुण्डरीकं यष्ट्याह्वं दार्व्वीं चाष्टपलांशिकम् ।
जले पक्त्वा रसे पूते पुनः पक्वे रसे घने ॥
कर्षश्च श्वेतमरिचा द्रोणी पुष्पा नवोत्पलम् ।
चूर्णं क्षिप्त्वा कृता वर्त्तिः सर्व्वघ्नी दृक्प्रसादनी ॥
अमृता मधुकं निम्बपटोलं छागलं शकृत् ।
वाशा प्रपुण्डरीकश्च दार्व्वी कालानुसारिणी ।
एषामष्टपलान् भागान् सुधौतान् जर्ज्जरीकृतान् ॥
तोये पक्त्वा रसे पूते भूयः पक्वे घने रसे ।
सिता मरिचयोः कर्षं जाति पुष्पाब्ववात्पलम् ॥
चूर्णं कृत्वा कृतावर्त्तिः सर्व्वघ्नी दृक्प्रसादनी ।
शङ्खप्रवालवैदूर्य्यलोहिताम्रप्लवास्थिभिः ॥
स्रोतोज श्वेतमरिचैर्वर्त्तिः सर्व्वाक्षिरोगनुत् ।
शाणार्धं मरिचाद् द्वौ च पिप्पल्यार्णवफेनयोः ॥
शाणार्द्धात् सैन्धवाच्छाणान्नवसौवीरकाञ्जनात् ।
पिष्टं सुसूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम् ॥
कण्डूका च कफार्त्तानां मलानाञ्च विशोधनम् ।
वस्त मूत्रे त्र्यहं स्विन्नं एला चूर्णं सुभावितम् ॥
चूर्णाञ्जनञ्च तैर्मियं क्रिमि पैत्तरमलापहम् ।
सौवीरमञ्जनन्तुत्थन्ताप्यं धातुर्मनःशिला ॥

चक्षुष्यं मधुकं लोहा मणयः पौष्पमञ्जनम्।
सैन्धवं शौकरी दंष्ट्रा कतकं चाञ्जनं शुभम्॥
तिमिरादिषु चूर्णं वा वर्त्तिर्वेय मनुत्तमा।
कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं सिता॥
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला।
कुक्कुटाण्डकपालश्च वर्त्तिरेषा व्यपोहति॥
तिमिरं पटलं काचं मलं चाशु सुखावती।
त्रिफला कुक्कुटाण्डत्वक्कासीसमयसो रजः॥
नीलोत्पलं विडङ्गानि फेनश्च सरितां पतेः।
आजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः।
वदने कृष्णसर्पस्य निहितं मांसमञ्जनम्॥
ततस्तस्मात् समुद्धृत्य सम्यक् चूर्णयेत् सह।
सुमनःक्षारकैः शुण्ठ्या र्द्वाभ्यां सैन्धवेन च॥
एतन्नित्याञ्जनं कार्यं तिमिरघ्न मनुत्तमम्।
सुरसः किंशुकस्था ह्वेसा कृष्णस्य सैन्धवम्॥
जीर्णं घृतञ्च सर्वा चिरोगघ्नी स्यादुपक्रिया।
कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया॥
शस्ता वाताक्षिरोगेषु काचार्बुदमलेषु च।
धात्री रसाञ्जन क्षौद्रसर्पिर्भिस्तु रसक्रिया॥
पित्तरक्ताक्षिरोगघ्नी तैमिर्य पटलापहा।
धात्री सैन्धवपिप्पल्यः स्तुल्यमरिचाः समाः॥
क्षौद्रयुक्ता निहन्त्याश्व्यं पटलञ्च रसक्रिया।

इति नेत्ररोग चिकित्सा।

खालित्ये पलिते वल्यां हरि लोम्नि च साधितम् ॥
नस्यैस्तैलैः शिरो वक्त्र प्रलेपैश्चाप्युपाचरेत् ।
सिद्धं विदारिगन्धाद्यैर्जीवनीयैरथापि च ॥
नस्यं स्यादणु तैलं वा खालित्य पलितापहम् ।
चीरात् सहचराद्भृङ्गरजसः सौरसाद्रसात् ॥
प्रस्थैस्तु कुडवस्तैलाद्यष्ट्याह्व पल कल्कितः ।
सिद्धः शैलासने भाण्डे मेष शृङ्गे च संस्थितः ॥
नस्यं स्यात् चीरयुक्तं वा दुग्धिका करवीरकौ ।
उत्पाट्य पलितं देया वाशये पलितापहौ ॥
मार्कवस्वरसात् चीराद्द्वि प्रस्थं मधुकात्पलम् ।
तैः पचेत्कुडवं तैलात्तन्नस्यं पलितापहम् ॥
आदित्य वल्या मूलानि कृष्णशैरेयकस्य च ।
सुरसस्य च पत्राणि फलं कृष्णशणस्य च ॥
मार्कवः काकमाची च मधुकं देवदारु च ।
पृथग्दशपलांशानि पिप्पल्य स्त्रिफलाञ्जनम् ॥
प्रपुण्डरीकं मञ्जिष्ठा लोध्रं कृष्णा गुरूत्पलम् ।
आम्रास्थि कर्दमः कृष्णो मृणालो रक्तचन्दनम् ॥
नीलं भल्लातकास्थीनि कासीसमदयन्तिका ।
सोमराज्य मनः शस्त्रं कृष्णं पिण्डीत चित्रकौ ॥
पुष्पाण्यर्जुन काश्मर्य श्यामाजम्बूफलानि च ।
पृथक्पञ्चपलांशानि तैः पिष्टैराढकं पचेत् ॥
वैभीतकस्य तैलस्य धात्री रसचतुर्गुणम् ।
कुर्यादादित्य पाकं वा यावत्शुष्को भवेद्रसः ॥
लौहपात्रे ततः पूतं संशुद्धं उपयोजयेत् ।

पाने नस्तः क्रियायाञ्च शिरोऽभ्यङ्गे च संयतः॥
एतच्चक्षुष्यमायुष्यं शिरसः सर्व्वरोगनुत्।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम्॥
प्रपुण्डरीक मधुकपिप्पली चन्दनोत्पलैः।
कार्षिकैस्तैलकुडवः सन्निरामलकी रसः॥
सिद्धः सपरिमर्शः स्यात्सर्व्वमूर्द्धगदापहः।
क्षीरं पियाल यष्ट्याह्वे जीवकाद्योगणस्तिला:॥
कृष्णा वर्क्षे प्रलेपः स्याद्धरि लोमनिवारणः।
यष्ट्याह्व तिलकिञ्जल्कक्षीरमामलकानि च॥
बृंहयेद्रञ्जयेच्चैतत् केशान् मूर्द्धप्रलेपनम्।
पचेत् सैन्धवशुक्ताम्ले रसचूर्णं सतण्डुलम्॥
तेनालिप्तं शिरः शुद्धं अस्निग्धमुषितं निशि।
तत्प्रातस्त्रिफला धौतं स्यात् कृष्णमृदुमूर्द्धजम्॥

इति खालित्य चिकित्सा।

अश्मचूर्णोऽम्लपिष्टश्च रागः सत्रिफलो वरः।
कुर्याच्छेषेषु रोगेषु क्रियां स्वां स्वाच्चिकित्सितात्॥
शोफिष्वादौ च निर्दिष्टा सिद्धौ चान्या प्रवक्ष्यते।
भवति चात्र। वातपित्तकफा नृणां वस्ति हृन्मूर्द्धसंश्रयाः॥
तस्मात्तु स्थानसामीप्याद्रक्षतव्या वमनादिभिः।
अध्यात्मलोके वाताद्यैर्लोको वातरवीन्दुभिः॥
पीड्यते धार्यते चैव विकृताविकृतैः सच।
विरुद्धैरपि नत्वेते गुणैर्घ्नन्ति परस्परम्॥
दोषाः सहज सात्म्यत्वाद्विषं घोरमहीनिव।
त्रिमर्मजानां रोगाणां निदानाकृति भेषजम्॥

विस्तरेण पृथग्दिष्टं त्रिमर्मीये चिकित्सिते ।
इति त्रिमर्मीय चिकित्सितम् ॥

---

अथ पञ्चविंशोऽध्यायः ।

अथात ऊरुस्तम्भचिकित्सितं व्याख्यास्यामः ।
श्रिया परमया ब्राह्म्या परया च तपःश्रिया ।
अहीनं चन्द्रसूर्याभ्यां सुमेरुमिव पर्वतम् ॥
धीधृति स्मृति विज्ञानज्ञानकीर्ति क्षमालयम् ।
अग्निवेशो गुरुं काले संशयं परिपृष्टवान् ॥
भगवन्! पञ्च कर्माणि समस्तानि पृथक्तथा ।
निर्दिष्टान्या मया नास्ति सर्वेषामेव भेषजम् ॥
दोषज्ञोऽस्त्यामयः कश्चिद्यस्मै तानि भिषग्वर! ।
नस्युः शक्ता निशमने साध्यस्य क्रियया ततः ॥
अस्त्यूरुस्तम्भ इत्युक्ते गुरुणा तस्य कारणम् ।
सलिङ्गभेषजं भूयः पृष्टस्तेना ब्रवीद्गुरुः ॥
स्निग्धोष्णलघु शीतानि जीर्णाजीर्णे समश्नतः ।
द्रवशुष्कदधिक्षीरग्राम्यानूपौदकामिषैः ॥
पिष्टव्यापन्न मद्यादि दिवा स्वप्न प्रजागरैः ।
लङ्घनप्लवनाद्यैश्च भयवेगविदारणैः ॥
सञ्चितं चामसञ्चितं कोष्ठे वातादीन्मेदसा सह ।
रुद्ध्वाशु गौरवादूरू स्रोतोभि र्यात्यधोगतैः ॥
पूरयन् सक्थिन जङ्घा रुणोधो मेदो बलोत्कटः ।
अविधेय परिस्पन्दं जनयत्यल्पविक्रमम् ॥

महा सरसि गम्भीरे पूर्णेऽम्बु स्तिमिते यथा ।
तिष्ठति स्थिरमक्षोभ्यं तद्वदूरुगतः कफः ॥
गौरवायाससङ्कोच दाह रुक्सुप्ति कम्पनैः ।
भेदस्फुरणतोदैश्चयुक्ता देहं निहन्त्यसून् ॥
ऊरू श्लेष्मा समेदस्को दोषौहा वभिभूयतु ।
स्तम्भयेत् स्थैर्य शैत्याभ्यामूरुस्तम्भस्ततस्तु सः ॥
वातशङ्किभिरज्ञानात्तस्य स्यात् स्नेहनात् पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥
जङ्घोरुग्लानिरत्यर्थं शश्वच्चादाहवेदना ।
पदञ्च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥
संस्थाने पीडने गत्यां चलने चाप्यनीश्वरः ।
अन्यप्रणेयः सम्भग्नौ ऊरू पादौ च मन्यते ॥
प्राग्रूपं ध्याननिद्रातिस्तैमित्या रोचकज्वराः ।
लोमहर्षश्च छर्दिश्च जङ्घोर्वोः सदनं तथा ॥
यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम् ॥
तस्य न स्नेहनं कार्यं न वस्तिर्न विरेचनम् ।
न चैव वमनं यस्मात्तन्निबोधत कारणम् ॥
हृदये श्लेष्मणो नित्यं स्नेहनं वस्ति कर्म च ।
तत्स्थस्योद्धरणे चैव न समर्थं विशोधनम् ।
कफः कफस्थानगतः पित्तं वा वमनात् सुखम् ॥
हन्तुमामाशयस्थे च स्रंसनात्ते उभे अपि ।
पक्वाशयस्थाः सर्वे च वस्तिभिर्मूलनिर्जयात् ॥
शक्या नत्वाममेदोभ्यांस्तब्धजङ्घोरु संस्थिताः ।

वातस्थाने स्थिते शैत्याद्दृढयोः स्तम्भाच्च तद्गताः ॥
न शक्याः सुखमुद्धर्तुं म्ञलं निम्नादिव स्थलम् ।
तस्य संशमनं नित्यं क्षपणं शोषणं तथा ॥
मुस्तापेची भिषक् कुर्यादधिकत्वात् कफामयोः ।
सदा रूक्षोपचाराय यदश्यामाककोद्रवान् ॥
शाकैरलवणैरद्यात्सलतैलोपसाधितैः ।
सुनिषण्णकनिम्बार्कवेत्राग्रवधपल्लवैः ॥
वायसी वास्तुकैरन्यैस्तिक्तैश्च कुलकादिभिः ।
क्षारारिष्टप्रयोगाच्च हरीतक्यास्तथैव च ॥
मधूदकस्य पिप्पल्या ऊरुस्तम्भविनाशनाः ।
समङ्गां शाल्मलं हिङ्गु मधुना सह ना पिबेत् ॥
तथा श्रीवेष्टकोदीच्य देवदारु वनान्यपि ।
चन्दनं धातकी कुष्ठं तालीशन्वनदं तथा ॥
मुस्तं हरीतकीं रोध्रं पद्मकं तिक्तरोहिणीम् ।
देवदारु हरिद्रे द्वे वचां कटुकरोहिणीम् ॥
पिप्पलीं पिप्पलीमूलं सरलं देवदारु च ।
चव्यचित्रकमूलानि देवदारु हरीतकीम् ॥
भल्लातकं समूलाञ्च पिप्पलीं पञ्च तान् पिबेत् ।
सचौद्रानवरूपोक्तान् कल्कानूरुग्रहापहान् ॥
शार्ङ्गष्टां मदनं दन्तीं वत्सकं स्वादु कण्टकम् ।
मरुवाग्वधां पाठां करञ्जं कुलकं तथा ॥
पिबेन्मधुयुतं तुल्यं चूर्णं वा वारिणाप्लुतम् ।
सचौद्रं दधिमण्डं वाप्यूरुस्तम्भविनाशनम् ॥
मूर्वामतिविषां कुष्ठं चित्रकं कटुरोहिणीम् ।

पूर्ववद्वा पिबेत्तोये रात्रिस्थितमथापि वा ॥
स्वर्णक्षीरिमतिविषां मुस्तं तेजोवतीं वचाम् ।
सुराह्वं चित्रकं कुष्ठं पाठां कटुकरोहिणीम् ॥
लेहयेन्मधुना चूर्णं सक्षौद्रं वा जलान्वितम् ।
फलिं व्याघ्रनखं हेम पिबेद्वा मधुसंयुतम् ॥
त्रिफलां पिप्पलीं मुस्तं चव्यं कटुकरोहिणीम् ।
लिह्याद्वा मधुना चूर्णमुरुस्तम्भार्दितो नरः ॥
अपतर्पणजश्चेत्स्याद्दोषः सन्तर्पयेज्जितम् ।
युक्त्या जाङ्गलजैर्मांसैः पुराणैश्चैव शालिभिः ॥
कृशाणां वातकोपश्चेन्निद्रानाशार्तिपूर्वकः ।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः ॥
श्रीलुपर्णी पयस्या च रास्नागोक्षुरको वचा ।
सरलं दारुकुष्ठं च तैलमेभिर्विपाचयेत् ।
सक्षौद्रात्पृस्तं तस्माद्दशाक्षिं वापि ना पिबेत् ॥
कुष्ठं श्रीवेष्टकोदीच्यं सरलं दारुकेसरम् ।
अजगन्धाश्वगन्धा च तैलस्तैः सार्षपं पचेत् ॥
सक्षौद्रं मात्रयातश्चाप्यूरुस्तम्भार्दितः पिबेत् ।
द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिकचित्रकात् ॥
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढके ।
आरनालात् पचेत्प्रस्थं तैलस्यैतैरपत्यदम् ॥
ऊरुस्तम्भग्रहार्शोऽर्त्ति सर्ववातविकारनुत् ।
पलाभ्यां पिप्पलीमूलनागराद्दष्टकट्वतः ॥
तैलप्रस्थः समो दध्ना ऊरुस्तम्भग्रहापहः ।
इत्वाभ्यन्तरमुद्दिष्टमुरुस्तम्भस्य भेषजम् ॥

श्लेष्मणः क्षपणं त्वन्यदाह्यं शृणु चिकित्सितम् ।
वल्मीकमृत्तिकामूलं करञ्जस्य फलं त्वचम् ॥
पिष्ट्वा च सर्षपं मूत्रेऽभ्युषितं स्यात् प्रलेपनम् ।
इष्टकानां ततश्चूर्णैः कुमुदाच्छादनं शुभम् ॥
मूलैर्व्याघ्यश्वगन्धाया मूलैरर्कस्य वा भिषक् ।
गाढमुत्सादनं कुर्य्यां दुरुष्कभेप्रलेपनम् ॥
द्रवन्त्यासुरसैदन्त्या सर्षपैश्चापि बुद्धिमान् ।
बिल्वचव्यकतर्कारी शिग्रुमूलकनीपजैः ॥
पत्रमूलफलैस्तोयं शृतमुष्णञ्च सेचनम् ।
वत्सकः सुरसं कुष्ठं गन्धासुम्बुरुशिग्रुकौ ॥
हिंग्वर्कमूल वल्मीक मृत्तिकाः सकठेरुकाः ।
दधिसैन्धवसंयुक्तं कार्य्यमेतैः प्रलेपनम् ॥
श्योनाकं खदिरं बिल्वं बृहत्यौ सुरसासनौ ।
अग्निमन्थाढ़की शिग्रुञ्च दंष्ट्राखरसार्जकान् ।
तर्कारीं नक्तमालञ्च जलेनोत्क्वाथ्य सेचयेत् ॥
प्रलेपौ मूत्रपिष्टैर्वा पूरुष्कास्य निवारणः ।
कफक्षयार्थं श्लेष्मणु व्यायामेष्वनुयोजयेत् ॥
शूलान्याक्रामयेत्कल्पं शर्कराः सिकतास्तथा ॥
वितारयेत्प्रतिस्रोतो नदीं शीतजलां शिवाम् ।
सरश्च विमलं शीतं स्थिरतोयं पुनःपुनः ॥
श्लेष्मणः क्षपणं यत्स्यात् न च मारुतमावहेत् ।
तत्सर्वं सर्वदा कार्य्यं ऊरुस्तम्भस्य भेषजम् ॥
तथा कफे विशुष्कस्य शान्तिमूरु ग्रहो व्रजेत् ।
शरीरं बलमग्निश्च कार्य्यं मा रक्षता क्रिया ॥ इति ।

तत्र श्लोकाः ।
हेतुः प्राग्रूपलिङ्गानि कर्म्म योग्यत्वमेव च ।
द्विविधं भेषजं चोक्तं ऊरुस्तम्भ चिकित्सिते ॥
इति ऊरुस्तम्भ चिकित्सितम् ।

---

षड्विंशोऽध्यायः ।

अथ वातव्याधि चिकित्सितमितं व्याख्यास्यामः ।
वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम् ।
वायुर्विश्वमिदं सर्वं प्रभुर्वायुश्च कीर्त्तितः ॥
अव्याहत गतिर्यस्य स्थानस्थः प्रकृतौ स्थितः ।
वायुर्हि सोऽधिकं जीवेत् नीरोगः शरदां शतम् ॥
प्राणोदान समानाख्य व्यानापानैः स पञ्चधा ।
देहं तन्त्रयते सम्यक् स्थानेषु व्याहतश्चरन् ॥
स्थानं प्राणस्य शीर्षोरः कण्ठौ जिह्वास्यनासिका ॥
ष्ठीवनक्षवथूद्गारश्वासाहारादि कर्म्म च ॥
उदानस्य पुनःस्थानं नाभ्युरः कण्ठ एव च ।
वाक्प्रवृत्तिः प्रयत्नौर्जोबलवर्णादि कर्म च ॥
स्वेददोषाम्बु वाहानि स्रोतांसि समधिष्ठितः ।
अन्तरग्निश्च पार्श्वस्थः समानोऽग्नि बलप्रदः ॥
देहं व्याप्नोति सर्वं तु व्यानः शीघ्रगतिं नृणाम् ।
गतिप्रसरणाक्षेप निमेषादि क्रियः सदा ॥
वृषणौ वस्ति मेढ्रञ्च श्रोण्यूरूवंक्षणौ गुदः ।
अपानस्थानमन्तस्थः शुक्रमूत्रशकृन्ति सः ॥



L V

सृजत्यार्त्तवगर्भांश्च युक्ताः स्थानस्थिताश्च ते ।
स्वकर्म कुरुते देहो धार्यते तैरनामयः ॥
विमार्गस्थास्तु युक्ता वा रोगैः स्वस्थानकर्मजैः ।
शरीरं पीडयन्त्येते प्राणानाशु हरन्ति च ॥
सङ्ख्यामप्यतिवृत्तानां तज्जानां हि प्रधानतः ॥
अशीतिर्नखभेदाद्या रोगाः सूत्रे निदर्शिताः ।
तानुच्यमानान् पर्यायैः सहेतूपक्रमात् शृणु ॥
केवलं वायुमुद्दिश्य स्थानभेदात्तथावृतम् ।
रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः ॥
विषमादुपचाराच्च दोषासृक्स्रवणादति ।
लङ्घनप्लवनात्यध्वव्यायामातिविचेष्टितैः ॥
धातूनां संक्षयाच्चिन्ताशोकरोगातिकर्षणात् ।
दुःखशय्यासनात् क्रोधात् दिवास्वप्नाद्भयादपि ॥
वेगसन्धारणादामादभिघातादभोजनात् ।
मर्म्माबाधाद्गजोष्ट्राश्वशीघ्रयानापतंसनैः ॥
देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ।
करोति विविधान् व्याधीन् सर्वाङ्गैकाङ्गसंश्रितान् ।
अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ॥
आत्मरूपं तु तद्व्यक्तं अपायो लघुतां पुनः ।
सङ्कोचः पर्वणां स्तम्भो भङ्गोऽस्थ्नां पर्वणामपि ॥
लोमहर्षः प्रलापश्च पाणी पृष्ठ शिरोग्रहः ।
खाञ्ज्यपाङ्गुल्य कुब्जत्वं शोषोऽङ्गानामनिद्रता ॥
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ।
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चावगूर्णनम् ॥

भेदस्तोदार्त्तिराक्षेप मोहश्चायास एव च ।
एवं विधानि रूपाणि करोति कुपितोऽनिलः ॥
हेतुस्थान विशेषाच्च भवेद्रोग विशेषकृत् ।
तत्र कोष्ठाश्रिते दुष्टे निग्रहे मूत्रवर्चसोः ॥
ब्रध्नहृद्रोगगुल्मार्शः पार्श्वशूलं च मारुते ।
सर्वाङ्ग कुपिते वाते गात्रदूयनमीरणम् ॥
वेदनाभिः परीतस्य स्फुटन्तो वास्य सन्धयः ।
विण्मूत्र वातग्रहणं शूलाध्मानाश्म शर्कराः ॥
जङ्घोरु त्रिकपात्पृष्ठरोगशोषा गुदस्थिते ॥
हृन्नाभिपार्श्वोदररुक् तृष्णोद्गार विसूचिकाः ॥
कासः कण्ठास्य शोषश्च श्वासश्चामाशय स्थिते ।
त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते ॥
आतन्यते सरागा च पर्वरुक् त्वक्स्थितेऽनिले ।
रुजस्तीव्राःससन्तापा वैवर्ण्यं कृशताऽरुचिः ॥
गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृक् गतेऽनिले ।
गुर्वङ्गं तुद्यते स्तब्धं दण्डमुष्टिहतं यथा ॥
सरुक्श्रमितमत्यर्थं मांसमेदो गतेऽनिले ।
भेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः ॥
अस्वप्नः सन्ततारुक् च मज्जास्थि कुपितेऽनिले ।
क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा ॥
विकृतं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ।
बाह्याभ्यन्तरमायामङ्खल्लीं कुब्जत्वमेव च ॥
सर्वाङ्गैकाङ्गरोगांश्च कुर्य्यात् स्नायु गतोऽनिलः ।
शरीरं मन्दरुक्शोफं शुष्यति स्पन्दतेऽपि वा ॥

शुष्काास्त्वग्रोमहत्यो वा शिरा वातशिरागते ।
वातपूर्णदृतिस्पर्शः शोफः सन्धिगतेऽनिले ॥
प्रसारणाकुञ्चनयोः प्रवृत्तिश्च सवेदना ।
अतिवृद्धः शरीरार्धमेकं वायुः प्रपद्यते ॥
यदा तदोपशोष्यासृग्बाहुं पादं च जानु च ।
तस्मिन् सङ्कोचयत्यर्द्धं मुखं जिह्मं करोति च ॥
वक्रीकरोति नासाग्रं ललाटाक्षि हनुस्तथा ।
ततो वक्रं व्रजत्यस्य भोजनं वक्रदर्शिनः ॥
स्तब्धं नेत्रं कथयतः क्षवथुश्च निगृह्यते ।
दीना जिह्वा समुत्क्षिप्ता कला सज्जति चास्य वाक्॥
दन्ताश्चलन्ति बाध्येते श्रवणौ भिद्यते स्वरः ।
पार्श्वहस्ताक्षि जङ्घोरुशङ्खश्रवणगण्डरुक् ॥
अर्धे तस्मिन्मुखार्धे वा केवले स्यात्तदर्दितम् ।
मन्ये संश्रित्य वातोऽन्तर्यदा नाडीः प्रपद्यते ॥
मन्यास्तम्भं तदा कुर्यादन्तरायामसंज्ञितम् ।
अन्तरायस्यते ग्रीवा मन्या च स्तभ्यते भृशम् ॥
दन्तानां दर्शनं लाला पृष्ठाक्षेपः शिरोग्रहः ।
जृम्भा वदनसङ्गश्चाप्यन्तरायामलक्षणम् ॥
पृष्ठमन्याश्रिता बाह्याः शोषयित्वा शिरावलीः ।
श्रितः कुर्याद्धनुष्कम्भं बहिरायामसंज्ञकम् ॥
चापवन्नाम्यमानस्य पृष्ठतो क्रियते शिरः ।
उर उत्क्षिप्यते मन्या स्तब्धा ग्रीवा च मृद्यते ॥
दन्तानां दशनं जृम्भा लालास्रावश्च वाग्ग्रहः ।
जातवेगो निहन्त्येष वैकल्यं वा प्रयच्छति ॥

हन्वायासोत्थितो वायुर्बन्धात् स्रंसयते हनू।
विवृतास्यत्व मथवा कुर्यात्स्तब्धमवेपनम्॥
हनुग्रहस्य संस्तभ्य हनू संवृतवक्त्रताम्।
मुहुराक्षिपति क्रुद्धो गात्राण्याक्षेपकोऽनिलः॥
पाणिपादस्य संशोष्य शिरा सस्नायु कण्डराः।
पाणिपाद शिरः पृष्ठश्रोणी स्तभ्नाति मारुतः॥
दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः।
स्तब्धः स्यादर्दिताख्यानां मुहुर्वेगगते गते॥
हत्वैकं मारुतः पक्षं दक्षिणं वाममेव च।
कुर्याच्चेष्टानिवृत्तिं हि रुजं वाग्भङ्गमेव च॥
गृहीत्वा वा शरीरार्द्धं शिरा स्नायुं विशोष्य च।
पादं सङ्कोचयत्येकं हस्तं वा तोदशूलकृत्॥
एकाङ्गरोगं तं विद्यात् सर्वाङ्गं सर्वदेहजम्।
स्फिक्पूर्वा कटि पृष्ठोरुजानु जङ्घापदं क्रमात्॥
गृध्रसीः स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः।
वाताद्वात कफात्तन्द्रा गौरवारोचकान्विता॥
खल्ली तु पादजङ्घोरुकरमूलावमोटनी।
स्थानानामनुरूपैश्च लिङ्गैः शेषान् विनिर्द्दिशेत्॥
सर्वेष्वेतेषु संसर्गं पित्ताद्यै रुपलक्षयेत्।
वायुर्धातु क्षयात्कोपो मार्गस्यावरणेन च॥
वातपित्तकफा देहे सर्वस्रोतोऽनुसारिणः।
वायुरेव हि सूक्ष्मत्वाद्द्वयोस्तत्राप्युदीरणः॥
कुपितस्तौ समुद्धूय तत्र तत्राक्षिपन् गदान्।
करोत्यावृतमार्गत्वात् रसादींश्चोपशोषयन्॥

लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः ।
कट्वम्ललवणोष्णैश्च विदाहः शीतकामिता ॥
शीतगौरवशूलानि कट्वाद्युपशयोऽधिकम् ।
लङ्घनायासरूक्षोष्णकामिता च कफावृते ॥
रक्तावृते सदाहार्तिस्त्वङ्मांसान्तरजा भृशम् ।
भवेत् सरागः श्वयथुः जायन्ते मण्डलानि च ॥
कठिनाश्च विवर्णाश्च पिडकाः श्वयथुस्तथा ।
हर्षः पिपीलिकानां च सञ्चार इव मांसगे ॥
चलः स्निग्धो मृदुः शीत शोफोऽङ्गेष्वरुचिस्तथा ।
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसावृतः ॥
स्पर्शमस्थ्यावृते तूष्णं पीडनं चाभिनन्दति ।
सूच्येव तुद्यते गाढं तद्वच्छूल्यति सीदति ॥
मज्जावृते विनामः स्याज्जृम्भणं परिवेष्टनम् ।
शूलं तु पीड्यमाने च पाणिभ्यां लभते सुखम् ॥
शुक्रावेगोऽतिवेगो वा निष्फलत्वं च शुक्रगे ।
भुक्ते कुक्षौ च रुग्जीर्णे शाम्यत्यन्नावृतेऽनिले ॥
वर्चोवृते विबद्धोऽधः स्वे स्थाने परिकृन्तति ।
व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ॥
चिरात् पीडितमन्नेन दुःखं शुष्कं शकृत् सृजेत् ।
श्रोणीवङ्क्षणपृष्ठेषु रुग्विलोमश्च मारुतः ॥
अस्वस्थं हृदयं चैव स च सर्वो वृतेऽनिलः ।
सर्वधातुतिरश्चुस्कम्भः कुञ्चनं कुब्जतार्दितम् ॥
पक्षाघातोऽङ्गसंशोषः पङ्गुत्वं खुडवातता ।
स्तम्भनं चाढ्यवातश्च रोगा मज्जाश्रिता च ये ॥

एते स्थानस्य गाम्भीर्याद्यत्नात्सिध्यन्ति वा नवा।
न तान् बलवतश्चैतान् साधयेन्निरुपद्रवान्॥
क्रियामतः सिद्धतमां वातरोगापहां शृणु।
केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत्॥
वायुं सर्पिर्वसातैल मज्जपानैर्नरं ततः।
स्नेहं क्लान्तं समाश्वास्य पयोभिः स्नेहयेत् पुनः॥
यूषैर्ग्राम्याम्बुजानूपैः रसैर्वा स्नेहसंयुतैः।
पायसैः कृशरैरम्ललवणैः सानुवासनैः॥
तथान्यैर्विविधैः स्वेदैर्यथायोगमुपाचरेत्।
स्नेहार्द्रैः स्विन्नमङ्गन्तु वक्रं स्तब्धमथापि वा॥
यथेष्टमानामयितुं शक्यते शुष्कदारुवत्।
हर्षतोदरुगायास शोथस्तम्भो ग्रहादयः॥
स्विन्नस्याशु प्रशाम्यन्ति मार्दवं चोपजायते॥
स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः।
बलमग्निबलं पुष्टिं प्राणं चाप्यभिवर्धते॥
असकृत्तं पुनः स्नेहैः स्वेदैश्चाप्युपपादयेत्।
तथा स्नेहमृदौ देहे न तिष्ठन्त्यनिलामयाः॥
यद्यनेन सदोषत्वात् कर्मणा न प्रशाम्यति।
मृदुभिः स्नेहसंयुक्तैरौषधैस्तं विशोधयेत्॥
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा।
पायसैरण्डतैलं वा पिबेद्दोषहरं शिवम्॥
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हिमलैर्षितः।
स्रोतो बद्धानिलं वर्च्यस्तस्मात्तमनुलोमयेत्॥
दुर्बलो यो विरेच्यः स्यात्तं निरूहैरुपाचरेत्।

पाचनैर्दीपनीयैर्वा भोज्यैर्वालयुतं नरम् ।
युक्तस्य चोत्थिते दाह्नो स्नेहस्वेदौ पुनर्हितौ ॥
स्वाद्वम्ललवणस्निग्धैराहारैः सततं पुनः ।
नावनैर्धूमपानैश्च सर्वानेवोपपादयेत् ॥
विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ।
पाचनैर्दीपनीयैस्तैरन्नैर्वा पाचयेन्मलान् ॥
गुदपक्वाशयस्थे तु कर्म्म दावर्त्तनुद्धितम् ।
आमाशयस्थे शुद्धस्य यथा दोषहराः क्रियाः ॥
सर्वाङ्गकुपितेऽभ्यङ्गो बस्तयः सानुवासनाः ।
स्वेदाभ्यङ्गानि वातानि हृद्यं चान्नं त्वगाश्रिते ॥
शीतालेपस्तु रक्तस्थे विरेको रक्तमोक्षणम् ।
विरेको मांसमेदःस्थे निरूहा शमनानि च ॥
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ।
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ॥
विबद्धमार्गं दृष्ट्वा वा शुक्रं दद्याद्विरेचनम् ।
विरिक्तप्रतिभुक्तस्य पूर्वोक्तां कारयेत् क्रियाम् ॥
गर्भे शुष्के तु वातेन बालानां चापि शुष्यताम् ।
सिताकाश्मर्य्यमधुकैर्हितमुत्थापने पयः ॥
हृदि प्रकुपिते सिद्धमंशुमत्या पयो हितम् ।
मत्स्या नाभिप्रदेशस्थे सिद्धान् बिल्वशलाटुभिः ॥
वायुना वेष्ट्यमाने तु गात्रे स्यादुपनाहनम् ।
तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ॥
बाहुशीर्षगते नस्यं पानञ्चोत्तरभक्तिकम् ।
बस्तिकर्म्मत्वधो नाभेः शस्यते चावपीडकः ॥

अर्दिते नावनं मूर्ध्नि तैलं तर्पणमेव वा ।
नाडीस्वेदोपनाहाश्च आनूप पिशितैर्हिताः ॥
स्नेहनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ।
अस्राकण्डरा गुल्फे शिरावस्त्यग्नि कर्म च ॥
गृध्रसीषु प्रयुञ्जीत खल्लां तूष्णोपनाहनम् ।
पायसैः कृशरैश्चैव शस्ततैलघृतान्वितैः ॥
व्यात्ताननेहनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च ।
प्रदेशिनीभ्यां चोन्नाम्य चिबुकोन्नामनं हितम् ॥
स्रस्तां स्वङ्गमयेत् स्थानं स्तब्धां स्विन्नां विनामयेत् ।
प्रत्येकं स्थानदुष्यादि क्रियावैशेष्यमाचरेत् ॥
सर्पिस्तैलवसापानसेकाभ्यञ्जनवस्तयः ।
स्निग्धाः स्वेदानि वातं च स्थानं प्रावरणानि च ॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यच्च तत्सर्वं प्रशस्तं वातरोगिणाम् ॥
बलायाः पञ्चमूलस्य दशमूलस्य वा रसे ।
अजमूत्राम्बुजानूपमांसाद्यपिशितैः पृथक् ॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतात् ।
भोजयेद्वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम् ॥
एतैरेवोपनाहांश्च पिशितैः संप्रकल्पयेत् ।
घृततैलयुतैः साम्लैः सुखस्विन्नैरनस्थिभिः ॥
पचेत् क्वाथ मयस्तैलद्रोण्यः स्युरवगाहने ।
स्वभ्यक्तानां प्रशस्यन्ते सेकाश्चानिलरोगिणाम् ॥
आनूपौदकमांसानि दशमूलं शतावरीम् ।
कुलत्थान् बदरान्माषांस्तिलान् रास्नां यवान्बलाम् ।

वसाम्लधान्याम्लाम्लैः सह कुम्भ्यां विपाचयेत् ॥
नाडीस्वेदं प्रयुञ्जीत पिष्टैश्चैवोपनाहनम् ।
तैश्चसिद्धं घृतं तैलमभ्यङ्गः पानमेवच ॥
मुस्ताह्विल्वग्निका: कुष्ठं सुराह्वं लवणं नतम् ।
दधिक्षीरचतुःस्नेहैः सिद्धं स्यादुपनाहनम् ॥
सक्तिमु बीजि गोधूम यवकोलस्थिरादिभिः ।
सस्नेहैः सरुजं गात्रमालिप्य बहुलम्भिषक् ॥
एरण्डपत्रैः प्रच्छाद्य रात्रौ कल्यं विमोचयेत् ।
क्षीराम्बुना ततःसिक्तं पुनश्चैवोपनाहितम् ॥
मुञ्चेद्रात्रौ दिवाबद्ध चर्मभिश्च सुलोमभिः ।
फलानाम्तैलयोनीनामम्ल पिष्टानशीतलान् ॥
प्रदेहानुपनाहांश्च गन्धैर्वात हरैरपि ।
पायसैः कृशरैश्चैव कारयेत् स्नेहसंयुतैः ॥
कुब्जसानिलातांना मतः स्नेहात् प्रवक्ष्यते ।
विविधान्विविधव्याधि प्रशमायामृतोपमान् ॥
द्रोणेऽम्भसः पचेन्नागान् दशमूलां चतुष्पलान् ।
यवकोलकुलत्थानां भागैःप्रस्थोन्मितैः सह ॥
पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः ।
तथा खर्जूरकाश्मर्यद्राक्षा बदरफल्गुभिः ॥
सक्षीरैःसर्पिषःप्रस्थः सिद्धःकेवलवातनुत् ।
निरत्ययः प्रयोक्तव्यः पानाभ्यञ्जनवस्तिषु ॥
चित्रकं नागरं रास्नां पौष्करं पिप्पलीं शटीम् ।
पिष्ट्वा विपाचयेत्सर्पि र्वातरोग हर परम् ॥
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ।

तस्य शुक्तिः प्रपन्नोवा नस्यं मूर्धगतेऽनिले ॥
धन्वानूपौदकानान्तु भित्त्वास्थीनि पचेज्जले।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥
जीवकर्षभकास्फोता विदारीकपिकच्छुना।
वातघ्नैर्दीपनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥
तत्सिद्धं नावनाभ्यङ्गा त्तथापानानुवासनात्।
शिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम् ॥
तद्वद्गोधावसानक्रमत्स्यकूर्मवुलूकजाः।
प्रत्यग्रा विधिनानेन नस्य पानेषु शस्यते ॥
प्रस्थः स्यात्त्रिफलायास्तु कुलत्थ कुडवद्वयम्।
कृष्णागन्धात्वगाढक्योः पृथक् पञ्चपलं भवेत् ॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम्।
जलद्रोणे पचेत्पादशेषे प्रस्थोन्मितं पृथक् ॥
सुरारनालदध्यम्ल सौवीरक तुषोदकम् ॥
कोलदाड़िमवृक्षाम्लरसांस्तैलं वसाघृतम्।
मज्जानञ्च पयश्चैव जीवनीय पलानि षट् ॥
कल्कीकृत्य महास्नेहं सम्यगेनं विपाचयेत्।
शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु ॥
वेपनाक्षेप शूलेषु तदभ्यङ्गे प्रयोजयेत्।
निर्गुण्डीमूलपत्राभ्यां गृहीत्वा स्वरसं ततः ॥
तेन सिद्धं समं तैलं नाड़ी कुष्ठानिलार्त्तिषु।
हितं पामापचीनां च पानाभ्यञ्जन पूरणम् ॥

कर्पासास्थि कुलत्थानां रसे सिद्धञ्च वातनुत्।
मूलक स्वरसे क्षीरं समे स्थाप्य अम्लं दधि ॥
तस्मास्मस्य त्रिभिः प्रस्थैस्तैलप्रस्थं विपाचयेत्।
यष्ठ्याह्व शर्करा रास्नालवणार्द्रक नागरैः॥
सुपिष्टैः पालिकैः पानात्तदभ्यङ्गाच्च वातनुत्।
पञ्चमूलकषायेण पिण्याकं बहुवार्षिकम् ॥
पक्का तस्य रसं पूत्वा तेन तैलं विपाचयेत्।
पयसाष्टगुणेनैतत् सर्वं वात विकारनुत् ॥
संसृष्टे श्लेष्मणा चैतद्वाते शस्तं विशेषतः।
यवकोलकुलत्थानां श्रेयस्याः शुष्कमूलकात् ॥
बिल्वाच्चाञ्जलि मेकैकं द्रवैरम्लैर्विपाचयेत्।
तेन तैलं कषायेण फलाम्लैः कटुभिस्तथा।
पिष्टैः सिद्धं महावातैरार्तः शीते प्रयोजयेत् ॥
सर्ववातविकाराणां तैलान्यन्यान्यतः शृणु।
चतुष्प्रयोगाण्यायुष्यबलवर्णकराणि च ॥
रजः शुक्र प्रदोषघ्नान्यपत्यजननानि च।
निरत्ययानि सिद्धानि सर्वदोषहितानि च ॥
महाचरतुलायाश्च रसैस्तैलाढकं पचेत्।
मूलकल्काद्दशपलं पक्का क्षीरे च चतुर्गुणम् ॥
सिद्धेऽस्मिन् शतधा मूर्च्छा दंष्ट्रा दशपलं भिषक्।
विनीय दारुणे ष्वेतद्वातव्याधिषु योजयेत् ॥
श्वदंष्ट्रा स्वरसप्रस्थौ द्वौ समौ पयसा सह।
षट्पलं शृङ्गवेरस्य गुडस्याष्टपलं तथा ॥
तैलप्रस्थं विपक्कं तद्दद्यात् सर्वानिलार्तिषु।

जीर्णे तैले च दुग्धेन पेया कल्पः प्रशस्यते।
बला शतं गुडूच्याश्च पादं रास्नाष्टभागिकम्॥
जलाढकशते पक्त्वा शतभागस्थिते रसे।
दधि मस्त्विक्षु निर्यासशुक्तैस्तैलाढकं समैः॥
पचेत् साजपयोऽर्धांशं कल्कैरेभिः पलोन्मितैः।
शटी सरलदार्वेला मञ्जिष्ठा गुरुचन्दनैः॥
पद्मकातिबला मुस्तसूर्पपर्णी हरेणुभिः!
यष्ट्याह्व सुरसव्याघ्रनखर्षभकजीवकैः॥
स्पृक्का कुङ्कुमशैलेय जाती कटुफलाम्बुभिः।
त्वक्कुन्दुरुककर्पूरतुरुष्कश्रीनिवासकैः॥
लवङ्गनखकक्कोलकुष्ठमांसी प्रियङ्गुभिः।
थौणेय तगरव्यामवचाधमनकाश्वैः॥
सवला केसरैः सिद्धं चिपेच्चात्रावतारिते।
पत्र कल्कं ततः पूतं विधिना तत्प्रयोजयेत्॥
श्वासं कासं ज्वरं हिक्कां छर्दिं गुल्मान् चतं चयम्
श्लीहशोषावपस्मारमलक्ष्मीञ्च प्रणाशयेत्॥
तुलाः पञ्च गुडूच्यास्तु द्रोणेष्वष्टास्वपां पचेत्।
पादशेषे समं चीरं तैलस्य ह्याढकं पचेत्॥
एला मांसी नतोशीर शारिवा कुष्ठचन्दनैः।
बला तामलकी मेदा शतपुष्पर्द्धि जीवकैः॥
काकोली चीरकाकोली श्रावण्यतिबला नखैः।
सहस्रावरि जीवन्ती विदारीकपिकच्छुभिः॥
शतावरी महामेदा कर्कटाख्या हरेणुभिः।
वचा गोक्षुरकैरण्डरास्ना काला सहाचरैः॥

क्षीरा शतानि सुस्तात्कं पत्रं भकराङ्कः ।
मुख्यातुल्यक्षका निदग्धाके च कार्षिकैः ॥
मञ्जिष्ठायास्त्रिकर्षं च मस्तु क्वाष्टपलेन च ।
कल्केस्तैल पीतवीर्याग्नि बलसंमूढचेतसः ॥
उन्मादारल्पकारैरातैश्च प्रकृतिं नयेत् ।
वातव्याधिहरं श्रेष्ठं तैलाभ्यममृताह्वयम् ॥
रास्ना सहस्रनिर्यूहे तैलद्रोणं विपाचयेत् ।
गन्धैर्हैमवतैः पिष्टैरेलाद्यैश्चानिलार्तिनुत् ॥
कल्पोऽयमष्टगन्धायां प्रसारण्यां बलाद्वये ।
क्वाथकल्कपयोभिर्वा बलादीनां पचेत् पृथक् ॥
मूलकस्वरसं क्षीरं तैलं दध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बला चित्रकसैन्धवैः ॥
पिप्पल्यतिविषा रास्ना चविका गुरु शिग्रुकैः ।
भल्लातकवचा कुष्ठश्वदंष्ट्रा विश्वभेषजैः ॥
पुष्कराह्व शटी बिल्वशताह्वा नलदारुभिः ।
तत्सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥
दशमूलगुडूच्योश्च दिशतस्य शतस्य च ।
अश्वगन्धा चित्रकयोः क्वाथे तैलाढकं पचेत् ॥
सक्षीरं वायुना भग्ने दद्यात्सञ्जरस्थिते तथा ।
प्राक्तैलाचापसिद्धस्य खादेतद् हिगुणोत्तरम् ॥
रास्ना शिरीषमञ्जाह्व गुण्ठी सहचरा सताः ।
श्योनाकदारुसम्पाका हयगन्धा त्रिकण्टकाः ॥
एषां दशपलान् भागान् कषायमुपकल्पयेत् ।
ततस्तेन कषायेण सर्वगन्धैश्च कार्षिकैः ॥

दध्यारनालमाषाम्बुमूलकेक्षुरसैः शुभैः।
पृथक्प्रस्थोन्मितैः सार्धं तैलप्रस्थं विपाचयेत्॥
प्लीहमूत्रग्रहश्वासकासमारुतरोगनुत्।
एतन्मूलकतैलाग्र्यं वर्णायुर्बलवर्द्धनम्॥
यवकोलकुलत्थानां मत्स्यानां शिग्रुबिल्वयोः।
रसेन मूलकानां च तैलं दधि पयोऽन्वितम्॥
साधयित्वा भिषग्दद्यात् सर्ववातामयापहम्।
लशुनस्वरसे सिद्धं तैलमेभिश्च वातनुत्॥
तैलानेतानृतु स्नातां अङ्गनां पाययेत च।
पीत्वान्यतममेषां हि वन्ध्यापि जनयेत् सुतम्॥
यच्च शीतज्वरे तैलमगुर्वाद्यमुदाहृतम्।
अनेकशतशस्तच्च सिद्धं स्याद्वातरोगनुत्॥
वक्ष्यन्ते यानि तैलानि वातशोणितकेऽपि च।
तानि चानिलशान्त्यर्थं सिद्धिकामः प्रयोजयेत्॥
नास्ति तैलात्परं किञ्चिदौषधं मारुतापहम्।
व्यवाय्युष्णगुरुस्नेहात् संस्काराद्बलवत्तरम्॥
गणैर्वातहरैस्तस्मात् शतशोऽथ सहस्रशः।
सिद्धं क्षिप्रतरं हन्ति सूक्ष्ममार्गस्थितान् गदान्॥
क्रिया साधारणी सर्वा संसृष्टे चापि शस्यते।
वातपित्तादिभिः स्रोतःस्वावृतेषु विशेषतः॥
पित्तावृते विशेषेण शीतामुष्णां तथा क्रियाम्।
व्यत्यासात्कारयेत् सर्पिर्जीवनीयञ्च शस्यते॥
धन्वमांसं यवाः शालिर्यापनाः क्षीरबस्तयः॥
विरेकः क्षीरपानञ्च पञ्चमूलफलाश्रितम्॥

मधुयष्टिबला तैलं घृतक्षीरैश्च सेचनम् ।
पञ्चमूलकषायेण कुर्याद्वा शीतवारिणा ॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः ।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥
जीर्णं सर्पिस्तथा तैलं तिलसर्षपजं शुभम् ।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥
आमाशयगतं दृष्ट्वा कफं वमनमाचरेत् ।
पक्वाशये विरेकन्तु पित्ते सर्वगे तथा ॥
स्वेदैर्विष्यन्दितः श्लेष्मा यदा पक्वाशयाश्रितः ।
पित्तं वा दर्शयेल्लिङ्गं बस्तिभिस्तं विनिर्हरेत् ॥
श्लेष्मणानुगतं वातं उष्णैर्गोमूत्रसंयुतैः ।
निरूहैः पित्तसंसृष्टं निर्हरेत् क्षीरसंयुतैः ॥
मधुरौषधसिद्धैश्च तैलैस्तमनुवासयेत् ।
शिरोगते तु सकफे धूमनस्यादि कारयेत् ॥
हृते पित्तकफे यः स्याद्दूरस्रोतोऽनुगोऽनिलः ।
सशेषः स्यात् क्रिया तत्र कार्या कैवलवातिकी ॥
शोणितेनावृते कुर्याद्वातशोणितकीं क्रियाम् ।
प्रमेहवातमेदोघ्नी माध्य वाते प्रयोजयेत् ॥
स्वेदाभ्यङ्गा रसाः क्षीरे स्नेहा मांसावृते मताः ।
मद्दा स्नेहोऽस्थि मज्जस्थे पूर्ववद्रेतसावृते ॥
अन्नावृते तदुल्लेखः पाचनं दीपनं लघु ।
मूत्रलानि तु मूत्रेण स्वेदाः सोत्तरवस्तयः ॥
शकृता तैलमैरण्डं वस्तिः स्नेहाश्च भेदिनः ।
स्वस्थानस्थो बली दोषः प्राक्तं स्वैरौषधैर्जयेत् ॥

वमनैर्वा विरेकैर्वा वस्तिभिः शमनेन वा।
मारुतानां हि पञ्चानामन्योन्यावरणे श्रृणु॥
लिङ्गं व्याससमासाभ्यामुच्यमानं मयाऽनघ:।
प्राणो वृणोत्य पानादीन् प्राणं वृणवन्यथापि च॥
उदानाद्यास्तथान्योऽन्यं सर्व एव यथाक्रमम्।
विंशति वरणान्येतान्युल्वणानां परस्परम्॥
मारुतानां हि पञ्चानां तानि सम्यक् प्रतर्कयेत्।
शिरोग्रहः प्रतिश्यायो निःश्वासोच्छ्वाससंग्रहः॥
हृद्रोगो मुखशोषश्चाप्युदाने प्राणसंवृते।
तत्रोर्द्ध्वभागिकं वाम कार्यमाश्वासनं तथा॥
कर्मौजो बलवर्णानां नाशो मृत्युरथापि वा।
उदानेनावृते प्राणे तं शनैः शीतवारिणा॥
सिञ्चेदाश्वासयेच्चैव सुखं चैवोपपादयेत्।
ऊर्द्ध्वगेनावृते प्राणे छर्दिं श्वासादयो गदाः॥
स्युर्वाते तत्र वस्त्यादि भोज्यं चैवानुलोमनम्।
मेहाल्योग्निरतीसार ऊर्द्ध्वगेऽपानसंवृते॥
वाते स्युर्वमनं तत्र दीपनं ग्राहि चाशनम्।
वम्याध्मानमुदावर्त्तं गुल्मान्तपरिकर्तिकाः॥
लिङ्गं व्यानावृते पाने तं स्निग्धैरनुलोमयेत्।
अपानेनावृते व्याने भवेद्विण्मूत्ररेतसाम्॥
अतिप्रवृत्तिस्तत्रापि सर्वं संग्रहणं मतम्।
मूर्च्छा तन्द्रा प्रलापोऽङ्गसादोऽल्पोऽग्नी बलक्षयः॥
समानेनावृते व्याने व्यायामो लघु दीपनम्।
स्तब्धताल्पाग्निता स्वेदश्चेष्टा हानिर्निमीलनम्॥

उदानेनावृते व्याने तत्र पथ्यं मितं लघु।
एवमन्योन्यावृता नेवं वातानिनिर्दिश्य निशामयेत्॥
एषां स्वकर्मणां हानिर्वृद्धिर्वावरणं मतम्।
यथा स्थूलं समुद्दिष्टमेतदावरणाष्टकम्॥
सलिङ्गभेषजं सम्यग्बुधानां बुद्धिवृद्धये।
सामान्येन वातानां वृद्धिं हानिञ्च कर्मणाम्॥
द्वादशावरणान्यन्यान्यभिलक्ष्य भिषग्जितम्।
कुर्य्यादभ्यञ्जनस्नेहपानवस्त्यादि सर्वशः॥
क्रममुष्णमनुष्णं वा व्यत्यासादवधारयेत्।
उदानं योजयेदूर्द्ध्वमपानं चानुलोमयेत्॥
समानं शमयेच्चैव त्रिधा व्यानन्तु योजयेत्।
प्राणो रक्ष्यश्चतुर्भ्योऽपि स्थाने ह्यस्य स्थितिर्ध्रुवा॥
स्वं स्थानं गमयेदेवं वृतानेवं विमार्गगान्।
मूर्च्छा दाहो भ्रमः शूलं विदाहः शीतकामता॥
छर्द्दनञ्च विदग्धस्य प्राणे पित्तसमावृते।
ष्ठीवनं क्षवथूद्गार निःश्वासोच्छ्वाससंग्रहः॥
प्राणे कफावृते रूपाण्य रुचिश्छर्द्दिरेव च।
मूर्च्छाद्यानि च रूपाणि दाहो नाभ्युरसोर्भ्रमः॥
ऊर्जोभ्रंशश्च सादश्चाप्युदाने पित्तसंवृते।
आवृते श्लेष्मणो दाने वैवर्ण्यं वाक्स्वरग्रहः॥
दौर्बल्यं गुरुगात्रत्वमरुचिश्चापि जायते।
अतिस्वेदस्तृषादाहो मूर्च्छा चारुचिरेव च॥
पित्तावृते समाने स्युरुपघातस्तथोष्मणः।
अस्वेदो वह्निमान्द्यञ्च लोमहर्षस्तथैव च॥

कफावृते समाने स्युर्गात्राणां चाति शीतता।
व्याने पित्तावृते तु स्याद्दाहः सर्वाङ्गगः क्लमः॥
गात्रविक्षेपसङ्गश्च ससन्तापः सवेदनः।
गुरुता सर्वगात्राणां पर्वसन्ध्यस्थिवग्रहः॥
व्याने कफावृते लिङ्गं गति सङ्गस्तथाधिकः।
हारिद्रमूत्रवर्चस्त्वं तापश्च गुदमेढ्रयोः॥
लिङ्गं पित्तावृतेऽपाने रजसः संप्रवर्त्तनम्॥
भिन्नामश्लेषसंसृष्ट गुरुवर्चः प्रवर्त्तनम्।
श्लेष्मणा संवृतेऽपाने कफमेहस्य चागमः॥
लक्षणानां तु मिश्रत्वं पित्तस्य च कफस्य च।
उपलभ्य भिषग्विद्वान्मिश्रमावरणं वदेत्॥
यद्यस्य वायोर्निर्दिष्टं स्थानं तत्रेतरौ च्युतौ।
दोषौ बहुविधान् व्याधीन् दर्शयेतां यथा निजान्॥
आवृतं श्लेष्मपित्ताभ्यां प्राणं चोदानमेव च।
गरीयस्त्वेन पश्यन्ति भिषजः शास्त्रचक्षुषः॥
विशेषाज्जीवितं प्राणे उदाने संश्रितं बलम्।
स्थानयोः पीडनात्तानिरायुषश्च बलस्य च॥
सर्वेऽप्येते परिज्ञेयाः परिसंवत्सरास्तथा।
उपेक्षणादसाध्याः स्युरथवा दुरुपक्रमाः॥
हृद्रोगो विद्रधिः प्लीहा गुल्मातीसार एव च।
भवन्त्युपद्रवा स्त्वेषामावृतानामुपेक्षणात्॥
तस्मादावरणं वैद्यः पवनस्योपलक्षयेत्।
पञ्चात्मकस्य वातेन पित्तेन श्लेष्मणापिवा॥
भिषग्भिरितरतः सम्यगुपलक्ष्य समाचरेत्।

अनभिष्यन्दिभिः स्निग्धैः स्रोतसां शुद्धिकारिभिः ॥
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ।
सर्वस्थानावृतेप्याशु तत्कार्यं मारुते शुभम् ॥
आपना बस्तयःप्रायो मधुराःसानुवासनाः ।
प्रसमीक्ष्य बलाधिक्यं मृदुवा स्रंसनं हितम् ॥
रसायनानां सर्वेषामुपयोगः प्रशस्यते ।
शैलस्य जतुनोऽत्यर्थं पयसा गुग्गुलोस्तथा ॥
लेहं वा भार्गवप्रोक्तमभ्यस्येत् क्षीरभुग्ध्रुवम् ।
अभयामलकीयोक्त मेकादश सिताशतम् ॥
अपानेनावृते सर्वं दीपनं ग्राहि भेषजम् ।
वातानुलोमनं यच्च पक्वाशय विशोधनम् ॥
इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितम् ।
प्राणादीनां भिषक् कुर्य्याद्वितर्क्य स्वयमेव तत् ॥
पित्तावृते तु पित्तघ्नैर्मारुतस्या विरोधिभिः ।
कफावृते कफघ्नैस्तु मारुतस्यानुलोमनैः ॥
लोके वायुर्कसोमानां दुर्विज्ञेया यथा गतिः ।
तथा शरीरे वातस्य पित्तस्य च कफस्य च ॥
क्षयं वृद्धिं समत्वं वा तथैवावरणं भिषक् ॥
विज्ञाय पवनादीनां न प्रमुह्यति कर्मसु । इति
तत्र श्लोकौ ।

यच्चात्मनः स्थानवशात् शरीरे स्थानानि कर्माणि च देहधातोः
प्रकोपहेतुः कुपितश्च रोगान् स्थानेषु वान्येषु वृतो वृतश्च ॥
प्राणेश्वरः प्राणभृतां करोति क्रिया च तेषामखिला निरुक्ता ।
तान्देशमात्रस्तु बलान्यवेक्ष्य प्रयोजयेच्छास्त्रमतानुसारि ॥
इति वातव्याधि चिकित्सितम् ॥

## सप्तविंशोऽध्यायः।

अथातो वातशोणितचिकित्सितं व्याख्यास्यामः।

हुताग्निहोत्रमासीनमृषिमध्ये पुनर्वसुम्।
पृष्टवान् गुरुमेकाग्रं अग्निवेशोऽग्निवर्चसम्॥
अग्निमारुततुल्यस्य संसर्गस्यानिलास्रजोः।
हेतुलक्षणभैषज्यान्यथास्मै गुरुरब्रवीत्॥
लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः।
प्रायशः सुकुमाराणां पिष्टान्नरसभोजिनाम्॥
अभिघातादशुद्ध्या च प्रदुष्टे शोणिते नृणाम्।
कषायकटुतिक्ताल्परूक्षाहारादभोजनात्॥
हयोष्ट्रयानयानाम्बुक्रीडाप्लवनलङ्घनात्।
उष्णे चात्यध्ववैषम्याद्व्यवायाद्वेगनिग्रहात्॥
वायुर्विवृद्धो वृद्धेन रक्तेनावारितः पथि।
क्रुद्धस्तद्दूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्॥
खुडं वातबलासाख्यमाढ्यं रोगं च नामभिः।
तस्य स्थानं करौ पादावङ्गुल्यः सर्वसन्धयः॥
कृत्वादौ हस्तपादे तु मूलं देहे विधावति।
सौक्ष्म्यात्सर्वसरत्वाच्च देहं गच्छन् सिरायनैः।
पर्वस्वभिहतं क्षुब्धं वक्रत्वादवतिष्ठते॥

स्थित पित्तादिसंसृष्टं तास्ताः सृजति वेदनाः ।
करोति दुःखं तेष्वेव तस्मात् प्रायेण सन्धिषु ॥
स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शत्वञ्च चतेऽतिरुक् ।
सन्धि शैथिल्यमालस्यं सदनं पिड़कोद्गमः ॥
जानु जङ्घोरु कट्यंसहस्तपादाङ्गसन्धिषु ।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥
कण्डूः सुप्तिषु रुग् भूत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक् पूर्वलक्षणम् ॥
उत्तानमथ गम्भीरं द्विविधं तत् प्रचक्षते ।
त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम् ॥
कण्डू दाहरुगायासतोदस्फुरणधूननैः ।
अन्विता श्यावरक्ता त्वग्बाह्ये ताम्रा तथेष्यते ॥
गम्भीरः श्वयथुः स्तब्धः कठिनोऽन्तर्भृशार्तिमान् ।
श्यामस्ताम्रोऽथवा दाहतोदस्फुरणपाकवान् ॥
रुग्विदाहान्वितोऽभीक्ष्णं वायुः सन्ध्यस्थिमज्जसु ।
छिन्दन्निव चरत्यन्तर्वक्री कुर्वंश्च वेगवान् ॥
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ।
सर्वैर्लिङ्गैश्च विज्ञेयं वातासृगुभयाश्रयम् ॥
तत्र वातेऽधिके वा स्याद्रक्ते पित्ते कफेऽपिवा ।
संसृष्टेषु समस्तेषु यच्च तच्छृणु लक्षणम् ॥
विशेषतः शिरायाम शूलस्फुरणतोदनम् ।
शोथस्य कार्ष्ण्यरूक्षत्वश्यावता वृद्धि हानयः ॥
धमन्यङ्गुलि सन्धीनां सङ्कोचोऽङ्गग्रहतोऽति रुक् ।
कुट्टनस्तम्भने शीतप्रद्वेषश्चानिलेऽधिके ॥

श्वयथु शूलतोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदान्वितोऽसृजि ॥
विदाहो वेदना मूर्च्छा स्वेदस्तृष्णा मदो भ्रमः ।
रागः पाकश्च भेदश्च शोषश्चोक्तानि पैत्तिके ॥
स्तैमित्यं गौरवं स्नेहः सुप्तिर्मन्दा च रुक्कफे ।
हेतु लक्षणसंसर्गाद्विद्याद् द्वन्द्व त्रिदोषजम् ॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजमसाध्यं वा यस्य च स्युरुपद्रवाः ॥
अस्वप्ना रोचकश्वासमांसकोथ शिरोग्रहाः ।
मूर्च्छा च मदरुक्छर्दिज्वरमोहप्रवेपकाः ॥
हिक्का पाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः ।
अङ्गुली वक्रता स्फोटा दाह मर्मग्रहार्बुदाः ॥
एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वापि यत् ।
सप्रस्रावि विवर्णञ्च स्तब्धमर्बुदकञ्च यत् ॥
वर्जयेद्यः सङ्कोचकरमिन्द्रियतापनम् ।
अकृत्स्नोपद्रवं याप्यं यत् स्याच्च निरुपद्रवम् ॥
रक्तमार्गं निहत्याशु शाखा सन्धिषु मारुतः ।
निविश्यान्योन्यमावार्य वेदनाभिर्हरेदसून् ॥
तत्र मुञ्चेदसृक् शृङ्गजलौकाः सूच्यलाबुभिः ।
प्रच्छन्नैर्वा शिराभिर्वा यथा दोषं यथाबलम् ॥
रुग्दाह शूलतो दार्तादस्रक्प्रस्थं जलौकसा ।
शृङ्गैः स्तम्भं हरेत् सुप्ति कण्डू चिमिचिमायनात् ॥
देशाद्देशं व्रजन् स्राव्यं शिराभिः प्रच्छनेन वा ।
अङ्गे ग्लाने न तु स्राव्यं रूक्षे वातोत्तरश्च यत् ॥

गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायु शिरा मयान्।
ग्लानिं चास्य न सङ्कोचं कुर्य्याद्वायुरवक् यथात् ॥
खञ्जादीन् वातरोगांश्च मृत्युं वात्यपसेचितम्।
कुर्य्यात्तस्मात् प्रमाणेन शिरामोक्षं निवारयेत् ॥
विरेच्यः स्नेहयित्वादौ स्नेहयुक्तैर्विरेचनैः।
रूक्षैर्वा मृदुभिः शस्तं प्रसकृद्वस्ति कर्म च ॥
सेकाभ्यङ्ग प्रदेहाश्च स्नेहाः प्रायो विदाहिनः।
वातरक्ते प्रशस्यन्ते विशेषं तु निबोध मे ॥
बाह्यमालेपनाभ्यङ्ग परिषेको पनाहनैः।
विरेकास्थापनस्नेहपानैर्गम्भीरमाचरेत् ॥
सर्पिस्तैल वसा मज्जा पानाभ्यञ्जनवस्तिभिः।
शीतैर्निर्वापनैश्चापि रक्तपित्तोत्तरं जयेत् ॥
वमनं मृदुनात्यर्थं स्नेहसेकादि लङ्घनम्।
कोष्णलेपाश्च शस्यन्ते वातरक्ते कफोत्तरे ॥
कफवातोत्तरे शीतैः प्रलिप्ते वातशोणिते।
विदाह शोफरुक्कण्डू विवृद्धिः स्तम्भनाद्भवेत् ॥
पित्तरक्तोत्तरे दाहः क्लेदोऽवदरणं भवेत्।
उष्णैस्तस्माद्धिमन्दोष बलं बुद्ध्वा चरेत् क्रियाम् ॥
दिवास्वप्नं स सन्तापं व्यायामं मैथुनं तथा।
कट्वुष्णं गुर्वभिष्यन्दि लवणाम्लं च वर्जयेत् ॥
पुराणयवगोधूमनीवाराः शालिषष्टिकाः।
भोजनार्थे रसार्थे वा विष्किर प्रतुदा हिताः ॥
आढक्यश्चणका मुद्गा मसूराः समकुष्टकाः।
यूषार्थे बहुशः पथ्याः प्रशस्ता वातशोणिते ॥

सुनिषण्णकवेत्राग्र काकमाची शतावरी।
वास्तुकोपोदकाशाकं शाकं सौवर्चलं तथा।
घृतमांस रसैर्घृष्टं शाकसात्म्याय दापयेत्॥
व्यञ्जनार्थं तथा गव्यं माहिषाजं पयोहितम्।
इतिसंक्षेपतःप्रोक्तं वातरक्तचिकित्सितम्॥
एतदेव पुनः सर्वं व्यासतः संप्रवक्ष्यते।
श्रावणी क्षीरकाकोली क्षीरिका जीवकैः समैः॥
सिद्धं सर्षभकैः सर्पिः सक्षीरं वातरक्तनुत्।
बलामतिबलां मेदां आत्मगुप्तां शतावरीम्॥
काकोलीं क्षीरकाकोलीं रास्नामृद्धिञ्च पेषयत्।
घृतञ्चतुर्गुणं क्षीरं तैः सिद्धं वातरक्तनुत्॥
हृत्पाण्डुरोगवीसर्प कामलादाहनाशनम्।
तामलक्या द्विकाकोल्याः पिप्पलीतायमाणयोः॥
कशेरुकाकषायेण कल्कैरेभिः पचेद् घृतम्।
दत्त्वा परूषकद्राक्षा काश्मर्यक्षुरसान् समान्॥
पृथग्विदार्याश्च रसं तथा क्षीरञ्चतुर्गुणम्।
एतत् प्रायोगिकं सर्पिः परूषकमितिस्मृतम्॥
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे।
द्वे पञ्चमूलेवर्षा जमेरण्डं सपुनर्नवम्॥
मुद्गपर्णीं महामेदां माषपर्णीं शतावरीं।
शङ्खपुष्पी मवाक्पुष्पीं रास्नामतिबलां बलाम्॥
पृथग् द्विपलिकं कृत्वा जलद्रोणे विपाचयेत्।
पादशेषे समान् क्षीर धात्रीक्षुच्छागलान् रसान्॥
घृताढ़केन संयोज्य शनैर्मृद्वग्निना पचेत्।

कल्कानावाप्य मेदे द्वे काश्मर्यं फलमुत्पलम् ॥
त्वक्क्षीरीं पिप्पलीं द्राक्षां पद्मबीजं पुनर्नवाम् ।
नागरं क्षीरकाकोलीं पद्मकं वृहतीद्वयम् ॥
वीरां शृङ्गाटकं भव्यं मुद्गमाषं निकोचकम् ।
वदराक्षोटवातामं मुञ्जातामिषुकांस्तथा ॥
एतद्घृतं ताढके सिद्धं क्षौद्रं शीते प्रदापयेत् ।
सम्यक् सिद्धञ्च विज्ञाय स्वनुगुप्तन्निधापयेत् ॥
रक्षाकर्म कृतशौचः सेवेताक्षमतः सदा ।
पाण्डुरोगं ज्वरं हिक्कां स्वरभेदं भगन्दरम् ॥
पार्श्वशूलं क्षयं कासं प्लीहानं वातशोणितम् ।
क्षतशोषमपस्मारमश्मरीं शर्करान्तथा ॥
सर्वाङ्गैकाङ्गरोगांश्च मूत्रसङ्गांश्च नाशयेत् ।
बलवर्णकरं धन्यं वली पलितनाशनम् ॥
जीवनीयमिदं सर्पिर्वृष्यं वन्ध्या सुतप्रदम् ।
द्राक्षा मधूकतोयाभ्यां सिद्धं वा ससितोपलम् ॥
पिवेद्घृतं तथा क्षीरं गुडूची स्वरसे शृतम् ।
जीवकर्षभकौ कालामृष्य प्रोक्तां शतावरीम् ॥
मधुकं मधुपर्णीञ्च काकोलीद्वयमेव च ।
मुद्गमाषाख्यपर्णिन्यौ दशमूलं पुनर्नवे ॥
बला स्रुता विदार्यौश्च साश्वगन्धाश्मभेदकाः ।
एषां कषाय कल्काभ्यां सर्पिस्तैलञ्च साधयेत् ॥
लाभतश्च वसा मज्जोधान्यप्रातुदवैष्किरान् ।
चतुर्गुणेन पयसा तत्सिद्धं वातशोणितम् ॥
सर्वदेहाश्रयं हन्ति व्याधीन् घोरांश्च वातजान् ।

स्थिराश्वदंष्ट्रा बृहती शारिवा सशतावरी ॥
काश्मर्य्याश्चात्मगुप्ता च वृश्चीवं द्वे बले तथा।
एषां क्वाथे चतुःक्षीरे पृथक्तैलं पृथग्घृतम् ॥
मेदा शतावरी यष्टी जीवन्ती जीवकर्षभैः।
पक्वा मात्रा ततः क्षीरं त्रिगुणाद्धं शर्करा ॥
खजेन मथिता पेया वातरक्ते त्रिदोषजे।
तैलं पयः शर्कराञ्च पाययेद्वा सुमूर्च्छितम् ॥
सर्पिस्तैल सिता क्षौद्रैर्मिश्रं वापि पिबेत्पयः।
अतोऽंशुमत्या पयसः प्रस्थो द्विविमितोपलः ॥
पाने प्रशस्यते तद्वत्पिप्पली नागरैः शृतम्।
बला शतावरी रास्ना दशमूलैः सपीलुभिः ॥
श्यामैरण्डस्थिराभिश्च वातार्तिघ्नं शृतं पयः।
धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम् ॥
पिबेद्वा सत्रिवृच्चूर्णं पित्तरक्तावृतानिलः।
क्षीरेणैरण्डतैलं वा प्रयोगेन पिबेन्नरः ॥
बहुदोषो विरेकार्थं जीर्णं क्षीरौदनाशनः।
कषायमभयानां वा घृतभृष्टं पिबेन्नरः ॥
क्षीरानुपानं त्रिवृता चूर्णं द्राक्षा रसेन वा।
काश्मर्य्यं त्रिवृतां द्राक्षां चूर्णं द्राक्षारसेन वा।
काश्मर्यं त्रिवृतां द्राक्षां त्रिफलां सपरूषकाम् ॥
शृतां पिबेद्विरेकाय लवणक्षौद्रसंयुताम्।
त्रिफलायाः कषायं वा पिबेत् क्षौद्रेण संयुतम् ॥
धात्री हरिद्रा मुस्तानां कषायं वा कफाधिके ॥
योगैश्च कल्पविहितै रसकत्वं विशोधयेत्।

मृदुभिः स्नेहसंयुक्तैर्ज्ञात्वा वातं मलावृतम् ॥
निर्हरेद्वा मलं तस्य सघृतैः चीरवस्तिभिः ।
न हिनस्ति समं किञ्चिद्वातरक्तचिकित्सितम् ॥
वस्ति वंक्षणपार्श्वोरुपर्वास्थि जठरादिषु ।
उदावर्ते च शस्यन्ते निरूहाः सानुवासनाः ॥
दद्यात्तैलानि चेमानि वस्ति कर्म्मणि बुद्धिमान् ।
नस्याभ्यञ्जनसेके च दाह शूलोपशान्तये ॥
मधु यष्ट्यास्तुलायास्तु कषाये पादशेषिते ।
तैलाढकं समक्षीरं पचेत् कल्कैः पलोन्मितैः ॥
शतपुष्पावरी मूर्वा पयस्या गुरुचन्दनैः ।
स्थिरा हंसपदी मांसी द्वि मेदा मधु पर्णिभिः ॥
काकोली चीरकाकोली तामलक्यृद्धि पद्मकैः ।
जीवन्ती जीवकर्षभत्वक् पत्रनखवालकैः ॥
प्रपुण्डरीक मञ्जिष्ठा शारिवेन्द्री वितुन्नकैः ।
वाता सृक् पित्तदाहार्तिं ज्वरघ्नं बलवर्द्धनम् ॥
गुडूचीं मधुकं कृष्णं पञ्चमूलं पुनर्नवाम् ।
रास्ना मेरण्डमूलञ्च जीवनीयानि लाभतः ॥
पलानां शतिकैर्भागैर्बला पञ्च शतं तथा ।
कोलं विल्वं यवान्माषान् कुलत्थांश्चाढकोन्मितान् ॥
काश्मर्याणां चतुष्काणां द्रोणं द्रोणशतेऽम्भसः ।
साधयेज्जर्जरं धौतं चतुर्द्रोणञ्च शेषयेत् ॥
तैलद्रोणं पचेत्तेन दत्त्वा पञ्चगुणं पयः ।
पिष्ट्वा त्रिपलिकञ्चैवं चन्दनो शीरकेसरम् ॥
पत्रैलागुरु कुष्ठानि तगरं मधु यष्टिकाम् ।

मञ्जिष्ठाष्टपलञ्चैव तत्सिद्धं सार्व्वयौगिकम् ॥
वातरक्ते चते चीणे भावान्ते चीणरेतसि।
वेदना चिप्रभग्नानां सर्व्वाङ्गैकाङ्गरोगिणाम् ॥
योनि दोषमपस्मारमुन्मादं खञ्जपङ्गुताम्।
हन्यात्पुंसवनं चैतत्तैलाग्र्यममृताह्वयम् ॥
पद्मवेतस यष्ट्याह्व फेनिला पद्मकोत्पलैः।
पृथक् पञ्चपलैर्द्दर्भैर्बला चन्दनकिंशुकैः ॥
जले शृतैः पचेत्तैलप्रस्थं सौवीरसम्मितम्।
लोध्रपद्मोत्तरो शीरजौ कर्षभकेसरैः ॥
मदयन्ती लता पत्र पद्मकेसरपत्रकैः ॥
प्रपुण्डरीककालीय मांसी मेदा प्रियङ्गुभिः।
कुङ्कुमहिमगुणैः कर्षैर्मञ्जिष्ठायाः पलेन च ॥
महापद्ममिदं तैलं वाता सृग्ज्वरनाशनम्।
पद्मकोशीर यष्ट्याह्व रजनी क्वाथ साधितम् ॥
स्यात्पिष्टैः सर्ज मञ्जिष्ठा वीरा काकोलि चन्दनैः।
खुड्डाकपद्मकमिदं तैलं रुग्दाहनाशनम् ॥
बला कषाय कल्काभ्यां तैलं चीरसमन्तथा।
सहस्रशतपाकं वा वाता सृग्वातरोगनुत् ॥
रसायनं श्रेष्ठतममिन्द्रियाणां प्रसादनम्।
जीवनं वृंहणं स्वर्य्यं शुक्रा सृग्दोषनाशनम् ॥
आरनालाढके तैलं पादसर्जरसा शृतम्।
प्रभूते मथितं तोये ज्वरदाहार्त्तिनुत् परम् ॥
समधूच्छिष्टमञ्जिष्ठं ससर्जरसशारिवम्।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥

दशमूलशृतं क्षीरं सद्यः शूलनिवारणम्।
परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥
स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत्।
स्तम्भा क्षेपकशूलार्तं कोष्णैर्दाहे तु शीतलैः ॥
तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः।
निष्क्वाथैर्जीवनीयानां पञ्चमूलस्य वा भिषक् ॥
दाहे सुरसमद्यानि दधि मस्त्वम्लकाञ्जिकम्।
सेकार्थे तण्डुलक्षौद्रशर्कराम्बु च शस्यते ॥
कुमुदोत्पलपद्माद्यैर्मणिहारैः सचन्दनैः।
शीततोयानुगैर्दाहे प्रोक्षणं स्पर्शनं हितम् ॥
चन्द्रपादाम्बुसंसिक्तैः क्षौमपद्मदलच्छदे।
शयने पुलिनस्पर्शे शीतमारुतवीजिते ॥
चन्दनार्द्रकराद्राङ्ग्यः प्रिया नार्यः प्रियंवदाः।
स्पर्शात् शीतसुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥
सरागसरुजे दाहे रक्तं मुक्त्वा प्रलेपयेत्।
मधूकाश्वत्थसंमांसा वीरोदुम्बरशाद्वलैः ॥
जलजैर्यवचूर्णैर्वा सुयष्ट्याह्वपयोघृतैः।
सर्पिषा जीवनीयैर्वा पिष्टैर्लेपोऽर्तिदाहनुत् ॥
तिलाः पियालं मधुकं बिलं मूलं च वेतसाम्।
सघृतः पयसा पिष्टप्रदेहो दाहरागनुत् ॥
प्रपुण्डरीकमञ्जिष्ठा दार्वी मधुकचन्दनैः।
सितोत्पलैरका सक्तुमसूरो शीरपद्मकैः ॥
लेपाङ्गदाह वीसर्प रागशोफनिवर्हणः।
पित्तरक्तोत्तरे लेते लेपा वातोत्तरे शृणु ॥

वातघ्नैः साधितः स्निग्धः कृशरो मुद्गपायसः ।
तिलसर्षपपिष्टाश्चाप्युपनाहा रुजापहाः ॥
औदकप्रसहानूपवेशवाराः सुसंस्कृताः ।
जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहनैः ॥
स्तम्भतोदरुगायासशोथाङ्गग्रहनाशनाः ।
जीवनीयौषधैः सिद्धाः सपयस्कावसापि या ॥
घृतं सहचरान् मूलं जीवन्ती छागलं पयः ।
लेपाः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥
क्षीरपिष्टसुसंलेप मेरण्डस्य फलानि वा ।
कुर्यात् शूलनिवृत्त्यर्थं शताह्वामनिलेऽधिके ॥
समूलाग्रच्छदैरेरण्डक्वाथे द्विप्रस्थिकं पृथक् ।
घृतं तैलं वसा मज्जा सानूपं मृगपक्षिणाम् ॥
कल्कार्थे जीवनीयानि गव्यं क्षीरमथाजकम् ।
हरिद्रोत्पलकुष्ठैला शताह्वा वरुणच्छदान् ॥
बिल्वमात्रा पृथक् पुष्पं काकुम्भं चापि साधयेत् ।
मधूच्छिष्टपलान्यष्टौ दद्यात् सिद्धेऽवतारिते ॥
शूले नैषोऽर्दिताङ्गानां लेपः सन्धिगतेऽनिले ।
वातरक्ते सुते भग्ने खञ्जे कुब्जे च शस्यते ॥
शोफगौरवकण्ड्वाद्यैर्युक्ते त्वस्मिन् कफोत्तरे ।
मूत्रक्षारसुरा पक्वघृतमभ्यञ्जने हितम् ॥
पद्मकं त्वक् समधुकं शारिवा चेति तैर्घृतम् ।
सिद्धं समधु शक्तं स्यात् सेकाभ्यङ्गः कफोत्तरे ॥
क्षारस्तैलङ्गवां मूत्रं जलञ्च कटुकैः शृतम् ।
परिषेकाः प्रशस्यन्ते वातरक्ते कफोत्तरे ॥

लेपः सर्षपनिम्बार्कं हिंस्रा चारतिलैर्हितः ।
स्नेहः सिद्धः कपित्थत्वग् घृतक्षारैः चयन्नु भिः ॥
द्वे हरिद्रे वचा गारधूमकुष्ठशताह्विकाः ।
प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥
तगरं त्वक् शताह्वैला कुष्ठं मुस्तं हरेणुकाः ।
दारु व्याघ्रं नखश्चाम्लपिष्टं वातकफार्तिनुत् ॥
मधु शिग्रोर्हितं तद्वद्बीजं धान्याम्लसंयुतम् ।
मुहूर्तं लिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरम् ॥
त्रिफला व्योषपत्रैलात्वक् क्षीरं चित्रकं वचाम् ।
विडङ्गं पिप्पलीमूलं लोमशं वृषकं वचाम् ॥
ऋद्धिं तामलकीश्चव्यां समभागानि पेषयेत् ।
काल्यं लिप्तमयस्पात्रे मध्याह्ने पेषयेत्ततः ॥
वर्जयेद्दधि शुक्तानि चारं वैरोधकानि च ।
वातास्रे सर्वदोषेऽपि मतं शूलार्दिते परम् ॥
बुद्ध्वा स्थानविशेषांश्च दोषाणाञ्च बलाबलम् ।
चिकित्सितमिदं कुर्यादूहापोहविकल्पवित् ॥
कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा ।
अतिवृद्ध्याऽनिले नादौ शस्तं स्नेहन बृंहणम् ॥
व्यायामशोधनारिष्टमूत्रपानैर्विशोधितैः ।
तक्राभयाप्रयोगैश्च चपयेत्कफमेदसी ॥
पुराणयवगोधूमशोध्वरिष्टाः सर्वस्तथा ।
शिलाजतुप्रयोगैश्च गुग्गुलोर्माचिकस्य च ॥
पश्चाद्वाते क्रियां कुर्याद्या च रक्तप्रसाधनी ।
गम्भीरे रक्तमाक्रान्तं स्याच्चेत्तद्वातवज्जयेत् ॥

रक्तपित्तातिबहुत्वात्तु पाकमाशु नियच्छति।
भिन्नं स्रवति वा रक्तं विदग्धं पूयमेव वा॥
तयोः क्रिया विधातव्या व्रणशोधनरोपणी।
कुर्य्यादुपद्रवाणं च क्रियां स्वात् स्वाच्चिकित्सितात्॥
तत्र श्लोकाः। हेतु स्थानानि मूलस्य यस्मात् प्रायश्च सन्धिषु।
कुप्यति प्राक्चयं रूपं द्विविधस्य च लक्षणम्॥
पृथग्भिन्नस्य लिङ्गञ्च दोषाधिक्यमुपद्रवाः।
साध्यं याप्यमसाध्यञ्च क्रिया साध्यस्य चाखिला॥
वातरक्तस्य निर्दिष्टा समासव्यासतस्तथा।
महर्षिणाग्निवेशाय तथैवावस्थिकी क्रिया॥

इति वातरक्तचिकित्सितम्।

---

त्रिंशोऽध्यायः।

अथातो योनिव्यापच्चिकित्सितं व्याख्यास्यामः।
दिव्यौषधि जलस्वादु धातु चित्रशिलावति।
पुण्ये हिमवतः पार्श्वे सुरसिद्धर्षिसेविते॥
विहरन्तं तपो योगात्तत्त्वज्ञानार्थदर्शिनम्।
कृष्णात्रेयं जितात्मनं अग्निवेशोऽनुपृष्टवान्॥
भगवन्! रत्यपत्यानां मूलं नार्य्यः परं नृणाम्।
तद्विघातो गदैश्चासां क्रियते योनिमाश्रितैः॥
तासां तेषां समुत्पत्तिमुत्पन्नानाञ्च लक्षणम्।
औषधं श्रोतुमिच्छामि प्रजानुग्रहकाम्यया॥

इति शिष्येण पृष्टस्तु प्रोवाचर्षिवरोऽग्निजः ।
विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ॥
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च ।
जायन्ते वीजदोषाच्च दैवाच्च शृणु ताः पृथक् ॥
वातलाहारचेष्टाया वातलायाः समीरणः ।
विवृद्धो योनिमाश्रित्य योनेस्तोदं सवेदनम् ॥
स्तम्भं पिपीलकासृप्तिमिव कर्कशतां तथा ।
करोति सुप्तमायामं वातजांश्चापरान् गदान् ॥
साऽसदा सशब्दरुक् फेनं तनु रूक्षार्त्तवानिलात् ।
व्यापत्तथाम्ललवणक्षाराद्यैः पित्तजा भवेत् ॥
दाह पाकज्वरोष्णार्त्ता नीलपीता सितार्त्तवा ।
भृशोष्णकुणपस्रावा योनिः स्यात्पित्तदूषिता ॥
कफोऽभिष्यन्दिभिर्वृद्धो योनिं चेत् दूषयेत् स्त्रियाः ।
सशीतां पिच्छिलां कुर्यात्कण्डूग्रस्तां सवेदनाम् ॥
पाण्डुवर्णां तथा पाण्डुपिच्छिलार्त्तववाहिनीम् ।
समश्नत्या रसान् सर्वान् दूषयित्वा त्रयो मलाः ॥
योनिं गर्भाशयस्थैः स्वैर्योनिं युञ्जन्ति लक्षणैः ।
सा भवेद्दाहशूलार्त्ता श्वेतपिच्छिलवाहिनी ॥
रक्तपित्तकरैर्नार्या रक्तं पित्तेन दूषितम् ।
अति प्रवर्त्तते योन्या लब्धे वीजेऽपि सा प्रजा ॥
योनिगर्भाशयस्थं चेत् पित्तं संशोषयेदसृक् ।
सारजस्का मता कार्श्यवैवर्ण्यजननी भृशम् ॥
योन्यामधावनात् कण्डूं जाताः कुर्वन्ति जन्तवः ।
स स्यादचरणात् कण्ड्वा तयाति नरकाङ्क्षिणी ॥

पवनोऽति व्यवायेन शोफसुप्तिरुजः स्त्रियाः ।
करोति कुपितो योनौ सातिचरणा मता ॥
मैथुनादति बालायाः पृष्ठजङ्घोरु वंक्षणम् ।
रुजयन् दूषयेद्योनिं वायुः प्राक्चरणा तु सा ॥
गर्भिण्याः श्लेष्मलाभ्यासाच्छर्दिः श्वासविनिग्रहात् ।
वायुः क्रुद्धः कफं योनिं उपनीय प्रदूषयेत् ॥
पाण्डुं सतोदं आस्रावं श्वेतं स्रवति वा कफम् ।
कफवातामय व्याप्ता सा स्याद्योनिरुपप्लुता ॥
पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।
पित्तसंमूर्च्छितो वायुर्योनिं दूषयति स्त्रियाः ॥
शूना स्पर्शा क्षमा सार्तिर्नीलपीतमसृक् स्रवेत् ।
श्रोणी वंक्षणपृष्ठार्ति ज्वरार्तायाः परिप्लुता ॥
वेगोदावर्तनाद्योनिं मुदा वर्तयतेऽनिलः ।
सा रुगार्ता रजः कृच्छ्रेणोदावृत्तां विमुञ्चति ॥
आर्तवे या विमुक्ते तु तत्क्षणं लभते सुखम् ।
रजसो गमनादूर्द्ध्वं ज्ञेयो दावर्तिनी बुधः ॥
अकाले वाह्यमानाया गर्भेण पिहितोऽनिलः ।
कर्णिकाञ्जनयेद्योनौ श्लेष्मरक्तेन मूर्च्छितः ॥
रक्तमार्गावरोधिन्या सा तया कर्णिनी मता ।
रौक्ष्याद्वायुर्यदा गर्भं जातं जातं विनाशयेत् ॥
दुष्टशोणितजं नार्याः पुत्रघ्नी नाम सा मता ।
व्यवाय मति हृष्टाया भजन्त्यास्तत्र पीडितः ॥
वायुर्मिथ्या स्थिताङ्गा या योनि स्रोतसि संस्थितः ।
वक्रयत्याननं योन्याः सास्थि मांसा निलार्तिभिः ॥

अत्यर्थं मैथुनासक्ता योनिरन्तर्मुखी मता ।
गर्भस्थायाः स्त्रिया रौच्यादायुर्योनिं प्रदूषयन् ॥
मातृदोषादणुद्वारात् कुर्यात् सूचीमुखी तु सा ।
व्यवाय काले रुन्धन्त्या वेगात् प्रकुपितोऽनिलः ॥
कुर्याद्विग्मूत्रसङ्गार्तिं शोषं योनि मुखस्य तु ।
षड्रात्रात् सप्तरात्राद्वा शुक्रं गर्भाशयं गतम् ॥
सरुजं नीरुजं वापि या स्रवेत् साच वामिनी ।
बीजदोषाच्च गर्भस्था मारुतोपहताशया ॥
नृद्वेषिण्यस्तनी चैव षण्ढी स्यादनुपक्रमा ।
विषमं दुःखशय्यायां मैथुनात् कुपितोऽनिलः ॥
गर्भाशयस्य योन्याश्च मुखं विष्टम्भयेत् स्त्रियाः ।
असंवृतमुखा सार्तिं रूक्षफेनास्रवाहिनी ॥
मांसोत्पन्ना महायोनिः पर्व वंक्षणशूलिनी ।
इत्येते लक्षणैः प्रोक्ता विंशतिर्योनिजा गदाः ॥
न शुक्रं धारयत्येभिर्दोषैर्योनिरुपद्रुता ।
तस्माद्गर्भं न गृह्णाति स्त्रीगच्छत्या मयान् बहून् ॥
गुल्मार्शः प्रदरादींश्च वाताद्यैश्चाति पीडनम् ।
आसामष्टौ या स्तासां मध्ये द्वे पित्तदोषजे ॥
परिप्लुता वमिनी च वातपित्तात्मके मते ।
कर्णिन्युपप्लुते वातकफात् शेषास्तु वातजाः ॥
देहं वातादयस्तासां स्वैर्लिङ्गैः पीडयन्ति हि ।
स्नेहनस्वेदबस्त्यादि वातलास्वनिलापहम् ॥
कारयेद्रक्तपित्तघ्नं शीतंपित्तकृतासु च ।
श्लेष्मलासु च रूक्षोष्णं कर्म कुर्याद्विचक्षणः ॥

सन्निपाते विमिश्रन्तु संसृष्टासु च कारयेत्।
स्निग्धस्विन्नं तथा योनिं दुःस्थितां स्थापयेत् पुनः॥
पाणिना नामयेज्जिह्मां निःसृतां संप्रवेशयेत्।
व्याधयेत् संसृतास्वेव विवृतां परिवर्त्तयेत्।
योनिः स्थापनवृत्ता हि शल्यभूता स्त्रिया मता॥
सर्वा व्यापन्नयोनिन्तु कर्म्मभिर्वमनादिभिः।
मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत्॥
सर्व्वतः सुविशुद्धायाः शेषं कर्म्म विधीयते।
वातव्याधिहरं कर्म्म वातार्त्तानां सदा हितम्॥
औदकानूपजैर्मांसैः क्षीरैः सलिलतण्डुलैः।
सवातघ्नौषधैर्नाडी कुम्भी स्वेदैरुपाचरेत्॥
युक्तां लवणतैलेन साश्म प्रस्तरशङ्करैः।
स्विन्नां कोष्णाम्बु सिक्ताङ्गीं वातघ्नैर्भोजयेद्रसैः॥
बला द्रोणद्वय क्वाथे घृततैलाढ़कद्वयम्।
स्थिरामयस्या जीवन्ती वीरर्षभकजीवकैः॥
श्रावणी पिप्पली मुद्गपीलुमाषाख्यपर्णिभिः।
शर्करा क्षीरकाकोली काकनासाभिरेव च॥
पिष्टैश्चतुर्गुणक्षीरं तथैव च यथाबलम्।
वातपित्तकृतान् रोगान् हत्वा गर्भं दधाति तत्॥
काश्मर्य्यं त्रिफला द्राक्षा कासमर्द्दपरूषकैः।
पुनर्नवा हरिद्राभ्यां काकनासा सहाचरैः॥
शतावर्य्यां गुडूच्याश्च प्रस्थामचसमैर्घृतात्।
साधितं योनि वातघ्नं गर्भदं परमं पिवेत्॥
पिप्पल्यः कुञ्चिका जाजी वृषकं सैन्धवं वचाम्।



71

यवक्षाराजमोदौ च शर्करां चित्रकं तथा ॥
पिष्ट्वा सर्पिषि भृष्टानि पाययेत प्रसन्नया ।
योनि पार्श्वार्तिहृद्रोगगुल्मार्शो विनिवृत्तये ॥
वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम् ।
पिबेत् सलवणैर्मद्यैः पिप्पल्यौ कुञ्चिके तथा ॥
श्वदंष्ट्रां वृषकं रास्नां पिबेच्छूले पयः शृतम् ।
गुडूची मालती व्याघ्री श्रेयसी सुरदारुभिः ॥
बला चित्रक यष्ट्याह्व यूथिकाभिश्च कार्षिकैः ।
तैलप्रस्थं गवां मूत्रे क्षीरेण द्विगुणं पचेत् ॥
वातार्त्तायै पिचुं तस्माद्योनौ च प्रणयेत् सदा ।
हिंस्रा कल्कन्तु वातार्त्ता कोष्णमभ्यज्य धारयेत् ॥
पञ्चवल्कस्य पित्तार्त्ता श्यामादीनां कफातुरा ।
पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रिया ॥
शीताः पित्तहराः कार्याः स्नेहनानि घृतानि च ।
शतावरी मूलतुलाः चतस्रः संप्रपीडयेत् ॥
रसेन क्षीरतुल्येन पचेत्तेन घृताढकम् ।
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ॥
पियालैश्चाक्षकैः पिष्टैर्द्वियष्टी मधुकैः पचेत् ।
सिद्धे शीते च मधुनः पिप्पल्याश्च पलाष्टकम् ॥
सिता दशपलोन्मिश्रात्लिह्यात्पाणितलं ततः ।
योन्यसृक् शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत् ॥
क्षतं क्षयं रक्तपित्तं कासं श्वासं हलीमकम् ।
कामलं वातरक्तञ्च वीसर्पं हृच्छिरोग्रहम् ॥
उन्मादायामसंन्यासं वातपित्तात्मकं जयेत् ।

एवमेव क्षीरसर्पिर्जीवनीयोपसाधितम्॥
गर्भदं पित्तलानां च योनीनां स्याद्भिषज्यितम्।
योन्याः श्लेष्मप्रदुष्टाया वर्त्तिः संशोधनी हिता॥
वाराहे बहुशः पित्ते भावितैर्नक्तकैः कृता।
भावितं पयसार्कस्य माषचूर्णं ससैन्धवम्॥
वर्त्तिः कृता मुहुर्धार्या ततः सेच्या सुखाम्बुना।
पिप्पल्या मरिचैर्माषैः शताह्वा कुष्ठसैन्धवैः॥
वर्त्तिस्तुल्या प्रदेशिन्या धार्या योनि विशोधनी।
उदुम्बरशलाटूनां द्रोणसो द्रोणसंयुतम्॥
सपञ्च वल्ककुलकनिम्बमातलि पल्लवम्।
निर्यास्याप्यं जले तस्मिंस्तैलप्रस्थं विपाचयेत्॥
लाक्षा धवपलाशत्वङ्निर्यासैः शाल्मलेन च।
पिष्टैः सिद्धश्च तत्तैलं पिचु योनौ निधापयेत्॥
सशर्करैः कषायैश्च शीतैः कुर्वीत सेचनम्।
पिच्छिला विवृता कालन्दुष्टयोन्यथ दारुणम्॥
सप्ताहात् शुध्यति क्षिप्रं अपत्यञ्चापि विन्दति।
उदुम्बरस्य दुग्धेन षट्कृत्वो भाविताः स्तिलान्॥
तैलं क्वाथे च तस्यैव सिद्धिं धार्यश्च पूर्ववत्।
धातक्यामलकी पत्र स्रोतोज मधुकोत्पलैः॥
जम्ब्वाम्रमध्यकासीसलोध्रकट्फलतिन्दुकैः।
सौराष्ट्रिकदाडिमत्वगुदुम्बरशलाटुभिः॥
अक्षमात्रैरजा मूत्रे क्षीरे च द्विगुणे पचेत्।
तैलप्रस्थं पिचुं तस्माद्योनौ च प्रणयेत्ततः॥
कटी पृष्ठत्रिकाभ्यङ्गं स्नेहो वस्तिं च दापयेत्।

पिच्छिलस्राविणी योनिर्विप्लुतोपप्लुता तथा ॥
उत्ताना चोन्नता शूना सिद्धैरत् सस्फोटशूलिनी ।
करीरधवनिम्बार्क वेणु कोशाम्रजाम्बवैः ॥
जिङ्गिणी धूकपुन्नासक्वाथमार्द्दीकशीधुभिः ।
सशुक्तैर्धावनं मिश्रैर्योन्यास्राव विनाशनम् ॥
कुर्यात्सतक्रगोमूत्र शुक्तैर्वा त्रिफला रसैः ।
पिप्पल्ययो रजः पथ्या प्रयोगा मधुरा हिताः ॥
श्लेष्मलानां कटुप्रायाः समूत्रा वस्तयो हिताः ।
पित्ते समधुरक्षीरा वाते तैलाम्लसंयुताः ॥
सन्निपातसमुत्थायाः कर्म्म साधारणं मतम् ।
रक्तयोन्यावसृग्वर्णैरनुबन्धं समीक्ष्य च ॥
ततः कुर्य्याद्यथा दोषं रक्तस्थापनमौषधम् ।
तिलचूर्णं दधि घृतं फाणितं शौकरी वसा ॥
क्षौद्रेण संयुतं पेयं वाता सृग्दरनाशनम् ।
क्षौद्रमार्द्रकरसेन समांशं यः पिवेदपहता नदीप्तिः ॥
अन्धसां प्रचुरमांसा घृतानां पाचको भवति तस्य हुताशः ।
वराहस्य रसो मेध्यः सकौलत्थोऽनिलाधिके ॥
शर्करा तैल यष्ट्याह्व नागरैर्वा युतं दधि ।
पयस्योतपलशालूकविसकालीयकाम्बुजान् ॥
स पयः शर्करां क्षौद्रं पैत्तिकेऽसृग्दरे पिवेत् ।
पाठा जम्ब्वाम्रयोर्मध्यं शिलोच्छेदं रसाञ्जनम् ॥
अम्बष्ठा शाल्मलं श्लेषं समङ्गां वत्सकत्वचम् ।
वाह्लीकातिविषे विल्वं मुस्तं लोध्रं सगैरिकम् ॥
कट्फलं मरिचं शुण्ठीं माचीकं रक्तचन्दनम् ।

कट्वङ्गवत्सकानन्तां धातकीं मधुकार्जुनम् ।
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥
तानि क्षौद्रेण संयोज्य पिबेत्सा तण्डुलाम्बुना ।
अर्शःसु चातिसारेषु रक्तं यश्चोपवेश्यति ॥
दोषा जन्तुकृता ये च बालानां तांश्च नाशयेत् ।
योनिदोषं रजो दुष्टं श्वेतं नीलं सपीतकम् ॥
स्त्रीणां श्यावारुणं यच्च प्रसह्य विनिवर्तयेत् ।
चूर्णं पुष्यानुगं नाम हितमात्रेय पूजितम् ॥
तण्डुलीयकमूलञ्च सक्षौद्रं तण्डुलाम्बुना ।
सरसाञ्जनलाक्षं वा छागेन पयसा पिबेत् ॥
पत्र कल्कौ घृते भृष्टौ राजादनकपित्थयोः ।
पित्तानिलहरौ पैत्ते सर्वं चैवास्र पित्तजित् ॥
मधुकं त्रिफलां लोध्रं मुस्तं सौराष्ट्रिकां मधु ।
मद्यैर्निम्बगुडूच्यौ तु कफजेऽसृग्दरे पिबेत् ॥
विरेचनं महातिक्तं पित्तजेऽसृग्दरे पिबेत् ।
शुभं गर्भपरिस्रावे चोक्तं सर्वेषु कारयेत् ॥
काश्मर्य्य कुटजक्वाथं सिद्धमुत्तरवस्तिना ।
रक्तयोन्य रजस्कानां पुत्रघ्नाश्च हिते घृतम् ॥
मृगाजाविवराहासृग्दध्यम्लफलसर्पिषा ।
अरजस्का पिबेत् सिद्धं जीवनीयैः पयोऽपि वा ॥
कर्णिन्या रचना शुष्कयोनि प्राक्चरणासु तु ।
कफवाते च योक्तव्यं तैलमुत्तरवस्तिना ॥
गोपित्तमत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम् ।
मधुना किण्वचूर्णं वा दद्यादचरणापहम् ॥

स्रोतसां शोधनं कण्डूक्लेदशोफहरञ्च तत् ।
वातघ्नैः शतपाकैस्तु तैलैः प्रागभिचारणे ॥
आस्थाप्ये चानुवास्ये च स्वेदे चानिलसूदनैः ।
स्नेहद्रव्यैस्तथाहारै रुपनाहैश्च युक्तितः ॥
शताह्वा यवगोधूमकिण्वकुष्ठप्रियङ्गुभिः ।
बलाखुपर्णिकाश्याह्वैः संयावो धारणः स्मृतः ॥
शारिन्याः प्रसृतयोन्याश्च कर्तव्यः स्वेदनोऽपि वा ।
क्रमः कार्यस्ततः स्नेहः पिचुभिस्तर्पणं भवेत् ॥
मल्लकी जिङ्गिनी जम्बूधवत्वक्पञ्चवल्कलैः ।
कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः ॥
कर्णिका वर्तिका कुष्ठपिप्पल्यार्काग्रसैन्धवैः ।
वस्ति मूत्रकृता धार्या सर्वं च श्लेष्मनुद्धितम् ॥
त्रैवृतं स्नेहनं स्वेदो ग्राम्या नूपौदका रसाः ।
दशमूलपयो वस्तिश्चोदा हृत्ता निलार्तिषु ॥
तैवृतेनानुवास्या च वस्तिश्चोत्तर संज्ञितः ।
तदेव च महायोन्यां स्नस्तायाश्च विधीयते ॥
वसा ऋक्षवराहाणां घृतञ्च मधुरैः शृतम् ।
पूरयित्वा महायोनिं वध्नीयात् क्षौमनक्तकैः ॥
प्रस्रस्तां सर्पिषाभ्यज्य क्षीरस्विन्नां प्रवेश्य च ।
वध्नीयाद्वेशवारस्य पिण्डेनामूत्र कालतः ॥
यच्च वातविकाराणां कर्मोक्तं तच्च कारयेत् ।
सर्वव्यापत्स्वनन्तो हि वातायोनिः प्रदुष्यति ।
शमयित्वा तमन्यस्य कुर्य्याद्दोषस्य भेषजम् ॥
मूलकल्कं तु रोहीतात् पाण्डुरे प्रदरे पिवेत्।

जलेनामलकाद्वीजकल्कं वाससिता मधु ॥
मधुनामलकाच्चूर्णं रसं वा लेहयेत्स्रुते ।
न्यग्रोधत्वक् कषायेण लोध्रकल्केन चाचयेत् ॥
आस्रावे क्षौमपट्टं वा भावितं तेऽनुधारयेत् ।
प्लक्षत्वक् चूर्णपिण्डं वा धारयेन्मधुनोक्षितम् ॥
योन्या स्निग्धाक्तया लोध्र प्रियङ्गु मधुकस्य च ।
धार्या मधुयुता वर्तिः कषायाणाञ्च सर्वशः ॥
स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा घृताप्लुतैः ।
सरला गुग्गुलु यवैः सतैलकटुमत्स्यकैः ॥
कासीस त्रिफलाकाङ्क्षी साम्रजम्बुस्थिधातकी ।
पैच्छिल्ये क्षौद्रसंयुक्तः चूर्णो वैशद्यकारकः ॥
पलाशसर्ज जम्बू त्वक्शमङ्गामोच धातकीः ।
अपिच्छिलपरिक्लिन्नास्तम्भनः कल्क इष्यते ॥
स्तब्धानां कर्कशानाञ्च पिण्डो मार्दवकारकः ।
धारयेद्वेशवारं वा पायसं कृशरं तथा ॥
दुर्गन्धानां कषायः स्यात्तैलं वा कल्क एव वा ।
चूर्णं वा सर्वगन्धानां पूतिगन्धापकर्षणम् ॥
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ।
अदुष्टे प्राकृते वीजे जीवोपक्रमणे सति ।
पञ्चकर्म्म विशुद्धस्य पुरुषस्यापि चेन्द्रियम् ॥
परीक्ष्य वर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ।
सलिङ्गा व्यापदो योनेः सनिदानचिकित्सकाः ॥
उक्ता विस्तरशः सम्यक् मुनिना तत्त्वदर्शिना ।
पुनरेवाग्निवेशस्तु पप्रच्छ भिषजां वरम् ॥

आत्रेयमुपसङ्गम्य शुक्रदोषास्त्वयानघ ! ।
रोगाध्याये समुद्दिष्टा ह्यष्टौ पुंसामशेषतः ॥
तेषां हेतुं भिषक् श्रेष्ठ दुष्टादुष्टस्य चाकृतिम् ।
चिकित्सितञ्च कात्स्न्येन क्लैव्यं यच्च चतुर्विधम् ॥
उपद्रवेषु योनीनां प्रदरो यश्च कीर्तितः ।
तेषां निदानं लिङ्गञ्च चिकित्सां चैव तत्त्वतः ॥
समासव्यासयोगेन प्रब्रूहि भिषजां वर ! ।
तस्मै शुश्रूषमाणाय प्रोवाच मुनिपुङ्गवः ॥
वीजं यस्माद्व्यवायाच्च हर्ष योनि समन्वितम् ।
शुक्रं पौरुषमित्युक्तं तस्माद्वक्ष्यामि तच्छृणु ॥
यथाहि वीजं कालाम्बु कृमि कीटाग्नि दूषितम् ।
न विरोहति सन्दुष्टं तथा शुक्रं शरीरिणाम् ॥
अति व्यवायाद्व्यायामाद्शात्म्यानाञ्च सेवनात् ।
अकाले चाप्य योनौ वा मैथुनं नच गच्छतः ॥
रूक्षतिक्तकषायाति लवणाम्लोष्णसेवनात् ।
मधुरस्निग्धगुर्वन्नसेवनाज्जरया तथा ॥
चिन्ता शोकादविस्रम्भाच्छस्त्र क्षाराग्निभिस्तथा ।
भयात् क्रोधादभीचारात् व्याधिभिः कर्षितस्य च ॥
वेगाघातात् क्षयाच्चापि धातूनां संप्रदूषणात् ।
दोषाः पृथक् समस्ता वा प्राप्य रेतो वहाः शिराः ॥
शुक्रं संदूषयन्त्याशु तद्वक्ष्यामि विभागशः ।
फेनिलं तनु शुक्रञ्च विवर्णं पूति पिच्छिलम् ॥
अन्यधातूपसंसृष्टं अवसादि तथाष्टमम् ।
वातेन फेनिलं शुष्कं कृच्छ्रेण पिच्छिलं तनु ॥

भवत्युपहतं शुक्रं नतद्गर्भाय कल्पते ।
मनोलमथवा पीतमत्युष्णं पूतिगन्धि च ॥
दहल्लिङ्गं विनिर्याति शुक्रं पित्तेन दूषितम् ।
श्लेष्मणा वद्धमार्गन्तु भवत्यत्यर्थं पिच्छिलम् ॥
स्त्रीणामत्यर्थं गमनादभीघातात् क्षयादपि ।
शुक्रं प्रवर्तते जन्तोः प्रायेण रुधिरान्वयम् ॥
वेगसन्धारणात् शुक्रं वायुना विहितं पथि ।
कृच्छ्रेण याति ग्रथितमवसादि तथाष्टमम् ॥
इति दोषाः समाख्याताः शुक्रस्याष्टौ सलक्षणाः ।
स्निग्धं घनं पिच्छिलञ्च मधुरञ्च विदाहि च ॥
रेतः शुद्धं विजानीयात् स्निग्धं स्फटिकसन्निभम् ।
वाजीकरणयोगोक्तैरुपयोगैः सुखैर्हितैः ॥
रक्तपित्तहरैर्योगैर्योनि व्यापादिकैस्तथा ।
दुष्टं यथा भवेद्रेतः ततस्तत्समुपाचरेत् ॥
घृतञ्च जीवनीयं यच्चग्रावनः प्राश एव च ।
गिरिजस्य प्रयोगश्च रेतो दोषानपोहति ॥
वातान्विते हिताः शुक्रे निरूहाः सानुवासनाः ।
ब्राह्ममामलकीयञ्च पैत्ते शस्तं रसायनम् ॥
मागध्य मृतलोहानां त्रिफलाया रसायनैः ।
कफोत्थितं शुक्रदोषं हन्याद्भल्लातकस्य च ।
अन्यधातूपसंसृष्टं शुक्रं वीक्ष्य भिषक्तमैः ।
यथा दोषं प्रयोज्यं स्याद्दोषधातुभिर्षज्यितम् ॥
सर्पिः पयोरसाः शालिर्यवगोधूम षष्टिकम् ।
प्रशस्तं शुक्रदोषेषु वस्तिकर्म विशेषतः ॥

रेतो दोषोद्भवं क्लैब्यं यस्मात् शुक्रैव सिद्ध्यति ।
अतो वक्ष्यामि ते सम्यगग्निवेश ! यथा तथम् ॥
बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् ।
वैक्लव्यसम्भवस्तस्य शृणु सामान्य लक्षणम् ॥
सङ्कल्पप्रणवो नित्यं प्रियां वश्यामपि स्त्रियम् ।
न याति लिङ्गशैथिल्यात्कदाचिद्‌याति वा पुमान् ॥
श्वासार्तः स्विन्नगात्रांसो मोघसंकल्प चेष्टितः ।
म्लानशिश्नश्च निर्बीजः स्यादेतत् क्लैव्यलक्षणम् ॥
सामान्यलक्षणं ह्येतद्विस्तरेण प्रवक्ष्यते ।
शीतरूक्षाल्प संक्लिष्टविरुद्धा जीर्णभोजनात् ॥
शोकचिन्ता भयत्रासात् स्त्रीणां चात्यर्थ सेवनात् ।
अभीचारादविस्रम्भाद्रसादीनां च संक्षयात् ॥
वातादीनामोजसश्च तथैवानशनात् श्रमात् ।
नारीणामरसज्ञत्वात् पञ्चकर्मापचारतः ।
बीजोपघातो भवति पाण्डुवर्णः सुदुर्बलः ॥
अल्पप्रजोपहर्षश्च प्रमदासु भवेन्नरः ।
हृत्पाण्डुरोगतमककामलाश्रम पीड़ितः ।
बीजोपघातजं क्लैब्यं ध्वजभग्नकृतं शृणु ॥
अत्यम्ललवणक्षार विरुद्धा जीर्णभोजनात् ।
अत्यम्बुपानाद्विषमपिष्टान्न गुरुभोजनात् ॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् ।
कन्यानाश्चैव गमनादयोनिगमनादपि ॥
दीर्घरोम्णीं चिरोत्सृष्टां तथैव च रजस्वलाम् ।
दुर्गन्धां दुष्टयोनिं च तथेव च परिस्रुताम् ॥

नरस्य प्रमदां मोहादति हर्षात् प्रगच्छतः।
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः॥
अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात्।
काष्ठप्रहारनिष्पेष शूकानां चाति सेवनात्॥
रेतसश्च प्रतीघाताद्ध्वजभङ्गः प्रवर्त्तते।
श्वयथुर्वेदना मेढ़े रागश्चैवोपलक्ष्यते॥
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाके भवत्यपि।
मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रं भवन्त्यपि॥
पुलाकोदकसङ्काशः स्रावः श्यावारुण प्रभः।
वलयी कुरुते चापि कठिनश्च परिग्रहम्।
ज्वरस्तृष्णा भ्रमो मूर्च्छा च्छर्दिश्चास्योपजायते॥
रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम्।
अग्निनेव च दग्धस्य तीव्रो दाहः सवेदनः॥
वस्तौ वृषणयोर्वापि सीवन्यां वंक्षणेषु च।
कदाचित्पिच्छिलो वापि पाण्डुस्रावश्च जायते॥
श्वयथुश्च भवेन्मन्दस्तिमितोऽल्पपरिस्रवः।
चिरात् सपाकं व्रजति शीघ्रं वाथप्रपद्यते॥
जायन्ते क्रिमयश्चापि क्लिद्यते पूतिगन्धि च।
प्रशीर्यते मणिश्चास्य मेढ्रं मुष्का वथापि च॥
ध्वजभङ्ग कृतं क्लैव्यं इत्येतत् समुदाहृतम्।
एवं पञ्चविधं केचित् ध्वजभङ्गं वदन्त्यपि॥
क्लैव्यं जरासम्भवं हि प्रवक्ष्याम्यथ तत् शृणु।
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते॥
अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम्।

रसादीनां संक्षयाच्च तथैवाहृद्यसेवनात् ॥
बलवर्णेन्द्रियाणां च क्रमेणैव परिक्षयात् ।
परिक्षयादायुषश्चाप्यनाहारात् श्रमात् क्रमात् ॥
जरासम्भवजं क्लैव्यं इत्येतैर्हेतुभिर्नृणाम् ।
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्बलः ॥
विवर्णो विह्वलो दीनः क्षिप्रं व्याधि मथाश्नुते ।
एतज्जरासम्भवं हि चतुर्थं क्षयजं शृणु ॥
अति प्रचिन्तनाच्चैव शोकात् क्रोधाद्भयादपि ।
ईर्ष्योत्कण्ठात उद्वेगात् समा विशति यो नरः ॥
कृशो वा सेवते रूक्षमन्नपानमथौषधम् ।
दुर्बलप्रकृतिश्चैव निराहारो भवेद्यदि ।
अथाल्पभोजनाच्चापि हृदये यो व्यवस्थितः ॥
रसः प्रधानधातुर्हि क्षीयेताशु नरस्ततः ।
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः ॥
शुक्रावसानास्तेभ्योऽपि हि शुक्रं धाम परं मतम् ।
चेतसो वाति हर्षेण व्यवायं सेवते तु यः ॥
शुक्रं तु क्षीयते तस्य ततः प्राप्नोति संक्षयं ।
घोरां वाव्याधिमवाप्नोति मरणं वा स मृच्छति ॥
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता ॥
एतन्निदानलिङ्गाभ्यां उक्तं क्लैव्यं चतुर्विधम् ।
केचित् क्लैव्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे ॥
वदन्ति शेफसश्छेदाद्वृषणोत्पाटनेन वा ।
माता पित्रोर्वीज दोषादशुभैश्च कृतात्मनः ॥
गर्भस्थस्य यदा दोषाः प्राप्य रेतो वहाः शिराः ।

शोषयन्त्याशु तस्माच्चाद्रे तस्याप्युपहन्यते।
तत्र सम्पूर्णसर्व्वाङ्गः स भवत्यपुमान् पुमान्॥
एते त्वसाध्या व्याख्याताः सन्निपात समुच्छ्रयात्।
चिकित्सितमतस्तूर्द्ध समासव्यासतः शृणु॥
शुक्रदोषेषु निर्द्दिष्टं भेषजं यत् मयानघ!।
क्लैव्योपशान्तये कुर्य्यात् क्षीणक्षतहितञ्च यत्॥
वस्तयः क्षीरसर्पींषि वृष्ययोगाश्च ये मताः।
रसायनप्रयोगाश्च सर्व्वानेतान् प्रयोजयेत्।
समीक्ष्य देहदोषाग्नि बलभेषज कालवित्॥
व्यपैति हेतुजं क्लैव्यं यत्याचे तु विपर्य्ययात्।
दैवव्यपाश्रयैश्चैव भेषजैश्चाभिचारजम्॥
समासेनैतदुद्दिष्टं भेषजं क्लैव्यशान्तये।
विस्तरेण प्रवक्ष्यामि क्लैव्यानां भेषजं पुनः॥
सुस्विन्न स्निग्धगात्रस्य स्नेहयुक्तं विरेचनम्।
प्रदद्यान्मतिमान् वैद्यस्ततस्तमनुवासयेत्।
पलाशैरण्डमुस्ताद्यैः पश्चादास्थापयेत्ततः॥
वाजीकरणयोगाश्च पूर्व्वं ये समुदाहृताः।
भिषजा ते प्रयोज्याः स्युः क्लैव्ये वीजोपघातजे॥
ध्वजभङ्गकृतं क्लैव्यं ज्ञात्वा तस्याचरेत् क्रियाम्।
प्रदेहान् परिषेकांश्च कुर्य्याद्वा रक्तमोक्षणम्॥
स्नेहपानञ्च कुर्व्वीत सस्नेहं वा विशोधनम्।
अन्वासनं ततः कुर्य्यादथवा स्थापनं पुनः॥
व्रणवच्च क्रियाः सर्व्वास्तत्र कुर्य्याद्विचक्षणः।
जरासम्भवजे क्लैव्ये क्षयजे चैव कारयेत्।

स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम् ॥
क्षीरसर्पिर्ह्युग्ययोगा वस्तयश्चैव यापनाः ।
रसायनप्रयोगाश्च तयोर्भेषजमुच्यते ॥
विस्तरेणैतदुद्दिष्टं क्लैव्यानां भेषजं मया ।
यः पूर्वमुक्तः प्रदरः शृणु हेत्वादिभिश्च तम् ॥
यात्यर्थं सेवते नारी लवणाम्ल गुरूणि च ।
कटून्यथ विदाहीनि स्निग्धानि पिशितानि च ॥
ग्राम्यौदकानि सेव्यानि कृशरं पायसं दधि ।
शुक्तमस्तु सुरादीनि भजन्त्याः कुपितोऽनिलः ॥
रक्तं प्रमाणमुत्क्रम्य गर्भाशयगताः शिराः ।
रजो वहाः समाश्रित्य रक्तमादाय तद्रजः ॥
यस्माद्विवर्द्धयत्याशु रसभावाद्वि मारुतः ।
तस्मादसृग्दरं प्राहुरेतत्तन्त्र विशारदाः ॥
रजः प्रदीयते यस्मात् प्रदरस्तेन स स्मृतः ।
सामान्यतः समुद्दिष्टं कारणं लिङ्गमेव च ॥
चतुर्विधं व्यासतस्तु वाताद्यैः सन्निपाततः ।
अतः परं प्रवक्ष्यामि हेत्वाकृतिभिषग्जितैः ॥
रूक्षादिभिर्मारुतस्तु रक्तमादाय पूर्ववत् ।
कुपितः प्रदरं कुर्याल्लिङ्गं तस्यावधारयेत् ॥
फेनिलं तनुरूक्षञ्च श्यावं चारुणमेव च ।
किंशुकोदरसङ्काशं सरुजं वाथ नीरुजम् ॥
कटीवंक्षणहृत्पार्श्व पृष्ठश्रोणिषु मारुतः ।
करोति वेदनां तीव्रां एतद्वातात्मकं विदुः ॥
अम्लोष्ण लवणक्षारैः पित्तं प्रकुपितं यदा ।

पूर्ववत् प्रदरं कुर्य्यात्तल्लक्षणं तत् कृतं शृणु ॥
मनोज्ञमथवा पीतमत्युष्णमसितं तथा।
नितान्तरक्तं स्रवति मुहुर्मुहुरथार्तिमत् ॥
विदाह रागतृष्णामोहज्वरभ्रमसमायुतम्।
असृग्दरं पैत्तिकं तु श्लैष्मिकं तु प्रवक्ष्यते ॥
गुर्वादिभिर्हेतुभिश्च पूर्ववत् कुपितः कफः।
प्रदरं कुरुते तस्य लक्षणं तत्त्वतः शृणु ॥
पिच्छिलं पाण्डुवर्णं च गुरुस्निग्धं च शीतलम्।
स्रवत्यसृक्फेनिलकं तथा मर्मरुजाकरम् ॥
छर्द्यरोचक हृल्लास श्वासकास समन्वितम्।
वक्ष्यते क्षीरदोषाणां सामान्यमिह कारणम् ॥
यत्तदेव त्रिदोषस्य कारणं प्रदरस्य तु।
त्रिलिङ्गसंयुतं विद्यात् नैकावस्थमसृग्दरम् ॥
नारीत्वति परिक्लिष्टा यदा प्रक्षीणलोहिता।
सर्वहेतु समाचारादति वृद्धस्तथानिलः ॥
रक्तमार्गेण सृजति प्रत्यनीक गुणं कफम्।
दुर्गन्धं पिच्छिलं पीतं विदग्धं पित्ततेजसा ॥
वसां मेदश्च यावच्च समुपादाय वेगवान्।
सृजत्य पत्यमार्गेण सर्पिर्मज्जावसोपमम् ॥
शश्वत् स्रवत्यथा स्रावं तृष्णादाह ज्वरान्विताम्।
क्षीणरक्तां दुर्बलाञ्च तामसाध्यां विवर्जयेत्।
मासान्निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च ॥
नैवाति बहुनात्यल्पमार्तवं शुद्धमादिशेत्।
गुञ्जाफलसमानञ्च पद्मालक्तकसन्निभम् ॥

इन्द्रगोपकसङ्काशमार्तवं यह्नमिव तत् ।
योनीनां वातलाद्यानां यदुक्तं इह भेषजम् ॥
चतुर्णां प्रदराणाञ्च तत्सर्वं कारयेद्भिषक् ।
रक्तातिसारिणाञ्चैव तथा लोहितपित्तिनाम् ॥
रक्तार्शसाञ्च यत्प्रोक्तं भेषजं तच्च कारयेत् ।
धात्री स्तनस्तन्य सम्पदुक्ता विस्तरशः पुरा ॥
स्तन्य सञ्जननञ्चैव स्तन्यस्य च विशोधनम् ।
वातादि दुष्टे लिङ्गञ्च क्षीणस्य च चिकित्सितम् ॥
तत्सर्वमुक्तं ये त्वष्टौ क्षीरदोषाः प्रकीर्तिताः ।
वातादिष्वेव तान् विद्यात् शास्त्र चक्षुर्भिषक्तमः ॥
त्रिविधास्तु यतः शिष्यास्ततो वक्ष्यामि विस्तरम् ।
अजीर्णा सात्म्यविषमविरुद्धात्यर्थ भोजनात् ॥
लवणाम्लकटुक्षारप्रक्लिन्नानाञ्च सेवनात् ।
मनः शरीरसन्तापादस्वप्नान्निशि चिन्तनात् ॥
प्राप्तवेगप्रतीघातादप्राप्तोदीरणेन च ।
परमान्नं गुडकृतं कृसरं दधि मर्दकम् ॥
अभिष्यन्दीनि मांसानि ग्राम्यानूपौदकानि च ।
भुक्त्वा भुक्त्वा दिवा स्वप्नान्मद्यस्याति निषेवणात् ॥
अनायासादभीघातात् क्रोधाच्चातङ्ककर्शनैः ।
दोषाः क्षीराशयाः प्राप्य शिराः स्तन्यं प्रदूष्य तत् ॥
कुर्युरष्टविधं भूयो दोषास्तत्तन्निबोधत ।
वैरस्यं फेनसङ्घाते रौक्ष्यं चेत्यनिलात्मकम् ॥
पित्ताद्वैवर्ण्यं दौर्गन्ध्ये स्नेहपैच्छिल्य गौरवम् ।
कफाद्भवति रूक्षाद्यैरनिलः स्वैः प्रकोपणैः ॥

क्रुद्धः क्षीराशयं प्राप्य रसं स्तन्यस्य दूषयेत्।
विरसं वातसंसृष्टं कृशो भवति तत्पिबन्॥
नचास्य स्वदते क्षीरं कृच्छ्रेण च विवर्द्धते।
तथैव वायुः कुपितः स्तन्यमन्तर्विलोडयन्॥
करोति फेनसङ्घातं तत्तु कृच्छ्रात् प्रवर्तते।
तेन क्षामस्वरो बालो बद्धविण्मूत्र मारुतः॥
वातिकं शीर्षरोगं वा पीनसं वाधिगच्छति।
पूर्ववत् कुपितः स्तन्ये स्नेहं शोषयतेऽनिलः॥
रूक्षं तत्पिबतो रौक्ष्याद्बलह्रासश्च जायते।
पित्तमुष्णादिभिः क्रुद्धः स्तन्याशयमभिद्रुतम्॥
करोति स्तन्य वैवर्ण्यं नीलपीता सितादिकम्।
विवर्णगात्रः स्विन्नः स्यात्तृष्णालुर्भिन्नविट् शिशुः॥
नित्यमुष्णशरीरश्च नाभिनन्दति तत्स्वयम्।
पूर्ववत् कुपिते पित्ते दौर्गन्ध्यं क्षीरमर्च्छति॥
पाण्ड्वामयस्तत्पिबतः कामला च भवेच्छिशोः।
स्निग्धगुर्वादिभिः श्लेष्मा क्षीराशयगतः स्त्रियाः॥
स्नेहान्वितत्वात्तत् क्षीरं अतिस्निग्धं करोति तु।
छर्दनः क्रथनस्तेन लालालुर्जायते शिशुः॥
नित्योपदिग्धैः स्रोतोभिर्निद्रालस्य समन्वितः।
श्वासकासपरीतस्तु प्रसेकतमकान्वितः॥
अभिभूय कफः स्तन्यं पिच्छिलं कुरुते यदा।
लालालुः शोनवक्त्राक्षिर्जडः स्यात्तु पिबन् शिशुः॥
कफः क्षीराशयगतो गुरुत्वात् क्षीरगौरवम्।
अति स्नेहान्वितं पीत्वा बालो हृद्रोगमर्च्छति॥

अन्यांश्च विविधान् रोगान् कुर्य्यात् क्षीरसमाश्रितान्
क्षीरे वातादिभिर्दुष्टे सम्भवन्ति तदात्मकाः ॥
तदादौ स्तन्य शुद्ध्यर्थं धात्रीं स्नेहोपपादिताम् ।
प्रातः पेयां घृताभ्यक्तां वमनेनोपपादयेत् ॥
वचा प्रियङ्गु यष्ट्याह्व फलवत् स कसर्षपैः ।
कल्कैर्निम्बपटोलानां क्वाथैर्वा लवणैर्वमेत् ॥
सम्यग्वान्तां यथान्याय्यं कृतसंसर्जनां पुनः ।
ततो दोषावशेषघ्नैरन्नपानैरुपाचरेत् ॥
शालयः षष्टिका वा स्युः श्यामाका भोजने हिताः ।
प्रियङ्गवः कोरदूषा यवा वेणु यवास्तथा ॥
वंशवेत्रकडायाश्च सक्षेद्रा यूषसंस्कृताः ।
मुद्गान् मसूरान् यूषार्थे कुलुत्थांश्च प्रकल्पयेत् ॥
निम्बवेत्राग्र कुलकवार्ता कामलकैः शृतान् ।
सव्योषसैन्धवान्यूषान् कारयेत् स्तन्यशोधनान् ॥
शशान् कपिञ्जलानेणान् संस्कृतांश्च प्रकल्पयेत् ।
शार्ङ्गेष्टा सप्तपर्णत्वगश्वगन्धा शृतं जलम् ॥
पाययेताथवा स्तन्य शुद्धये कटुरोहिणीम् ।
अमृता सप्तपर्णत्वक्क्वाथं चैव सनागरम् ॥
किराततिक्तकक्वाथं श्लोकपादेरितान् पिबेत् ।
त्रीनेतान् स्तन्य शुद्ध्यर्थमिति सामान्य भेषजम् ॥
कीर्तितं स्तन्य दोषाणां पृथगन्यं निबोधत ।
प्रपिबेद्विरसक्षीरा द्राक्षा मधुकशारिवाः ॥
श्लक्ष्ण पिष्टां पयस्याञ्च समालोड्य सुखाम्बुना ।
पञ्चकोलकुलत्थैश्च पिष्टैरालेपयेत् स्तनौ ॥

शुष्कौ प्रक्षाल्य तौ दुग्ध्वा तथा स्तन्यं विशुध्यति।
फेनसङ्घातवत् क्षीरं यस्यास्तां पाययेत च॥
पाठा नागरशार्ङ्गेष्टा मूर्वाः पिष्टाः सुखाम्बुना।
अञ्जनं तगरं दारु बिल्वमूलं प्रियङ्गवः॥
स्तनयोः पूर्ववत्कार्यं लेपनं क्षीरशोधनम्।
षड्विरेकाश्रितीयोक्तैरौषधैः स्तन्यशोधनैः॥
रूक्षक्षीरा पिबेत् क्षीरं तैर्वा सिद्धं घृतं पिबेत्।
पूर्वं वज्जीवकाद्यश्च पञ्चमूलं प्रलेपनम्॥
स्तनयोः संविधातव्यं सुखोष्णं स्तन्यशोधनम्।
यष्टीमधुकमृद्वीका पयस्या सिन्धुवारिका॥
शीताम्बुना पिबेत्कल्कं क्षीरं वैवर्ण्ये नाशनम्।
द्राक्षा मधुककल्केन स्तनौ चास्याः प्रलेपयेत्॥
स्निग्धक्षीरा दारु मुस्तपाठाः पिष्ट्वा सुखाम्बुना।
पीत्वा ससैन्धवाः क्षिप्रं क्षीरशुद्धिमवाप्नुयात्॥
किराततिक्तकं वापि शामृतं क्वथितं पिबेत्।
स्तनौ चालेपयेत्पिष्टैर्यवगोधूमसर्षपैः॥
प्रपिबेत् पिच्छिलक्षीरा शार्ङ्गेष्टामभयां वचाम्।
मुस्तनागरपाठाश्च पीताः स्तन्य विशोधनम्॥
तक्रारिष्टानपि पिबेदर्शसां यानि दर्शिताः।
विदारी बिल्वमधुकैः स्तनौ चास्याः प्रलेपयेत्॥
अष्टावेते क्षीरदोषा हेतु लक्षणभेषजैः।
निर्दिष्टाः क्षीरदोषोत्थास्तथोक्ताः केचिदामयाः॥
तएव सर्वे बालानां मात्रा स्वल्पतरा मता।
निवृत्तिर्वमनादीनां मृदुतां परतन्त्रताम्॥

वाक्चेष्टयोश्च सामर्थ्यं वीक्ष्य बालेषु शास्त्रवित् ।
भेषजं चाल्पमात्रन्तु यथा व्याधि प्रयोजयेत् ॥
मधुराणि कषायाणि क्षीरवन्ति मृदूनि च ।
अत्यर्थं स्निग्धरूक्षोष्णमम्लं कटु विपाकि च ॥
गुरु चौषधपानान्नमेतद्बालेषु भेषजम् ।
निर्दिष्टं शास्त्रबुद्ध्या तत्प्रविभज्य प्रयोजयेत् ॥
इति सर्वविकाराणामुक्तमेतच्चिकित्सितम् ।
स्थानमेतद्धि तन्त्रस्य रहस्यं सारमुत्तमम् ॥
अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च ।
नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते ॥
तानेतान् कापिलबलिः शेषान् दृढबलोऽकरोत् ।
तन्त्रस्यास्य महार्थस्य पूरणार्थं यथातथम् ।
योगा येऽप्यत्र नोद्दिष्टा बहुत्वात् नामरूपतः ॥
तेषामप्येतदेव स्याद्दोषादीन्वीक्ष्य भेषजम् ।
दोषदूष्यनिदानानां विपरीतं हितं ध्रुवम् ॥
उक्तानुक्तान् गदान् सर्वान् सम्यग्युक्तं नियच्छति ।
देशकालप्रमाणानां सात्म्यासात्म्यस्य चैव हि ॥
सम्यग्योगोऽन्यथान्येषां पथ्यमप्यन्यथा भवेत् ।
आस्यादामाशयस्थान् हि रोगान्नस्तः शिरोगतान् ॥
अधस्ताद्गुदतोदन्तु हन्यादाशु तरमौषधम् ।
शरीरावयवोत्थेषु विसर्पं पिडकादिषु ॥
यथादेशं प्रदेहादिशमनं स्याद्विशेषतः ।
दिनान्तरौषध व्याधि जीर्णलिङ्गं त्वपेक्षणम् ।
कालं विद्याद्दिनावेक्षः पूर्वाह्णे वमनं यथा ।

रोग्यपेक्षो यथा प्रातर्निरन्नो बलवान् पिबेत्।
भेषजं लघुपथ्यान्नैर्युक्तमद्यात्तु दुर्बलः॥
भैषज्यकाला भक्तादौ मध्ये पश्चान् मुहुर्मुहुः।
सामुद्गभुक्तं सम्पृक्तं ग्रासग्रासान्तरे दश॥
अपाने विगुणे पूर्वं समाने पथ्यभोजनम्।
व्याने तु प्रातराशान्तं उदाने भोजनोत्तरम्॥
वायौ प्राणे प्रदुष्टे तु ग्रासे ग्रासान्तरिष्यते।
श्वासकासपिपासासु त्ववधार्यं मुहुर्मुहुः॥
सामुद्गं हिक्कते भुक्तं लघुनान्नेन संयुतम्।
सम्भोज्यं त्वौषधं भोज्यैर्विचित्रैररुचौ मतम्।
ज्वरे पेयाः कषायाश्च क्षीरसर्पिर्विरेचनम्॥
षडहे षडहे देयं कालं वीक्ष्यामयस्य तु।
क्षुद्वेगमोक्षौ लघुता विशुद्धिर्जीर्णलक्षणम्॥
तदा भेषजमादेयं स्याद्धि दोषवदन्यथा।
चयादयश्च दोषाणां वर्ज्यं सेव्यञ्च यत्र यत्॥
ऋतावपेक्ष्यं यत्कर्म पूर्वं सर्वमुदाहृतम्।
इत्येव षड्विधं कालं अनपेक्ष्य भिषग्जितम्।
प्रयुक्तमहिताय स्यात् शस्यस्याकालवर्षवत्।
नाल्पं हन्त्यौषधं व्याधिं यथा पोल्पा महानलम्॥
दोषवच्चातिमात्रं स्यात् शस्यस्यात्युदकं यथा।
संप्रधार्य बलं तस्मादामयस्यौषधस्य च।
नैवातिबहुनात्यल्पं भैषज्यमवचारयेत्॥
औचित्याद्यस्य यत् साम्यं देशस्य पुरुषस्य च।
अपथ्यमपि नैकान्तात्तत् त्यजं लभते सुखम्॥

वाह्लीकाः पह्लवाश्चीनाः सूलीका यवनाः शकाः।
मांसगोधूममाध्वीकशस्त्र वैश्वानरोचिताः॥
सात्म्यास्तथा प्राच्या मत्स्य सात्म्याश्च सैन्धवाः।
अश्मकावन्तिकानां तु तैलाम्लं सात्म्यमुच्यते॥
शाकमूलफलं सात्म्यं विद्यान्मलयवासिनाम्।
सात्म्यं दक्षिणतः पेयामन्थश्चोत्तरपश्चिमे॥
मध्यदेशे भवेत्सात्म्यं यवगोधूम गोरसाः।
तेषां तत्सात्म्ययुक्तानि भेषज्यान्यवचारयेत्।
सात्म्यं ह्याशुबलं धत्ते नातिदोषं च बह्वपि।
योगैरेवं चिकित्सन् हि देशाद्यज्ञोऽपराध्यति।
वयोबलशरीरादिभेदा हि बहवो मताः॥
तथान्तः सन्धिमार्गाणां दोषाणां गूढ़चारिणाम्।
भवेत्कदाचित्कार्यापि विरुद्धाभिमता क्रिया॥
अन्तर्गतं पित्तधातुं स्वेदसेकोपनाहनैः।
नयन्तो बहिरुष्णैर्हि तथोष्णं शमयन्ति तम्॥
बाह्यैश्च शीतैः सेकाद्यैरूष्मान्तर्याति पीड़ितः।
सोऽन्तर्गूढ़ं कफं हन्ति शीतैः शीतं तथा जयेत्।
उष्णा पिष्टघनो लेपश्चन्दनस्यापि दाहकृत्॥
त्वग्गतस्योष्मणोरोधात् शीतश्चान्यथा गुरुः।
छर्दिं शीममक्षिकाविष्टा मक्षिकैव तु वामयेत्॥
द्रव्येषु स्विन्नजग्धेषु चैवं तेष्वेव विक्रिया।
तस्माद्दोषौषधादीनि परीक्ष्य दश तत्त्वतः।
कुर्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलैः॥
निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना।

क्षीणे मांसीकृते देहे शेषः सूक्ष्म इवानलः ॥
तस्मात्तमनुबध्नीयात् प्रयोगेणानपायिना ।
सिद्ध्यर्थं प्राक् प्रयुक्तस्य सिद्धस्याप्यौषधस्य तु ॥
काठिन्याद्गुरुभावाद्वा दोषोऽनुकुपितो महान् ।
पथ्यैर्म्मृदूल्पतां नीतो मृदुदोषकरो भवेत् ।
पथ्यमप्यश्नतस्तस्माद्वो व्याधिरुपजायते ॥
ज्ञात्वैवं वृद्धिमभ्यासं अथ वा तस्य कारयेत् ।
सातत्यात् स्वाद्वभावाद्वा पथ्यं द्वेष्यत्वमागतम् ॥
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ।
मनसोऽर्थानुकूल्याद्धि तुष्टिरूर्जा रुचिर्बलम् ॥
सुखोपभोगता च स्याद्व्याधेश्चातो बलक्षयः ।
लौल्याद्दोषक्षयाद्व्याधेर्वैधर्म्याच्चापि या रुचिः ।
तासु पथ्योपचारः स्याद्योगेनाद्यं विकल्पयेत् ॥ इति

तत्र श्लोकाः ॥

विंशतिर्व्यापदो योनेर्निदानं लिङ्गमेव च ।
चिकित्सा चापि निर्द्दिष्टा शिष्याणां हितकाम्यया
शुक्रदोषास्तथा चाष्टौ निदानाकृति साधनैः ।
क्लैव्यान्युक्तानि चत्वारि चत्वारः प्रदरास्तथा ॥
क्षीरदोषास्तथा चाष्टौ हेतुलिङ्ग भिषग्जितैः ।
तेषां चिकित्सा निर्द्दिष्टा समासव्यासतो मया ॥
रेतसो रजसश्चैव कीर्त्तितं शुद्धिलक्षणम् ।
उक्तानुक्ता चिकित्सा च सम्यग्यो गो यथैव हि ॥
दोषादिगुणशंसा च कालः षड्विध एव च ।
देशे देशे च यत्सात्म्यं यथा वैद्योऽपराध्यति ॥

चिकित्सा चापि निर्दिष्टा दोषाणां गूढ़चारिणाम्।
यो हि सम्यक् न जानाति दोषं दोषार्थमेव च।
न कुर्य्यात् सत्क्रियां चित्रमचक्षुरिव चित्रकृत्॥

इति चिकित्सितस्थानं षष्ठं समाप्तम्।

---

## अथ कल्पस्थानम्।

### प्रथमोऽध्यायः।

अथातो मदनकल्पं व्याख्यास्यामः।

अथ खलु वमनविरेचनद्रव्याणां सुखोपभोजग्रतमैः सहान्यैर्द्रव्यैर्विविधैः प्रकल्पनार्थं तद्योगानां च क्रियाविधेः सुखोपायस्य सम्यगुपकल्पनार्थं कल्पस्थानमुपदेक्ष्यामोऽग्निवेश! तत्र दोषहरणमूर्द्धभागं वमनसंज्ञमधोभागं विरेचनसंज्ञम् उभयं वा शरीरमलविरेचनाद्विरेचनशब्दं लभते। तत्रोष्ण तीक्ष्णसूक्ष्मव्यवाय विकाशीन्यौषधानि स्ववीर्येण हृदयमुपेत्य धमनीरनुसृत्य स्थूलाणु स्रोतोभ्यः केवलं शरीरगतं दोषसङ्घातत्वाद्विष्यन्दयति तैक्ष्ण्याद्विच्छिन्दन्ति स विच्छिन्नः परिप्लवः स्नेहभाविते काये स्नेहाक्तभाजनस्थमिव क्षौद्रमसजदनुप्रवणभावादामाशय मागम्यो दानप्रणुन्नाग्नि वाय्वात्मकत्वादूर्द्धभाग प्रभावाच्चौषध चाधः प्रवर्त्तते उभयतः चोभयगुणत्वादिति लक्षणोद्देशस्तत्र फलं जीमूतकेक्ष्वाकुधामार्गवकुटजशतवेधनानां श्यामात्रिवृच्चतुरङ्गुलतिल्वक

मद्दाद्ग्च सप्तला शङ्खिनी दन्ती द्रवन्तीमाश्च नानाविधदेश-कालसम्भवा स्वादवीर्य्यं विपाकप्रभावग्रहणादिह दोषप्रकृति वयोबलाग्नि भक्तिसात्म्यरोगादिनानात्वाच्च विचित्रगन्धवर्ण रसस्पर्शानामुपयोग सुखार्थमसङ्क्षेपय संयोगानामपि सतां द्रव्याणां विकल्पमार्गदर्शनार्थं षड्विरेचन योगशतानि व्याख्यास्यामः । तानि तु द्रव्याणि देशकालगुण सम्पद्दीर्य-बलाधानात् क्रियासमर्थतमानि भवन्ति । तत्र देशे जाङ्गले साधारणे वा यथाकालं शिशिरातप पवनसलिलसेकसेविते समे शुचौ प्रदक्षिणोदके श्मशानचैत्यदेव यजनागार सभा-श्वभ्रारामवल्मीकोषरविरहिते कुशरोहिषास्तीर्णे स्निग्ध-कृष्ण सुवर्णवर्णमधुरमृत्तिके मृदावफालकृष्टेऽनुपहतेऽन्यै-र्बलवत्तरैर्द्रुमैरौषधानि जातानि प्रशस्यन्ते । तत्र यानि कालजातान्युपगत सम्पूर्णप्रमाणरसवीर्यगन्धादि कालात-पाग्नि सलिलपवनजन्तुभिरनुपहतगन्धवर्णरसस्पर्श प्रभा-वानि प्रत्यग्राणि उदीच्यां दिशि स्थितानि तेषां शाखा-पलाशमरिचानि यथर्तु पुष्पफलमिति मङ्गलाचारः कल्याण-वृत्तः शुचिः शुक्लवासाः संपूज्य देवता अश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात् । गृहीत्वा चानुरूपगुणवद्भाजनस्थान्यगारेषु प्रागुदग्द्वारेषु निवातप्र-वातैकदेशेषु नित्यपुष्पोपहार वत्स्वग्नि सलिलोपस्वेद धूम-रजो मूषिकचतुष्पद गमनीयानि स्ववच्छिन्नानि शिक्येष्वा सज्या स्थापयेत्तानि च यथा दोषं प्रयुञ्जीत । सुरा सौवीरक तुषोदकमैरेय मेदकधान्यफलदध्यम्लादिभिर्वाते मृद्वीका मधु मधुकफाणित क्षीरादिभिः पित्ते श्लेष्मणि तु मधुमूत्र-

कषाये नावितान्यालोडितानि चेत्युद्देशस्तं विस्तरेण द्रव्यदेशकालदोषसात्म्यादीनि प्रविभज्य व्याख्यास्यामः। वमनद्रव्याणां मदनफलानि श्रेष्ठानि आचक्षतेऽनपायित्वात्तानि वसन्तग्रीष्मयोरन्तरे पुष्याश्वयुग्भ्यां मृगशिरसा वा गृह्णीयात्। मैत्रे मुहूर्त्ते यानि पक्वानि अहरितानि पाण्डून्यक्रिमीण्यशीर्णान्य ह्रस्वानि अजग्धानि तानि प्रमृज्य कुशपुटे बद्ध्वा गोमयेनालिप्य यवतुसमाषशालि माषव्रीहिकुलत्थमुद्गपलालानामन्यतमे निदध्यादष्टरात्रमत ऊर्द्ध्वं मृदुभूतानि मध्विष्टगन्धान्युद्धृत्य शोषयेत्। सुशुष्कं तु फलपिप्पलीरुद्धरेत्तासां दधिमधुपलल विमर्दितानां पुनः शुष्काणां नवकलशं सुप्रमृष्टबालुकमरजस्कमकाण्डं पूरयित्वा स्ववच्छन्नमनुगुप्तं शिक्येऽवसज्य स्थापयेत् अथ छर्द्दनीय मातुरं द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नं श्वः छर्द्दयितव्य इति ग्राम्यानूपौदकभृत मांस रसक्षीर दधिमाष तिलशाकादिभिः स मुत्क्लेशित श्लेष्माणमुषितं जीर्णाहारं पूर्व्वाह्णे घृतबलि होममङ्गल प्रायश्चित्तं निरन्नमनतिस्निग्धं यवाग्वा घृतमात्रां पीतवन्तं तासां फलपिप्पलीनामन्तर्नखं मुष्टिं यावद्वा साधुमन्यतेऽर्णां जर्जरीकृत्य यष्टीमधु कषायेण कोविदारकर्बुदारनीपविदुलबिम्बीशणपुष्पी सदपुष्पी प्रत्यक्पुष्पकषायाणामन्यतमेन वा रात्रिमुषितं विमृद्य पूतं मधुसैन्धवयुक्तं सुखोष्णं कृत्वा पूर्णं शरावं मन्त्रेणानेनाभिमन्त्रयेत। ब्रह्मदक्षाश्विरुद्रेन्द्र भूचन्द्रार्कानिलानलाः ऋषयः सौषध ग्रामा भूत सङ्घाश्च पान्तु ते रसायनमिवर्षीणां देवानाममृतं यथा सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते इत्येव-

मभिमन्त्र्योदङ्मुखमातुरं पाययेत श्लेष्मज्वरगुल्म प्रतिश्यायान्तं विशेषेण पुनरापित्तागमनात्तेन साधु वमति । हीनवेगं तु पिप्पल्यामलकसर्षप कल्कलवणोष्णोदकैः पुनः पुनः प्रवर्तयेदित्येष सर्वकल्पेन योगविधिः । सर्वेषु तु मधुसैन्धवं कफविलायन छेदार्थं वमनेषु विदध्यात् न चोष्ण विरोधो मधुनश्छर्दन योगयुक्तत्वा विपक्कप्रत्यागमनाद्दोषहरणाच्च फलपिप्पलीनां द्वौ भागौ कोविदारादिकषायेण त्रिःसप्तकृत्वः स्त्रावयेत्तेन रसेन तृतीयं भागं पिष्ट्वा मात्रां हरीतकीभिर्विभीतकैरामलकैर्वा तुल्यां वर्त्तयेत्तासामेकां द्वे वा पूर्वोक्तानां कषायाणामन्यतमस्याञ्जलिमात्रेण प्रमृद्य बलवत् श्लेष्मप्रसेकग्रन्थिज्वरोदरारुचिषु पाययेतेति समानं पूर्वेण । फलपिप्पलीक्षीरतो नवा क्षीरयवागूमधोभागे रक्तपित्ते हृद्दाहे तज्जस्य वा दध्न उत्तरकं कफच्छर्दिस्तमकप्रसेकेषु तस्यैव पयसः शीतः सन्तानिकाञ्जलिं पित्ते प्रकुपिततरः कण्ठहृदये तनु कफोपदिग्ध इति समानं पूर्वेण । फलपिप्पली क्षीरान्नवनीतमुत्पन्नं फलादिकल्ककषाय सिद्धं कफाभिभूताग्निं विशुष्यद्देहञ्च मात्रया पाययेदिति समानं पूर्वेण । फलपिप्पलीनां फलादिकषायेण त्रिःसप्तकृत्वः परिभावितेन पुष्परजः प्रकाशेन चूर्णेन सरसि बृहत्सरोरुहं सायाह्नेऽवचूर्णयेत्तद्रात्रिमुषितं प्रभाते पुनरवचूर्णितमुद्धृत्य हरिद्रा कृसरक्षीर यवागूनामन्यतमं सैन्धवगुडफाणितयुक्तमाकण्ठं पीतवन्तमाघ्रापयेत् । सुकुमारस्तूत्क्लिष्ट पित्तकफमौषध द्विषमिति समानं पूर्वेण । फलपिप्पलीनां भल्लातक विधिपरिस्रुतं स्वरसं पक्त्वा फाणितमावर्तुलीभावात्शोषयेत्

द्रातप शुष्कं वा चूर्णीकृतं जीमूतादिकषायेण पित्ते कफ-स्थानगते पाययेतेति समानं पूर्व्वेण। फलपिप्पलीचूर्णानि पूर्व्ववत् फलादीनां षसामन्यतमकषायस्नुतानिवर्ति क्रियाः फलकषायोपसर्जनाः पेया इति समानं पूर्व्वेण। फलपिप्पलीश्वा-रग्वध हृषक स्वादुकण्टकपाठा पाटली शार्ङ्गष्टामर्वा सप्त-पर्णनक्तमालपिचुमन्दपटोल सुषवी गुडूची सोमवल्कद्वीपि-कानां पिप्पली पिप्पलीमलहस्ति पिप्पलीचित्रक शृङ्गवेराणां चान्यतमकषायेण सिद्धो लेह इति समानं पूर्व्वेण फलपिप्प-लीष्वेलाहरेणुका शतपुष्पा कुसुम्भुरुतगरकुष्ठत्वक् चोरकम-रुवका गुग्गुग्गुलुवालक श्रीवेष्टक परिपेलव मांसी शैलेय-कथौणेयक सरलपारावत पदाशोकरोहिणीनां विंशतेरन्य-तमस्य कषायेण साधितोत्कारिका कल्केन यथा मोदको वा मोदककल्केन यथादोष रोगभक्ति प्रयोजत्र इति समानं पूर्व्वेण। फलपिप्पली स्वरसकषाय परिभावितानि तिलशा-लितण्डुलपिष्टानि तत्कषायोपसर्ज्जनानि षष्कुलीकल्पेन वा नूपा इति समानं पूर्व्वेण। एतेनैव च कल्केन सुमुखसुरस-कुठेरककण्ठीरकाल पालककर्पास कत्तवकफणिज्जकशृङ्गवेणु-गृञ्जनभुस्तृणककासमर्दभृङ्गराजानामिक्षुवालिका कालं कतकेक्षु काण्डेक्षु दण्डेरकानां चान्यतमस्य कषायेण कार-येत्। तथा वदरषाडवरागलेह मोदकोत्कारिका तर्पणपा-नकमांसरसयूषमद्यानां मदनफलान्यन्यतमेनोपसृजत्र यथा-दोष रोगदोष भक्तिद्द्यात्तैः साधु वमतीति।

तत्र श्लोकाः। मदनः करघाटश्च राठः पिण्डीतकः फलम्।
श्वसनश्चेति पर्य्यायैरुच्यते तस्य कल्पनाः॥

नवयोगाः कषायेषु मात्रा स्वष्टौ पयो घृते।
पञ्च फाणितचूर्णे द्वौ ज्ञेयो बस्ति क्रियासु षट् ॥
विंशतिर्विंशतिर्लेह मोदकोत्कारिकासु च।
षष्कुली यूपयोश्चोक्ता योगाः षोडश षोडश ॥
दशान्येषाडवान्येषु त्रयस्त्रिंशदिमं शतम्।
योगानां विधिवद्दृष्टं कफकल्पे महर्षिणेति ॥

---

अथ द्वितीयोऽध्यायः।

अथातो जीमूतकल्पं व्याख्यास्यामः।

कल्पं जीमूतकस्येमं फलपुष्पाश्रयं शृणु।
गरागरी च वेणी च तथा स्याद्देवतालकः ॥
जीमूतकं त्रिदोषघ्नं यथास्वौषधं कल्पितम्।
प्रयोक्तव्यं ज्वरश्वासहिक्काद्येष्वामयेषु च ॥
यथोक्तगुणयुक्तानां देशजानां यथाविधि।
पयः पुष्पेषु निर्वृत्ते फले पेया पयस्कृता ॥
लोमशे क्षीरसन्तानं दध्युत्तरमलोमशे।
शृते पयसि दध्यम्लं जाते हरितपाण्डके ॥
जीर्णानां च सुशुष्काणां न्यस्तानां भाजने शुचौ।
चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत् ॥

आसुत्यजसुरामण्डे मृदित्वा प्रसुतं पिबेत् ।
कफजे रोचके कासे पाण्डुरोगे सयक्ष्मणि ॥
द्विधा पोथ्याथवा त्रीणि गुडूच्या मधुकस्य वा ।
कषायमासुतं पूत्वा तेनैव विधिना पिबेत ॥
अथवारग्वधादीनां सप्तानां पूर्ववत् पिबेत् ।
एकैकशः कषायेण पित्तश्लेष्मज्वरार्दितः ॥
मात्राः स्युः फलवच्चाष्टौ कोलमात्रास्तु ता मताः ।
जीवकर्षभकेचूर्णां शतावर्या रसेन वा ॥
पित्तश्लेष्मज्वरे दद्याद्वातपित्तज्वरेऽथवा ।
तथा जीमूतकक्षीरात् समुत्पन्नं पचेद्घृतम् ॥
फलादीनां कषायेण श्रेष्ठं तद्वमनं मतमिति ।
तत्र श्लोकौ । षट्क्षीरे मदिरा योग एकं द्वादश चापरे ॥
सप्तचारग्वधादीनां कषायेऽष्टौ च वर्तिषु ।
जीवकादिषु चत्वारो घृतश्चैकं प्रकीर्त्तितम् ॥
कल्पे जीमूतकानां ये योगास्त्रिंशन्नवाधिका इति ।

---

अथ तृतीयोऽध्यायः ।

अथात इक्ष्वाकुकल्पं व्याख्यास्यामः ॥

सिद्धं वक्ष्याम्यथेक्ष्वाकुकल्पं येषां प्रशस्यते ।
लम्बा पिण्डफला तुम्बी कटुकालाबुनी च तत् ॥

इक्ष्वाकौ फलिनी चैव प्रोच्यते तस्य कल्पना ।
कासश्वासविषच्छर्दिज्ज्वरार्त्ते कफकर्शिते ॥
प्रताम्यति नरे चैव वमनार्थं तदिष्यते ।
अपुष्पस्य प्रवालानां मुष्टिं प्रादेशसंमिताम् ॥
चीरप्रस्थे शृतं दद्यात् पित्तोद्रिक्ते कफज्वरे ।
पुष्पादिषु च चत्वारः चीरे जीमूतके यथा ॥
योगा हरितपाण्डूनां सुरामण्डेन पञ्चमः ।
फलस्वरसभागञ्च त्रिगुणचीरसाधितम् ॥
उरः स्थिते कफे दद्यात् स्वरभेदे सपीनसे ।
जीर्णे मध्योद्धृते चीरं प्रक्षिपेत्तद्यदा दधि ॥
जातं स्यात् कफजे कासे श्वासे वम्याञ्च तत्पिवेत् ।
अजा चीरेण बीजानि भावयेत् पाययेत च ॥
विषगुल्मोदरग्रन्थि गण्डेषु स्लीपदेषु च ।
दधिमण्डैः फलान्मध्यं पाण्डु कुष्ठज्वरार्दितः ॥
तेन तक्रं विपक्कं वा सचौद्रलवणं पिवेत् ।
तुम्ब्याः फलरसैः शुष्कैः सपुष्पैरवचूर्णितम् ॥
छर्दयेन्माल्यमाघ्राय गन्धसम्पत्सुखोचितः ।
भचयेत् फलमध्यं वा गुडेन पललेन च ॥
इक्ष्वाकुफलतैलं वा सिद्धं वा पूर्ववद् घृतम् ।
पञ्चाशद्दशवृहानि फलादीनां यथोत्तरम् ॥
पिवेद्विमृद्य बीजानि कषायेष्वाशतं पृथक् ।
यष्ट्याह्व कोविदाराद्यैर्मुष्टिमन्त्तनखं पिवेत् ॥
कषायैः कोविदाराद्यैर्मात्राश्च फलवत् स्मृताः ।
विल्वमूलकषायेण तुम्बी बीजाञ्जलिं पचेत् ॥

मूत्रस्यास्य त्रयोभागाः चतुर्थः फाणितस्य तु।
सघृतं बीजभागस्य पिष्टमर्द्धांशिकांस्तथा॥
महाजालिनि जीमूतकृतवेधनवल्लकान्।
लेहयेत्साधयेद्दर्व्या घट्टयन् मृदुनाग्निना॥
यावत् स्यात्तन्तु मत्तोये पतितं च न शीर्य्यते।
तं लिह्यान्मात्रया लेहं मन्थं चापि पिवेदनु॥
कल्क एषोऽग्नि मन्थादौ चतुष्के पृथगुच्यते।
शक्तुभिर्वा पिवेन्मन्थं तुम्बी स्वरसभावितैः॥
कफजेऽथ ज्वरे कासे कण्ठरोगेष्वरोचके।
गुल्ममेहे प्रसेके च कल्कं मांसरसैः पिवेत्॥
नरः साधु वमत्येवं न च दौर्व्वल्यमश्नुते।

तत्र श्लोकाः। पयस्यष्टौ सुरामण्डे मस्तु तक्रे च ते त्रयः।
प्रेयं सपललं तैलं वर्द्धमानाः फलेषु षट्॥
घृतमेकं कषायेषु नवान्ये मधुकादिषु।
अष्टौ वर्त्तिं क्रिया लेहाः पञ्च मन्थो रसस्तथा॥
योगा इक्ष्वाकुकल्पे ते चत्वारिंशच्च पञ्च च।
उक्ता महर्षिणा सम्यक् प्रजानां हितकाम्यया॥

---

अथ चतुर्थोऽध्यायः।

अथातो धामार्गवकल्पं व्याख्यास्यामः।

कर्कोटकी कटुफला महाजालिनिरेव च।

धामार्गवस्य पर्य्याया राजकोशातकी तथा ॥
गले गुल्मोदरे कासे वाते श्लेष्मामयस्थिते ।
कफे च कण्ठवक्त्रस्थे कफसम्भवजेषु च ।
रोगेष्वेतत् प्रयोक्तव्यं स्यात् शिरा: स्युर्गुरवश्च ये ॥
फलं पुष्पं प्रवालञ्च विधिना तस्य संहरेत् ।
प्रवाल स्वरसं शुष्कं कृताश्च गुलिका: पृथक् ॥
कोविदारादिभि: पेया: कषायैर्मधुकस्य च ।
पुष्पादिषु पयोयोगा: चत्वार: पञ्चमी सुरा ॥
पूर्ववज्जीर्णशुष्काणां मत: कल्प: प्रवक्ष्यते ।
मधुकस्य कषायेण वीजकण्ठोद्धृतं फलम् ॥
सगुड़व्यूषितं रात्रिं कोविदारादिभिस्तथा ।
दद्याद्गुल्मोदरार्त्तेभ्यो येचाऽप्यन्ये कफामया: ॥
दद्यादन्ये न वायुक्तो छर्दिंहृद्रोगशान्तये ।
चूर्णैर्वाप्युत्पलादीनि भावितानि प्रभूतश: ॥
रसक्षीर यवाग्वादि कृत्वो घ्रात्वा वमेत् सुखम् ।
चूर्णीकृतस्य वर्तिं वा कृत्वा बदरसम्मिताम् ॥
विनीयाञ्जलिमात्रे तु पिवेद्गोशकृतोरसे ।
पृषतर्श्यं कुरङ्गाश्वगजोष्ट्राश्वतराविके ॥
श्वदंष्ट्रोखरखड्गानां चैवं पेया शकृद्रसे ।
जीवकर्षभकौ वीरा मात्मगुप्तां शतावरीम् ॥
काकोलीं श्रावणीं मेदां महामेदां मधूलिकाम् ।
एकैकशोऽभिसंचूर्ण्य सह धामार्गवेण ते ॥
शर्करा मधुसंयुक्ता लेहाहृद्दाह कासिनाम् ।
सुखोदकानु पाना: स्यु: पित्तोष्मसंहिते कफे ॥

धान्यतुम्बुरुयूषेण कल्कः सर्व्व विषापहः ।
जात्या सौमनसायिन्या रजन्यार्थ्यारकस्य वा॥
पुनर्नवाकासमन्द विम्बोहैमवतस्यच ।
महा महा क्षुद्रमहा वृषीवानां पृथकपृथक् ॥
एवं धामार्गवं हेवा कषाये परिमृद्यतु ॥
पूतंमनो विकारेषु पिवेद्वमन मुत्तमम् ।
तत् श्रृत चीरजं सर्पिः साधितं वा फलादिभिः ॥
तत्र श्लोकौ। पल्लवेन च चत्वारः चीरएकः सुरासवे ।
कषायाः विंशतिः कल्कौ दश द्वौ च शकृद्रसे ॥
चत्र एक स्तथाम्रेये दशलेहास्तथाघृतम् ।
कल्पे धामार्गवस्योक्ताः षष्टिर्योगा महर्षिणा ॥

---

## अथ पञ्चमोऽध्यायः ।

अथातो वत्सककल्पं व्याख्यास्यामः ।

अथ वत्सकनामानि भेदं स्त्रीपुंसयोस्तथा ।
कल्पश्चास्य निबोधेमं विस्तरेण यथातथम् ॥
वत्सकः कुटजश्चैव वृचको गिरिमल्लिका ।
बीजानीन्द्रयवास्तस्य तथोच्यन्ते कलिङ्गकाः ॥
वृहत् फलश्वितैः पुष्पैः स्निग्धपत्रः पुमान् भवेत् ।
श्यावारुणानु पुष्पी स्त्रीफलवृन्तै साथाणुभिः ॥
रक्त पित्त कफघ्नस्तु सुकुमारे घनत्ययः ।

हृद्रोग ज्वरवाता सृग्विसर्पादिषु शस्यते ॥
काले फलानि संगृह्य तयोर्वेश्मनि निक्षिपेत् ।
तेषामन्तर्नखं मुष्टिं जर्जरी कृत्यवा मयेत् ॥
मधुकस्य कषायेण कोविदारादिभिस्तथा ।
निशि स्थितं तमास्त्य लवण क्षौद्रसंयुतम् ॥
पित्ते तद्वमनं श्रेष्ठं पित्त श्लेष्म निवर्हणम् ।
अष्टाहं पयसार्केण तेषां चूर्णानि भावयेत् ॥
जीवकस्य कषायेण ततः पाणितलं पिवेत् ।
फलजीमूतकेक्ष्वाकु जीवन्तीनां पृथक्तथा ॥
सर्पपाणां मधूकानां लवणस्याथवाम्बुना ।
कृसरेणाथवा युक्तं विदध्याद्वमनं भिषक् ॥
तत्र श्लोकः । कषायैर्नवचूर्णैश्च पञ्चोक्ताः सलिलैस्त्रयः ।
कृसराष्टादशायोगा वत्सकस्य निदर्शिता इति ॥

---

अथ षष्ठोऽध्यायः ।

अथातः कृतवेधन कल्पं व्याख्यास्यामः ।

कृतवेधननामानि कल्पञ्चास्य निबोधत ।
क्ष्वेडःकोशातकीप्रोक्तं मृदङ्गफलमेवच ॥
अत्यन्तकटुतीक्ष्णोष्णङ्गाढेष्विष्टङ्गदेषु तु ।
कुष्ठपाण्डामयप्लीह शोफ गुल्मगरादिषु ॥
क्षीरादि कुसुमादीनि सुराचैतेषु पूर्ववत् ।
सु शुष्काणान्तु जीर्णानामेकं द्वे वा यथाबलम् ॥

कषायैर्मधुकादीनां नवभिः फलवत् पिवेत् ।
पृथक्चारग्वधादीनां त्रयोदशभिरासु तम् ॥
शल्मलीमूल वृन्तानां पिच्छाभिर्दशभिस्तथा ।
वर्तिक्रियाषट्फलवत्फलादीनां घृतं तथा ॥
कोशातकानि पञ्चाशत् कोविदार रसे पचेत् ।
तत्कषायं फलादीनां कल्कलेंहं हि साधयेत् ॥
क्ष्वेडस्य तत्र भागः स्यात् शेषाण्यङ्गाशिकस्यच ।
कषायैः कर्बुदाराद्यैरेवन्तत्कल्पयेत् पृथक् ॥
कषायेषु फलादीनां मधूप पिशितं पृथक् ।
कोशातकी फलं पक्का नं रसं लवणं पिवेत् ॥
फलादि पिप्पली तुल्यन्त्वहतक्ष्वेडरसं पिवेत् ।
क्ष्वेडक्वासी भवत्सिद्धं मिश्रमिक्षुरसेन च ॥ इति

तत्र श्लोकौ

क्षीरैर्द्वादौ सुरा चैका क्वाथा द्वाविंशतिस्तथा ।
दशपिच्छा घृतं चैकं षट् च वर्ति क्रियाः शुभाः ॥
लेहेऽष्टौ सप्तमांसे च योग इक्षुरसे परः ।
कृतवेधनकल्पेऽस्मिन् षष्टि योगाः प्रकीर्तिताः ॥

---

अथ सप्तमोऽध्यायः ।

अथातः श्यामात्रिवृतकल्पं व्याख्यास्यामः ।
विरेचने त्रिवृन्मूलं श्रेष्ठमाहुर्मनीषिणः ॥

तस्याः संज्ञा गुणाः कर्मभेदः कल्पश्च वक्ष्यते।
त्रिभाण्डी त्रिवृता श्यामा सुरडा कोटरा तथा॥
त्रिवृत्सर्वानुभूतिश्च शब्दैः पर्य्याय वाचकैः।
कषाया मधुरा रूक्षा विपाके कटुका च सा॥
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी।
सेदानीमौषधैर्युक्ता वातपित्तकफापहैः॥
कल्पावशेष्य मासाद्य सर्व्वरोगहरा भवेत्।
मूलन्तु द्विविधं तस्याः श्यामं चारुणमेव च॥
तयोर्मुख्यतरं विद्धि मूलं यदरुणप्रभम्।
सुकुमारे शिशौ वृद्धे मृदु कोष्ठे च तत् शुभम्॥
मोहयेदाशुकारित्वात् श्यामाक्षिण्युत मूर्च्छयेत्।
तेज्याग्रात् कर्षति क्लमकण्ठमाशु दोषं हरत्यपि॥
शस्यते बहुदोषाणां क्रूरकोष्ठाश्च ये नराः।
गुणवत्यान्तयोर्भूमौ जातं मूलं समुद्धरेत्॥
उपोष्य प्रयतः शुक्लो शुक्लवासाः समाहितः।
गम्भीरानुगतं श्लक्ष्णं अतिर्य्यग्विसृतञ्च यत्॥
स्निग्धस्त्विन्नो विरेच्यस्तु पेया मात्राशितः सुखम्।
अक्षमात्रन्तयोः पिष्टं विनीयाम्लेन ना पिबेत्॥
गोव्यजा महिषो मूत्र सौवीरक तुषोदकैः।
प्रसन्नया त्रिफलया सुतया च पृथक् पिबेत्॥
एकैकं सैन्धवादीनां द्वादशानां सनागरम्।
विसृद्धिंगुणसंयुक्तं चूर्णमुष्णाम्बुना पिबेत्॥
मरिचं पिप्पली मूलं मगधा गजपिप्पली।
सरलः किलिमं हिङ्गु भार्गी तेजोवतीत्वचौ॥

मुस्तं हैमवती पथ्या चित्रको रजनी वचा ।
स्वर्णक्षीर्यजमोदा च शृङ्गवेरञ्च तैः पृथक् ॥
एकैकार्धांशसंयुक्तं पिबेद्गोमूत्रसंयुतम् ।
मधुकार्द्धांशसंयुक्तं शर्कराम्बुयुतं पिबेत् ॥
काकनासा श्रावणी च मेदर्षभकजीवकौ ।
मुद्गमाषाख्य पर्णौ च महतीं श्रावणीं तथा ॥
काकोलीं क्षीरकाकोलीं छत्रां छिन्नरुहां तथा ।
क्षीरशुक्लां पयस्याञ्च यष्ट्याह्वं विधिना पिबेत् ॥
वातपित्तहितान्येतान्याद्यानि तु कफानिले ।
क्षीरमांसेक्षुकाश्मर्या द्राक्षा पीलु रसैः पृथक् ॥
सर्पिषा वातशोधूर्णमभया वांशिकं पिबेत् ।
लिह्याद्वा मधु सर्पिर्भ्यां संयुक्तमसितोपलम् ॥
अजगन्धातुगाक्षीरी विदारी शर्करा त्रिवृत् ।
चूर्णितं क्षौद्रसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥
सन्निपातज्वरस्तम्भदाहतृष्णार्दितो नरः ।
श्यामा त्रिवृत् कषायेण कल्केन च सशर्करम् ॥
साधयेद्विधिवल्लेहं लिह्यात् पाणितलं ततः ।
सक्षौद्रां शर्करां पीत्वा कुर्यान् सुदाजने नवे ॥
क्षिपेत् शीतं त्रिवृच्चूर्णं त्वक्पत्र मरिचैः सह ।
मात्रया लेहयेदेतद्दीश्वराणां विरेचनम् ॥
कुडवांशान् रसानि क्षुद्राक्षा पीलुं परूषकात् ।
सितोपलापले क्षौद्रात् कुडवार्द्धञ्च साधयेत् ॥
तं लेहं योजयेत् शीतं त्रिवृच्चूर्णेन शास्त्रवित् ।
एतद्दुःखनपित्ताना मीश्वराणां विरेचनम् ॥

शर्करा मोदकान् वर्त्तीर्गुलिका मांसपूरकान् ।
अनेन विधिना कुर्यात् पैत्तिकानां विरेचनम् ॥
पिप्पलीं नागरं क्षारं श्यामां त्रिवृतया सह ।
लेहयेन्मधुना सार्द्धं श्लेष्मलानां विरेचनम् ॥
मातुलुङ्गा भया धात्री श्रीपर्णी कोलदाडिमात् ।
सुभृष्टान् स्वरसं स्तैले साधयेत्तत्र चावपेत् ॥
सहकारान् कपित्थांश्च साध्यमम्लञ्च यत्फलम् ।
पूर्ववल्लहली भूते त्रिवृच्चूर्णं समावपेत् ॥
त्वक्पत्र केसरेलानां चूर्णञ्च मधुमात्रया ।
लेहोऽयं कफमूलानामीश्वराणां विरेचनम् ॥
पानका निरसान्यूषान्मोदकान् रागषाडवान् ।
अनेन विधिना कुर्याद्विरेकार्थे कफाधिके ॥
त्वगेलाभ्यां समा नीली तैस्त्रिवृत्तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रशक्तुभिस्तर्पणं पिबेत् ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥
शर्करा त्रिफला श्यामा त्रिवृन्मागधिके मधु ।
मोदकः सन्निपातोर्द्धं रक्तपित्तज्वरापहः ।
त्रिवृच्छ्यामातास्त्रिस्त्रस्त्रिस्रश्च त्रिफलात्वचः ॥
विडङ्गपिप्पली क्षारश्याणास्त्रिस्रश्च चूर्णिताः ।
लिह्यात् सर्पिर्मधुभ्याञ्च मोदकं वा गुडेन च ॥
भक्षयेन्निष्परीहारमेतच्छोधनमुत्तमम् ।
गुल्मं प्लीहोदरं श्वासं हलीमककमरोचकम् ॥
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति ।

विडङ्गपिप्पलीमूलत्रिफला धान्य चित्रकम् ॥
मरिचेन्द्र यवा जाजी पिप्पली हस्ति पिप्पली ।
लवणान्यजमोदा च चूर्णितं कार्षिकं पृथक् ॥
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ।
धात्रीफलरसप्रस्थां स्त्रीन् गुडार्द्धतुलान् तथा ॥
पक्त्वा मृद्वग्निना खादेद्बदरोदुम्बरोपमान् ।
गुडान् कृत्वा न चास्य स्याद्विहाराहारयन्त्रणा ॥
कुष्ठार्शः कामला मेह गुल्मोदर भगन्दरम् ।
ग्रहणी पाण्डुरोगांश्च हन्युः पुंसवनाश्च ते ॥
कल्याणका इति ख्याताः सर्वेष्वृतुषु यौगिकाः ।
व्योषत्वक्पत्र मुस्तैला विडङ्गामलकाभयाः ॥
समभागा भिषग्दद्याद् द्विगुणाञ्च मकूलकम् ।
त्रिवृतोऽष्टगुणं भागं शर्करायाश्च षड्गुणम् ॥
चूर्णितङ्कलकान् कृत्वा क्षौद्रेण पलसम्मितान् ।
भक्षयेत्कालमुत्थाप्य शीतं चानुपिवेज्जलम् ॥
मूत्रकृच्छ्रे ज्वरे वम्यां कासे श्वासे भ्रमे क्षये ।
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ता नित्यं त्वताग्निनः ॥
योगः सर्वविषाणाञ्च मतः श्रेष्ठं विरेचनम् ।
त्रिवृद्दन्तीद्रवन्ती श्यामा नीलिनी हस्ति पिप्पली ॥
समूला पिप्पली मुस्तमजमोदा दुरालभा ।
अर्द्धांशिकं पलं शुण्ठ्या गुडस्य पलविंशतिम् ॥
चूर्णितं मोदकान् कुर्यादुदुम्बरफलोपमान् ।
हिङ्गु सौवर्चलव्योषयवानी विडजीरकैः ॥
वचा जगन्धा त्रिफला चव्यचित्रकधान्यकैः ।

मोदकान् वेष्टयेच्चूर्णैस्तान् सतुम्बुरु दाडिमैः ॥
त्रिक वंक्षण हृद्वस्ति कोष्ठार्त्तैः प्लीहशूलिनाम् ॥
हिक्का कासारुचि श्वासकफोदावर्त्तिनां शुभाः ।
शुण्ठी मरिचपिप्पल्यः कार्षिकाः स्युः पृथक् पृथक् ॥
द्विगुणे शर्करैले च सातला स्यात् चतुर्गुणा ।
नीलिनीमष्टगुणितां द्विरष्टगुणितां तथा ॥
दण्डीं द्विभाण्डीं त्वच्छाणमेकं चात्र प्रदापयेत् ।
अस्मादर्द्धपलं चूर्णाल्लिह्यान्माक्षिकसंयुतम् ॥
शीतोदकानुपानन्तु निरपायं विरेचनम् ।
त्रिवृतां कौटजं बीजं पिप्पली विश्वभेषजम् ॥
समार्द्वीकर सक्षौद्रं वर्षास्वेतद्विरेचनम् ।
त्रिवृद्दुरालभा मुस्ता शर्करोदीच्य चन्दनम् ॥
द्राक्षाम्बुना सयष्ट्याह्व सातलं जलदात्यये ।
त्रिवृतां चित्रकं पाठां अजाजीं सरलं वचाम् ।
स्वर्णदुग्धीं च हेमन्ते पिष्ट्वा तूष्णाम्बुना पिबेत् ॥
शर्करा त्रिवृता तुल्या ग्रीष्मकाले विरेचनम् ।
हपुषां सप्तलां श्यामां द्रवन्तीं कटुरोहिणीम् ।
स्वर्णक्षीरीञ्च संचूर्ण्य गोमूत्रे भावयेत्त्र्यहम् ।
एष सर्वर्त्तुको योगः स्निग्धानां मलदोषहृत् ॥
त्रिवृत् श्यामे दुरालभा वत्सकं हस्ति पिप्पली
नीलिनी त्रिफला मुस्तकटुका च सुचूर्णितम् ।
सर्पिर्मांसरसोष्णाम्बुयुक्तं पाणितलं ततः ॥
पिबेत् सुखतमं ह्येतद्रूक्षाणामपि शस्यते ।
त्र्यूषणं त्रिफलां हिङ्गुकार्षिकं त्रिवृतां पलम् ।

सौवर्चलार्द्धकर्षञ्चपलार्धं चाम्लवेतसात् ॥
तच्चूर्णं शर्करा तुल्यं मण्डेनानेन वा पिवेत् ।
गुल्मपार्श्वार्त्तिवत् सिद्धं जीर्णे चाद्यात्रसोदनम् ।
सप्तलां त्रिफलां दन्तीं त्रिवृतां व्योषसैन्धवे ।
कृत्वा चूर्णं तु सप्ताहं भाव्यमामलकीरसे ।
तद्योज्यं तर्पणे यूषे पिशिते रोगयुक्तिषु ॥
तुल्याम्लं त्रिवृता कल्कं सिद्धं गुल्महरं घृतम् ।
मूल्यं श्यामात्रिवृतयोः पचेदामलकैः सह ॥
जले तेन कषायेण पक्वा सर्पिः पिवेन्नरः ।
निर्यूहेण तयोर्युक्त्या सिद्धसर्पिः पिवेत्तथा ॥
श्वाथितं वा पयस्ताभ्यां सुखं तेन विरिच्यते ।
जलद्रोणे पचेदष्टौ त्रिवृन्मुष्टी तु सत्रखात् ॥
पादशेषं कषायं तं शीतं गुडतुलायुतम् ।
स्निग्धं स्थाप्यं घटे क्षौद्रपिप्पलीफल चित्रकैः ॥
प्रलिप्ते मधुना मासज्जातं तन्मात्रया पिवेत् ।
ग्रहणी पाण्डुरोगघ्नं गुल्मश्वयथुनाशनम् ॥
सुरां वा त्रिवृतां पादकिण्वां तत्क्वाथ संयुताम् ।
यवैः श्यामात्रिवृत् क्वाथे खिन्नैः कुल्माषमम्भसा ॥
आसुतं षडहं पक्वे जातं सौवीरकं पिवेत् ।
धृष्टान्वास तुषान् शुद्धान् यवांस्तच्चूर्णसंयुतान् ॥
आसुतानम्भसा तद्वत्पिवेज्जातं तुषोदकम् ।
तथा मदनकाश्मीर्यान् माडवारीन् पृथग्दश ॥
त्रिवृच्चूर्णेन संसृज्य विरेकार्थं प्रयोजयेत् ।
तत्र श्लोकाः । श्यामायास्त्रिवृतायाश्च कल्पेऽस्मिन् समुदाहृतम् ।

शतं दशोत्तरं सिद्धं योगानां परमर्षिणा॥

त्वक्केसराम्रातकदाडिमैलासितोपलामाक्षिकमातुलुङ्गैः।
मद्यैस्तथान्यैश्च मनोऽनुकूलैर्युक्तानि देयानि विरेचनानि।
शीताम्बुना पीतवतश्च तस्य सिञ्चेन्मुखं छर्द्दिविघातहेतोः।
हृद्यांश्च गन्धान् सुमनःफलप्रवालादीन्यं च दद्यादुपजिघ्रणार्थमिति॥

---

## अथ अष्टमोऽध्यायः।

अथातश्चतुरङ्गुलाकल्पं व्याख्यास्यामः।

आरग्वधो राजवृक्षः शम्पाकश्चतुरङ्गुलः।
प्रग्रहः कृतमालश्च कर्णिकारोऽवघातकः॥
ज्वरहृद्रोगवातासृगुदावर्त्तादिरोगिषु॥
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः।
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे॥
योज्यो मृदनपायित्वाद्विशेषाच्चतुरङ्गुलः।
फलकाले फलं तस्य ग्राह्यं परिणतञ्च यत्॥
एषां गुणवतां भारं सिकतासु निधापयेत्।
द्राक्षारसयुतो देयो दाहोदावर्त्तपीडिते॥
चतुर्वर्षसुखं बाले यावद् द्वादशवार्षिके।
चतुरङ्गुलमज्ज्ञस्तु प्रसृतं वाथवाञ्जलिम्॥
सुरामण्डेन संयुक्तमथवा कोलशीधुना।
दधिमण्डेन वा युक्तं रसेनामलकस्य वा॥

कृत्वा शीतकषायं तं पिवेत् सौवीरकेण वा।
बिल्वमज्जस्तथा कल्कं तत् कषायेण वा पिवेत्॥
तथा बिल्व कषायेण लवणक्षौद्रसंयुतम्।
कषायेणाथवा तस्य बिल्वचूर्णं गुडान्वितम्॥
साधयित्वा शनैर्लेहं लेहयेन्मात्रया नरम्।
चतुरङ्गुलसिद्धाद्धि क्षीराद्यदुद्दियादृष्टतम्।
मज्जः कल्केण धात्रीणां रसे तत्साधितं पिवेत्।
तदेव दशमूलस्य कुलत्थानां यवस्य च।
कषाये साधितं कल्कैः सर्पिः श्यामादिभिः पिवेत्॥
दन्तीक्वाथेऽञ्जलिं मज्जः शम्पाकस्य गुडस्य च।
कृत्वा मासार्धमासस्य रिष्टन्तं पाययेत च॥ इति।

तत्र श्लोकाः।

द्राक्षारसे सुराशीध्वोर्दध्नि चामलकीरसे।
सौवीरक कषायाभ्यां बिल्वशम्पाकयोस्तथा।
लेहोऽरिष्टो घृते द्वे च योगा द्वादश कीर्तिताः॥
चतुरङ्गुलकल्पेऽस्मिन् सुकुमाराः प्रकीर्त्तिताः।
यस्य यत्पानमन्नं च हृद्यं स्वाद्वपि वा कटु।
लवणं वा भवेत्तेन युक्तं दद्याद्विरेचनमिति।

---

अथ नवमोऽध्यायः।

अथातस्तिल्वककल्पं व्याख्यास्यामः।

तिल्वकस्तु मतो रोध्रो वृहत्पत्रस्तिरीटकः।

तस्य मूलत्वचं शुल्कामन्तर्वल्कल वर्जिताम्।
चूर्णयेत त्रिधा कृत्वा द्वौ भागौ स्त्रोतयेत्ततः॥
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत्।
भागं तं दशमूलस्य पुनः क्वाथेन भावयेत॥
शुष्कं चूर्णं पुनः कृत्वा तत ऊर्द्धं प्रयोजयेत्।
दधिमात्रा सुरा मण्डमूत्रैर्बदर शीधुना।
रसेनामलकानां वा ततः पाणितलं पिवेत्॥
मेषशृङ्गाभया कृष्णा चित्रकैः सलिले सुते।
मत्कुजान् सुनुयात्तच्च जातं सौवीरकं यदा॥
भवेदञ्जलिना तस्य लोध्रकल्कं पिवेत्तदा।
सुरां लोध्रकषायेण जातां पञ्चस्थितां पिवेत्॥
दन्तीचित्रकयोर्द्रोणे सलिलस्याढ़कं पृथक्।
समुत्क्वाथ्य गुडस्यैकां तुलां रोध्रस्य चाञ्जलिम्॥
आवपेत्तत्परं पश्चात् मद्यपानाद्विरेचनम्।
कम्पिल्यक कषायेण दशकृत्वः सुभाविताम्।
मात्रां कम्पिल्यकस्यैव कषायेण पुनः पिवेत्॥
चतुरङ्गुलकल्पेन लेह्योऽन्यः कार्यं एव च।
त्रिफलायाः कषायेण ससर्पिर्मधुफाणितः॥
लोध्रचूर्णयुतः सिद्धो लेहः श्रेष्ठं विरेचनम्।
अष्टाष्टौ त्रिवृतादीनां पृथङ्मुष्टीस्तु सन्नखान्॥
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत्।
पिष्टैस्तैरेव त्रिस्वांशैः समूत्र लवणैरथ।
ततो मात्रां पिवेत्काले श्रेष्ठमेतद्विरेचनम्॥
पञ्च दध्यादिभिस्त्वेका सुरासौवीरकेण च।

एकोऽरिष्टस्तथा योग एकः कम्पिल्यकेन च ॥
लेहास्त्रयो घृतेनापि चत्वारः सम्प्रदर्शिताः ।
योगास्ते लोध्रमूलानां कल्पे षोडश सम्मताः ॥ इति

---

अथ दशमोऽध्यायः ।

अथातो महावृक्षकल्पं व्याख्यास्यामः ।

विरेचनानां सर्वेषां सुधा तीक्ष्णतमा मता ।
सा ह्याशु तु भिनत्याशु दोषाणां कष्ट विभ्रमा ॥
तस्मान्नैषा मृदौ कोष्ठे प्रयोक्तव्या कदाचन ।
न दोष निचये चाल्पे सति वान्य परिक्रमे ॥
पाण्डुरोगोदरी गुल्मे कुष्ठे दूषीविषार्दिते ।
श्वयथौ मधुमेहे च दोषविभ्रान्त चेतसि ॥
रोगैरेवम्विधैर्ग्रस्तं ज्ञात्वा सम्प्राणमातुरम् ।
प्रयोजयेन्महावृक्षं सम्यक् सम्यवचारितः ॥
सद्यो नुदति दोषाणां महान्तमपि सञ्चयम् ।
द्विविधः समतोऽल्पैश्च बहुभिश्चैव कण्टकैः ॥
सुतीक्ष्णैः कण्टकैरल्पैः प्रवरो बहुकण्टकः ।
समानास्तु गुडानन्दा सुधानिस्त्रिंशपत्रकः ॥
तं विपाट्याहरेत् क्षीरं शस्त्रेण मतिमान् भिषक् ।
द्विवर्षं वा त्रिवर्षं वा शिशिरान्ते विशेषतः ॥
बिल्वादीनां बृहत्या वा कण्टकार्यापि चैकशः ।

कषायं तं समांशेन कृत्वाङ्गारेषु शोषयेत्।
ततः कोलसमां मात्रां पिबेत्सौवीरकेण वा।
तुषोदकेन कोलानां रसेनामलकस्य वा॥
सुरया दधिमण्डेन मातुलुङ्गरसेन वा।
सातलां काञ्चनक्षीरीं श्यामादीनि कटुत्रिकम्॥
यथोपपत्तिसप्ताहं सुधा क्षीरेण भावयेत्।
कोलमात्रं घृतेनातः पिबेन्मांसरसेन वा॥
त्र्यूषणं त्रिफलां दन्तीं चित्रकं त्रिवृतां तथा।
स्नुक्क्षीरभावितं सम्यग्विदध्याद्गुडपानके॥
त्रिवृतारग्वधं दन्तीं शङ्खिनीं सप्तलां समाम्।
गोमूत्रे रजनीं कृत्वा शोषये दातपे ततः॥
सप्ताहं भावयित्वैवं स्नुक्क्षीरेणापरं पुनः।
सप्ताहं भावयेत् शुष्कं ततस्तेनापि भावितम्॥
गन्धमाल्यं तदाघ्राय प्रावृत्य पटमेव च।
सुखमाशु विरिच्यन्ते मृदुकोष्ठा नराधिपाः॥
श्यामात्रिवृत् कषायेण स्नुक् क्षीर घृतफाणितैः।
लेहं पक्त्वा विरेकार्थं लेहयेन्मात्रया नरम्॥
पाययेत सुधाक्षीरयूषैर्मांसरसैर्हृतैः।
भावितान् शुष्कमत्स्यान्वा मांसं वा भक्षयेन्नरः॥
क्षीरेणामलकैः सर्पिः चतुरङ्गुल वत्पचेत्।
सुरां वा कारयेत् क्षीरं घृतं वा पूर्ववत् पचेदिति॥

तत्र श्लोकौ

सौवीरकादिभिः सप्त सर्पिषाच रसैव च।
पानकञ्चैव लेहौ च योगा सप्तादिभिस्त्रयः॥

द्वौ शुष्कमलकमांसानां सुरेका द्वौ च सर्पिषो।
महावचस्य योगास्ते विंशतिः समुदाहृताः॥ इति।

---

अथ एकादशोऽध्यायः।

अथातः सप्तलाशङ्खिनीकल्पं व्याख्यास्यामः।

शङ्खिनी तिक्तला श्रेया यवतिक्ताक्षिपीडकः॥
सप्तला चर्मसाह्वा च बहुफेनरसा च सा।
ते गुल्मगरहृद्रोग कुष्ठशोफोदरादिषु॥
विकासितोत्कटत्वाद्योज्ये श्लेषाधिकेषु तु।
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम्॥
सप्तलायाश्च मूलानि गृहीत्वा भाजने क्षिपेत्।
अक्षमात्रं तयोः पिण्डं प्रसन्ना लवणायुतम्॥
हृद्रोगे कफवातोत्थे गुल्मे चैव प्रयोजयेत्।
पियालपीलुकर्कन्धुकोलाम्रातकदाडिमे॥
द्राक्षापनसखर्जूरबदराम्लपरूषके।
मेदके दधिमण्डेऽम्ले सौवीरक तुषोदके॥
शीधौ चाप्येष कल्पः स्यात् सुखं शीघ्रविरेचनः।
तैलं विदारिगन्धादिपयसा पीडितं पचेत्॥
सप्तलाशङ्खिनीकल्पे त्रिवृत्श्यामाद्वैभागिके।
दधिमण्डेन संयोग सिद्धन्तम्पाययेत च॥
शङ्खिनीचूर्णभागौ द्वौ नीलीचूर्णस्य चापरः।

हरीतकी कषायेण तैलं तत्पीडितं पिवेत्॥
अतसी सर्षपैरण्डकरञ्जेष्वेष सन्विधिः।
शङ्खिनी सप्तला सिद्धा क्षीरात् यदुद्दियाद् घृतम्॥
कल्कभागं तत्क्षीरेन त्रिवृत्श्यामार्द्धसंयुतम्।
क्षीरेणालोद्य सम्यक्तं पिवेत्तच्च विरेचनम्॥
तथा दन्तीद्रवन्त्योः स्यादजशृङ्ग्यजगन्धयोः।
क्षीरिण्या नीलिकायाश्च तथैव च करञ्जयोः॥
मसूर विदलायाश्च प्रत्यक्श्रेण्यास्तथैव च॥
विडङ्गाद्धाँशकल्केन तद्वत्साध्यं घृतं पुनः।
शङ्खिनी सप्तला धात्री कषाये साधयेद्घृतम्॥
त्रिवृत्कल्केन सर्पिश्च त्रयो लेहाश्च लोध्रवत्।
सुराकम्पिल्ययोर्योगः कार्यो लोध्रवदेव च॥
दन्ती द्रवन्त्योः कल्केन सौवीरकतुषोदके।
अजगन्धाजशृङ्ग्योश्च तद्वत् स्यातां विरेचने॥ इति।

तत्र श्लोकौ।

कषाया दश षट्चैव षट् तैलेऽष्टौ च सर्पिषि।
पञ्चमद्ये त्रयो लेपा योगः कम्पिल्लके तथा॥
सप्तलाशङ्खिनीभ्यां ते त्रिंशदुक्ता नवाधिकाः।
योगाः सिद्धाः समस्ताभ्यामेकशोऽपि च ते हिताः॥

## अथ द्वादशोऽध्यायः ।

अथातो दन्तीद्रवन्ती कल्पं व्याख्यास्यामः ।

दन्त्युदुम्बरपर्णी स्यान्निकुम्भोऽथ मकूलकः ।
द्रवन्तीनाम तच्चित्रा न्यग्रोधा मूषिकाह्वया ॥
तयोर्मूलानि संगृह्य स्थिराणि बहलानि च ।
हस्तिदन्तप्रकाराणि श्याव ताम्राणि बुद्धिमान् ।
पिप्पली समलिप्तानि स्वेदयेत् मृत् कुशान्तरा ॥
शोषयेदातपेऽग्न्यर्कौ हते ह्येषां विकाषिताम् ।
तीक्ष्णोष्णान्याशुकारीणि विकाशिनी गुरूणि च ॥
विलम्बः स तु दोषौ द्वौ मारुतं कोपयन्ति च ।
दधि तक्र सुरामण्डैः पिबद्गमद्यसमन्तयोः ॥
पियालकोलबदरपीलु शीधुभिरेव च ।
पिबेद्गुल्म्युदरी दोषैरभिष्यण्य यो नरः ॥
गोमृगाजरसः पाण्डु क्रिमिकुष्ठी भगन्दरी ।
तयोः कल्के कषाये च दशमूलरसायुते ॥
कच्छालजीविसर्पेषु दाहे च विपचेद् घृतम् ।
तैलं मेहे च गुल्मे च सोदावर्ते कफानिले ॥
चतुः स्नेहं शकृत् शुक्रवातसङ्गानिलार्तिषु ।
रसो दन्त्यज शृङ्गोय गुडक्षौद्रघृतान्वितः ॥

लेहः सिद्धो विरेकार्थे दाहसन्तापमोहनुत् ।
वाततर्षे ज्वरे पैत्ते स्यात् स एवाजगन्धया ॥
मूलं दन्ती द्रवन्त्योश्च पचेदामलकी रसे ।
त्रींस्तस्य च कषायेऽस्य भागान् द्वौ फाणितस्य च ॥
तस्मै सर्पिषि तैले वा भर्जयेत्तत्र पाययेत् ।
कल्कं दन्ती द्रवन्त्योश्च श्यामादीनाञ्च भागशः ॥
तत्सिद्धं प्राशयेल्लेहं सुखं तेन विरिच्यते ।
रसे च दशमूलस्य तथा वैभीतकी रसे ॥
हरीतकी रसे चैव लेहानेव पचेत् पृथक् ।
तयोर्विडङ्गं चूर्णं तद्रसेनैव भावितम् ॥
श्रेष्ठंविशवातोत्थे गुल्मे चाम्लयुतं शुभम् ।
पाटयित्वेक्षुकाण्डं वा कल्केनालिप्य चान्तरा ॥
स्वेदयित्वा ततः खादेत् सुखं तेन विरिच्यते ।
मूलं दन्ती द्रवन्त्योश्च सह मुद्गैर्विपाचयेत् ॥
लाववर्त्तीरकाणां च ते रसाः स्युर्विरेचनम् ।
तयोर्वापि कषायेण यवागूं जाङ्गलं रसम् ॥
मांसं यूषांश्च संस्कृत्य दद्यात्तेन विरिच्यते ।
तत्कषायास्त्रयोभागा द्वौ सितायास्तथैव च ॥
एको गोधूमचूर्णानां कार्योत्कारिका शुभा ।
मोदको वा स्वकल्केन कार्यस्तच्च विरेचनम् ॥
तयोर्वापि कषायेण मद्यान्यस्यापि कल्पयेत् ।
दन्ती क्वाथेन चालोड्य दन्ती तैलेन साधितम् ॥
गुडलावणिकान् भक्ष्यान् विविधान् भक्षयेन्नरः ।
द्रवन्तीं मरिचं दन्तीं यवानीमुपकुञ्चिकाम् ॥

नागरं हेमदुग्धीं च चित्रकं चेति चूर्णितम् ।
सप्ताहं भावयेत मूत्रे गवां पाचितला ततः ॥
पिवेद्दृष्टतेन जीर्णे तु विरिक्तश्चापि तर्पणम् ।
सर्वरोगहरं मुख्यं सर्वेष्वृतुषु शोभनम् ॥
चूर्णं तदन्नपायित्वाद्यालम्हेषु पूजितम् ।
दुर्भुक्ताजीर्णपार्श्वार्ति गुल्मप्लीहोदरेषु च ॥
गण्डमालासु वाते च पाण्डुरोगे च शस्यते ।
पलं चित्रकदन्त्योश्च हरीतक्योश्च विंशतिः ॥
पिप्पली त्रिवृतायौ च गुडस्याष्टपलेन तत् ।
विनीय मोदकान् कुर्याद्दशैकं भक्षयेत्ततः ॥
उष्णाम्बु च पिवेच्छेषान् दशमे दशमेऽह्नि च ।
एते निष्परिहार्याः स्युः सर्वरोग निवर्हणाः ॥
ग्रहणी पाण्डुरोगार्शः कण्डू कोठा निलापहाः ।
दन्ती द्विपलनिर्यूहो द्राक्षार्द्धप्रस्थसाधितः ॥
शोधनं पित्तकासे च पाण्डुरोगे च शस्यते ।
दन्ती कल्कं समगुडं शीतवारियुतं पिवेत् ॥
विरेचनं मुख्यतमं कामलाहरमुत्तमम् ॥
श्यामा दन्ती रसे गौडः पिप्पली फलचित्रकैः ॥
लिप्तेऽरिष्टोऽनिलकफप्लीहपाण्डूदरापहः ।
तथा दन्ती द्रवन्त्योश्च कषायेणाजगन्धया ॥
गौडः कार्योऽजशृङ्ग्या वा सर्वे सुखविरेचनः ।
तच्चूर्णं क्वाथि मापाम्बु क्षिपतोय सुरोद्भवा ॥
मदिरा कफगुल्माग्न्यवह्नि पार्श्वं कटिग्रहे ।
अश्वगन्धा कषायेण सौवीरक तुषोदके ॥

तत्र श्लोकाः ।

दन्ती द्रवन्ती कल्पेऽस्मिन् प्रोक्ताः षोडशकास्त्रयः ॥
नानाविधानां योगानां भक्तिं दोषामयान् प्रति ।
त्रिंशतं पञ्चपञ्चाशं योगानां वमने स्मृतम् ॥
द्वे शते नवकाः पञ्च योगानान्तु विरेचने ।
ऊर्द्ध्वानुलोमे भागानामित्युक्तानि शतानि षट् ॥
प्राधान्यतः समाश्रित्य द्रव्याणि दशपञ्च च ।
यच्च येन प्रधानेन द्रव्यं समुपसृज्यते ॥
तत्संज्ञकः स संयोगो भवतीति विनिश्चितम् ।
फलादीनां प्रधानानां गुणभूताः सुरादयः ॥
ते हितान्यनुवर्तन्ते मनुजेन्द्रमिवेतरे ।
विरुद्धवीर्यमप्येषां प्रधानानामबाधकम् ॥
अधिके तुल्यवीर्येऽपि क्रिया सामर्थ्यमिष्यते ।
इष्टवर्णरसस्पर्शगन्धार्थं प्रति चामयम् ॥
अतो विरुद्धवीर्याणां प्रयोग इति निश्चितम् ।
भूयश्चैषां बलाधानं कार्यं स्वरसभावनात् ॥
सुभावितं ह्यल्पमपि द्रव्यं स्याद्बहु कर्मकृत् ।
स्वरसैस्तुल्यवीर्यैर्वा तस्माद्द्रव्याणि भावयेत् ॥
अल्पस्यापि महार्थत्वं प्रभूतस्याप्यकर्मताम् ।
कुर्यात् संयोगविश्लेषकालसंस्कारयुक्तिभिः ॥
प्रदेशमात्रमेतावद्दृष्टव्यमिह षट्शतम् ।
सुबुद्ध्यैवं सहस्राणि कोटीर्वापि प्रकल्पयेत् ॥
बहुद्रव्यविकल्पत्वाद्योगसंख्या न विद्यते ।
तीक्ष्णमध्यमृदूनान्तु तेषां शृणुत लक्षणम् ॥

सुखं क्षिप्रं महावेगमसक्तं यत्प्रवर्त्तते ।
नाति ग्लानिकरं पायौ हृदयेन च यत्परम् ॥
अन्तराशयमक्षिण्वन् कृत्स्नं दोषं निरस्यति ।
विरेचनं निरूहो वा तत्तीक्ष्णमिति निर्द्दिशेत् ॥
जलाग्नि कीटैरस्पृष्टं देशकालगुणान्वितम् ।
स्वमात्राधिकं युक्तं तुल्यवीर्यैः सुभावितम् ॥
स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम् ।
किञ्चिदेभिर्गुणैर्हीनं सम्यक्साध्यं च तद्भवेत् ।
मन्दवीर्यं विरूक्षस्य तद्भवेत् मन्दवेगवत् ॥
प्रततं दोषहरणादश्नुते बलीयसाम् ।
मध्यावरबलानान्तु प्रयोज्यं सिद्धिमिच्छता ॥
तीक्ष्णोमध्यो मृदुर्व्याधिः सर्व्वमध्याल्पलक्षणः ।
तीक्ष्णादीनि बलापेक्षी भेषजान्येषु योजयेत् ॥
देयन्त्वनिर्हृते पूर्व्वं पीते पश्चात पुनः पुनः ।
भेषजं वमनार्थीयं प्राय आपित्तदर्शनात् ॥
बलं विध्यमालम्ब्य दोषाणामातुरस्य च ।
पुनः प्रयोज्य भैषज्यं सर्व्वशो हि विवर्ज्जयेत् ॥
निर्हृते वापि जीर्णे वा दोषनिर्हरणे बुधः ।
भेषजञ्न्यम् प्रयुञ्जीत प्रार्थयत् सिद्धिमुत्तमाम् ॥
अपक्वं वमनं दोषात् पच्यमानं विरेचनम् ।
निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ॥
पीते प्रस्रंसने दोषा निर्हरन्त्यजराकृते ।
शमिते चौषधे धीरः पाययेतातुरं पुनः ॥
दीप्ताग्निं बहुदोषञ्च दृढञ्च द्विगुणं नरम् ।

दुःखं तदहर्भुक्तो श्वोभूयः पाययेत तत् ॥
दुर्बलो बहुदोषश्च दोषपाकेन यो नरः ।
विरिच्यते सरैर्भोज्यैर्भूयस्तमनुसारयेत् ॥
वमनैश्च विरेकैश्च विशुद्धस्य प्रमाणतः ।
भोजनान्तरपानाभ्यां दोषशेषं शमं नयेत् ॥
दुर्बलं शोधितं पूर्वमल्पदोषस्य मानवम् ।
अपरिज्ञात कोष्ठञ्च पाययेतौषधं मृदु ॥
श्रेयो मृद्वसकृत् पीतमल्पबाधं विरेचनम् ।
नचातितीक्ष्णं यत्क्षिप्रं जनयेत् प्राणसंशयम् ॥
दुर्बलोऽपि महादोषो विरेच्यो बहुशोऽल्पशः ।
मृदुभिर्भेषजैर्दोषान् हन्युर्ह्येनमनिर्हृताः ॥
यस्योर्द्ध्वं कफसंसृष्टं पीतं यात्यनुलोमिकम् ।
वमितं कवलैः शुद्धं लङ्घितं पाययेत तम् ॥
निबद्धेऽल्पे चिराद्दोषे स्रवत्युष्णं पिबेज्जलम् ।
तेनाध्मानं सहृट् छर्दिर्विबन्धश्चैव शाम्यति ॥
भेषजं दोषरुद्धं चेन्नोर्द्ध्वं नाधः प्रवर्त्तते ।
सोद्गारं साङ्गशूलं वा स्वेदं तत्रावचारयेत् ॥
सुविरिक्तस्तु सोद्गारमाश्वेवौषधमुल्लिखेत् ।
अति प्रवर्त्तनं जीर्णे सुशीते स्तम्भयेद्भिषक् ॥
कदाचित् श्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम् ।
जीर्णे श्लेष्मणि सायाह्ने रात्रौ वा तत्प्रवर्त्तते ॥
रूक्षानाहारयोर्जीर्णे विष्टभ्योर्द्ध्वं गतेऽपि वा ।
वायुना भेषजे त्वन्यत् सस्नेहलवणं स्मृतम् ॥
हृन्मोहस्तम्भमूर्च्छायाः स्युर्जीर्यति हि भेषजे ।

पित्तम्, स्वादुशीतञ्च भेषजं तत्र शस्यते ।
लालाहल्लासविष्टम्भशीत हर्षाः कफावृते ॥
भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितम् ।
सुस्निग्धं क्रूरकोष्ठञ्च लङ्घयेदविरेचितम् ॥
तेनास्य रूक्षः श्लेष्मा संसर्गेणोपशाम्यति ।
रूक्षवह्निलक्रूरकोष्ठ व्यायाम शालिनाम् ॥
दीप्ताग्नीनाञ्च भैषज्यमविरेच्यैव जीर्यति ।
तेभ्यो वस्तिं पुरा दत्त्वा पश्चाद्‌दद्याद्विरेचनम् ॥
वस्ति प्रवर्तितं दोषं हरेत् शीघ्रं विरेचनम् ।
रूक्षाशनाः कर्मनित्या ये नरा दीप्त पावकाः ॥
तेषां दोषाः क्षयं यान्ति कर्मवातापाग्निभिः ।
विरुद्धाध्यशनाजीर्णं दोषानपि सहन्ति ते ॥
स्नेहा स्ते मारुता दृष्ट्वा नाप्याधीतान्विशोधयेत् ।
एवं ज्ञात्वा विधिं धीरो देश काल प्रमाणवित् ॥
विरेचनं विरेच्येभ्यः प्रयच्छन्नापराध्यति ।
विभ्रंशो विषवद्यस्य सम्यग्योगो यथामृतम् ॥
कालेष्व वश्यं पेयञ्च तस्माद्यत्नात्प्रयोजयेत् ।
द्रव्यप्रमाणन्तु यदुक्तमस्मिन् मध्येषु तत्कोष्ठवयोबलेषु ॥
तन्मूलमालम्ब्य भवेद्विकल्पं तेषां विकल्पोऽभ्यधिकोनभावः ।
षड्‌ध्वंसुस्तुमरीचिः स्यात् षण्मरीचस्तुसर्षपः ॥
अष्टौ ते सर्षपा रक्तास्तण्डुलश्चापि तद्द्वयम् ।
धान्यमाषोभवेदेको धान्यमाषद्वयं यवः ॥
अण्डिकास्ते तु चत्वार स्तायतस्तु माषकः ।
हेम एव च संख्यातो धानकः कर्षं एव च ॥

शाणस्तु धानकास्तिस्र स्तौ द्वौ कर्षार्धमुच्यते ।
दुःखमोधानकाःषट्ताः कोलं वटकमेव च ॥
विद्यात् द्वौ दुःखमो कर्षं सुवर्णश्चाक्षमेव च ।
विडालपदकन्तच्च पिचुम्पाणितलन्तथा ॥
तिन्दुकञ्च विजानीयात्कवलग्रहमेव च ।
द्वे सुवर्णे पलार्धं स्याच्छुक्तिरष्टमिका तथा ॥
द्वे पलार्धे पलं मुष्टिः प्रकुञ्चं बिल्वमेव च ।
आम्रं षोडशिकाचैव द्वे पले प्रसृतम्विदुः ॥
अष्टमानन्तु विज्ञेयङ्कुडवौ द्वौ तु मानिका ।
पलञ्चतुर्गुणं विद्यादञ्जलिङ्कुडवन्तथा ॥
चत्वारः कुडवाःप्रस्थ श्चतुष्प्रस्थमथाढकम् ।
पात्रं तदेव विज्ञेयं कंसः प्रस्थाष्टकन्तथा ॥
कंसश्चतुर्गुणोद्रोणः सर्मणनल्वनश्च तत् ।
स एव कलशःख्यातो घटन्तन्मानमेव च ॥
द्रोणं च द्विगुणं शूर्पं विज्ञेयः कुम्भ एव च ।
गोणी शूर्पद्वयं विद्यात् खारीं भारीन्तथैव च ॥
द्वात्रिंशतं विजानीयाद्वाहं शूर्पाणि बुद्धिमान् ।
शुष्कमेयेष्विदंमानमेवमादि प्रकीर्तितम् ॥
द्विगुणं तद्द्रवेष्विष्टं तथा सद्योद्धृतेषु च ।
यद्धि मानन्तुलाकार्यं तत्तनेन प्रयोजयेत् ॥
द्रवकार्येऽपि चानुक्ते सर्वत्र सलिलं स्मृतम् ।
यतश्च पादनिर्देश श्चतुर्भाग स्ततश्च सः ॥
जलस्नेहौषधानान्तु प्रमाणं तत्र नेरितम् ।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम् ॥

स्नेहपाकस्त्रिधा ज्ञेयो मृदुर्मध्यः खरस्तथा ॥
तुल्ये कल्केन निर्यासे वर्त्तमाने खरः स्मृतः ।
खरोऽभ्यङ्गे स्मृतः पाको मृदुर्नस्तः क्रियासु च ॥
मध्यपाकन्तु पानार्थे वस्तौ च विनियोजयेत् ।

तत्र श्लोकौ

कल्पार्थः शोधने सप्त पृथग्घेतुः प्रवर्तने ।
देशादीनि फलादीनां गुणायोग शतानि षट् ॥
विकल्प हेतुर्नामानि तीक्ष्ण मध्याल्प लक्षणम् ।
विधिश्चावस्थिकः कल्पे द्रव्यमानञ्च दर्शितम् ॥

इति कल्पस्थानं समाप्तम् ॥

---

## अथ सिद्धिस्थानम् ।

अथातः कल्पना सिद्धिं व्याख्यास्यामः ।

### अथ प्रथमोऽध्याय ।

इति ह स्माह भगवानात्रेयः ।

का कल्पना पञ्चसु कर्मसूक्ता क्रमश्च कः किञ्च कृताकृतेषु ।
लिङ्गन्तथैवातिकृतेषु सङ्ख्या का किं ते गुणाः केषु च कात्र वर्त्ति
इत्यग्निवेशो भिषजां वरिष्ठं पप्रच्छ तस्मै स च सर्वमाह ।
तत्राहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य उक्तः ।
नातः परं स्नेहनमादिशन्ति सात्मीभवेत्सप्तदिनात्परन्तु ॥
स्नेहानिलं हन्ति मृदूकरोति देहं मलानां विनिहन्ति सङ्गम्॥
स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं स्वेदस्तु दोषं नयति द्रवत्वम् ।

ग्राम्यौदकानूपरसैः समांसैरुत्क्लेशनीयः पयसा च वम्यः ।
रसैस्तथा जाङ्गलजैः स यूषैः स्निग्धः कफावृद्धिकरैर्विरेच्यः ॥
श्लेष्मोत्तरच्छर्दिकरं प्रसृष्टं विरिच्यते मन्दकफस्तु सम्यक् ।
अधः कफेऽल्पे गमनं विगच्छेद्धरेच्च तं वृद्धकफे तथोर्द्ध्वम् ॥
स्निग्धस्य च स्विन्नवतश्च कार्यं विरेचनं योग्यतमं ततश्च ।
पेयां विलेपीमकृतं कृतं च यूषं रसं त्रिर्द्विरथैकशश्च ॥
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः ।
यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण ॥
महान् स्थिरः सर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तरग्निः ।
जघन्यमध्यप्रवरे तु चत्वार इष्टा वमने षडष्टौ ॥
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ।
पित्तार्धमिष्टं वमनं तथार्धं प्रस्थात् कफान्तं च विरेकमाहुः ॥
द्वित्रान् सविट्कानपनीय वेगान्देयं विरेकं वमने तु पित्तम् ।
क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स तु स्यात् ।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तथा लघुत्वेऽपि च वक्ष्यमाणे ।
दुश्छर्दिते स्फोटककोठकण्डू हृत्खाविशुद्धिर्गुरुगात्रता च ॥
तृण्मोहमूर्च्छानिलकोप निद्राबलादिहानिर्वमनेऽति च स्यात् ।
स्रोतोविशुद्धीन्द्रियसंप्रसादौ लघुत्वमूर्जोऽग्निरनामयत्वम् ॥
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण ।
स्यात् श्लेष्मपित्तानिलसंप्रकोपः सादस्तथाग्नेर्गुरुता प्रतिश्या ।
तन्द्रा तथा छर्दिररोचकश्च वातानुलोम्यं न च दुर्विरिक्ते ।
कफास्रपित्तक्षयजाऽनिलोत्थाः सुप्त्यङ्गमर्दक्लमवेपनाद्याः ।
निद्राबलाभावतमः प्रलापः सोन्माद हिक्काश्च विरेचितेऽपि ॥
संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद्वा ।

दद्यात्त्र्यहाच्चापि बुभुक्षिताय तैलाक्तगात्राय ततो निरूहम् ॥
प्रत्यागते मांसरसेन भोज्यः सायं च भुक्तोऽल्पमतोऽनुवास्यः ।
शीते वसन्ते च दिवानुवास्यो रात्रौ शरद्ग्रीष्मघनागमेषु ।
तानेव दोषान् परिरक्षता ये स्नेहस्य पाने परिकीर्त्तिताः प्राक् ।
प्रत्यागते चाप्युषितस्य काले भोज्यं दिवा सायमतः परन्तु
त्र्यहे त्र्यहे वाप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनं वा ।
एकं तथा त्रीन् कफजे विकारे पित्तात्मके पञ्च तु सप्त वापि ।
वातेन चैकादश वा पुनर्वा बस्तीन युग्मान् कुशलो विदध्यात्
नरो विरिक्तस्तु निरूहदानं विवर्जयेत् सप्तदिनान्यवश्यम् ।
शुद्धो निरूहेण विरेचनं च तद्धान्त शून्यं विकसेच्छरीरम् ।
बस्तिर्वयःस्थापयिता सुखायुर्बलाग्निमेधास्वरवर्णकृच्च ।
सर्वार्थकारो शिशुवृद्धयूनां निरत्ययः सर्वगदापहश्च ।
विट्पित्तमूत्रानिलपित्तकर्षी स्थिरत्वकृत् शुक्रसुतप्रदश्च ॥
विष्वक् स्थितं दोषचयं निरस्य सर्वान्विदाहान् शमयेन्निरूहः
देहे निरूहेण विशुद्धमार्गे संस्नेहनं वर्णबलप्रदश्च ।
नान्वासनात्किञ्चिदिहास्ति कर्म परं विशेषेण समीरणार्त्ते ॥
स्नेहेन रौक्ष्यं लघुतां गुरुत्वादौष्ण्याच्च शैत्यं पवनस्य हत्वा
तैलं ददत्याशु मनः प्रसादं स्नेहं बलं वर्णमथाग्निपुष्टिम् ।
मूले निषिक्तो हि यथा द्रुमः स्यान्नीलच्छदः कोमलपल्लवाग्र्यः ॥
काले महान् पुष्पबलप्रदश्च तथा नरः स्यादनुवासनेन ।
स्तब्धाश्च ये सङ्कुचिताश्च येऽपि ये पङ्गवो येऽपि च रुग्णभग्नाः
येषाञ्च शाखासु चरन्ति वाताः शस्तो विशेषेण च तेषु बस्तिः
आध्मापने विग्रथिते पुरीषे शूले च भक्तानभिनन्दने च ॥
एवं प्रकाराश्च भवन्ति कुक्षौ ये चामयास्तेषु च बस्तिरिष्टः ।

याश्च स्त्रियो वातकृतोपसर्गा गर्भं न गृह्णन्ति नृभिः समेताः
क्षीणेन्द्रिया ये च नराः कृशाश्च वस्तिः प्रशस्तः परमश्च तेषु ।
उष्णाभिभूतेषु वदन्ति शीताः शीताभिभूतेषु तथा सुखोष्णान्
तत्प्रत्यनीकौषधसंप्रयुक्तान् सर्वत्र वस्तीन् प्रविभज्य युक्त्यात्
न बृंहणीयान्विदधीत वस्तीन्विशोधनीयेषु गदेषु वैद्यः ॥
कुष्ठप्रमेहादिषु मेदुरेषु नरेषु ये चापि विशोधनीयाः ।
क्षीणक्षतानाञ्च विशोधनीया न शोषिणां नोऽप्यदुर्बलानाम् ॥
न मूर्च्छितानां न विशोधितानां येषाञ्च दोषेषु निबद्धमायुः
शाखागताः कोष्ठगताश्च रोगा मर्मोर्ध्वं सर्वावयवाङ्गजाश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति
विण्मूत्र पित्तादिमलाशयानां विक्षेपसंहारकरः स यस्मात्
तस्यातिवृद्धस्य शमाय नान्यद्वस्ते र्ऋते भेषजमस्ति किञ्चित्
तस्माच्चिकित्सार्द्धमिति ब्रुवन्ति सर्वां चिकित्सामपि वस्तिमेके
नाभिप्रदेशं कटिपार्श्वं कुक्षिं गत्वा शकृद्दोषचयं विपोत्य ॥
संस्नेह्य कायं सपुरीषदोषः सम्यक् सुखं नेति च यः सवस्तिः
प्रसृष्टविण्मूत्र समीरणत्वं रुच्यग्नि वृद्ध्यामय लाघवानि ॥
रोगोपशान्तिः प्रकृतिस्थता च वलञ्च तत्स्यात्सु निरूढलिङ्गम्
स्याद्रुक्छिरो हृद्गुदकुक्षि लिङ्गे शोफः प्रतिश्यायविकर्त्तिका च
हृल्लासिका मारुतमूत्रसङ्गः श्वासो न सम्यक् च निरूहितस्य
लिङ्गं यदेवाभि विरेचितस्य भवेत्तदेवाति निरूहितस्य ॥
प्रत्येत्य सक्तमसकञ्च तैलं रक्तादि बुद्धीन्द्रिय संप्रसादः ।
स्वप्नानुवृत्तिर्लघुता बलञ्च सृष्टाश्च वेगाः स्वनुवासिते स्युः ॥
अधः शरीरोदर बाहु पृष्ठपार्श्वेषु रुग्रूक्षखरञ्च गात्रम् ।
ग्रहश्च विण्मूत्र समीरणानां असम्यगेतान्यनुवासितस्य ॥



11.

तन्द्रासमोहक्लमसादमूर्च्छा विकर्त्तिका चाप्यनुवासितस्य ।
यस्येह यामाननुवर्त्तते त्रीन् स्नेहो नरः स्यात् स विशुद्धदेहः ॥
आश्वागतोऽन्यस्तु पुनर्विधेयः स्नेहो न संस्नेहयते ह्यतिष्ठन्
त्रिंशन्मताः कर्म्मसु वस्तयो हि कालस्ततोऽर्द्धेन ततश्च योगः
सान्वासना द्वादश वै निरूहाः प्राक् स्नेह एकः परतश्च पञ्च
काले त्रयोऽन्तःपुरतस्तथैकः स्नेहा निरूहान्तरिताश्च षट् स्युः
योगे निरूहास्त्रय एव दोषाः स्नेहाश्च पञ्चैव परादिमध्याः
त्रीन् पञ्च वाऽथ चतुरोऽथ षड्वा वाताधिकेभ्यस्त्वनुवासनीयान्
स्नेहान् प्रदायाशु भिषग्विदध्यात्ततो विशुद्धर्थं मतो निरूहं
विशुद्धकायस्य ततः क्रमेण स्निग्धं तनुस्वेदितमुत्तमाङ्गम् ।
विरेचयेत्त्रिर्द्विरथैकशो वा बलं समीक्ष्य त्रिविधं मलानां ॥
उरः शिरो लाघवमिन्द्रियाच्छ्यं स्रोतो विशुद्धिश्च भवेद्विशुद्धे
गलोपलेपः शिरसो गुरुत्वं निष्ठीवनं चाप्यथ दुर्विरिक्ते ॥
शिरोऽक्षि शङ्खश्रवणार्त्तितोदादत्यर्थशुद्धस्तिमिरं च पश्येत्
स्यात्तर्पणं तत्र मृदु द्रवञ्च स्निग्धस्य तीक्ष्णन्तु पुनर्न योगे ॥
इत्यातुरस्वस्य सुखप्रयोगे बलायुषोर्वृद्धिकृदामयघ्नः ।
कालस्तु वस्त्यादिषु याति यावांस्तावान् भवेद्द्विः परिहारकालः
अत्यासनं स्थानवचांसि यानं स्वप्नं दिवा मैथुनवेगरोधान् ।
शीतोपचारातपशोकरोषांस्त्यजेदकालाहितभोजनञ्च ॥
बद्धे प्रणीते विषमे च नेत्रे मार्गे तथार्शःकफविड्विबन्धे
न याति वस्तिर्न सुखं निरेति दोषावृतोऽल्पो यदि वाल्पवीर्यः
प्राप्ते तु वर्चोऽनिलमूत्रवेगे वाते विवृद्धेऽल्पबले गुदे वा ।
अत्युष्णतीक्ष्णश्च मृदौ प्रकोष्ठे प्रणीतमात्रः पुनरेति वस्तिः ॥
मेदः कफाभ्यामनिलो विरुद्धः शूलाङ्गसुप्तिश्वयथून् करोति ।

से हन्तु युञ्जन्नमुधस्य तस्य सम्बर्धयत्येव हितान् विकारान् ॥
योगास्तथान्येऽप्यवितर्क्यमाणाः परस्परेणावगृहीतमार्गाः।
सन्दूषिता धातुभिरेव चान्यैः स्वैर्भेषजैर्नोपशमं व्रजन्ति ॥
सर्वञ्च रोगप्रशमाय कर्म्म हीनातिमात्रं विपरीतकालम्।
मिथ्योपचारश्च नरं विकारं शान्तिं नयेत्पथ्यमपि प्रयुक्तमिति

तत्र श्लोकः।

प्रश्नानिमान्द्वादश पञ्चकर्मा-
ण्युद्दिश्य सिद्धाविह कल्पनायाम्।
प्रजा हितार्थं भगवान् महार्थान्
सम्यक् जगादर्षिवरोऽग्निपुत्रः ॥ इति।

---

## अथ द्वितीयोऽध्यायः।

अथातः पञ्चकर्मीयां सिद्धिं व्याख्यास्यामः।
येषां यस्मात्पञ्च कर्माण्यग्निवेश न कारयेत्।
येषां च कारयेद्यानि तत्सर्वं संप्रवक्ष्यते ॥
चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च।
सद्राजभूपतिद्वेष्टा तद्द्विष्टः शोकपीड़ितः ॥
यादृच्छिको मुमूर्षुश्च विहीनः करणैश्च यः।
वैरी वैद्यविदग्धश्च श्रद्धाहीनः सुशङ्कितः ॥
भिषजामविधेयश्च नक्रम्या हि भिषग्विदा।
एतानुपचरन् यो बहून् दोषान् अवाप्नुयात्।

एभ्योऽन्ये समुपक्रम्या नराः सर्वैरुपक्रमैः ॥
अवस्थां प्रविभज्यैषां वर्ज्यं कार्यं च वक्ष्यते ।

अच्छर्दनीयास्तावत् क्षतक्षीणाति स्थूलकृशबालवृद्ध-दुर्बलश्रान्तपिपासितक्षुधितकर्मभाराध्वहतोपवास मैथुनाध्ययन व्यवायव्यायामचिन्ता प्रसक्तक्षामगर्भिणी सुकुमार-संवृतकोष्ठदुश्छर्दनोर्ध्वरक्तपित्त प्रसक्त छर्दिनूर्ध्ववाता स्थापितानुवासित हृद्रोगो दावर्त्तमूत्राघातः प्लीहगुल्मोदराष्ठीला स्वरोपघात तिमिर शिरः शङ्खकर्णाक्षिपार्श्वशूलार्ताः । तत्र क्षतस्य च भूयः क्षणनात् प्रवृत्तिः स्यात् क्षीणाति स्थूलकृश बालवृद्ध दुर्बलानामौषध बलासह त्वात् प्राणोपरोधः श्रान्तपिपासितक्षुधितानां च तद्वत् कर्म भाराध्वहतोपमैथुनाध्ययन व्यायामचिन्ता प्रसक्तक्षामाणां रौक्ष्याद्वातरक्तच्छेदक्षतक्षयभयं गर्भिण्या गर्भव्यापदामगर्भभ्रंशाच्च दारुणा रोगप्राप्तिः । सुकुमारस्य हृदयविकर्षणादूर्ध्वं अधो वा रुधिरप्रवृत्तिः संवृतकोष्ठदुश्छर्दनयोरतिमात्र प्रवाहनाद्दोषाः समुत्क्लिष्टाः कोष्ठे जनयन्त्यन्तर्विसर्पं स्तम्भं जाड्यं वैचित्यं मरणं वा ऊर्ध्वरक्तपित्तिन मुदानमुत्क्षिप्य प्राणान् हरेद्रक्तं चाति प्रवर्तयेत् । प्रसक्तच्छर्दिषस्तद्वदूर्ध्व वाता स्थापितानुवासितानामूर्ध्वं वातादिप्रवृत्तिः हृद्रोगिणो हृदयोपरोधः उदावर्तिनां घोरतर उदावर्तः स्यात् । शीघ्रतरहन्ता मूत्रघातादिभिरार्तानां तीव्रतरः शूलप्रादुर्भावः तस्मादेतेन वम्याः सर्वं पित्ते खल्वेते विषगरविरुद्धाभ्यवहारामकृतेषु प्रतिसिद्धात् शीघ्रतरकारित्वादेषां शेषास्तु वम्याः पीनस-कुष्ठज्वरराज यक्ष्मकासश्वास गलगण्डश्लीपदमेह मन्दाग्नि-

विरुद्धजीर्णान्न विसूचिकालसक विषपीतदष्टदिग्धविद्धाः शोणितपित्त प्रसेक हृल्लासारोचक विपाका पथ्यापस्मारो-न्मादातिसार शोफपाण्डुरोगमुखपाकदुष्टस्तन्यादयः श्लेष्म-व्याधयो विशेषेण रोगाध्यायोक्ताश्चैतेषु हि वमनं प्रधानतम-मित्युक्तं केदारसे तु भेदशाल्यादि दोषविनाशवत्। अवि-रेच्यास्तु सुभगक्षतगुदमुक्तनालाधोभाग रक्तपित्तविलङ्घित-दुर्बलेन्द्रियाल्पाग्निनिरूढ़कासादिव्यग्राजीर्णि नवज्वरमदा-त्ययिता ध्मानमल्यार्दिताभिहतातिस्निग्धरूक्षदारुणकोष्ठाः क्षतादयश्च गर्भिण्यन्ताः तत्र सुभगस्य सुकुमारदोषः स्यात्। क्षतगुदस्य क्षते गुदे प्राणोपरोधकरीं रुजं जनयेत् मुक्तनाड़मतिप्रवृत्त्या हन्यात्। अधोभाग रक्तपित्तिना तद्व-द्विलङ्घित दुर्बलेन्द्रियाऽल्पाग्नि निरूढ़ा औषधवेगं न सहेरन्। कासादिव्यग्र मनसो न प्रवर्त्तते कृच्छ्रेण वा प्रवर्त्तमान-मयोगदोषान् कुर्य्यात्। अजीर्णिन आमदोषः स्यात् नव-ज्वरस्या विपक्वान् दोषान् निर्हरेत् वातमेव च कोपयेत्। मदात्ययितस्य मद्यक्षीणे देहे वायुः प्राणोपरोधं कुर्य्यात्। आध्मातस्याश्मतो वा पुरीषकोष्ठे निचितो वायुर्विसर्पन् सहसानाहं तीव्रतरं मरणाय न जयेत् स शल्याभिहतायोः क्षते वायुराश्रितो जीवितं हिंस्यात्। अतिस्निग्धस्याति योगभयं भवेत्। रूक्षस्य वायुरग्रहं कुर्य्यात्। दारुणकोष्ठस्य विरेचनोद्धता दोषहृच्छूलपर्वभेदानाह छर्दि मूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः। क्षतादीनां गर्भिण्यन्तानां छर्दनो-क्तो दोषः स्यात्। तस्मादेते न विरेच्याः।

कुष्ठज्वरमेहोर्द्ध रक्तपित्तभगन्दरोदरार्शो वध्नशोहगुल्मा-

र्बुदगलगण्डार्शांसि विसूचिका अलसकमूत्राघातक्रिमिकोष्ठ-
विसर्पपाण्डुरोगशिरःपार्श्वशूलोदावर्त्तनेत्रास्य हृद्रोग-
व्यङ्गनीलिका अवर्णहलीमकश्वासकासकामलापस्मारोन्मा-
दवातरक्तयोनिरेतोदोषतैमिर्यारोचकाविपाकच्छर्दि
श्वयथुपचो विस्फोटकादयः पित्तव्याधयो विशेषेण रोगा-
ध्यायोक्ताश्च। एतेषु हि विरेचनं प्रधानतममित्युक्तमग्न्युप-
गमेऽग्निगुणवत् अनास्थाप्या। अजीर्णिति स्निग्धपीतस्नेहोत्-
क्लिष्टदोषाल्पाग्नि यानक्लान्तादि दुर्बलक्षुत्तृष्णाश्रमार्त्ताति
कृशभुक्तभक्तपीतोदकवमितविरिक्तक्षतनस्तःकर्म्मक्रुद्धभीत-
मत्तमूर्च्छितप्रसक्तच्छर्दिनिष्ठीविकाश्वासकासहिक्का बद्ध-
छिद्रोदकोदराध्माताऽलसकविसूचिकामप्रजामातिसारमधु
मेहकुष्ठाः। तत्राजीर्णिति स्निग्धपीतस्नेहानां दोषोदरं
मूर्च्छा श्वयथुर्वा स्यात् उत्क्लिष्टदोषमन्दाग्न्योररोचकस्तीव्रः
यानक्लान्तस्य क्षोभमापन्नो वस्तिराशु देहं शोषयेत्। अति
दुर्बलक्षुत्तृष्णाश्रमार्त्तानां पूर्वोक्तो दोषः स्यात्। अतिकृशस्य
कार्श्यं पुनर्जनयेत् पीतोदकभुक्तभक्ताभ्यामुत्क्लिश्योर्द्ध्वमधो वा
क्षिप्रं वस्तिर्घोरान्विकारान् जनयेत्। वमिविरिक्तयोस्तु
रूक्षशरीरं निरूहः क्षारं क्षार इव दहेत् क्षतनस्तःकर्म्मणा
विभ्रंशं भृशसंरुद्धस्रोतसः कुर्यात् क्रुद्धभीतयोर्वस्तिरूर्द्ध्वमुप-
प्लवते। मत्तमूर्च्छितयोर्भ्रंशं विचालितायां संज्ञायां चित्तोप-
घाताद्व्यापद्यात् प्रसक्तच्छर्दि निष्ठीविकाश्वासकासहिक्का-
नामूर्द्ध्वीभूतो वायुरूर्द्ध्वं वस्तिं नयेत् बद्धछिद्रोदकोदराध्मा-
तानां भृशतरमाध्माप्य वस्तिः प्राणान् हिंस्यात्। अलसक-
विसूचिकामप्रजातिसारिणामामकृतो दोषः स्यात्। मधु

मेहकुष्ठिनो व्याधेः पुनर्वृद्धिः तस्मादेते नास्थाप्याः शेषास्त्वा-
स्थाप्याः। सर्वाङ्गैकाङ्गकुक्षिरोगवातवर्चोमूत्रशुक्रसङ्गबल-
वर्णमांसरेतःक्षयदोषाध्मानसुप्ति क्रिमिकोष्ठोदावर्त शुद्धाति-
सारपर्वाभितापप्लीह गुल्महृद्रोगभगन्दरोन्मादज्वरब्रध्न
शिरः कर्णहृदयपार्श्वपृष्ठकटीग्रहवेपनाक्षेपकगौरवाति
लाघवरजःक्षयार्त्तव विषमाग्निस्फिग्जानुजङ्घोरुगुल्फ-
पार्ष्णि प्रपदयोनि बाह्वङ्गुलि तलांसदन्तपार्श्वास्थि शूल-
शोषस्तम्भान्त्रकूजनपरि कर्तिकाल्पाल्प सशब्दोग्रगन्धोत्था-
नादयः वातव्याधयो विशेषेण रोगाध्यायोक्ताश्च। एते ह्यास्था-
पनं प्रधानतममित्युक्तं वनस्पति मूलच्छेदवत् य एवास्था-
स्थाप्यास्त एवानुवास्याः। विशेषतस्त्वभुक्तभक्तनवज्वरपाण्डु-
रोगकासकामला प्रमेहार्शः प्रतिश्यायारोचकमन्दाग्नि
दुर्बलप्लीहकफोदरोरुस्तम्भवर्चोभेदविषगरपीतकफाभिष्य-
न्दगुरुकोष्ठश्लीपदगलगण्डापचि क्रिमिकोष्ठिनः। तत्राभुक्त-
भक्तस्यानावृतमार्गत्वादूर्द्धमति वर्तन्ते स्नेहो नवज्वरपाण्डु-
रोगकामला प्रमेहिणां दोषानुत्क्लेश्योदरं जनयेदर्शसः
सर्शांस्यभिष्यन्द्याध्मानमरोचकार्तस्यान्न वृद्धिं पुनर्हन्यात्।
मन्दाग्नि दुर्बलयोर्मन्दतरमग्निं कुर्यात् प्रतिश्याय श्लीहादि-
मतां भृशं चोत्क्लिष्टदोषाणां भूय एव दोषं वर्द्धयेत्तस्मा-
देतेनानुवास्याः य एवास्थाप्यास्त एवानुवास्याः। विशेषतस्तु
रूक्षा तीक्ष्णादयः केवलवातरोगा एतेषु ह्यनुवासनं प्रधान-
तममित्युक्तं वनस्पति मूलच्छेदनवत् मूले द्रुमप्रसेकवत्
शिरो विरेचनार्हाः अजीर्णि भुक्तभक्तपीतपीतस्नेहमद्यतो-
यपातुकामः स्नातशिरः स्नातुकामः क्षुत्तृष्णा श्रमार्तमत्तमूर्छि-

तमस्य दण्डहत व्यवायव्यायाम क्लान्तनवज्वर शोकाभितप्त
विरिक्तानुवासित । गर्भिणी नव प्रतिश्यायार्ताः अनृतुदुर्दि-
नश्च तत्राजीर्णि भुक्त भक्तयोर्दोष ऊर्द्ध्ववाहानि स्रोतांस्याहृत्य
कास छर्दिप्रतिश्यायान् जनयेत् । पीतस्नेह मद्यतोयानां
स्नेहे च पिबतां मुखनासास्रावाक्ष्युपदेह तिमिर शिरोरो-
गान् स्नातशिरसः स्नतेश्च स्नानाच्छिरसः प्रतिश्यायं क्षुधार्तस्य
वात प्रकोपं तृष्णार्तस्य पुनस्तृष्णाभिवृद्धिं मुखशोषञ्च श्वासार्त-
मत्तमूर्च्छितानामास्थापनोक्तं दोषं शस्त्रदण्डहतस्य तीव्रतरां
रुजं व्यवाय स्नानव्यायाम क्लान्तानां शिरः स्कन्धनेत्रोरः
पीडनं नवज्वर शोकाभितप्तयोरूष्मा नेत्रनाडीभिरनुसृत्य
तिमिरं ज्वरवृद्धिञ्च विरिक्तस्य वायुरिन्द्रियोपघातमनुवासि-
तस्य कफः शिरोगुरुत्व कण्डू क्रिमिदोषान् अन्तर्वत्न्या गर्भ-
स्तनयेत्सकाणः कुणिः पक्षहतः पीठसर्पी वा जायेत । नवप्रति-
श्यायस्य स्रोतांसि व्यापादयेदनृतुदुर्दिनशीत दोषान् पूति
नासिका शिरोदोषश्च स्यात् । तस्मादेते न शिरोविरेचनार्हाः ।
शेषा अर्हाः शिरोदन्त मन्यागलहनुग्रह पीनस गलशुण्डि-
का शालूक शुक्र तिमिरवर्त्म रोगव्यङ्गोपजिह्विकार्द्धभेद
कग्रीवा स्कन्धांसास्यनासिका कर्णाक्षिमूर्द्ध कपाल रोगार्दि
तापतन्त्रक गलगण्डदन्तशूल हर्षचालाक्षि राज्यर्बुदस्वर
भेद वाग्ग्रहगद्गदय ऊर्द्ध्वजत्रुगता वातादि विकाराः परि-
पक्वास्तत्र जत्रूत्तमाङ्गमनु प्रविश्य मुञ्जादिवेषीकामसक्तं दोषं
विकार करमपकर्षति । प्रावृट् शरद्वसन्ताभावे त्वितरेषु
रोगेषु नावनं कुर्याद् ग्रीष्मे पूर्वाह्णे शीते मध्याह्ने वर्षा स्वदुर्दिने
चेति भवति चात्र इति पञ्चविधं कर्म विस्तरेण निदर्शितम् ।

येभ्यो यच्च हितं यस्मात्कर्मेभ्यश्च गर्हितम्।
सर्वैकाल्येन निर्दिष्टं तत्राभिनिविशेतधीः॥
स्वार्थमपत्र वैद्येन तर्क्यं बुद्धिमता भवेत्।
उत्पद्येत हि सावस्था देशकालबलम्प्रति॥
यस्यां कार्यमकार्यं स्यात् कर्मकार्यञ्च वर्जयेत्।
छर्दिहृद्रोग गुल्मार्ते वमनं स्वे चिकित्सिते॥
अवस्थां प्राप्य निर्दिष्टं कुष्ठिनाम्वस्ति कर्मच।
तस्मात्सत्यपि निर्दिष्टे कुर्यादूह्य स्वयन्धिया॥
विना वितर्काया सिद्धिर्यदृच्छा सिद्धिरेव॥ इति।

---

अथ तृतीयोऽध्यायः।

अथातो वस्ति सूत्रीयां सिद्धिं व्याख्यास्यामः।

कृतक्षणं शैलवरस्य रम्ये स्थितं धनेशायनकस्य पार्श्वे।
महर्षि संघैर्वृतमग्निवेशः पुनर्वसुम्प्राञ्जलिरन्वपृच्छत्॥
वस्तिर्नरेभ्यः किमपेक्ष्य दत्तःस्यात्सिद्धि मत्कं सयमस्य नेत्रम्।
कीदृक् प्रमाणाकृति किङ्गुणञ्च केषाञ्च किं योनि गुणाश्च वस्तिः॥
निरूहकर्म प्रणिधानमात्राः के हस्य वा काः शयनेविधिः कः।
के वस्तयः केषु मता इतीदं श्रुत्वोत्तरं प्राह वचो महर्षिः॥
अपेक्ष्य देशौषध देशकालसात्म्याग्नि सत्त्वौ कवयो बलानि।
वस्तिः प्रयुक्तो नियतं गुणाय स्यात् सर्वकर्माणि च सिद्धिमन्ति
सुवर्णरूप्यत्रपु ताम्ररीति कांस्यास्थि शस्त्रद्रुमवेणुदन्तैः।
नेत्राणि शृङ्गैर्मणिभिर्नलैश्च त्रिकर्णिकानि प्रवदन्ति तज्ज्ञाः॥
षड् द्वादशाष्टाङ्गुलसम्मितानि षड्विंशति द्वादशवर्षजानाम्।

स्वङ्गुष्ठकर्कन्धुसतीनवा हि छिद्राणि वर्त्त्या पिहितानि चैव ॥
यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुलिकामुखानि
स्यात्कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वर्त्तिनिबन्धने द्वे ।
जारद्गवो माहिषहारिणौ वा स्याच्छौकरो बस्तिरजस्य वापि ॥
दृढस्तनुर्नष्टशिरो विगन्धः कषायरक्तः सुमृदुः सुशुद्धः ।
नृणां वयोवीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ।
बस्तेरभावे प्लवजो गलो वा स्यादङ्कपादः सुघनः पटो वा ॥
आस्थापनार्हं पुरुषं विधिज्ञः समीक्ष्य पुण्येऽहनि शुक्लपक्षे ।
प्रशस्तनक्षत्रमुहूर्तयोगे जीर्णान्नमेकाग्रमुपक्रमेत ।
बलां गुडूचीं त्रिफलां सरास्नां द्वे पञ्चमूले च पलोन्मितानि
अष्टौ फलान्यर्द्धतुलां च मांसाच्छागान् पचेदप्सु चतुर्थशेषम्
पूतं यवानीफलबिल्वकुष्ठवचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रयुतैः स तैलैर्युतं सुखोष्णं तु पिचुप्रमाणैः ॥
गुडात्पलं द्विप्रसृतान्तु मात्रां स्नेहस्य युक्त्या मधुसैन्धवादि
प्रक्षिप्य बस्तौ मथितं खजेन सुगन्धमुच्छ्राय्य च निर्वलीकं
अङ्गुष्ठमध्येन मुखं निधाय नेत्राग्रसंस्थामपनीय वर्त्तिम् ।
तैलाक्तगात्रं कृतमूत्रविट्कं नातिक्षुधार्त्तं शयने मनुष्यम् ॥
समेऽथवेषन्नतशीर्षके वा नात्युच्छ्रिते स्वास्तरणोपपन्ने ।
सव्येन पार्श्वेन सुखं शयानं कृत्वर्जुदेहं स्वभुजोपधानम् ॥
निकुञ्च्य सव्येतरमस्य सक्थि वामं प्रसार्य्य प्रणयेत्ततस्तं ।
स्निग्धे गुदे नेत्रचतुर्थभागं स्निग्धं शनैरृज्वनुपृष्ठवंशं ॥
अकम्पनावेपनलाघवादीन् पाण्योर्गुणांश्चापि विदर्शयन् हि
प्रपीड्य चैकग्रहणेन दत्ते नेत्रं शनैरेव ततोऽपकर्षेद् ॥

तिर्य्यक् प्रणीते तु न याति धारा गुदे व्रण: स्याञ्चलिते च नेत्रे ।
दत्त: शनैर्नाशयमेति वस्ति: कण्ठं प्रधावत्यति पीडितश्च ॥
शीतस्त्वतिस्तम्भकरो विदाहं मूर्च्छाञ्च कुर्य्यादति मात्रमुष्ण: ।
स्निग्धोऽति जाड्यं पवनन्तु रूक्षस्तन्वल्पमात्रा लवणस्त्वयोगं ॥
करोति मात्राभ्यधिकोऽति योगं चामन्तु चार्द्र: सुचिरेण चैति
दाहातिसारौ लवणोऽति कुर्य्यात्तस्मात् सुयुक्तं सममेव दद्यात् ।
आमाशयोऽग्निर्य्यहणी गुदञ्च तत्पार्श्वसंस्थस्य सुखोपलब्धि: ।
लीयन्त एवं वलयश्च तस्मात्सव्यं शयानोऽर्हति वस्तिदानम् ।
विज्ञातवेगौ यदि चाव दत्ते निष्कृष्य मुक्ते प्रणयेत शेषम्
उत्तानदेहश्च कृतोपधान: स्याद्वीर्य्यमाप्नोति तथास्य देह: ॥
एकोऽपकर्षत्य निलं स्वमार्गात्पित्तं द्वितीयस्तु कफं तृतीय: ।
प्रत्यागते कोष्णजलावसिक्त: शाल्यन्नमद्यात्तनुना रसेन ॥
जीर्णे तु सायं लघु चाल्पमात्रं भुक्तोऽनु वास्य: परिबृंहणार्थम्
निरूहपादांशसमेततैलेनाम्लानि लघ्वौषधसाधितेन ॥
दत्त्वा स्फिजौ पाणितलेन हन्यात् स्नेहस्य शीघ्रागमरक्षणार्थं
ईषत्पदाङ्गुष्ठयुगञ्च कर्षेदुत्तानदेहस्य तलौ प्रमृज्यात् ॥
स्नेहेन पार्ष्ण्यङ्गुलि पिण्डिकाश्च ये चास्य गात्रावयवा रुगार्ता:
तांश्चावमृज्यात् सुसुखं ततश्च निद्रामुपासीत कृतोपधान: ॥
भागा: कषायस्य तु पञ्चपित्ते स्नेहस्य षष्ठ: प्रकृतौ स्थिते च
वाते विवृद्धे तु चतुर्थभागो तथा निरूहेषु कफेऽष्टभाग: ।
निरूहमात्रा प्रसृतार्द्धमाद्ये वर्षे ततोऽर्द्ध प्रसृताभिवृद्धि: ।
आद्वादशात्स्यात् प्रसृताभिवृद्धिरष्टादशाद्द्वादश ते परं स्यु: ।
आसप्तते तद्विहितं प्रमाणं बाले च वृद्धे च मृदुर्विशेष: ।
नात्युच्छ्रितं नात्यतिनीचपादं सपादपीठं शयनं प्रशस्तं ॥

प्रधानमृद्वास्तरणोपपन्नं प्राक्छीरसं शुक्लपटोत्तरीयम् ।
भोज्यं पुनर्व्याधिमपेक्ष्य तत्तत्प्रकल्पयेद्यूषपयो रसाद्यैः ॥
सर्वेषु विद्याद्विधिमेतदाद्यं वक्ष्यामि बस्तीनत उत्तरं यान् ।
द्विपञ्चमूलस्य रसोऽम्लयुक्तः स छागमांसस्य स पूर्वपेष्यः ॥
त्रिवृत्सहयुक्तः प्रवरो निरूहः सर्वानिलव्याधि हरः प्रदिष्टः ।
स्थिराद्यवर्गस्य बला पटोलत्रायन्तिकैरण्डयवैर्युतस्य ॥
प्रस्थो रसश्छागरसार्धयुक्तः सतैल सर्पिर्मधुसैन्धवश्च ।
स्याद्दीपनो मांसबलप्रदश्च चक्षुर्बलं चापि ददाति बस्तिः ॥
एरण्डमूलात्त्रिपलं पलांशास्त्रानि मलानि च यानिपञ्च ।
रास्नाश्वगन्धाथ बलागुडूची पुनर्नवारग्वध देवदारु ॥
भागाः पलांशा मदनाष्टयुक्ता जलाढकं सक्वथितेऽष्ट शेषे ।
पेष्यं शताह्वाहपुषाप्रियङ्गु सपिप्पलीकं मधुकं वचा च ॥
रसाञ्जनं वत्सकबीजमुस्ताभागाक्षमात्रं लवणांशयुक्तम् ।
समाक्षिकस्तैल युतः समूत्रो बस्तिर्नृणां दीपन लेपनीयः ॥
जङ्घोरुपाद त्रिकपृष्ठशूलं कफावृतिं मारुत निग्रहं च ।
विण्मूत्र वातग्रहणं स शूलं आध्माततामश्मरि शर्करं च ॥
आनाह मर्शोग्रहणी प्रदोषानेरण्डबस्तिः शमयेत्प्रयुक्तः ।
चतुष्पले तैलघृतस्य भृष्टश्छागाच्छतार्धो दधिदाडिमाम्लः ॥
रसः स पेष्यो बलवर्णमांसरेतोऽग्नितैमिर्य शिरोर्तिशस्तः ।
जलाढकेऽष्टपलं पलाशात् पक्वा रसोऽर्धाढकमात्रशेषः ।
कल्कैर्वचामागधिकापलाभ्यां युक्तः शताह्वा द्विपलेन चापि ॥
ससैन्धवक्षौद्रयुतः स तैलो देयो निरूहो बलवर्णकारी ।
आनाह पार्श्वामय योनिदोषान् गुल्मानुदावर्तरुजं च हन्यात्
यष्ट्याह्वयस्याष्टपलेन सिद्धं पयः शताह्वा फलपिप्पलीभिः ।

युक्तं स सर्पिर्मधु वातरक्तवैस्वर्यवीसर्पहृतो निरूहः ॥
यष्ट्याह्वलोध्राभयचन्दनैश्च शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्कराक्षौद्रयुतैः सुशीतः पित्तामयान् हन्ति सजीवनीयः
ह्रिकाविंकाश्चन्दनपद्मकर्द्धि यष्ट्याह्वरास्नर्षभशारिवाश्च ।
स लोध्रमञ्जिष्ठ बला यवासाः स्थिरा शरादिश्च पञ्चमूलम् ॥
जीवन्ति मेदर्द्धि शतावरीभिर्वीराद्विकाकोलिशता वरीभिः ।
सितोपला जीवकपद्मरेणु प्रपुण्डरीकैः कमलोत्पलैश्च ।
लोध्रात्मगुप्ता मधुकैर्विदारी मृणालकैः केशरचन्दनैश्च ॥
पिष्टैः शृतं तत्क्षौद्रयुतैर्निरूहं ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन् क्षीरेण वाद्यात् परिषिक्तगात्रः ॥
दाहातिसार प्रदरास्रपित्त हृत्पाण्डुरोगान्विषमज्वरं च ।
सगुल्ममूत्रग्रहकामलादीन् सर्वामयान् पित्तकृतान्विहन्ति ॥
द्राक्षर्द्धिकाश्मर्यमधूकसेव्यैः स शारिवा चन्दनशीतपाक्यैः ।
पयः शृतं श्रावणिमुद्गपर्णी तु कात्मगुप्ता मधुयष्टिकल्कैः ॥
गोधूमचूर्णैश्च तथाक्षमात्रैः सक्षौद्र यष्टिमधु यष्टितैलैः ।
तथा विदारीक्षुरसैर्गुडेन बस्तिं युतं पित्तहरं विदध्यात् ॥
शूले नाभिपार्श्वोत्तमदेह दाहेऽन्तरस्थे च सवङ्क्षमूले ।
क्षीणे क्षते रेतसि चापि नष्टे पैत्तेऽतिसारे च नृणां प्रशस्तः ॥
कोशातकारग्वध देवदारुशार्ङ्गेष्टमूर्वा कुटजार्कपाठाः ।
पक्त्वा कुलत्थान् बृहतीं च तोये रसस्य तस्य प्रसृता दश स्युः
ताम् सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तात् ।
फलाह्वतैलस्य समाक्षिकस्य क्षारस्य तैलस्य च सार्षपस्य ॥
दद्यान्निरूहं कफरोगिणेऽस्मै मन्दाग्नये चाप्यशनद्विषे च ।
पटोलपथ्यामरदारुभिर्वा सपिप्पलीकैः क्वथितैर्जलेऽग्र्यः ॥

ं पञ्चमूले त्रिफला सबिल्वा फलानि गोमूत्र युतः कषायः ।
कलिङ्गपाठा फलमुस्तकल्का ससैन्धवः क्षारमधुः सतैलः ॥
निरूहमुख्यः कफजान्विकारान् सपाण्डुरोगालसकामदोषान्
हन्यात्तथा मारुतमूत्र सङ्गं बस्तेस्तथाटोपमथापि घोरम् ॥
पुनर्नवैरण्ड वृषाश्म भेदवृश्चीव भूतीक पलाश पाशाः ।
द्वि पञ्चमूलञ्च बलांशिकानि क्षुण्णानि धौतानि पलानि चाष्टौ
बिल्वं यवात् कोलकुलत्थधान्यं फलानि चैव प्रसृतोन्मितानि ।
पयोजलद्व्याढकमाथितं तत्क्षीरावशेषं सितवस्त्रपूतम् ॥
वचाशताह्वामरदारुकुष्ठ यष्ट्याह्व सिद्धार्थक पिप्पलीनाम् ।
कल्कैर्यवान्या मदनैश्च युक्तं नात्युष्णशीतं गुडसैन्धवाक्तम् ॥
क्षौद्रस्य तैलस्य च सर्पिषश्च नवम्ययुक्तं प्रसृतं निमिश्र ।
दद्यान्निरूहं विधिना विधिज्ञः स सर्वसंसर्गकृतामयघ्नः ॥
स्निग्धोष्ण एकः पवने समाशौ द्वौ स्वादुशीतौ पयसाच पित्ते
त्रयःसमूत्राःकटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः ॥
रसेन वाते प्रतिभोजनं स्यात् क्षीरेण पित्ते तु कफे च यूषैः
तथानुवास्येषु च बिल्वतैलं स्याज्जीवनीयं फलसाधितं च । इति

तत्र श्लोकः ।

इतीदमुक्तं निखिलं यथा वद्बस्तिप्रधानस्य विधानमग्र्यम् ।
योऽधीत्य विद्वानिह बस्तिकर्म करोति लोके लभते स सिद्धिम्

## अथ चतुर्थोऽध्यायः ।

अथातः स्नेहव्यापत्‌सिद्धिं व्याख्यास्यामः ।

स्नेहवस्तौ निबोधेमान् वातपित्तकफापहान् ।
मिथ्याप्रणिहितानाञ्च व्यापदः सचिकित्सिताः ॥
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूच्येरण्डभूतीक भार्गी वृषकरोहिषम् ।
शतावरीं सहचरं काकनासां पलांशिकम् ॥
यवमाषातसीकोल कुलत्थान् प्रसृतोन्मितान् ।
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ॥
पचेत्तैलाढकं क्षीरे जीवनीयैः पलोन्मितैः ।
अनुवासनमेतद्धि सर्ववातविकारनुत् ॥
आनूपानां वसा तद्वज्जीवनीयोपसाधिता ।
शताह्वा यवविल्वाम्लैः सिद्धं तैलं समीरणे ॥
सैन्धवेनाग्निवर्णेन तप्तं चानिलनुद्घृतम् ।
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ॥
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ।
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम् ॥
ह्रीवेरं मधुकं भार्गीं देवदारु सकट्फलम् ।
नागरं पुष्करं मेदां चविकां चित्रकं शटीम् ।
विडङ्गातिविषे श्यामां हरेणुं नीलिनीं स्थिराम् ॥
बिल्वाजमोदौ कृष्णां च दन्तीं रास्नां च पेषयेत् ।

साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥
वर्च्चोदावर्तगुल्मार्शः प्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीं चैव हन्यात्तदनुवासनम् ॥
मदने र्वाम्लसंयुक्तैर्बिल्वाद्येन गणेन वा ।
तैलं कफहरैर्वापि कफघ्नं कल्पयेद्भिषक् ।
व्याधिव्यायाम कर्माध्व क्षीणाबल निरोजसाम् ॥
क्षीणशुक्रस्य चातीव स्नेहवस्तिर्बलप्रदः ।
पादजङ्घोरु पृष्ठस्य कटयाश्च स्थिरतां पराम् ॥
जनयेद् प्रजानां च प्रजां स्त्रीणां तथा नृणाम् ।
वातपित्तकफान्यन्न पुरीषैरावृतस्य च ॥
अभुक्ते च प्रणीतस्य स्नेहवस्तिः षडापदः ।
शीतोऽल्पो वाधिके वाते पित्ते त्युष्णः कफे मृदुः ।
अतिभुक्ते गुरुवर्चः सञ्चयेऽल्पमलस्तथा ।
दत्तस्तैरावृतः स्नेहो न यात्यभिभवादपि ॥
अभुक्तेनावृतत्वाच्च यात्यूर्द्धं तस्य लक्षणम् ।
अङ्गमर्दज्वराध्मान शीतस्तम्भोरु पीडनैः ॥
पार्श्वरुग्वेष्टनैर्विद्यात् स्नेहं वातावृतं भिषक् ।
स्निग्धाम्ललवणोष्णैस्तं रास्ना पीतद्रुतैलकैः ॥
सौवीरक सुराकोल कुलत्थ यवसाधितैः ।
निरूहैर्निर्हरेत् सम्यक् समूत्रैः पञ्चमूलिकैः ॥
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ॥
दाहरागतृषामोह च वप्रतपकज्वरैः ।
विद्यात् पित्तावृतं स्वादुस्तिक्तैस्तं वस्तिभिर्हरेत् ।
तन्द्रा शीतज्वरालस्य प्रसेकारुचि गौरवैः ॥

स मूर्च्छाध्मानिभिर्विद्यात् श्लेष्मणा स्नेहमावृतम् ।
कटुतीक्ष्णकषायैस्तु सुरामूत्रोपसाधितैः ॥
फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् ।
छर्दिमूर्च्छातृड्विभ्रान्तिशूलानिद्राङ्गमर्दनैः ॥
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ।
कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ।
विरिक्तो मृदुरत्नामविहिता च क्रिया हिता ।
विण्मूत्रानिलसङ्गार्त्तिं गुरुत्वाध्मानहृद्ग्रहैः ।
स्नेहं विड़ावृतं ज्ञात्वा स्नेहस्वेदैः सवर्त्तिभिः ॥
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ।
निर्हरेद्विधिना सम्यगुदावर्त्तहरेण च ॥
अभुक्ते शीलपायी वा वेगात् स्नेहोऽति पीड़ितः ।
धावत्यूर्द्धं ततः कण्ठादूर्द्धेभ्यः खेभ्य एत्यपि ॥
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।
तत्सिद्धतैल दृष्टोऽत्र निरूहः सानुवासनः ।
कण्ठादगच्छतः स्तम्भकन्दग्रहविरेचनैः ॥
छर्द्दिघ्नीभिः क्रियाभिश्च तस्य कार्यं निवर्त्तनम् ।
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः ॥
सर्वोऽल्पोवृत रौक्ष्याद्वो पेक्ष्यः स हि विजानता ।
युक्तस्नेहं सुखोष्णं च लघुपथ्योपसेवनम् ॥
भुक्तवान्नानया योज्यमनुवास्य त्र्यहात्त्र्यहात् ।
धान्यनागरसिद्धं हि तोयं दद्याद्विचक्षणः ।
व्युषिताय निशां कालमुष्णं वा केवलं जलम् ।
स्नेहो जीर्णं जरयति श्लेष्माणं तद्भिनत्ति च ॥

मारुतस्यानुलोम्यं च कुर्य्यादुष्णोदकं नृणाम् ।
वमने वा विरेके च निरूहे सानुवासने ॥
तस्मादुष्णोदकं देयं वातश्लेष्म प्रशान्तये ।
रूचनित्यस्तु दीप्ताग्नि व्यायामी मारुताशयी ॥
वंक्षणश्रोण्युदावर्त्त वाताश्चार्हो दिने दिने ।
एषां चाशु जरां स्नेहो यात्यम्बु सिकतास्विव ॥
सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ।
न चैव गुदकण्ठाभ्यां दद्यात् स्नेहमनन्तरम् ॥
उभयस्मात् समक्लिन्नवायुर्ग्नीन् दूषयेत् समम् ।
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ॥
उत्क्लेशातिवधौ स्नेहान्निरूहात् पवनाद्भयम् ।
तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चानुवासितः ॥
स्नेहशोधनयुक्तयैव वस्ति कर्म त्रिदोषनुत् ।
कर्म व्यायाम भाराध्व यानस्त्रीकर्षितेषु च ॥
दुर्बले वातभग्ने च मात्रा वस्तिः सदा मतः ।
ह्रस्वायाः स्नेहमात्राया मात्रा वस्तिः समो भवेत् ॥
यथेष्टाहारचेष्टस्य सर्वकालं निरत्ययः ।
बल्यं सुखोपचर्य्यं च सुखं स्रष्टपुरीषकृत् ॥
स्नेहमात्रा विधानं हि वृंहणं वातरक्तनुत् ॥ इति ।

तत्र श्लोकौ ।

वातादीनां शमायोक्ताः प्रवराः स्नेहवस्तयः ।
तेषां चाप्रयुक्तानां व्यापदः सचिकित्सिताः ॥
प्राशौच्यं स्नेहवस्तेर्यद्भुवं येऽर्हा स्नग्हाश्च ये ।
स्नेहवस्ति विधिश्चोक्तोमात्रा वस्ति विधिस्तथा ॥ इति

अथ पञ्चमोऽध्यायः ।

अथातो नेत्रव्यापादिकां सिद्धिं व्याख्यास्यामः ।

अथ नेत्राणि वस्तींश्च शृणु वर्ज्यानि कर्मसु ।
नेत्रस्याश्च प्रणीतस्य व्यापदः सचिकित्सिताः ॥
ह्रस्वं स्थूलं तनुस्थूलं जीर्णं शिथिलबन्धनम् ।
पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत् ॥
अप्राप्त्यति गति क्षोभकषणक्षवणास्रवाः ।
गुदपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमम् ॥
विषमस्निग्ध मांसाल स्थूल जालीक वातलाः ।
छिन्नः क्लिन्नश्च तानष्टौ वस्तीन् कर्मसु वर्जयेत् ।
गतिवैषम्य विस्रत्वस्राव्यदौर्ग्राह्य निस्रवाः ॥
फेनिलच्युति धार्य्यत्वं वस्तिः स्युर्वस्ति दोषतः ।
स वातातिद्रुतोत्क्षिप्त तिर्यगुल्लुप्रकम्पिताः ॥
अतिमन्दगमन्दातिवेग दोषाः प्रणेतृतः ।
अनुच्छ्वास्य च बद्धे वा दत्ते निःशेष एव वा ॥
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ।
तत्राभ्यङ्गो गुदस्वेदो वातघ्नान्यशनानि च ।
द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ॥
स्यात् कटी गुद जङ्घाति वस्तिस्तम्भोरु भेदनम् ।
भोजनं तत्र वातघ्नं स्नेहः स्वेदाः सवस्तयः ।
तिर्य्यग्वक्त्राहृतद्वारे बद्धे वापि न गच्छति ॥

नेत्रे तद्दृजु निष्कृष्य संशोध्य च पुनर्नयेत् ।
पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ॥
उरः शिरोरुजं सादमूर्व्वोश्च जनयेद्वलम् ।
वस्तिः स्यात्तत्र विल्वादिफलश्यामादि मूत्रवान् ॥
स्याद्दाहो दवथुः शोफः कम्पनाभिहते गुदे ।
कषाय मधुराः शीताः सेकास्तत्र संवस्तयः ॥
अतिमात्र प्रणीतेन नेत्रेण चरणादिलः ।
स्यात् सार्त्तिदाह निस्तोद गुदवर्च्चः प्रवर्त्तनम् ॥
तत्र सर्पिः पिचुः क्षीरं पिच्छा वस्तिश्च शस्यते ।
न भावयति मन्दस्तु वाह्यस्त्वाशु निवर्त्तते ।
स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता ॥
अति प्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम् ।
तत्र वस्ति विरेकश्च गलपीडादिकर्म्म च ॥ इति ।

तत्र श्लोकः ।

नेत्रवस्ति प्रणेतॄणां दोषानेतान् सभेषजान् ।
वेत्ति यस्तेन मतिमान् वस्ति कर्म्मणि कारयेत् ॥

---

अथ षष्ठोऽध्यायः ।

अथातो वमनविरेचन व्यापत् सिद्धिं व्याख्यास्यामः ।

अथ शोधनयोः सम्यग्विधिं मूर्द्धानुलोमयोः ।
असम्यक् कृतयोश्चैव दोषान् वक्ष्यामि सौषधान् ॥

अत्युष्णा वर्षशीता हि ग्रीष्मवर्षा हिमागमाः।
अन्तरेषु प्रावृडाद्याः तेषां साधारणास्त्रयः॥
प्रावृट् शुक्र नभौ ज्ञेयौ शरदूर्जा सहौ पुनः।
तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति॥
एतानृतून् विकल्प्यैवं कुर्य्यात् संशोधनं नृणाम्।
स्वस्थवृत्तिमभिप्रेत्य व्याधौ व्याधिवशेन तु॥
कर्मणां वमनादीनां अन्तरेष्वन्तरेषु च॥
स्नेहस्वेदौ प्रयुञ्जीत स्नेहं चान्ते प्रयोजयेत्।
विसर्पपिडका शोफकामला पाण्डुरोगिणः॥
अभिघात विषार्तांश्च नातिस्निग्धान् विरेचयेत्।
नातिस्निग्धशरीराय दद्यात् स्नेह विरेचनम्॥
स्नेहोत्क्लिष्ट शरीराय रूक्षं दद्याद्विरेचनम्।
स्नेहस्वेदोपपन्ने च जीर्णे मात्रावदौषधम्॥
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते।
स्निग्धात् पात्राद्यथा तोयमयत्नेन प्रणुद्यते॥
कफादयः प्रणुद्यन्ते स्निग्धाद्देहात्तथौषधैः।
आर्द्रं काष्ठं यथा वह्निर्विष्यन्दयति सर्वतः॥
तथा स्निग्धस्य वै दोषान् स्वेदो विष्यन्दयेत् स्थिरान्।
क्लिष्टं वासो यथोत्क्लेश्य मलैः संशोध्यतेऽम्भसा।
स्नेहस्वेदैस्तथोत्क्लेश्य शोध्यते शोधनैर्मलः।
अजीर्णे वर्धते ग्लानिर्विबन्धश्चैव जायते॥
पीतं संशोधनं चैव विपरीतं प्रवर्तते।
अल्पमात्रं महावेगं बहुदोषहरं सुखम्॥
लघुपाकं सुखास्वादं प्रीणनं व्याधिनाशनम्।

अविकार्यं विपर्य्याभि ग्लानि दौर्बल्य खेदकृत् ॥
गन्धवर्णं रसो पेतं विद्यान्मात्रावदौषधम् ।
विधूय मानसान् दोषान् कासादीन् अगभोदयान् ॥
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ।
नरःखो वमनं पाता भुञ्जीत कफवर्द्धनम् ॥
अजरं द्रव भूयिष्ठं लघु शीतं विरेचनम् ।
उत्क्लिष्टाल्प कफत्वेन चिप्रं दोषाः स्रवन्ति हि ॥
पीतौषधस्य तु भिषक् शुद्धि लिङ्गानि लक्षयेत् ।
जाड्यं कफानुगी पित्ते विट् पित्ते तु कफेत्वधः ॥
हृतदोषं वदेत् कार्श्यं दौर्बल्ये चेत् सलाघवे ।
वामयेत ततः शेषमौषधं न तु लाघवे ॥
स्तैमित्येऽनिलसङ्गे च निरुद्गारेऽपि वामयेत् ।
आलाघवात्तनुत्वाच कफस्यापत्परं भवेत् ॥
वमिते वर्द्धते वह्निः शमं दोषा व्रजन्ति हि ।
वमितं लङ्घयेत् सम्यक्जीर्णं लिङ्गान्यलक्षयन् ॥
तानि दृष्ट्वा तु पेयादिं क्रमं कुर्याच्च लङ्घनम् ।
संशोधनाभ्यां शुद्धस्य लङ्घितस्य च देहिनः ॥
यात्यग्निं मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ।
कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके ॥
तर्पणादि क्रमं कुर्यात् पेयाभिष्यन्दयेद्धितान् ।
अनुलोमोऽनिलः स्वास्थ्यं चुत्तृष्णोर्जो मनस्विता ॥
लघुत्वमिन्द्रियोद्गार शुद्धि जीर्णौषधाकृतिः ।
अकालेऽल्पातिमात्रं च पुराणं न च भावितम् ॥
असम्यक् संस्कृतं चैव व्यापद्येतौषधं द्रुतम् ।

आध्मानं परिकर्त्तिश्च स्रावो ह्यद्गात्रयोर्ग्रहः॥
जीवादानमविभ्रंशः स्तम्भः सोपद्रवः क्लमः।
अयोगादतियोगाच्च दशैता व्यापदो मताः॥
प्रेष्य भेषज्य वैद्यानां वैगुण्यादातुरस्य च।
योगः सम्यक् प्रवृत्तिः स्यादति योगोऽतिवर्त्तनम्॥
श्लेष्मोत्क्लिष्टेन दुर्गन्धमह्न्यगति वा बहु।
विरेचनमजीर्णे च पीतमूर्द्धं प्रवर्त्तते॥
क्षुधार्त्ते मृदुकोष्ठाभ्यां स्वल्पोत्क्लिष्टकफेन वा।
तीक्ष्णं पीतं स्थितं क्षुब्धं वमनं स्याद्विरेचनम्॥
प्रातिलोम्येन दोषाणां हरणात्ते ह्यनत्ययः।
अयोगसंज्ञे क्लच्छ्रे च यदा गच्छति चाल्पशः॥
पीतौषधो न शुद्धश्चेज्जीर्णे तस्मिन् पुनः पिबेत्।
औषधं न तु जीर्णेऽन्यद्भयं स्यादति योगतः॥
कोष्ठस्य गुरुतां ज्ञात्वा लघुत्वं बलमेव च।
प्रयोगे मृदु वा दद्यादौषधं तीक्ष्णमेव वा॥
वमनं न तु दुश्छर्दं दुष्कोष्ठं न विरेचनम्।
पाययेतौषधं भूयो हन्यात्पीतं पुनर्हितौ॥
अस्निग्धस्विन्नदेहस्य रूक्षस्यानवमौषधम्।
दोषानुत्क्लेश्य निर्हर्त्तुमशक्तं जनयेद्गदान्॥
विभ्रंशं श्वयथुं हिक्कां तमसो दर्शनं भ्रमम्।
पिण्डिकोद्वेष्टनं कण्डूमूर्वोः सादं विवर्णताम्॥
स्निग्धस्विन्नस्य चात्यल्पं दोषास्ते जीर्णमौषधम्।
शीतैर्वा स्तब्धगामैर्वा दोषानुत्क्लेश्य नाहरेत्॥
तानेव जनयेद्रोगा न योगः सर्व एव सः।

तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः ॥
पाययेत पुनर्जीर्णे समूत्रं वा निरूहयेत् ।
निरूह्य च रसैर्धान्वैर्भोजयित्वानुवासयेत् ॥
फलमागधिकादारुसिद्धतैलेन मात्रया ।
स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन साधयेत् ॥
अति तीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम् ।
हृत्वाशु विट्‌पित्तकफान् धातून् विस्रावयेद् द्रवान् ॥
वर्णस्वरक्षयं दाहं कण्ठ्‌शोषं भ्रमं तृषाम् ।
कुर्याच्च मधुरैस्तत्र शेषमौषधमुल्लिखेत् ॥
वमने तु विरिक्तः स्याद्विरिक्ते वमनं मृदु ।
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तत् ॥
कषाय मधुरैः शीतैरन्नपानौषधैस्तथा ।
रक्तपित्तातिसारघ्नैर्दाहज्वरहरैरपि ॥
अञ्जनं चन्दनो शीरमज्जा सृक्‌शर्करोदकम् ।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥
शुङ्गाभिर्वा वटादीनां सिद्धां पेयां समाक्षिकाम् ।
वर्चःसांग्राहिकैः सिद्धां क्षीरभोज्यञ्च दापयेत् ॥
जाङ्गलैर्वा रसैर्भोज्यं पिच्छा वस्तिश्च शस्यते ।
मधुरैरनुवास्यश्च सिद्धेन क्षीरसर्पिषा ॥
वमनस्यातियोगे तु शीताम्बु परिषेचितम् ।
पिबेत् फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ॥
सोद्गारायां भृशं वम्यां मूर्वाया धान्यमुस्तयोः ।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥
वमतोऽन्तः प्रविष्टायां जिह्वायां कवलग्रहः ।

स्निग्धाम्ललवणा हृद्या यूषक्षीररसैर्हिताः॥
बलान्यस्मानि खादेयुस्तस्य चान्येऽग्रतो नराः।
निःसृतां तु तिलद्राक्षा कल्कयुक्तां प्रवेशयेत्॥
वाग्ग्रहा निलरोगेषु घृतमांसोपसाधितम्।
यवागूं तनुकां दद्यात् स्नेहस्वेदौ च बुद्धिमान्॥
वमितश्च विरिक्तश्च मन्दाग्निश्च विलङ्घितः।
अग्निं प्राणविवृद्ध्यर्थं क्रमं पेयादिकं भजेत्॥
बहुदोषस्य रूक्षस्य हीनाग्नेरल्पमौषधम्।
सोदावर्तस्य चोत्क्लिश्य दोषान्मार्गान्निरुध्यते॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वं शिरोरुजम्।
श्वासं विण्मूत्र वातानां सङ्गं कुर्याच्च दारुणम्॥
अभ्यङ्गं स्वेदवर्त्त्यादि सनिरूहानुवासनम्।
उदावर्तहरं सर्वं कर्माध्मातस्य शस्यते॥
स्निग्धेन गुरुकोष्ठेन सामे बलवदौषधम्।
क्षामेण मृदुकोष्ठेन श्रान्तेनाल्पबलेन वा॥
पीता गत्वा गुदं साममाशु दोषं निरस्यति।
तीव्रशूलांसपिच्छास्रां करोति परिकर्त्तिकाम्।
लङ्घनं पाचनं सामे रूक्षोष्णं लघुभोजनम्।
बृंहणीयो विधिः सर्वः क्षामस्य मधुरस्तथा॥
आमे जीर्णेऽनुबद्धे तु क्षाराम्ललघु शस्यते।
पुष्पकासीससमिश्रां वा क्षारेण लवणेन वा॥
सदाडिमरसं सर्पिः पिबेद्वातेऽधिके सति।
दध्यम्लं भोजने पाने संयुक्तं दाडिमत्वचा।
देवदारुतिलानां वा कल्कमुष्णाम्बुना पिबेत्।


78

अश्वत्थोदुम्बरप्लक्षकदम्बैर्वा शृतं पयः ॥
कषायं मधुरं वस्तिं पिच्छावस्तिमथापि वा ।
यष्टीमधुकसिद्धं वा स्नेहवस्तिं प्रदापयेत् ॥
अल्पं तु बहुदोषस्य दोषोषानुत्क्लेश्य भेषजम् ।
अल्पाल्पं स्रावयेत्कण्डूं शोफकुष्ठानि गौरवम् ॥
कुर्य्याच्चाग्निवधोत्क्लेशमिष्टमित्यारुचि पाण्डुताः ।
परिस्रावः स तं दोषं शमयेद्वामयेदपि ।
स्नेहितं वा पुनस्तीक्ष्णं पाययेत विरेचनम् ॥
मुखे चूर्णान् सर्वारिष्टान् संस्कृतांश्च प्रदापयेत् ।
पीतौषधस्य वेगानां निग्रहान् मारुतादयः ॥
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ।
सहिक्का कासपार्श्वार्त्ति दैन्यलालाक्षि विभ्रमैः ॥
जिह्वां खादति निसंज्ञो दन्तान् किटिकटापयन् ।
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ॥
मधुरैः पित्तमूर्च्छान्तं कटुभिः कफमूर्च्छितम् ।
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ॥
कायाग्निञ्च बलं चास्य क्रमेणोत्थापयेत्ततः ।
पवनेनाति वमतो हृदयं यस्य पीड्यते ॥
तस्मै स्निग्धाम्ललवणं दद्यात् पित्तकफेऽन्यथा ।
पीतौषधस्य वेगानां निग्रहेण कफेन वा ॥
करोति वा विशुद्धस्य गृह्णात्यङ्गानि मारुतः ।
स्तम्भवेपथु निस्तोदसादोद्वेष्टार्त्ति मन्थनैः ॥
तत्र वातहरं सर्वं स्नेहस्वेदादि कारयेत् ।
अतितीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम् ॥

दोषान् हत्वा विनिर्मथ्य जीवं हरति शोणितम्।
तेनान्नं मिश्रितं दद्याद्वायसाय शुनेऽपि वा॥
भुंक्ते तच्चेद्वदेज्जीवं न भुंक्ते पित्तमादिशेत्।
शुक्लं वा भावितं वस्त्रं आधानं कोष्णवारिणा॥
प्रक्षालितं विवर्णं स्यात् पित्तं शुद्धं तु शोणिते।
तृष्णा मूर्च्छामदार्तस्य कुर्य्यादामरणात् क्रियाम्॥
तस्य पित्तहरां सर्व्वामतियोगे च या मता।
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक्॥
पाययेताशु तप्यानं जीवो जीवेन गच्छति।
तदेव दर्भमृदितं रक्तं वस्तिं प्रदापयेत्॥
पिच्छा वस्तिं सुशीतं वा घृतमण्डानुवासनम्।
गुदं भ्रष्टं कषायैश्च स्तम्भयित्वा प्रवेशयेत्॥
सामगान्धर्व्वशब्दांश्च संज्ञा नाशेऽस्य कारयेत्।
यदा विरेचनं पीतं विडन्तमवतिष्ठते॥
वमनं भेषजान्तं वा दोषानुत्क्लेश्य नावहेत्।
तदा कुर्व्वन्ति कण्ड्वादीन् दोषाः प्रकुपितान् गदान्
सविभ्रंशः पुनस्तत्र स्याद्यथा व्याधि भेषजम्।
पीतं स्निग्धेन रूक्षेण च तद्दोषान् मार्दवात्तम्।
न वाहयति दोषांस्तु स्वस्थानात् स्तम्भयेत् च्युतान्।
वातसङ्गगुदस्तम्भशूलैः क्षरति चाल्पशः।
तीक्ष्णं वस्तिं विरेकं वा सोर्ह्रो लङ्घितपाचितः॥
रूक्षं विरेचनं पीतं रूक्षेणाल्प बलेन वा।
मारुतं कल्पयित्वाशु कुर्य्याद् घोरानुपद्रवान्॥
स्तम्भशूलानि घोराणि सर्व्वगात्रेषु मुह्यतः।

स्नेहस्वेदादिकस्तत्र कार्य्यो वातहरो विधिः।
स्निग्धस्य गुरुकोष्ठस्य मृदूत्क्लिश्यौषधं कफम् ॥
पित्तं वातं च संरुध्य सतन्द्रागौरवं क्लमम्।
दौर्बल्यञ्चाङ्गसादञ्च कुर्य्यादाशु तदुल्लिखेत् ॥
लङ्घनं पाचनं चात्र स्निग्धे तीक्ष्णं च शोधनम्। इति

तत्र श्लोकौ।

इत्येते व्यापदः प्रोक्ताः सर्व्वा हि सचिकित्सिताः।
वमनस्य विरेकस्य कृतस्याकुशलैर्नृणाम् ॥
एतान् विज्ञाय मतिमानवस्थाश्चैव तत्त्वतः ॥
कुर्य्यात् संशोधनं सम्यगारोग्यार्थी नृणां सदा। इति

---

अथ सप्तमोऽध्यायः।

अथातो वस्तिव्यापादिकां सिद्धिं व्याख्यास्यामः।

धैर्य्यौदार्य्यगाम्भीर्य्य क्षमादमतपोनिधिम्।
पुनर्व्वसुं शिष्यगणः पप्रच्छ विनयान्वितः ॥
काःकति व्यापदो वस्तेः किं समुत्थान लक्षणाः।
काश्चिकित्सा इति प्रश्नान् श्रुत्वा तानब्रवीद् गुरुः ॥
नातियोगौ क्लमाध्मातौ हिक्का हृत्प्राप्तिरूर्द्धता।
प्रवाहिका शिरोऽङ्गार्त्तिः परिकर्त्तः परिस्रवः ॥
द्वादश व्यापदो वस्तेरसम्यग्योग सम्भवाः।

आमामेकैकशो रूपं चिकित्सां च निबोधत ॥
गुरुकोष्ठेऽनिल प्राये रूक्षे वातोल्बणेऽपि वा ।
शीतोऽल्पलवणस्नेह द्रवमात्रो घनोऽपि वा ॥
वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोति गुरुकोष्ठत्व वातमूत्र शकृद्ग्रहम् ॥
नाभिवस्ति रुजं दाहं हृल्लेपं श्वयथुं गुदे ।
कण्डूं गण्डानि वैवर्ण्यमरुचिं वह्निमार्दवम् ॥
तत्रोष्णायाः प्रमथ्यायाः पानं स्वेदाः पृथग्विधाः ।
फलवर्त्त्योऽथवा कालं ज्ञात्वा शस्तं विरेचनम् ॥
बिल्वमूल त्रिवृद्दारु यवकोल कुलत्थवान् ।
सुरादिमूत्रवान् वस्तिः स प्राक् पेष्यस्तमानयेत् ॥
स्निग्धस्विन्नेऽति तीक्ष्णोष्णो मृदुकोष्ठे ति युज्यते ।
तस्य लिङ्गं चिकित्सां च शोधनाभ्यां समा भवेत् ।
पृश्नि पर्णीं स्थिरां पद्मं काश्मर्यं मधुकं बलाम् ॥
पिष्ट्वा द्राक्षां मधूकं च क्षीरे तण्डुलधावनम् ।
द्राक्षायाः पञ्चलोष्टस्य प्रमादे मधुकस्य च ॥
विनीय सघृतं वस्तिं दद्याद्दाहाति योगिने ।
आमशेष निरूहेण मृदुना दोष ईरितः ॥
रुणद्धि मार्गं वातस्य हन्त्यग्निं मूर्च्छयत्यपि ।
क्लमं विदाहं हृच्छूलं मेढ्रवेष्टन गौरवम् ।
कुर्य्यात् स्वेदैर्विरूक्षैश्च पाचनैश्चाप्युपाहरेत् ॥
पिप्पलीकत्तृणो शीरदारु मूर्वा शृतं जलम् ।
पिबेत् सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम् ॥
वचानागरशट्यो वा दधिमण्डेन चूर्णिताः ।

पेयाः प्रसन्नयावाः स्युररिष्टेनासवेन वा ॥
दारुत्रिकटुकं पथ्यां पलाशं चित्रकं शटीम् ।
पिष्ट्वा कुष्ठञ्च मूत्रेण पिबेत् चारांश्च दीपनान् ॥
वस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम् ।
समूत्रमथवा व्यक्तं लवणं मधुतैलिकम् ॥
अल्पवीर्य्ये महादोषे रूक्षे क्रूराशये कृतः ।
वस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात् समीरणम् ॥
स विमार्गोऽनिलः कुर्य्यादाध्मानं मर्म्मपीडनम् ।
विदाहं गुरुकोष्ठस्य मुष्कवंक्षण वेदनाम् ।
रुणद्धि हृदयशूलैरितश्चेतश्च धावति ॥
फलश्यामादिभिः कुष्ठकृष्णा लवणसर्षपैः ।
धूममाष वचा किण्वक्षार चूर्णगुडैः कृताम् ॥
कराङ्गुष्ठनिभां वर्तिं यवमध्यां निधापयेत् ।
स्वभ्यक्त स्विन्नगात्रस्य तैलाक्तां स्नेहिते गुदे ॥
अथवा लवणागारधूमसिद्धार्थकैः कृताम् ।
बिल्वादिश्च निरूहः स्यात् पीलु सर्षपमूत्रवान् ॥
सरलामरदारुभ्यां सिद्धं चैवानुवासनम् ।
मृदुकोष्ठे बले वस्तिरति तीक्ष्णोऽति निर्हरन् ॥
कुर्य्याद्धिक्का हितं तस्मै हिक्काघ्नं वृंहणञ्च यत् ।
बलास्थिरादिकाश्मर्य्य त्रिफला रससैन्धवैः ।
सुप्रसन्नारनालाम्लैस्तैलं पक्त्वानुवासयेत् ।
कृष्णा लवणयोरक्षं पिबेदुष्णाम्बुना युतम् ॥
धूमलेह रसक्षीरस्वेदायामं च वातनुत् ।
अति तीक्ष्णः स वातो वा नवा सम्यक् प्रपीडितः ॥

घट्टयेद्धृदयं वस्तिस्तत्र काशकुशोत्कटैः ।
स्यात्साम्ल लवणस्कन्धकरीरवदरी नलैः ॥
शृतैर्वस्तिर्हितः सिद्धं वातघ्नैश्चानुवासनम् ॥
वातमूत्रपुरीषाणां दत्तवेगान्निगृह्णतः ।
अति वा पीडितो वस्तिर्मुखेनायाति वेगवान् ॥
मूर्च्छा विकारं तस्यादौ दृष्ट्वा शीताम्बुना मुखम् ।
सिञ्चेत् पार्श्वोदरं चाधः प्रमृज्याद्द्रावयेच्च तम् ॥
केशेष्वालम्ब्य चा केशमभ्युद्यान्नाशयेद्भ्रमम् ।
गोखराश्वगजैः सिंहै राजप्रेष्यैस्तथोरगैः ॥
उल्काभिरेव मन्यैश्च भीतस्याधः प्रवर्तते ।
वस्त्र पाणिग्रहैः कण्ठो रुध्यत्राम्न म्रियते तदा ॥
प्राणो दाननिरोधाद्धि प्रसिद्धतरमार्गगः ।
अपानः पवनो वस्तिं यमाश्वेवापकर्षति ॥
ततः क्रमुककल्काक्तं पाययेताम्लसंयुतम् ।
औष्ण्यात्तैक्ष्ण्यात् सरत्वाच्च वस्तिं सोम्यानुलोमयेत्
पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।
यवकोलकुलत्थैश्च विधेया मूत्रभावितः ॥
विल्वादि पञ्चमूलेन सिद्धो वस्तिरुरःस्थिते ।
शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ।
स्निग्धस्विन्ने महादोषे वस्तिर्मृद्वल्पभेषजः ॥
उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम् ।
स वस्तिपायु शोफेन जङ्घोरु मदनेन वा ॥
निरूढमारुतो जन्तुरभीक्ष्णं संप्रवाहते ।
स्वेदाभ्यङ्गान्निरूहांश्च शोधनीयानुलोमिकान् ॥

विदध्यात्तद्वयित्वा तु वृत्तिं कुर्य्याद्विरिक्तवत् ॥
दुर्बले तीव्रदोषे च दुष्कोष्ठे च तनुर्मृदुः ।
शीतोऽल्प चाहृतो दोषो वस्तिस्तद्विहितोऽनिलः ॥
मार्गैर्गात्राणि सन्धावन् ऊर्द्धं मूर्द्धन्युपाहितः ।
ग्रीवां मन्ये च गृह्णाति शिरः कण्ठं भिनत्ति च ॥
बाधिर्य्यं कर्णनादं च पीनसं नेत्रविभ्रमम् ।
कुर्य्यादभ्यञ्जनं तैललवणेनावगाहयेत् ॥
युञ्ज्यात् प्रधमनैर्नस्यैर्धूमैरास्य विरेचनैः ।
विरेचनैर्निरूहैश्च वस्तिभिश्चानुलोमिकैः ।
सुस्विन्नस्निग्धदेहस्य यस्य वस्तिर्विधीयते ॥
अति तीक्ष्णो गुरुश्चैव सोऽतिमात्रं प्रवर्त्तयेत् ।
स्रुतेषु तस्य रूक्षेषु निरूढस्यातिमात्रशः ॥
स्तम्भोदाहृत्त कोष्ठस्य वायुः संप्रतिहन्यते ।
विलोममससुद्भूतो रुजत्यङ्गानि देहिनः ॥
गात्रवेष्टननिस्तोदभेद स्फुरण जृम्भणैः ।
तं तैललवणाभ्यक्तं सेचयेदुष्णवारिणा ।
एरण्डपत्रनिष्क्वाथैः प्रस्तरैश्चोपपादयेत् ।
यवान् कुलत्थान् कोलानि पञ्चमूले तथोभये ॥
जलाढकद्वये पक्त्वा पादशेषेण तेन च ।
कुर्यात् स बिल्वतैलाभ्यां लवणेनान्वासनम् ॥
निरूहणं समाश्वस्तं द्रोण्यां सम्वगाहयेत् ।
ततो भुक्तवतस्तस्य कारयेदानुवासनम् ॥
यष्टीमधुकतैलेन बिल्वतैलेन वा भिषक् ।
मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णोऽतिमात्रवान् ॥

वस्ति दोषार्तिरस्याशु जनयेत् परिकर्त्तिकाम्।
त्रिकवंक्षणवस्तीनां तोदं नाभेरधो रुजम्॥
विवर्णाल्पाल्पमुत्थानं वस्ति निर्लेखनाद्भिषक्।
स्वादुशीतौषधैस्तत्र पय इक्ष्वादिभिः शृतम्॥
यष्ट्याह्व तिलकल्काभ्यां वस्तिः स्यात् क्षीरभोजिनः।
पित्तरोगेऽम्ल उष्णो वा तीक्ष्णो वा लवणोऽथवा॥
वस्तिर्लिखति पायुं तु दहिणो विदहत्यपि।
स विदग्धः स्रवत्यस्रं पित्तं वानेक वर्णवत्॥
सार्य्यते बहुवेगेन मोहं गच्छति चासकृत्।
आर्द्र शाल्मलिवृन्तैस्तु क्षुसेराजं पयः शृतम्॥
सर्पिसा योजितं शीतं वस्तिमस्मै प्रदापयेत्।
वटादिपल्लवेष्वेषः कल्को यवतिलेषु च॥
सुवर्चलोपोदकयोः कक्षुं दारे च शस्यते।
गुदे सेकाः प्रदेहाश्च शीताः स्युर्मधुराश्च ये॥
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते। इति।

भवति चात्र।

इत्येता व्यापदः प्रोक्ता वस्तेः साकृतिभेषजाः।
बुद्धा कार्त्स्न्येन तान् वस्तीन्नियुञ्जन्नापराध्यति॥
तीक्ष्णत्वं मूत्रविल्वादिलवणक्षार सर्षपैः।
प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्दवं तथा।
आपादतलमूलस्थान् दोषान् पक्वाशये स्थितः॥
वीर्य्येण वस्तिरादत्ते खस्थोऽर्को भूरसानिव।
यद्वत् कुसुम्भसंमिश्रात्तोयाद्रागं हरेत् पटः॥
तद्वद्द्रवीकृतात्कायान्निरूहो निर्हरेत् मलान्।

अथ अष्टमोऽध्यायः।

---

अथातः प्रसृतयौगिकीं सिद्धिं व्याख्यास्यामः।

अथेमान् सुकुमाराणां निरूहान् स्नेहनान् मृदून्॥
कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक्।
क्षीरात् द्वौ प्रसृतौ कार्यौ मधुतैलामृताच्चयः॥
खजेन मथितो वस्ति र्वातघ्नो बलवर्णकृत्।
एकैकः प्रसृतस्तैल प्रसन्ना क्षौद्रसर्पिषः॥
विल्वादि मूलक्वाथात् द्वौ कौलत्थात् द्वौ सवातनुत्।
पञ्चमूलरसात् पञ्च द्वौ तैलात् क्षौद्रसर्पिषः॥
एकैकः प्रसृतो वस्तिः स्नेहनीयोऽनिलापहः॥
सैन्धवार्धाच्च एकैकः क्षौद्रतैल पयो घृतात्।
प्रसृतोहपुषाख्यौ च निरूहः शुक्रकृत्परम्॥
पटोलनिम्बभुनिम्बरास्ना सप्तच्छदाम्भसः।
चत्वारः प्रसृता एको घृतात् सर्षपकल्कितः॥
निरूहः पञ्चतिक्तोऽयं मोहाभिष्यन्द कुष्ठनुत्।
विडङ्गत्रिफला शिग्रुफलमुस्ताखुपर्णिजात्॥
कषायात्प्रसृताः पञ्च तैलादेको विमथ्य तान्।
विडङ्गपिप्पलीकल्कान्निरूहः क्रिमिनाशनः।
पयस्येक्षु स्थिरा रास्ना विदारी क्षौद्रसर्पिषः॥
एकैकः प्रसृतो वस्तिः कृष्णा कल्कात्वृषत्वकृत्।

चत्वारस्तैल गोमूत्र दधिमण्डाम्लकाञ्जिकात् ॥
प्रसृताः सर्षपैः कल्कैर्विट्सङ्गानाहभेदनः।
श्वदंष्ट्राशुभिदेरण्डरसात्तैलात्सुरा तथा ॥
प्रसृताः पञ्च यष्ट्याह्व कौन्ती मागधिका मिता।
कल्को वस्तिः समानाह्वे मूत्रकृच्छ्रे परो मतः ॥
एते सलवणाः कोष्णा निरूहाः प्रसृता नव।
मृदुवस्ति जडीभूते तीक्ष्णोऽन्यावस्तिरिष्यते ॥
तीक्ष्णैर्विकासिते स्वादुप्रत्यापननमेव च।
वातोपसृष्टस्योष्णैः स्युर्गदादाहादयो यदि।
द्राक्षाम्बुना त्रिवृत्कल्कं दद्याद्दोषानुलोमनम्।
तद्धि पित्तशकृद्वातान् हृत्वा दाहादिकान् जयेत्।
शुद्धश्चापि पिवेत् शीतां यवागूं शर्करा युताम्।
अथवातिविरिक्तः स्यात् क्षीणविट्कः स भक्षयेत्।
माषयूषेण कल्माषान् पिवन्मध्वनुवासनम् ॥
मांसं चेदति सार्येत प्रतिशीलेदरोचकी।
स तदाह्वपुषा कुष्ठनतदारुवचाः पिवेत् ॥
शकृद्वातमसृक्पित्तं कफं वा योऽतिसार्यते।
पक्वे तत्र स्ववर्गीयैर्वस्तिः श्रेष्ठं भिषग्जितम् ॥
षण्णामेषां द्विसंसर्गात् त्रिंशद्भेदा भवन्ति तु।
केवलैः सह षट्त्रिंशद्विद्यात्सोपद्रवानपि ॥
शूलप्रवाहिका ध्मानपरिकर्त्ता रुचिज्वरान्।
तृष्णोष्ण दाह मूर्च्छादींश्चैषां विद्यादुपद्रवान्।
तत्रामेऽन्तरपानं तु व्योषाम्ल लवणैर्युतम् ॥
पाचनं शस्यते वस्ति रामे हि प्रतिसिध्यते।

वातघ्न शाहि वर्गीयैर्वस्तिः प्रकृति शस्यते ।
स्वाद्वम्ललवणः शस्तः स्नेहवस्तिः समीरणे ॥
रक्ते रक्तेन पित्तास्रे कषायः स्वादुतिक्तकः ।
सार्यमाणे कफे वस्तिः कषाय कटुतिक्तकः ॥
प्रकृता वायुना वामे तेन वर्चस्यप्रतेऽनिले ।
संसृष्टेऽन्तरपानं स्याद्व्योषाम्ल लवणैर्युतम् ॥
पित्ते नामेऽमृता वापि तयो रामेन वा पुनः ।
संसृष्टयोर्भवेत् पानं सव्योष स्वादुतिक्तकम् ॥
तथामे कफसंसृष्टे कषायव्योषतिक्तकम् ।
आमेन तु कफे व्योष कषाय लवणैर्युतम् ।
वातेन विश्र पित्ते वा विट् पित्तास्रैस्तथा निले ।
मधुराम्लकषायः स्यात् संसृष्टे वस्तिरुत्तमः ॥
प्रकृच्छोणितयोः पित्त प्रकृतौ रक्तपित्तयोः ।
वस्तिरन्योन्यसंसर्गे कषाय स्वादुतिक्तकः ॥
कफेन विश्र पित्ते वा कफे विट् पित्तशोणितैः ।
व्योषतिक्तकषायः स्यात् संसृष्टे वस्तिरुत्तमः ॥
स्याद्वस्तिर्व्योषतिक्ताम्लः संसृष्टो वायुना कफे ।
मधुरव्योषतिक्तास्तु रक्ते कफविमूर्च्छिते ॥
मारुते कफसंसृष्टे व्योषाम्ललवणो भवेत् ।
वस्तिर्वातेन पित्ते तु कार्यः स्वादम्लतिक्तकः ॥
त्रिचतुः पञ्चसंयोगानेव मेव विकल्पयेत् ।
युक्तिश्चैषाति सारोक्ता सर्वरोगेष्वपि स्मृता ।
युगपत् षट् रसं षण्णां संसर्गे पाचनं भवेत् ॥
निरामाणां न पक्वानां वस्तिं षाड्रसिकोमतः ।

उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वचः ।
शङ्खं सर्जरसं लाक्षां कर्दमं च पलाशिकम् ॥
पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत् ।
अतीसारेषु सर्वेषु पेयमेतद्यथा बलम् ॥
कच्छुरा धातकी बिल्वसमङ्गारक्तमूलिभिः ।
मसूराश्वत्थ शुङ्गैश्च यवागूः स्याज्जले शृतैः ।
बालोदुम्बरकट्वङ्गसमङ्गा प्लक्षपल्लवैः ॥
मसूरधातकी पुष्पबलाभिश्च तथा भवेत् ।
स्थिरादीनां बलादीनां ह्रस्वादीनामथापि वा ॥
क्वाथेषु समसूराणां यवाग्वः स्यात् पृथक् पृथक् ।
कच्छुरा मूलशाल्यादि तण्डुलैरुपसाधितः ॥
दधि तक्रारनालाम्लक्षीरैरिक्षुरसेऽपि वा ।
शीताः सशर्करा क्षौद्राः सर्वातीसारनाशनाः ॥
ससर्पिर्मरिचा ज्ञाप्यो मधुरा लवणाः शिवाः ।

तत्र श्लोकाः ।

स्निग्धाम्ललवणमधुरं पानं वस्तिश्च मारुते कोष्णम् ॥
शीतं तिक्तकषायं मधुरं पित्ते च रक्ते च ।
तिक्तोष्णकषायकटु श्लेष्मणि संग्राहि वातनुच्छ्कृति ॥
पाचनमामे पानं पिच्छास्रग्वस्तयो रक्ते ।
अतिसारात् प्रत्युक्तं मिश्रं द्वन्द्वादियोगजेष्वपि च ॥
तत्रोद्रेक विशेषाद्दोषेषूपक्रमः कार्यः ।
प्रासृतिकाः सव्यापत् क्रिया निरूहास्तथातिसारहिताः ॥
रसकल्कघृतयवाग्वश्चोक्ता गुरुणा प्रसृतसिद्धाविति ।

अथ नवमोऽध्यायः।

अथातः त्रिमर्मीयां सिद्धिं व्याख्यास्यामः॥

सप्तोत्तरं मर्मशतं अस्मिन् शरीरे स्कन्धशाखाश्रित-मग्निवेश तेषामन्यतमपीडायां समधिकपीडा भवति चेतनानिबन्धवैशेष्यात्। तत्र शाखाश्रितेभ्यो मर्मभ्यः स्कन्धाश्रितानि गरीयांसि शाखानां तदाश्रितत्वात्। स्कन्धाश्रितेभ्योऽपि हृद्वस्ति शिरांसि तन्मूलत्वाच्छरीरस्य तत्र हृदि दशधमन्यः प्राणोदानमनो बुद्धि चेतना महाभूतानि च नाभ्यामरा इव प्रतिष्ठितानि। शिरसीन्द्रियाणि इन्द्रिय प्राणवाहानि च स्रोतांसि सूर्यमिव गभस्तयः संश्रितानि। वस्तिस्तु स्थगुदस्थलगुदमुष्कसेवनी शुक्रमूत्रवाहिनीनां नालीनां मध्ये मूत्राधारोऽम्बुवाहानां सर्वस्रोतसामुदधिरिवापगानां प्रतिष्ठा बहुभिश्च तन्मूलैर्मर्मसंज्ञकैः स्रोतोभिर्गगनमिव दिनकरैर्व्याप्तमिदं शरीरं तेषामन्यतमस्यापि भेदादाश्वेव भेदः स्यादाश्रयनाशादाश्रितप्रतापात्तु घोरव्याधि प्रादुर्भावस्तस्मादेतानि विशेषेण रक्ष्याणि। बाह्याभिघाताद्वातादिभ्यश्च तत्र हृद्यभिहते कासश्वासबलक्षय शोषकण्ठक्लोमाकर्षणजिह्वा निर्गममुखतालु शोषापस्मारोन्मादप्रलापचित्तनाशाद्याः स्युः। शिरस्यभिहते मन्यास्तम्भार्दितचक्षुर्विभ्रममोहवेष्टनचेष्टानाशकासश्वासहनुग्रहमूकगद्गदत्वनिमीलनगण्डस्पन्दनजृम्भणलालास्रावस्वरहानि वदनजिह्मत्वादीनि।

वस्तौ तु वातमूत्रवर्चो निग्रहवंचणमेहनवस्ति शूलकुण्डलोदावर्त गुल्मवर्धानिलाष्ठीलोपस्तम्भनाभि कुचि गुदश्रोणि ग्रहादयः वाताद्युपसृष्टानां त्वेषां लिङ्गानि चिकित्सिते सक्रिया विधीन्युक्तानि। किन्त्वे तानि विशेषतोऽनिलाद्दीचाख्यनिलो हि पित्तकफसमुदीरणे हेतुः। प्राणमूलञ्च स च वस्ति साध्यतमः तस्मान्न वस्ति समं किञ्चित्कर्म मर्म्म परिपालनम्। तत्र षडास्थापनस्कन्धान् त्रिमाने द्वौ चानुवासनस्कन्धाविह च विहितान् वस्तीन् बुद्धा विचार्य महा मर्म्म परिपालनार्थं प्रजोजयेद्वातव्याधि चिकित्साञ्च। भूयश्च हृद्युपसृष्टे हिङ्गुचूर्णं लवणानामन्यतमचूर्णसंयुक्तं मातुलुङ्गस्य रसेन वान्येन वाम्लेन द्रव्येन वा पाययेत स्थिरादि पञ्चमूलरसः सशर्करः पानार्थं बिल्वादि पञ्चमूलं रससिद्धा च यवागूः हृद्रोग विहितञ्च कर्म। मूर्ध्नि तु वातोपसृष्टेऽभ्यङ्गस्वेदनोपनाहनस्तः कर्मावपीडधूमादीनि वस्तौ तु कुम्भी स्वेदोदावर्तयत्। श्यामादिभिर्गोमूत्र सिद्धो निरूहः बिल्वादिभिश्च सुरादि सिद्धः शरकाशेक्षु दर्भगोक्षुरकमूलशृतचीरेश्च त्रपुसैर्वा रुखराश्वावीजयवान् हृद्धो कल्कितो निरूहः पीतदारुकसिद्धतैलानुवासनः तैल्वकञ्च सर्पिर्विरेकार्थं शतावरी गोक्षुरकबृहती कण्टकारिका गुडूची पुनर्नवो शीरमधुकद्विशारि वा लोध्र श्रेयसी कुशकाशमूलकषायचीरचतुर्गुणं बला वृषकखराश्वोपकुञ्चिका वर्षकत्रपुसैर्वा रुवीजमिति वारमधुकवषा शतपुष्पाश्मभेदकमदनफलकल्कसिद्धं तैलमुत्तर वस्तिनिरूढशुद्धस्निग्धस्विन्नस्य वस्ति शूलमूत्रविकारहर इति।

भवति चात्र।

हृदि मूर्ध्नि च वस्तौ च नृणां प्राणाः प्रतिष्ठिताः।
तस्मात्तेषां सदा युक्तः कुर्वीत परिपालनम्॥
अत ऊर्द्ध्वं विकारा ये त्रिमर्म्मीये चिकित्सिते।
न प्रोक्ता मर्म्मजास्तेषां कांश्चिद्वक्ष्यामि सौषधान्॥
रूक्षः कैः कोपनैर्वायुः स्थानादूर्द्ध्वं प्रपद्यते।
पीडयन् हृदयं गत्वा शिरः शंखौ च पीडयन्॥
नमयेत्वाक्षिपेत्त्वाङ्गान्युच्छ्वासं निरुणद्धि च।
उच्छ्वस्यात् सच कृच्छ्रेण स्तब्धाक्षोऽथा निमीलनः॥
कपोत इव कूजंश्च निःसञ्ज्ञोऽपतन्त्रकः।
दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति॥
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः।
वायुना दारुणं प्राहुरत्येतमपतन्त्रकम्॥
श्वसनः कफवाताभ्यां रुद्धस्तस्य विमोचयेत्।
तीक्ष्णैः प्रधमनैः संज्ञान्तासु मुक्तासु विन्दति॥
तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम्।
यवक्वाथाम्बुना पेयं हृत्वाऽर्त्तांश्चापतन्त्रके॥
हिङ्ग्वम्लवेतसं शुण्ठीं ससौवर्चलदाडिमम्।
पिवेद्वातकफघ्नञ्च कर्म्म हृद्रोगनुत्तितम्॥
शोधने वस्तयः स्नेहा न हितास्तस्य कृत्स्नशः।
सौवर्चलाभया व्योषैः सिद्धन्तु स्याद्घृतं हितम्॥
मधुरस्निग्धगुर्व्वन्न सेवनाच्चिन्तनात् श्रमात्।
शोकाद्व्याध्यनुषङ्गाच्च वायुनोदीरितः कफः॥
यदासौ समवस्कन्द्य हृदयं हृदयाश्रयान्।

समावृणोति स्रानादींस्तदा तन्द्रोपजायते॥
हृदये व्याकुलीभावो वाक्चेष्टेन्द्रिय गौरवम्।
मनो बुद्ध प्रसादश्च तन्द्रायां लक्षणं मतम्॥
कफघ्नं तत्र कर्तव्यं शोधनं शमनानि च।
व्यायामो रक्तमोक्षश्च भोज्यञ्च कटु तिक्तकम्॥
मूत्रौकसादो जठरं कृच्छ्रं सोत्सङ्गसङ्क्षयम्।
मूत्रातीतोऽनिलाष्ठीला वातवस्त्युष्णमारुतौ॥
वातकुण्डलिका ग्रन्थि विड्घातो वस्ति कुण्डलम्।
त्रयोदशैते मूत्रस्य दोषास्तांल्लिङ्गतः शृणु॥
पित्तं कफं द्वयं वापि वस्तौ संहन्यते यदा।
मारुतेन तदा मूत्रं रक्तपीतं घनं सृजेत्॥
सदाहं श्वेतमार्द्रं वा सर्वैर्वा लक्षणैर्युतम्।
मूत्रौकसादं तं विद्वान् पित्तश्लेष्महरैर्जयेत्॥
विधारणात् प्रतिहतं वातो दावर्तिनं यदा।
पूरयत्युदरं मूत्रं तदा तदनिमित्तरुक्॥
अपक्ति मूत्रविट् सङ्गैस्तन्मूत्र जठरं वदेत्।
मूत्र वैरोचनीं तत्र चिकित्सां संप्रयोजयेत्॥
हिङ्ग्वादिरुत्तरं चूर्णं विमर्शीये प्रकीर्तितम्।
हन्यान् मूत्रोदरानाहं पायितं गुदमेढ्रयोः।
मूत्रितस्य व्यवायात्तु रेतो वातोद्धतं च्युतम्॥
पूर्वं मूत्रस्य पश्चाद्वा स्रवेत्तत्कृच्छ्रं तदुच्यते।
स्रवे गुणानिलाक्षेपैः किञ्चिन् मूत्रस्य तिष्ठति॥
मणिसन्धौ स्रवेत् पश्चात्तं सम्यग्वाथवा निरुक्।
मूत्रोत्सङ्गः स विच्छिन्न उच्छ्रोषो गुरुशेफसः॥

वाताकृतिर्भवेद्वातान् मूत्रं शुष्यति संचयः ।
चिरं धारयते मूत्रं त्वरया न प्रवर्त्तते ।
वाहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥
वस्तिमाध्मापयन् क्रुद्धो गुदे वायुस्तथोन्नताम् ।
कुर्यात्तीव्रार्त्तिमष्ठीलं मूत्रविण्मार्गरोधिनीम् ॥
मूत्रमाधारयेद्यो वायुः क्रुद्धो विदारणात् ।
मूत्ररोधार्त्ति कण्डूभिर्वातवस्तिः स उच्यते ॥
रूक्षणायासोष्णकं मूत्रं शोषयन् नक्त पीतकम् ।
उष्णवातः सृजेत्कृच्छ्राद्वस्त्रपस्यार्त्ति दाहवत् ।
गतिसङ्गादुदावृत्तः स मूत्रस्थानमार्गयोः ॥
मूत्रस्य विगुणो वायुर्भग्नव्याविद्धकुण्डली ।
मूत्रं विहन्ति संस्तम्भभङ्गगौरववेष्टनैः ॥
तीव्ररुक् मूत्रविट् सङ्गैर्वातकुण्डलिकेति सा ।
रक्तं वातकफाद्दुष्टं वस्तिद्वारे सुदारुणम् ॥
ग्रन्थिं कुर्यात् स कृच्छ्रेण सृजेन् मूत्रं तदावृतम् ।
अश्मरी समशूलन्तं रक्तग्रन्थिं प्रचक्षते ।
रूक्षदुर्बलयोर्वातो नोदावृत्तं शकृद्यथा ॥
मूत्रस्रोतः प्रपद्येत विट् संसृष्टं तदा नरः ।
विड्गन्धं मूत्रयेत् कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥
द्रुताध्व लङ्घनायासैरभीघातात् प्रपीड़नात् ।
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥
शूलस्पन्दनदाहार्त्तो विन्दुं विन्दुं स्रवत्यपि ।
पीड़ितः संसृजेद्धारासंस्तम्भोद्वेष्टनार्त्तिमान् ।
वस्तिं कुण्डलमाहुस्तं घोरमस्त्र विषोपमम् ॥

पवनप्रबलप्रायो दुर्निवार्य्यमबुद्धिभिः ।
तस्मिन् पित्तान्विते दाहः शूलमूत्र विवर्णता ॥
श्लेष्मणा गौरवं शोफः स्निग्धं मूत्रं घनं सितम् ।
श्लेष्मरुद्धा बिलो वस्तिः पित्तोदीर्णो न सिद्ध्यति ॥
अविभ्रान्ताबिलः साध्यो न च यः कुण्डलीकृतः ।
स्याद्वस्तौ कुण्डलीभूते क्लमोहः श्वास एव च ।
दोषाधिक्य मपेक्ष्यै तान् मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिं च सर्वेषामेव योजयेत् ॥
पुष्पनेत्रं तु हैमं स्यात् श्लक्ष्णमौत्तरवस्तिकम् ।
जातीपुष्पस्य वृन्तेन समं गोपुच्छसंस्थितम् ॥
रौप्यं वा सर्षपच्छिद्रं द्विकर्णं द्वादशाङ्गुलम् ।
तेनाजवस्तियुक्तेन स्नेहस्यार्धं पलं नयेत् ॥
यथा वयो विशेषेण स्नेहमात्रां विकल्पय वा ।
स्नातस्य भुक्तभक्तस्य रसेन पयसापि वा ॥
सृष्टविसमूत्रवेगस्य पीते जानु समे मृदौ ॥
ऊर्जः सुखोपविष्टस्य हृष्टे मेढ्रे घृतान्विते ।
शलाकयान्विष्य गतिं यद्यप्रतिहता व्रजेत् ॥
ततः शेफः प्रमाणेन पुष्पनेत्रं प्रवेशयेत् ।
गुदवत्मूत्रमार्गेण प्रणयेदनु सम्वनीम् ॥
हिंस्याद्व्यतिगतं वस्तिं दूने स्नेहो न गच्छति ।
सुखं प्रपीड्य निष्कम्पं निष्कम्याऽन्वितमेव च ॥
प्रत्यागते द्वितीयं तु तृतीयं च प्रदापयेत् ।
अनागच्छन्नुपेक्ष्यस्तु रजनी व्युषितस्य च ॥
पिप्पली लवणागार धूमापामार्ग सर्षपैः ।

वार्त्ताकरसनिर्गुण्ठी शम्याकैः स सहाचरैः ॥
मूत्राम्लपिष्टैः स गुडैर्वर्त्तिं कृत्वा प्रवेशयेत् ।
अग्रे तु सर्षपाकारा पश्चार्द्धे माषसम्मिताम् ॥
नेत्रदैर्घ्यां घृताभ्यक्तां सुकुमारामभङ्गुराम् ।
नेत्रवन्मूत्रनाड्यां तु पायौ वाङ्गुष्ठ सम्मिताम् ॥
स्नेहे प्रत्यागते ताभ्यां सानुवासनिका विधिः ।
परिहारश्च व्यापत् स सम्यग्दत्तु लक्षणः ॥
स्त्रीणां चार्त्तवकाले तु प्रतिकर्म तदा चरेत् ।
गर्भाशयना सुखं स्नेहं तदा दत्ते ह्यपावृता ॥
गर्भं योनिस्तदा शीघ्रं जिते गृह्णाति मारुते ।
वस्तिजेषु विकारेषु योनिविभ्रंशजेषु च ॥
योनिशूलेषु तीव्रेषु योनिव्यापत् स्वसृग्दरे ।
अप्रस्रवति मूत्रे च विन्दुं विन्दुं स्रवत्यपि ॥
विदध्यादुत्तरं वस्तिं यथास्वौषध संस्कृतम् ।
पुष्पनेत्र प्रमाणन्तु प्रमदानां दशाङ्गुलम् ॥
मूत्रस्रोतः परीणाहं मुद्गस्रोतोऽनुपाति च ।
गर्भमार्गे तु नारीणां विधेयं चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे तु बालायास्त्वेकमङ्गुलम् ॥
उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ।
अथास्याः प्रणयेन्नेत्रं मनुवंशगतं सुखम् ।
द्विस्त्रिश्चतुरिति स्नेहानहोरात्रेण योजयेत् ॥
वस्तौ वस्तौ प्रणीते च वर्त्तिः पीनतरा भवेत् ।
त्रिरात्रं कर्मकुर्वीत स्नेहमात्रां विवर्द्धयेत् ॥
अनेनैव विधानेन कर्म कुर्य्यात् पुनस्त्र्यहात् ।

अतः शिरो विकाराणां कश्चिद्भेदः प्रवक्ष्यते॥
रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः।
तीव्ररुग्दाहरागं हि शोफं कुर्वन्ति दारुणम्॥
स शिरो विषवद्वेगी निरुध्याशु गलं तथा।
शङ्खकोऽग्निनिभः क्षिप्रं विनाशयति मानवम्॥
जीवेत्त्र्यहं चेद्भैषज्यं प्रत्याख्यायास्य कारयेत्।
शिराविरेकसेकादि सर्वं वीसर्पनुच्च यत्॥
रूक्षात्यध्यशनात् पूर्ववाताऽवश्याय मैथुनैः।
वेगसन्धारणायास व्यायामैः कुपितोऽनिलः।
केवलः स कफो वार्द्धं गृहीत्वा शिरसस्ततः॥
मन्याभ्रू शङ्खकर्णाक्षि ललाटार्धे च वेदनाम्।
शस्त्रारणि निभां कुर्यात्तीव्रां सोऽर्धावभेदकः॥
नयनं वाथवा श्रोत्रमतिवृद्धो विनाशयेत्।
चतुःस्नेहोत्तमां मात्रां शिरःकायविरेचनाम्।
नाडीस्वेदोपनाहादि कुर्यादन्तेऽग्नि कर्म च॥
प्रतिश्याये शिरोरोगे यच्चोद्दिष्टं चिकित्सितम्।
सन्धारणाद्य जीर्णाद्यैर्मस्तिष्कं रक्तमारुतौ॥
दुष्टौ दूषयतस्तच्च दुष्टं ताभ्यां विमूर्च्छितम्।
सूर्योदयांशुसन्तापाद्दुःखं विष्यन्दते शनैः॥
ततो दिने शिरःशूलं दिनवृद्ध्या च वर्द्धते।
दिनक्षये च तत् स्यानो मस्तिष्के संप्रशाम्यति॥
सूर्यावर्तः स तत्र स्यात् सर्पिरौत्तरभक्तिकम्।
शिरःकायविरेकौ च मूर्ध्नि विस्नेह धारणम्॥
जाङ्गलैरुपनाहश्च घृतक्षीरैश्च सेचनम्।

बर्हि तित्तिरि लावादि शृत क्षीरोत्थितं घृतम् ॥
नावनं जीवनीयाष्टगुणक्षीरेण साधितम् ।
दुष्टा दोषास्त्रयो मन्या पश्चाद्घाटे तु वेदनाम् ॥
तीव्रां कुर्वन्ति साचाक्षि भ्रूशङ्खे व्यवतिष्ठते ।
स्पन्दनं गण्डपार्श्वस्य नेत्ररोगं हनुग्रहम् ॥
सोऽनन्त वातकं हन्यात् शिराकाँ वर्तनाशनैः ।
वातो रूक्षादिभिः क्रुद्धः शिरः कम्पमुदीरयेत् ।
स्नेहस्वेदादि वातघ्नं शस्तं नस्यञ्च तर्पणम् ।
नस्तः कर्म्म च कुर्वीत शिरोरोगेषु शास्त्रवित् ॥
द्वारं हि शिरसो नासा तेन तद्व्याप्य हन्ति तान् ।
नावनञ्चावपीडश्च ध्मापनं धूम एव च ॥
प्रतिमर्षश्च विज्ञेयं नस्तः कर्म तु पञ्च वा ।
स्नेहनः शोधनश्चैव स्नेहः स्यान्नावनं द्विधा ॥
शोधनः स्तम्भनश्च स्यादवपीडो द्विधा रसः ।
चूर्णं स्याद्ध्मापनं सन्धि देहस्रोतो विशोधनम् ॥
विज्ञेयस्त्रिविधो धूमः प्रागुक्तश्शमनादिकः ।
प्रतिमर्षो भवेत् स्नेहो निर्दोष उभयार्थ कृत् ॥
एवं तद्रेचनं कर्म तर्पणं शमनं त्रिधा ।
स्तम्भसुप्ति गुरुत्वाद्याः श्लैष्मिका ये शिरो गदाः ॥
शिरसो रेचनं तेषु नस्तः कर्म्म प्रशस्यते ।
रक्तपित्तादि दोषेषु शमनं नस्य मिष्यते ॥
फलादि भेषजं प्रोक्तं शिरसो यद्विरेचनम् ॥
तच्चूर्णं कल्पयेत्तत्र पचेत् स्नेहविरेचनम् ।
यदुक्तं मधुरस्कन्धे भेषजं तेन तर्पणम् ॥

साधयित्वा भिषक् स्नेहं नस्तः कुर्य्याद्विधानवित्।
प्राक्‌सूर्य्ये मध्यसूर्य्ये वा प्राक्‌कृतावश्यकस्य च॥
उत्तानस्य शयानस्य शयने चास्तृते सुखम्।
प्रलम्बशिरसः किञ्चित् किञ्चित् पादोन्नतस्य च॥
अनवाङ्‌च्छिरसो नस्यं मातुलुङ्गे न तिष्ठति।
तत एवं शयानस्य शुद्ध्यर्थं शोधयेच्छिरः॥
संस्वेद्य नासामुन्नाम्य वामेनाङ्गुष्ठपाणिना।
हस्तेन दक्षिणेनाथ कुर्य्यादुभयतः समम्॥
प्रणाल्या पिचुना वापि नस्तः स्नेहं यथाविधि।
कृते च स्वेदयेद्भूय आकर्षेच्च पुनः पुनः॥
तं स्नेहं श्लेष्मणा साकं तथा स्नेहो न तिष्ठति।
स्वेदनोत्क्लेशितः श्लेष्मा नस्तः कर्म्मण्युरः स्थिते॥
भूयः स्नेहस्य शैत्येन शिरसि स्त्यायते ततः।
श्रोत्रमन्या गलाद्येषु विकाराय स कल्पते॥
ततो नस्तः कृते धूमं पिबेत् कफविनाशनम्।
हितान्न भुङ्‌निवातोष्णसेवी स्यान्नियतेन्द्रियः॥
विधिरेषोऽर्द्ध पीतस्य कार्य्यः प्रध्मापनस्य तु।
तत्‌षडङ्गुलया नाड्याधमेच्चूर्णं सुखेन तु॥
विरिक्तशिरसं तूष्णं पाययित्वाम्बु भोजयेत्।
लघु त्रिषु विकष्टस्त्र निवातस्थमतन्द्रितः॥
विरेकशुद्धौ दोषस्य कोपनं यस्य सेवते।
सद्दोषो विचरं स्तत्र करोति स्वान् गदान् बहून्॥
यथास्वं विहितं तेषु क्रियां कुर्य्याद्विचक्षणः।
अकालकृतजानाञ्च रोगाणामनुरूपतः॥

अजीर्णे भोजने भुक्ते तोये पीतेऽथ दुर्दिने।
प्रतिश्याये नवे स्नाने स्नेहपानेऽनुवासनम्॥
नावनं स्नेहनं रोगान् करोति श्लैष्मिकान् बहून्।
तत्र श्लेष्महरः सर्वः तीक्ष्णोष्णादिभिर्हितः॥
क्षामे विरेचने गर्भे व्यायामाभिहते तृषि।
वातो रूक्षेण नस्येन क्रुद्धः स्वान् जनयेद्गदान्॥
तत्र वातहरः सर्वो विधिः स्नेहन बृंहणः।
स्वेदादिः स्यात् घृतं क्षीरं गर्भिण्यास्तु विशेषतः॥
ज्वरशोकाभितप्तानां तिमिरं मद्यपस्य तु।
रूक्षैः शेकाञ्जनैर्लेपः पुटपाकैश्च शोधयेत्॥
स्नेहनं शोधनञ्चैव द्विविधं नावने मतम्।
प्रतिमर्षश्च तस्यार्थं करोति नच दोषवान्॥
नस्तः स्नेहाङ्गुलिं कुर्यात् प्रातर्निशि च सर्वदा।
नचोच्छिङ्घेदिककर्माणां प्रतिमर्शः सदाव्यं क्षत्॥
तत्र श्लोकौ। त्रीणि यस्मात् प्रधानानि मर्माण्यभिहतेषु च।
तेषु लिङ्गं चिकित्सा च रोगभेदाश्च सौषधाः॥
विधिरुत्तरवस्तेश्च नस्तः कर्मविधिस्तथा।
सव्यापन्नेषजं सिद्धौ मर्माख्यायां प्रकीर्तितमिति॥

---

अथ दशमोऽध्यायः।

अथातो वस्ति सिद्धिं व्याख्यास्यामः।

सिद्धानां वस्तीनां शस्तानां तेषु तेषु रोगेषु॥
शृण्वग्निवेश! गदतः सिद्धिं सिद्धिप्रदां भिषजाम्।

बलदोषकालप्रकृतीः प्रविभज्य योजितः॥
सम्यक् स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान्नियच्छन्ति।
कर्मान्यद्वस्ति समं न विद्यते शीघ्रसुखविशोधित्वात्॥
आश्वपर्णा तर्पणा योग्यत्वनिरत्ययत्वाच्च।
सत्यपि दोषहरत्वे कटुतीक्ष्णोष्णादि भेषजादानात्॥
दुःखोद्गारा ह्यमत्वकोष्ठा बाधा विरेके स्युः।
अविरेच्यौ शिशुवृद्धौ तावप्राप्तप्रहीनधातुबलौ।
आस्थापनामवतयोः सर्वार्थं करुत्तमं कर्म॥
बलवर्णहर्षमार्दव गात्र स्नेहान्नृणां ददत्याशु।
अनुवासनं निरूहश्चोत्तर वस्तिश्च स त्रिविधः॥
शाखावातार्तानां सकुञ्चितस्तब्ध भग्नरुग्णानाम्।
विट्सङ्गाध्मानारुचि परिकर्तरुगादिषु च वास्तः॥
उष्णार्तानां शीतान् शीतार्तानां तथा सुखोष्णांश्च।
तद्योग्यौषधयुक्तान् वस्तीन् सर्वत्र विनियुञ्ज्यात्॥
वस्तीन्बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु।
मेदस्विनो निशोध्या ये च नराः कुष्ठमेहार्ताः॥
न क्षीण क्षतदुर्बल मूर्च्छित कृशशुष्कदेहानाम्।
युञ्ज्याद्विशोधनीयान्दोष निबद्धायुषो ये च॥
वाजीकरणेऽसृक्पित्तयोश्च मधुघृत पयोयुताः।
सर्वे शस्ताः सतैलमूत्रारनाललवणाश्च कफवाते॥
युञ्ज्याद्द्रव्याणि वस्तिष्वम्लं मूत्रं पयः सुराक्काथम्।
अविरोधाद्धातूनां रसयोनित्वाच्च जलमुष्णम्॥
गुरदारुणताक्ष्णंलाकुष्ठमधुक पिप्पली मधुस्नेहाः।
अर्द्धानुलोमभागानिसर्पपाः शर्करालवणम्॥

आवापोवस्तीनामतः प्रयोज्यानि येषु यानि स्युः ।
युक्तानि सह कषायैस्तदुत्तरं तन्त्रे प्रवक्ष्यन्ते ॥
चिरजातकठिनबलिषु व्याधिषु तीक्ष्णान्विपर्यये च मृदून् ।
सम्प्रति वापकषायान् युञ्ज्यात्यनुवासन निरूहान् ॥
अत्र श्लोकैरतः सिद्धानानाव्याधिषु वर्गशः ॥
वस्तीन् क्षीरसमैर्भागैर्यथार्हालोडनान् शृणु ।
बिल्वाग्निमन्थश्योनाकाः काश्मर्यः पाटलिस्तथा ॥
शालपर्णी पृश्निपर्णी बृहत्यौ वर्धमानकः ।
नववञ्जुलवानीरशक्त पत्राणि शैवलम् ॥
मञ्जिष्ठा शारिवानन्तापयस्या मधुयष्टिका ।
चन्दनं पद्मकोशीरन्तुङ्गञ्च पैत्तिके त्रयः ॥
सशर्कराक्षौद्रघृताः सक्षीरा वस्तयो हिताः ।
अर्कस्तथैव चालाक एकाष्ठीला पुनर्नवा ॥
हरिद्रा त्रिफलामुस्तं पीतदारु कुटजटम् ।
पिप्पल्यः चित्रकश्चेति त्रयस्ते श्लेष्मरोगिणाम् ॥
सक्षार क्षौद्र गोमूत्रानाति स्नेहान्विता हिताः ।
फलजीमूतकेक्ष्वाकुधामार्गवक्ष्वेडवत्सकाः ॥
श्यामा च त्रिवृता चैव स्थिरा दन्तीद्रवन्त्यपि ।
प्रकीर्या चोदकीर्या च नीलिनी क्षीरिणी तथा ॥
सप्तला शंखिनीलोध्रं फलं काम्पिल्लकस्य च ।
चत्वारो मूत्रसिद्धास्ते पक्वाशय विशोधनाः ॥
काकोली क्षीरकाकोली मुद्गपर्णी शतावरी ।
विदारी मधुयष्ट्याह्वा शृङ्गाटककशेरुके ॥
आत्मगुप्ताफलं माषाः सगोधमा यवा स्तथा ।

जलजानूपजं मांस मित्ये ते शुक्रवर्धनाः॥
जीवन्ती चाग्निमन्थश्च धातकी पुष्पवत्सकौ।
प्रग्रहः खदिरः कुष्ठं शमी पिण्डीतको यवाः॥
प्रियङ्गू रक्तमूली च तरुणीस्वर्णयूथिका।
वटाद्याः किंशुकामूलमिति सांग्राहिका मताः॥
परिस्रवे शृतं क्षीरं सहृद्योव पुनर्नवम्।
आखुपर्णिकया वापि तण्डुलीयकयुक्तया॥
कलङ्कतककाण्डेक्षुदर्भपोटेक्षुशालिभिः।
दाहघ्नः सघृतक्षीरो द्वितीयश्चोत्पलादिभिः॥
कर्बुदाराढकी नीप विपुलैः क्षीरसाधितैः।
परिकर्ते तथा वृत्तैः श्रीपर्णीकोविदारजैः॥
सुष्टिः शल्मलिवृन्तानां क्षीरसिद्धो घृतान्वितः।
हितः प्रवाहणे तद्वद्वृन्तैः शल्मलकस्य च॥
अश्वावरोहिकाः काकनासा राजकशेरुके।
सिद्धाः क्षीरेऽतियोगेस्युः क्षौद्राञ्जनघृतैर्युताः॥
न्यग्रोधाद्यैश्चतुर्भिश्च तेनैव विधिनापरः।
वृहती क्षीरकाकोली पृश्निपर्णी शतावरी॥
काश्मर्यं बदरी दूर्वा तथोशीर प्रियङ्गवः।
जीवादानशृतौ क्षीरे द्वौ घृताञ्जन संयुतौ॥
वस्ती प्रदेयौ भिषजा शीतौ मधुसशर्करौ।
शशैण दक्षमार्जार महिषाव्यजशोणितैः॥
सद्यस्कैर्मृदितैर्वस्तिर्जीवादाने प्रशस्यते।
गोव्यजा महिषी क्षीरे जीवनीययुतैस्तथा॥
मयूरमधुकद्राक्षा दूर्वाकाश्मर्य चन्दनैः।

रक्तपित्तप्रमेहेतु कषायः सोमवल्कज इति ॥
त्रिकास्त्रयोऽनिलादीनां चतुष्का श्चापरे त्रयः ।
पक्वाशय विशुद्ध्यर्थं ह्यथाः सांग्राहकास्तथा ॥
परिस्रावे तथा दाहे परिकर्ते प्रवाहणे ।
सातियोगो मतौ द्वौ द्वौ जीवा दाने तथा त्रयः ॥
रक्तपित्ते द्वयं मेह एकत्रिंशश्च पञ्च च ।
सुलभाल्पौषधक्लेशा वस्तयो गुणवत्तमाः ॥
गुल्मातिसारोदावर्त स्तम्भ सङ्कुचितादिषु ।
सर्वाङ्गैकाङ्गवेगेषु रोगेष्वेवं विधेषु च ॥
यथास्वमौषधैः सिद्धान् वस्तीन् दद्याद्विचक्षणः ।
पूर्वोक्तेन विधानेन कुर्याद्योगान् पृथग्विधानिति ॥

---

अथ एकादशोऽध्यायः ।

अथातः फलमात्रा सिद्धिं व्याख्यास्यामः ।

भगवन्तमुदारसत्त्वधी श्रुति विज्ञानसमृद्धमत्रिजम् ।
फलवस्ति वरत्वनिश्चये सविवादा मुनयोऽभ्युपागमन् ॥
भृगुकौशिककाप्यशौनकाः सपुलस्त्यासितगौतमादयः ।
कतमत् प्रवरं फलादिषु स्मृतमास्थापनयोजनास्विति ॥
कफपित्तहरं परं फलेष्वथ जीमूतकमाह शौनकः ।
मृदु वीर्य्यं तया भिनत्ति तदिति चोवाच नृपोऽथवा शक्रः ॥
कटुतुम्बममन्यतोत्तमं पवने दोषसमीरणश्च तत् ।
तदहृष्यमशैत्य तीक्ष्णता कटु रौक्ष्यैरिति गौतमोब्रवीत् ॥
कफपित्तनिवर्हणं परं सतु धामार्गवमेष्वमन्यत ।
तदमन्यत वातलं पुनर्वडिशो ग्लानिकरं बलापहम् ॥
कुटजं प्रशशंस चोत्तमं न बलघ्नं कफपित्तदारि च ।

अति विज्जलमूर्द्धभागिकं पवनक्षोभि च काम्य आह तत्॥
कृतवेधनमाश्ववातलं कफपित्तं प्रबलं हरेदिति।
तदसाध्विति भद्रशौनकः कटु चारोहि बलघ्नमित्यपि॥
इति तद्वचनानि हेतुभिः सुविचित्राणि निशम्य तुष्टिमान्
प्रशशंस बलेषु निश्चयं परमस्यात्रिसुतोऽब्रवीदिदम्॥
फलदोषगुणान् सरस्वती प्रति सर्वैरपि सम्यगीरिता।
ननु किञ्चिददोषनिर्गुणं गुणभूयस्त्वमतो विचिन्त्यते॥
इह कुष्ठहितागरागरौ हितमिक्ष्वाकु तु देह उत्तमम्।
कुटजस्य फलं हृदामये प्रवरं कोटफलञ्च पाण्डुषु॥
उदरे कृतवेधनं हितं मदनं सर्वगराविरोधि तु।
मधुरं सकषायतिक्तकं तदरूक्षं सकटूष्णविज्जलम्॥
कफपित्तहृदाशुकारि चाप्यनपायं पवनानुलोमि च।
फलनामविशेषतस्त्वतो लभतेऽन्येषु फलेषु सत्स्वपि॥
गुरुणा च वचस्युदाहृते मुनिसङ्घैरिति पूजिते ततः।
प्रणिपत्य मुदा समन्वितः सहितः शिष्यगणोऽनुपृष्टवान्॥
कलिङ्गकुष्ठे मधुकं सपिप्पलि वचा शताह्वा मदनं रसाञ्जनम्।
हितानि सर्वेषु गुडः ससैन्धवो द्विपञ्चमूलं सविकल्पनान्वयम्
गजेऽधिकोऽश्वत्थवराश्वकर्णजाः सखादिराः प्रश्रृङ्गसालतालजा
तथाथवा रक्तप्रशिग्रु पाटली मधूकसाराः सनिकुम्भचित्रकाः
पलाशभूतीकसुराह्व रोहिणी कषाय उक्तास्त्वधिको गवां हितः
पलाशदन्ती सुरदारु कत्तृणाद्रवन्त्य उक्तास्तुरगस्य चाधिकाः
खरोष्ट्रयोः पीलुकरीरखादिरा शमीच बिल्वादिगणस्य च च्छदाः
अजाविकानां त्रिफलापरूषकं कपित्थकर्कन्धु सबिल्वकाश्मजम्
अथाग्निवेशः सततातुरान्नरान् हितं च पप्रच्छ गुरुस्तदाह च

सदातुरा: श्रोत्रिय राजसेवकास्तथैव वेश्या: सह पण्यजीविभि:
द्विजो हि शिष्याध्ययन व्रताह्निकक्रियादिभिर्देह हितं न चेष्टते
नृपोपसेवी नृपचित्तरक्षणात्परानुरोधाद्बहुचिन्तनाद्भयात्
नृचित्तवर्त्तिन्युपचित्ततत्परा मृजाविभूषा निरता पराङ्गना
सदासनादत्यर्थनुवर्द्धविक्रयक्रयादिलोभादपि पण्यजीविन:
सदैव ते ह्यागतवेगनिग्रहं समादिकाले च न कालभोजन:
अकालनिर्हारविहारसेविनो भवन्ति येन्येऽपि सदातुराश्च ते
समीरणं वेगविधारणोद्भुतं विबद्धसर्वाङ्गरुजाकरं भिषक्
समीक्ष्य तेषां फलवर्त्तिमादित:प्रयोजयेत् तत्र च साधु बुद्धिमान्
तथा चभल्लातकविल्वचित्रकान्द्विपञ्चमूलङ्कृत चालकान्फलम्
सतैलसर्पिर्गुडसैन्धवाहित: सदा नराणां बलवर्णवर्द्धन: पर:
तथैव शस्तं मधुकेन साधितं फलेन विल्वेन शताह्वयाथवा
सजीवनी यस्तु रसोनुवासने निरूहणे चालवणो शिशोर्हित:
नचान्यदास्थङ्गबलाभिवर्द्धनं निरूहवस्ते: शिशु त्ववर्या: परम्

तत्र श्लोक: ।

फलकर्मवस्तिरवरतत्त्वनिश्चयो वाजादीनाम् ।
सततातुराश्च दृष्टा: फलमात्रायां हितं चैषाम् ॥

इति फलमात्रा सिद्धिरेकादशी ।

---

अथ द्वादशोऽध्याय: ।

अथात उत्तरसिद्धिं व्याख्यास्याम: ।

अथ खल्वातुरं वैद्य: संशुद्धं वमनादिभि: ॥
दुर्बलं कृशमल्पाग्निमुक्तसन्धानबन्धनम् ।
निर्हृतानिलविण्मूत्रकफपित्तं कफामयम् ॥

शून्यदेहं प्रतीकारा सहिष्णुं परिपालयेत्।
यथाण्डं तरुणं पूर्णं तैलपात्रं तथैव च॥
गोपाला इव दण्डीगा: सर्वस्मादपचारत:।
अग्नि सम्धुक्षणार्थन्तु पूर्वं पेयादिभिर्भिषक्॥
रसोत्तरेणैव चरेत् क्रमेण क्रमकोविद:।
स्निग्धाम्लस्वादु हृद्यानि ततोऽम्ललवणौ रसौ॥
स्वादु तिक्तौ ततो भूय: कषाय कटुकौ तत:।
अन्योन्य प्रत्यनीकानां रसानां स्निग्धरूक्षयो:॥
व्यत्यासादुपयोगेन प्रकृतिं गमयेद्भिषक्।
सर्वक्षमो निरासङ्गो रतियुक्त: स्थिरेन्द्रिय:॥
बलवान् सत्त्वसम्पन्नो विज्ञेय: प्रकृतिं गत:।
एतां प्रकृतिमप्राप्त सर्ववर्ज्यानि वर्जयेत्॥
महादोषकराण्यष्टा विमानि तु विशेषत:।
उच्चैर्भाष्यं रथक्षोभमति चंक्रामणासने॥
अजीर्णा हितभोज्ये च दिवा स्वप्नं समैथुनम्।
तज्जा देहोर्द्धं सर्वाधो मध्यपीडामदोषजा:॥
स्लेषजा: क्षयजाश्चैव व्याधय: स्युर्यथाक्रमम्।
तेषां विस्तरतो लिङ्गमेकैकस्य सभेदत:॥

सक्थि स्कन्धग्रोवा दौर्बल्यांसाभितापपादमेहप्रस्वापहर्षणादय: अति चंक्रमणात्पादजङ्घोरुजानुवंक्षणश्रोणी पृष्ठशूलसक्थि सादनिस्तोदपिण्डिकोद्वेष्टनाङ्गमर्दा साभितापशिरा धमनो हर्षकासश्वासा: अत्याशनादुथ क्षोभजा: स्फिक्पार्श्ववंक्षणावृषणकटीपृष्ठवेदनादय: अजीर्णाध्यशनाभ्यां मुखशोषाध्मानशूलनिस्तोदपिपासा गात्रसादच्छर्द्यतीसार-

मूर्च्छा ज्वरप्रवहणामविषादयः विषमासनाभ्यामनन्नाभि-
लाषदौर्बल्य कण्डूपामादा यथादोषप्रकोपजाश्च ग्रहण्यर्शो
विकारादयः दिवा स्वप्नादरोचकविपाकाग्निनाशस्तैमित्य-
पाण्डुत्वकण्डू पामादाहच्छर्द्यङ्गमर्दहृत्स्तम्भजाद्य निद्रा-
प्रसङ्गग्रन्थि जन्मदौर्बल्यरक्तमूत्राचि ताल् लेपाः पिपासा च
व्यवायादाशु बलसादोरुसादवस्ति शिरो गुदमेढ्रवंक्षणो-
रुजानुजङ्घा पादशूलहृदयस्पन्दननेत्रपीडाङ्गशैथिल्यशुक्र-
मार्गशोणितागमनकासश्वासशोणितष्ठीवितस्वरावसादकटी
दौर्बल्यैकाङ्गसर्वाङ्गरोगमुष्कश्वयथु वातवर्चो मूत्रासङ्गशुक्र-
विसर्गजाड्यवेपथु बाधिर्य विषदाः अवलुप्यत इव गुदस्ता-
ड्यत इव मेढ्रमवसीदतीव मनो वेपते हृदयं पीड्यन्ते सन्ध-
यस्तमः प्रविश्यत इव चेत्येव मेभिरष्टाभिरभिचारैरेते प्रादु-
र्भवन्त्युपद्रवाः। तेषां सिद्धिरुच्चैर्भाष्यातिभाष्यजानामभ्यङ्ग-
स्वेदोपनाह धूमनस्योपरि भक्तस्नेहपानरसक्षीरादिभिर्वात-
हरः सर्वोविधिर्मौनञ्च रथक्षोभाति चंक्रमणाभ्यामरजानां
स्नेहस्वेदादि वातहरं कर्म्म सर्वं निदानवर्जम्। अजीर्णा-
ध्यशनजानां निरवशेषतः छर्द्दनरूक्षस्वेदलङ्घनीय पाचनीय
दीपनीयौषधावधारणञ्च विषमाप्यहिताशनजानां यथास्वं
दोषक्रियाः दिवा स्वप्नजानां धूमपानलङ्घनवमनविरेचन
व्यायामरूक्षाशना निष्टदीपनीयौषधः विधिः मैथुन-
जानां जीवनीय सिद्धौषधोपयोगप्रवर्म स्पन्दनपरिषेचना-
दिश्च शेषहरः तयोः क्षीरसर्पिषोरुपयोगस्तथाभ्यङ्ग-
स्वेदोपनाहा वृष्याश्चाहाराः स्नेहनिधयः यापना वस्त-
योनुवासनञ्च मूत्रवैक्रतकृच्छ्र वस्ति शूलेषु चोत्तर वस्ति

शूलेषु चोत्तर वस्ति: स्थिरादिवर्गं जीवनीय रसक्षीरसिद्धं तैलं स्यात्। यापनासु वस्तयः सर्वकालं देयास्तानुपदेक्ष्यामः। मस्तो गौरवलारग्वधरास्ना मञ्जिष्ठा कटुरोहिणी त्राय-माणा पुनर्नवा विभीतकगुडूची स्थिरादि पञ्चमूलानि पलिकानि खण्डशः छिन्नान्यष्टौ च मदनफलानि प्रक्षाल्य जलाढके परिक्वाथ्य पादशेषे रसः क्षीरद्विप्रस्थ संयुक्तः पुनः शृतः क्षीरशेषः पादजाङ्गलरसस्तुल्य मधु घृतः शतकुसुमाम-धुककुटजफलरसरसाञ्जनप्रियङ्गु कल्कीकृतः-ससैन्धवः सुखो-ष्णो वस्तिः शुक्रमांसबलजननः क्षतक्षीणकासगुल्मशूलविष-मज्वरवर्ध्म कुण्डली दावर्त कुक्षि शूलमूत्रकृच्छ्रा सृग्जो विसर्प निर्वाहिका शिरा जानूरुजङ्घा वस्ति ग्रहाश्मर्युन्मा-दार्शः प्रमेहाध्मानरक्तपित्तश्लेष्मव्याधिहरः सद्यो बलजननो रसायनश्च एरण्डमूलपलाशान् षट्पलं शालपर्णी पृश्निपर्णी बृहती कण्टकारिका गोक्षुरकरास्नाश्वगन्धा गुडूची वर्षाभू आरग्वधदेवदार्विति पलिकानि खण्डशः छिन्नानि फलानि चाष्टौ प्रक्षाल्य जलाढके क्षीरपादे पचेत्। पादशेषं कषायं पूतं शतकुसुमा कुष्ठमुस्तपिप्पली हपुषा बिल्ववचा वत्सक-फलरसाञ्जन प्रियङ्गु यवानी संक्षेपकल्कित मधुघृततैल-सैन्धवयुक्तं सुखोष्णं निरूहमेकं द्वौ त्रीन् वा दद्यात्। सर्वेषां प्रशस्तो विशेषतो ललितसुकुमारक्षतस्थविरांशसानां अपत्यका मानान्तहत्सहचरा बला धर्म्ममूलशारिवा-सिद्धेन कण्टकारि-का दर्भमूलयवकाश्मर्य बिल्वमूलयवसिद्धेन पयसा मधुक-मदनवत् सौवर्चलयुक्तेन कासज्वरगुल्मप्लीहादि अतिबला रास्नारग्वधमदनबिल्वगुडूची पुनर्नवैरण्डाश्वगन्धा सहचर-

पलाशदेवदारु द्विपञ्चमूलानि पलिकानि यवकोलकुलत्थ-द्विप्रसृतं शुष्कमलकानाञ्च जलद्रोणसिद्धं निरूहप्रमाणां शेषं कषाय पूतं मधुकमदनशतपुष्पा कुष्ठपिप्पली वचा वत्सकफलरसाञ्जन प्रियङ्गु यवानी कल्कीकृतं गुडघृततैल-क्षौद्रक्षीरमांसरसाम्लकाञ्जिकसैन्धवयुक्तं सुखोष्णं वस्तिं द-द्यात्। शुक्रमलवर्चः सङ्गेऽनिलजे गुल्महृद्रोगाध्मानवर्ध्मपार्श्व-पृष्ठकटीग्रहसंज्ञा नाशबलक्षयेषु च हपुषार्द्ध कुडवद्विगुणा-र्द्ध सुषयवः क्षीरोदकाभ्यां सिद्धः क्षीरशेषो मधुघृततैललवणयुक्तः सर्वाङ्गविसृतवातरक्तसक्तविरमू त्रस्त्रीखेदितहितो वातहरो वृद्धि मेधाग्निबलजननश्च कृश्नमूलपञ्च कषाय क्षीरोदक-सिद्धः पिप्पली मधुकमदनकल्काः सगुडघृततैललवणः क्षीणविषमज्वरकर्षितस्य वस्ति बलातिबला पामार्गात्म-गुप्ताष्टपलार्द्धक्षीणयवाञ्जलि कषायः पूर्ववद्वस्तिः स्थविर-रदुर्बलक्षीणस्त्रीनिषेविणां पथ्य उत्तमः बला मधुक-विदारी दर्भमूलमृद्वीका यवैः कषायमाजेन पयसा पक्का मधु कल्कितं समधु घृतसैन्धवं ज्वरार्त्तेभ्यो वस्तिं दद्यात्।१० सालपर्णी पृश्निपर्णी गोक्षुरकमूलकाश्मर्य परूषकखर्जुर-फलमधुकपुष्पैरजा क्षीरजलप्रस्थाभ्यां सिद्धः कषायः पिप्पली मधुकोत्पलकल्कितः सघृतसैन्धवो वस्तिः ११ स्थिरादिपञ्च पञ्चमूलपञ्चपले वस्तिं दद्यात्। स्त्रीष्वति प्रसक्तक्षीणेन्द्रियेभ्यो यः पादावशेषञ्च पिप्पली मदनमधुकराम्ना कल्कं शर्करा मधु घृतयुतं स्त्रीष्वति कामानां बलजननमार्ताण्डपक्षपादा-न्तस्थिरादिभिः पलिकैः सहरले पक्का नीरशेषं मदनविदा-रीशतकुसुमा मधूककल्कीकृतं मधु घृतसैन्धवयुक्तं वस्तिं

दद्यात् क्षीणवति प्रसक्तक्षीणेन्द्रियेभ्यो हितं बलवर्णकरं कल्कस्तैष विष्किरः २० प्रमेहः १६ अम्बुचरेषु २७ स्यादक्षीरी रोहितादिषु मत्स्येषु ८ गोधानकुले मार्जारमूषक शल्लमांसानां दशपलान् भागान् सपञ्चमूलान्पयसि पक्का तत्पयः पिप्पलीफलकल्कसैन्धवसौवर्चलशर्करा मधुघृततैलयुक्तं वस्तिं वर्ण्यो रसायनः क्षीणक्षतस्य सन्धानकरो मथितोरस्कस्य गजहयभग्नवातबलासकप्रत्युदावृत्तवातसक्तमूत्रवर्चः शुक्राणां हिततमश्च कूर्मादीनां अन्यतममपि शितसिद्धं पटो गोवृषनागहयनक्रहंस कुक्कुटाण्डरस मधुघृतशर्करा सैन्धवे क्षुरकात्मगुप्तफलकल्कसंसृष्टो वस्तिः १३४ गोवृषवस्तवराहवृषण कर्कट चटकसिद्धं क्षीरं उच्चटकेक्षुरकवस्त शुक्रमधुघृतयुतं किञ्चिल्लवणान्तं वस्तिः ११२ कर्कट करचटकाण्डरसयुक्तः समधुघृतशर्करो वस्तिः १२३ इत्येते वस्तयः परमवृष्याः उच्चटके क्षुरकात्मगुप्ताः शृतक्षीर प्रतिभोजनानुपानाः स्त्रीशतगामिनं नरं कुर्य्युः दशमूलमयूरहंस कुक्कुटक्काथात् पञ्चप्रसृतं तैलघृतवसामज्ज चतुष्प्रसृतयुक्तं शतपुष्पा मुस्तहपुषा कल्कीकृतं सलवणं वस्तिः पादगुल्फो रुजानुजङ्घात्रिक वंक्षणं तथा हिपञ्चमूलत्रिफला बिल्वमदनफलकषायो गोमूत्र फलमुस्त पाठा कल्कितः सैन्धवयाव शूक क्षौद्रतैलयुक्तो वस्तिः स्रोतस्याविवस्त्याटोप वातशुक्रसङ्गपाण्डुरोगाजीर्णं विषूचिकालसकेषु देया इति।

अथ ऊर्द्धं वृष्यतमान् स्नेहान् वक्ष्यामः।

शतावरी गुडूचीद्ध विदार्यामलकद्राक्षा खर्ज्जराणां

यन्त्रपीडितानां रसप्रस्थमेकैकं तद्वद्घृततैलयोगो हंसाण्ड-रस वसामज्जादिश्च साधयेद्ब्रह्मघोषशङ्खपटहभेरी निनादैः सिद्धं सितच्छत्रकृतच्छायं गजस्कन्धमारोपयेद्गजवन्तं वृष-ध्वजं अभिपूज्य तं स्नेहः त्रिभागमाचिक मङ्गलाशीः स्तुति देवतार्चनैर्वस्तिं शमयेत्। एष वस्त्यो बृंहण आयुष्योवली-पलितनुत् चीणचतनष्टशुक्र विषमज्वरार्तानां व्यापन्नया-नीनां च पथ्यतमः सहचरपलशतं प्रोदकद्रोण चतुष्टये पक्का द्रोणशेषे रसे सुपूते द्विगुणविदारीक्षु रसप्रस्थाभ्यामष्ट-गुणक्षीरं घृततैलप्रस्थं फला मधुके मधूकचन्दनमधूलिका-शारिवामेदा महामेदा काकोलीक्षीरकाकोली पयस्या शुकशाङ्गष्टाव्याघ्र नखशटी सहस्रवीर्यावराङ्गलोध्राणामच-समैर्द्विगुणशर्करैः कल्कैः साधयित्वा ब्रह्मघोषादिर्विधिना तत्सिद्धं वस्तिं दद्यादेष सर्वरोगहरो रसायनो ललि-तानां श्रेष्ठोऽन्तः पुरचारिणां चतक्षयवातपित्तवेदना श्वा-सकासहरस्त्रिभागमाचिको वली पलितनुद्वर्णरूपबलमांस शुक्रवर्द्धना इत्येते रसायनाः। स्नेहवस्तय इति विभवे शतपाका वा सहस्रपाका वा कार्या वीर्यबलाधानार्थमिति

तत्र श्लोकः।

नमद्यमध्वाशिशिरमम्बु च सम्भोजनं रथक्षोभे वस्ति-ष्वेतेषु गर्हितम्।

शिखि गोनण्डहंसाण्डैर्द्वावद्धस्तयस्त्रयः।
विंशतिर्विष्किरैस्त्रिंशत्प्रतुदैः प्रसहैस्तथा॥
त्रिंशदेकास्तथा तत्रा विंशतिश्चाम्बुचारिभिः।
नवमत्स्यादिभिश्चैव शिखि कल्केन वस्तयः॥

शृङ्गैः सप्तादशैकोनविंशतिर्विष्किरैनेव।
आनूपैर्दशभिश्चैव स्नेहश्चयैश्च चतुर्दश॥
एकोनविंशदित्येते सह स्नेहैः समासतः।
प्रोक्ता विस्तरशो भिन्ना द्वे शते षोडशोत्तरे॥
एते माक्षिकसंयुक्ताः कुर्वन्त्यति हृषं नरम्।
नातियोगं नचायोगं स्तम्भिनस्ते च कुर्वते॥
मृदुत्वान्न निवर्त्तेरन् यस्य त्वेते प्रयोजिताः।
समूत्रैर्वस्तिभिस्तत्तैरास्थाप्यः क्षिप्रमेव सः॥
शोफाग्निनाशपाण्डुत्वशूलार्शः परिकर्त्तिकाः।
स्युर्ज्वरश्चातिसारश्च यापनात्यर्थसेवया॥
अरिष्टचारशीध्वाद्या तत्रेष्टा दीपनी क्रिया।
युक्त्या तस्मान्निषेवेत यापनाश्च प्रसङ्गतः॥
इत्युत्तर्भोष्यपूर्वाणां व्यापदः स चिकित्सिताः।
विस्तरेण पृथग्दृष्टा स्ताभ्यां रक्षेन्नरं सदा॥
कर्मणां वमनादीनां असम्यक्करणापदाम्।
यत्रोक्तं साधनं स्थाने सिद्धिस्थानं तदुच्यते॥
इत्यध्याय शतं विंशमात्रेय मुनि वाङ्मयम्।
हितार्थं प्राणिनां प्रोक्तमग्निवेशेन धीमता॥
दीर्घमायुर्यशः प्रज्ञामारोग्यं चापि पुष्कलाम्।
सिद्धिं चानुत्तमां लोके प्राप्नोति विधिना पठन्॥
विस्तारयति लेशोक्तं संक्षिपत्यति विस्तरम्।
संस्कर्त्ता कुरुते तन्त्रं पुराणं च पुनर्नवम्॥
अतस्तन्त्रोत्तममिदं विहितं बहु यत्नतः।
तथा च ता विचित्राभिर्भूषितं तन्त्रयुक्तिभिः।

